३ अग्निकार्य्यसमापनम्। ४कर्त्तुरुदकाञ्जलि। ५ पिण्ड-क्रिया। ६ नवश्राद्धानि। ७ सञ्चयनम्। ८ दशाहकृत्यम् ६ एकोद्दिष्टम्। १० एकोद्दिष्टविधि। ११ सपिण्डीकरणम्। १२आमश्राद्धम्। १३ अतीतसंस्कारः। १४पालाशविधि। १५ नारायणबलि। १६ नागबलि। १७ पुराणमेकोद्दिष्टम्। १८वृषोत्सर्गः। ३अ० पदार्थाः। ४अध्याये पूर्त्तकर्म्मादीनि अग्निकार्य्यान्तानि कर्म्माणि। १पूर्त्तानि। २ मण्डपादिविधि। ३प्रतिमाद्रव्याणि। ४ प्रासादप्रतिष्ठादि। ५तदनुष्ठानादि। ६अग्निस्थापनादि। ७देवाभिषेकादि। ८शान्तिप्रतिष्ठादि। ९ वाप्यादिविधिः १०आरामादिविधि। ११ होमविशेष। १२प्राचीं दिशमन्वावर्त्तते। १३ दक्षिणां दिशमन्वावर्त्तते। १४ प्रतीचीं दिशमन्वावर्त्तते। १५ उदीचीं दिशमन्वावर्त्तते १६ पृथिवीमन्वावर्त्तते। १७ अन्तरिक्षमन्वावर्त्तते १८ दिवसमन्वावर्त्तते। १९ रात्रिमन्वावर्त्तते। २० परमन्वावर्त्तते। २१ सर्वा दिशोऽन्वावर्त्तते। २२ अग्निकार्य्यफलम्। ४अ० गता एते पदार्थाः।

**आश्वायन** पुंस्त्री अश्व+गोत्रे अश्वा०फञ्। अश्वस्य गोत्रापत्ये स्त्रियां ङीप्। [अश्वावतानस्यापत्ये स्त्रियां ङीप्।

**आश्वावतान** पुंस्त्री०अश्वावताननामर्षेरपत्यम् विदा०अञ्।

**आश्वास** पु० आ+श्वस-घञ्। १निर्वृतौ २आश्रयदाने ३भीतस्य भयनिवारणार्थे व्यापारे ४सान्त्वने च "धारयमाश्वासजनन समस्त च" कुमु०। [२सान्त्वनासम्पादके।

**आश्वासक** त्रि० आ+श्वस-णिच्-ण्वुल्। १आश्वासकारके

**आश्वासन** न० आ-श्वस-णिच्-ल्युट्। १सान्त्वने। "आश्वासनञ्च क्षणेन दुःखार्त्तायाः प्रकीर्त्तितम्" भा०आ० १अ० कर्त्तरि ल्यु। २आश्वासकारके "तदिदं द्वितीयं हृदयाश्वासनम्" शकु०। [तद्भावदर्शमाश्वासि" शकु०।

**आश्वासिन्** त्रि० आ+श्वस-णिनि। प्रत्याशायुक्ते। "समस्तु

**आश्वास्य** त्रि०आ+श्वस-णिच्-यत्। १सान्त्वनीये। ल्यप्। २सान्त्वयित्वेत्यर्थे अव्य०।

**आश्विक** त्रि० अश्वान् भारभूतान् हरति वहति आवहति वा ठञ्। भारभूतस्याश्वस्य १हारके २वाहके ३आवाहके च। अश्वस्य निमित्तं संयोग उत्पातो वा ठक्। अश्वलाभसूचके ४संयोगे ५उत्पाते ६निमित्ते च।

**आश्विन** पु० आश्विनी पूर्णिमा यस्मिन् मासे अण्। स्वनामख्याते चान्द्रे मासभेदे "अहमप्याश्विने तद्वत् सायाह्ने बोधयाम्यहम्" ।गा।बोधनमन्त्र। १अश्विनाऽनुप्रधान आसामिष्टकानाम् अण् मतोर्लुक्। २इष्टकाभेदे स्त्री ङीप्। "ये वैता आश्विनीरुपदधाति" शत०ब्रा०८,२,१,११। आश्विनौ देवते अस्य अण्। ३चितिभेदे च "प्र तु आश्विनी पवमान" ऋ०६,८६,४, पञ्चाश्विन्योऽपस्यतव्ये पञ्च वैश्वदेव्यः पञ्च-प्राणभृतः पञ्चायस्या एकया न विंशतिर्यस्यास्ता एकयतापिशदुद्वितीया चितिः" शत०ब्रा०। ४यज्ञियकपालभेदे पु० "सौम्येन सहाश्विनो द्विकपालः सर्वत्र" कात्या० १२,६,२, "मैत्रावरुणश्च म आश्विनश्च मे इति" यजु० १८,१९, अश्विन्या भवः अण्। ५अश्विनीकुमारयोः द्वि०व०। अश्विनौ देवते अस्य अण्। अश्विनीकुमारदेवताके ६ यज्ञे ७शस्त्रे च। आश्वलायनशब्दे उदा०।

**आश्विनी** स्त्री अश्विना अश्वाकारवता नक्षत्रेण युक्ता पूर्णिमा नक्षत्राण्। १आश्वनपौर्णमास्याम् २आश्विनशब्दोक्तार्थे च।

**आश्विनेय** पु० द्विव० अश्विन्याः घोटकाकारवत्याः संज्ञायाः अपत्यं ढक्। १अश्विनीकुमारयोः तयोः तस्या उत्पत्तिकथा अरुणात्मजशब्दे ३२९पृष्ठे द्रष्टव्या। तस्यापत्यं विदा० अञ्। २नकुले ३सहदेवे च पु० तयोर्माद्र्यामश्विनीकुमाराभ्यामुत्पादितत्वात् तथात्वम्। "जिगाय समरे वीरानाश्विनेयः प्रतापवान्" भा०स०प०३अ०। अश्वसैकाहगमः पन्थाः ठक्। ३अश्वसैकाहगम्ये अध्वनि।

**आश्वीन** पु० अश्वस्यैकाहगमः पन्था वा खञ्। अश्वस्यैकाहगम्ये देशे "सहस्राश्वीने वा इतः स्वर्गो लोकः" ऐत० ब्रा०। "चतुश्चत्वारिंशदाश्वीनानि" श्रुतिः।

**आश्वेय** त्रि० अश्वा देवता अस्य ढक्। १ तद्देवताके हविरादौ अश्वाया अपत्यम् शुभ्रा०ढक्। २अश्वाभवे।

**आषाढ** पु० आषाढी पूर्णिमाऽस्मिन् मासेऽण्। स्वनामख्याते चान्द्रे १मासभेदे "आषाढस्य प्रथमदिवसे" मेघदू०। "शेते विष्णुः सदाषाढे कार्त्तिके प्रतिबुध्यते" इति पुरा०। आषाढी पूर्णिमा प्रयोजनमस्य अण्। व्रतिना धार्य्ये पालाशे २दण्डे "उपस्थितापाढम्" काद०। "तत्पुत्रेण च गृहीतव्रतेनाषाढिना" काद०। "अथाजिनाषाढधरः प्रगल्भवाक्" कुमा०। ३मलयपर्वते पु०मेदि०। ष०टस्य ढ। आषाडोऽप्युक्तार्थेषु। स्वार्थे कन् आषाढकोऽप्युक्तार्थेषु।

**आषाढा** स्त्री आ+सह-क्त "श्रवणाषाढेति" पा० निर्देशात् नि० षत्वमोत्त्वाभावश्च। राशिचक्रस्थे १विंशतितमे २एकविंशे च नक्षत्रे "मूलं पूर्वाषाढा प्रथमश्चाप्युत्तराषाढकोधन्वी। मकरस्तत्परिशेषः श्रवणा चार्द्धं धनिष्ठायाः" इत्युक्ते सा च पूर्वा उत्तरा च। तत्र पूर्वस्याः प्रथमपादस्य

धनूराशिघटकत्वमुत्तरायाय शेषपादत्रिकस्य मकरराशि घटकत्वम् तत्रार्थे न० च आषाढम्" मङ्गलपक्षे तस्य तत्र जातत्वात्तथात्वम् ।

**आषाढाभव** पु० आषाढायां नक्षत्रे भवति भू—अच् । मङ्गलग्रहे आषाढाजातोऽयम् इति क्विप् । आषाढाभूरप्यत्र ।

**आषाढि** स्त्री आ+सह—क्तिन् नि० न पत्वं षत्वञ्च । १सम्यक् सहने "तयाषाढे सौम्यमतेयस्योपदधु" शत०ब्रा०६,२,१,१७ । २रतिदेव्याः स्थाने च शब्दार्थर० ।

**आषाढी** स्त्री आषाढया नक्षत्रेण युक्ता पूर्णिमा "नक्षत्रेण युक्तः काल" पा० इत्यण् । १आषाढमासीयपौर्णमास्याम् । २यज्ञियेष्टकाभेदे च ।

**आषाढीय** त्रि० आषाढाया भव "श्रविष्ठाषाढाभ्यामिति" पा० तस्येदम् इत्यत्वात् वा छ । १आषाढानक्षत्रे भवे २आषाढसम्बन्धिनि च ।

**आष्टम** पु० अष्टमोभाग अण् । अष्टमे भागे ।

**आष्ट्र** अग—व्याप्तौ ष्ट्रन् वृद्धिश्च । आकाशे उज्ज्व० ।

**आस** उपवेशनेऽदादि० आ० अक० सेट् । आस्ते आसाते आसते आसीत आसाताम् आस्व आध्वम् आस्त आसत आसिष्ट आसाञ्चभूव आसामास आसाञ्चक्रे आसिता आसिष्यते । आसीन आसितम् आसितवान् आसितुम् आसित्वा आस्ति आस आसनम् आसना "य आस्ते मनसा स्मरन्" गीता "दिवि देवास आसते" ऋ०१,२०,२ । "आसीतामरणात् क्षान्ता" "नासीत गुरुणा सार्द्धं शिलाफलकनौषु च" इति च मनु । "सुखितमास्यतां तत यदा गतम्" शा०द० । "निबद्धमाध्वं पिबताच्च पेयम्" भट्टि । "अगम्नि यस्या सविकारमासत" माघ । "आसिष्ट नैकत्र शुचा व्यरंसीत्" भट्टि भावे आस्यते "आस्यतामिति चोक्तः सन्नासीताभिमुख गुरो" मनुः । "इच्छामि नित्य सेवाह त्वया पुत्र ! सहासितुम्" भा०स० । अ० "जनकोह वैदेह आसाञ्चक्रे" शत० ब्रा० १४,६,१,१ । तूष्णींभूय भयादासाञ्चक्रिरे खगपक्षिणः" भट्टि "कैलासशिखरासीनम्" तन्त्रम् "आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणाम्" मेघदू० । "आसित भाषित चैव मत यद्याप्यनुष्ठितम्" रामा० । "जृम्भासितादिकत्" शा०द० ।

अधि—अध्यारोहणे सक० । गगनमध्यमध्यास्ते दिवाकरः काद० "छायामध्यास्य सैनिका" "ययौ मृगाध्यासितशाद्वलानि" इति च रघु । जम्बूविटपमध्यास्ते परभृता" विक्रमो० । "आयस्त्रीं दिवमध्यास्य शासनात् परमेष्ठिमम्" रघु । अत्राधारस्य कर्मता ।

अनु—पश्चादुपवेशनेन सेवने सक० । "अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम्" रघु । "एन सत्रायमन्वास्ते शटेन धनदं नृपः" भा० स० १० अ० ।

अभि—आभिमुख्येन स्थितौ संकल्पे च अक० अभ्यास अभ्यासीयन्ते कपयये निमापद्येरन्" छा०उ० ।

उद्—औदास्ये प्रकृतकर्म्मण उपरमे अक० "विधाय वैरं सामर्षे नरोऽरौ य उदासते" माघ । "उदासीनवदासीन" गीता

उप—सेवने सक० । "नोपास्ते यश्च पश्चिमाम्" मनु । "उपास्येते हरिहरौ शङ्करोऽप्यास्ते यत" वाक्यप० । "वायुवच्चानुगच्छन्ति तथा दीनानुपासते" मनु । "कृतवत्समुपासते" कुमा० ।

परि—उप—उपासनस्य प्रकर्षार्थे "यथेव क्षुधिता बाला मातरं पर्य्युपासते" "पितामह च वै तस्या सभायां पर्य्युपासते" भा०स० १अ० । (एनम्) "भुजङ्गा पर्य्युपासते" कुमा० ।

सम्—उप—सम्यगुपासने सक० । "समुपास्यत पुत्रभोग्यया" रघु

परि—परित स्थितौ अक० सम्यक् सेवने सक० । तामेवद्देशाय पर्य्यासते ये चेमे मामका" शत०ब्रा० ।

सम्—सम्यक् स्थितौ उपवेशने च । "भोगिभोगसमासीनम्" "पश्चिमां तु समासीन" मनु ।

**आस्** अव्य० आ+अस्—क्विप्—आस+क्विप् वा । १स्मरणे, २आक्षेपे "आः क एष मयि जीवतीति" उद्भटा० । "आदुरात्मन् वृथामङ्गलपाठक !" वेणी० । ३कोपे, ४सन्तापे, ५पीडायां सगर्वगर्जने च । "आः किमेतदिति क्रोधादाभाष्य महिषासुर" देवीमा० । ६खेदे "विद्यामातरमा प्रदर्श्य दयमन्नन् भिक्षामहे निष्त्रपा" उद्भट ।

**आस** पु० आस—घञ् । १आसने २स्थितौ ३उपवेशने आस्यतेऽनेन करणे घञ् । ४उपवेशनस्थाने गुह्यपार्श्वभागे "यथा कप्यास पुण्डरीकमेवमक्षिणी" छा०उ०शाङ्करभा० । अस्यते क्षिप्यतेऽनेन अस—करणे घञ् । ५धनुषि "स शासि शासुस्ह शास" किरा० "शास सचाप" मल्लि० । दूणास अस क्षेपे भावे घञ् । ६ विक्षेपे निरास ।

**आसक्त** त्रि० आ+सन्ज—क्त । १आसङ्गयुक्ते विषयान्तरपरिहारेण तदेकतानतयाभिनिष्टे २अनवरते म०जटा० शतहति ४सम्यक्सम्बद्धे च त्रि० आसक्तचित्त आसक्तचेता ।

**आसक्ति** स्त्री० आ+सन्ज—क्तिन् । विषयान्तरपरिहारेणैकविषयावलम्बने "ते देवा आसक्तिमन्त वदन्त" "आसक्त्यन्त वदन्त, इति च शत०ब्रा०८,२,१,११,१२ । "मोक्ष-

लोहितं भवति कृत्यासक्तिर्व्यज्यते" ऋ०१०,८५,२८ ।

**आसङ्ग** पु० आ+सन्ज–घञ् । १अभिनिवेशे, प्राप्तस्योपस्थितस्य वा नश्यतो वस्तुनः २रक्षणाभिलाषे, ३भोगाभिलाषे, ४ कर्त्तृत्वाभिमाने ५ विषयान्तरपरिहारेण चेतस एकत्राभिनिवेशे च । "नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः" सा०द० । "तेऽसुररक्षसेभ्य आसङ्गाद्विभयाञ्चक्रुः" श०ब्रा०१,१,२,१ "तयोर्हैन स्वयमासक्तो न विन्दति" शत०ब्रा०५,२,२,५, "त्यक्त्वा कर्मफलासङ्गम्" गीता । ६सम्यक् सम्बन्धे "सर्वेषामासङ्गमपि प्रकाशते" कुमा० । आसज्यते कर्मणि घञ् । ७आसञ्जनीये उत्तरासङ्गे "त्वगुत्तरासङ्गवतीं निवीतिनीम्" कुमा० । ८सौराष्ट्रमृत्तिकायां राजनि० ९अनवरते न०१० तद्वति त्रि० जटा० । सौराष्ट्रमृत्तिकाया गात्रे आसञ्जनीयत्वादासङ्गत्वम् । अनवरतस्य च सततसम्बन्धात् आसङ्गत्वम् ।

**आसङ्गत्य** न० न सङ्गतः तस्य भावः ष्यञ् चतुरादिषु पर्युदासात् नोत्तरपदवृद्धिः । साङ्गत्याभावे असम्बन्धे ।

**आसङ्गिनी** स्त्री आसङ्गः सातत्यमस्त्यस्य इनि ङीप् । १वात्यायां त्रिकाण्ड० । २आसङ्गयुक्ते त्रि० स्त्रियां ङीप् ।

**आसङ्गिम** पु० आसङ्गे भवः डिमच् । सुश्रुतोक्ते कर्णवेधाङ्गकर्णबन्धनाकृतिभेदे । "तत्र समासेन पञ्चदश कर्णबन्धनाकृतयो भवन्ति वक्रश वल्लूरक आसङ्गिम" इत्यादिना विभज्य "अभ्यन्तरदीर्घैकपालिरासङ्गिमः" इति सुश्रुते लक्षितः ।

**आसञ्जन** न० आ+सन्ज–ल्युट् । १आसङ्गे २सम्यक्सम्बन्धे "व्रततिवलयासञ्जनात्" शकु० । णिच्–ल्युट् । ३योजने

**आसञ्जित** त्रि० आ+सन्ज–णिच्–क्त । संयोजिते

**आसत्ति** स्त्री आ+सद–क्तिन् । १नैकट्यसंबन्धे २प्राप्तौ न्यायमते ३प्रत्यक्षजनकसन्निकर्षे "आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते" भाषा० । ४शाब्दबोधोपयोगिन्यामव्यवधानेन पदजन्यपदार्थोपस्थितौ । "आसत्तियोग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते । कारणं सन्निधानन्तु पदस्यासत्तिरुच्यते," भाषा० "यत्पदार्थस्य यत्पदार्थेनान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः कारणम् । तेन गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ न शाब्दबोधः । नीलो घटो द्रव्यं पट इत्यादावासत्तिभ्रमाच्छाब्दबोधः । आसत्तिभ्रमाच्छाब्दभ्रमाभावेऽपि न क्षतिः । ननु यत्र छत्री कुण्डली वाससी देवदत्त इत्युक्तं तत्रोत्तरपदस्मरणकाले पूर्वपदस्मरणस्य नाशात् अव्यवधानेन उत्तरपदस्मरणासम्भव इति चेन्न प्रत्येकपदसंस्कारैः चरमतावद्विषयकस्मरणस्याव्यवधानेनोत्पत्तेः नानासन्निकर्षैरेकप्रत्यक्षस्येव नानासंस्कारैरेकस्मरणोत्पत्तेरपि सम्भवात् । तावत्पदसंस्कारसहितचरमवर्णस्य ज्ञानस्योद्बोधकत्वात् । कथमन्यथा नानावर्णकपदस्मरणम् । परन्तु तावत्पदार्थानां स्मरणादेकदैव खलेकपोतन्यायात् तावत्पदार्थानां क्रियाकर्मभावेनान्वयबोधरूपः शाब्दबोधो भवतीति केचित्" मुक्ता० ।

शाब्दबोधखण्डे आसत्तिश्च शब्दचिन्तामणौ निरूपिता यथा । "आसत्तिश्चाव्यवधानेनान्वयप्रतियोग्युपस्थितिः सा च स्मृतिर्नानुभवोऽतो नान्योन्याश्रयः अथ नानाविशेषणकर्मकर्त्तृकरणाधिकरणक्रियादिपदज्ञानजन्यक्रमिकपदार्थस्मृतीनां न यौगपद्यं सम्भवति आशुतरविनाशिनां क्रमिकाणां मेलकानुपपत्तेरिति कथं तावत्पदार्थान्वयबोधः विशेषणज्ञानसाध्यत्वाद्विशिष्टज्ञानस्येति चेत् श्रोत्रप्रत्येकवर्णानुभवजन्यसंस्कारमेलकादेव तावत्पदस्मृतिः तत एकदैव तावत्पदार्थस्मृतौ सत्यां वाक्यार्थानुभवः न चान्यविषयसंस्कारेणान्यस्य न स्मरणमिति वाच्यं वाक्यार्थानुभवानुपपत्त्या फलबलेन संस्काराणां परस्परसहकारेण तत्रैकस्मरणकल्पनात् प्रत्येकवर्णसंस्काराणामिवानन्यगतिकतया पदस्मरणे । अथ "यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते । तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते" नचैवमन्वयान्तराभिधानं न स्यात् विरम्य व्यापाराभावादिति वाच्यं एवमपि प्रथमान्वये हेत्वनुपन्यासात् उत्तरस्य हीदं सामग्रीवैकल्यं न पूर्वस्येति चेत् अस्तु तावदेव तथापि चरमं तावत्पदार्थघटितवाक्यार्थानुभवे उक्तैव गतिरनन्यगतिकत्वात् । अत्र वदन्ति । सन्निधानं पदजन्यैवान्वयबोधहेतुः द्वारमित्यादावध्याहृतेनापि पिधानादिनान्वयबोधदर्शनात् न च द्वारं पिधेहीति शब्द एवाध्याह्रियते अनुपयोगात् अर्थस्यैवान्वयप्रतियोगित्वादावश्यकत्वाच्च अर्थापत्तेरुपपादकविषयकत्वात् न च शब्दमात्रमुपपादकमपि तु तदर्थं । अवश्यं कल्प्यार्थसाकाङ्क्ष्येण दैवशसम्पन्नशब्दस्मृतेरन्यथासिद्धेः अन्यथा पदबोधितस्यैवार्थस्यान्वयबोधकत्वमिति नियमशक्तिकल्पनापत्तिः स्वार्थान्वयपरत्वाच्छब्दानां द्वारमिति न पिधानान्वयबोधकमिति तदन्वयबोधार्थमवश्यं शब्दकल्पनमिति चेत् लक्षणाया व्यभिचारात् तत्राक्षेपाधीनेन कर्मणोऽन्वयबोधाच्च अथ द्वारपदसहभावमात्रं पिधेहि शब्दस्य कल्प्यते लाघवात् न च पिधानाभिधायकानेकशब्दोपस्थितौ विनिगमकविरहः संस्कारतारतम्यात्-

कार्य्यकारणभावात् आकाङ्क्षायाः शाब्दबोधाङ्गत्वे नचैव गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादितो गिरिरग्निमान् भुक्तं देवदत्तेनेत्यन्वयबोधापत्तिरिति वाच्यं तथा तात्पर्य्यग्रहसत्त्वे इष्टापत्तेः कदाचित्तु तत्र तथान्वयबोधस्य सर्व्वैरेव इष्टत्वात् नचैव क्वचिद्योजनाया कथमुपयोग इति वाच्यं तात्पर्य्यग्रहार्थं तदुपयोगितेत्युक्तत्वादिति प्राञ्चः अव्यवधानेनान्वयप्रतियोग्युपस्थितिरासत्तिरुक्ता सा च शाब्दबोधाङ्गैव तथा च तस्यापि आसत्तिः कारणं सा च शाब्दबुद्धिरूपा तस्याश्च यद्यपरासत्तिः कारणं तदा अनवस्था फलीभूता चेत् अन्योन्याश्रय इत्यतआह सा चेति प्रसङ्गादन्वयबोधनिर्वाहकपदजन्यपदार्थोपस्थितिपरिपाटीं प्रदर्शयितुमाशङ्कते अथेति नव्यास्तु ननु एवञ्च पदजन्यपदार्थोपस्थितिर्यदासत्तिस्तदा नानाविशेषणकस्थाने कथमन्वयबोधः? सर्व्वासां पदार्थोपस्थितीनाम् एकदाऽसम्भवादित्याशङ्कते अथेति इत्याहुः। मेलकं मेलनम्। विशेषणज्ञानसाध्यत्वादिति विशेषणं पदार्थस्तदुपस्थितिसाध्यत्वात् इत्यर्थः एवञ्च पदधीजन्येत्यादि। विशिष्टज्ञानस्य शाब्दबोधात्मकस्य। मेलकात् समूहात् एकदैव तावत्पदस्मृतिः न च सकलपदगोचरस्मरणाभावेऽपि प्रत्येकपदानुभवजनितप्रत्येकपदार्थस्मरणाहितसंस्कारेभ्य एव सकलपदार्थगोचरमनेकं स्मरणं सम्भवति तथा च सकलपदगोचरैकस्मरणपर्य्यन्तानुधावनं विफलमिति वाच्यं प्रकारान्तरेण पदार्थोपस्थितेः शाब्दबोधाहेतुत्वात् पदज्ञानजन्यत्वोपपत्तये तदनुधावनात् ननु श्रोत्रेण प्रत्येकपदानुभवोऽपि न सम्भवति तथाहि आदौ घोत्पत्तिस्ततो द्वितीयकाले घत्वनिर्विकल्पकोत्पत्तिः अकारोत्पत्तिश्च अथ तृतीयकाले अकारतत्त्वनिर्विकल्पकघत्वविशिष्टधीटोत्पत्तिघनाशाः ततश्चतुर्थकाले अत्वविशिष्टधीटत्वनिर्विकल्पकाकारनाशघकारनाशाकारोत्पत्तयः इदानीञ्च घकारभानं न सम्भवति प्रत्यक्षं प्रति विषयस्य हेतुत्वात् ततः पञ्चमकाले टत्वविशिष्टबोधाकारतत्त्वनिर्विकल्पकटकारनाशाः इदानीं प्राथमिकाकारभानं न सम्भवति तदभावात् ततः षष्ठक्षणे अत्वविशिष्टबोधाकारनाशौ इदानीं टकारभानं न सम्भवति तदभावात् तथा च कथं वर्णसमूहात्मकपदगोचरश्रौत्रानुभवः न च पूर्व्वपूर्व्ववर्णोपनयसहितान्त्यवर्णसन्निकर्षात् श्रौत्रानुभवसम्भव इति वाच्यं बहिरिन्द्रियजप्रत्यक्षे उपनीतं विशेषणतयैव भासते इति नियमात् प्रत्येकवर्णसमूहरूपविशेष्यकपदप्रत्यक्षस्योपनयमर्य्यादया असम्भवात् पदप्रत्यक्षे प्रत्येकं सर्व्वस्य वर्णस्य सत्यविशेष्यत्वात् न च पूर्व्ववर्णोऽन्त्यवर्णे विशेषणतया भासत इति वाच्यं पूर्व्ववर्णेऽन्त्यवर्णे विशेषणत्वनियामकस्य तत्सम्बन्धस्याभावात् इति चेत् नैवं वर्णादिसमुदायमात्रं न घटादिपदं टघादेरपि घटपदत्वापत्तेरपि तु अव्यवहितोत्तरत्वसम्बन्धेन पूर्व्वपूर्व्ववर्णवदुत्तरोत्तरवर्ण एव पदं तच्च श्रवणा न दुर्घटं पूर्व्वपूर्व्ववर्णोपनयसहकारेणाव्यवहितोत्तरत्वसम्बन्धेन उत्तरोत्तरवर्णविशेषणतया पूर्व्वपूर्व्ववर्णप्रत्यक्षसम्भवात्" वैयाकरणास्तु पूर्व्ववर्णज्ञानरूपाया उपनयसामग्र्याः सत्त्वेऽपि पूर्व्ववर्णस्यैवोत्तरवर्णे विशेषणत्वेन भाने नियामकाभावात् विनिगमनाभावेन अव्यवहितपूर्व्वत्वसम्बन्धेनैव उत्तरोत्तरवर्णस्यापि विशेषणतया भानस्य दुर्वारतया जतुतज्वोस्तुल्यपदत्वापत्तेः तथा च जतुपदोच्चारणे तजुपदस्य श्रवणाज्ज्ञानापत्तिरित्यतो वर्णसमुदायादन्यः स्फोट एव पदमित्याहुः तद्विशेषश्च स्फोटशब्दे वक्ष्यते।

अत्राय विशेषः। चिन्तामणिमते शब्दाध्याहार एव मथुरानाथेन तु आसत्तिप्रकरणे अर्थाध्याहारोऽपीति व्यवस्थापितम्। यथा "अस्तु वा शब्दाध्याहार एवावश्यकस्तथापि तज्जन्यपदार्थोपस्थितित्वेन कुतो हेतुत्वं लाघवात् पदार्थोपस्थितित्वेन हेतुत्वस्योचितत्वात् तथा च ओदनं पचतीत्यादौ सति तात्पर्य्यग्रहे यथाकथञ्चिदुपस्थितकलायादेरप्यन्वयबोध इत्यर्थाध्याहारपक्ष एव सम्यक्" "वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः" सा० द०। "आसत्तिक्रमेणान्वयः" रघु०।

**आसदन** न० आ+सद–ल्युट्। १प्राप्तौ २नैकट्यसम्बन्धे च।

**आसन** न० आस–ल्युट्। १स्थितौ "एकासनभोजने" स्मृतिः। २स्वस्थानस्थितिरूपे राज्ञां षड्गुणान्तर्गतगुणभेदे च। तद्विवृतिराग्नेये। "परस्परस्य सामर्थ्यविघातादासनं स्मृतम्। अरेश्च विजिगीषोश्च यानवत् पञ्चधा स्मृतम्"। आसनस्य पञ्चविधत्वञ्च। "विगृह्य सन्धाय तथा सम्भूयाथ प्रसङ्गतः। उपेक्षया च निपुणैर्यानं पञ्चविधं स्मृतमिति" तत्रैवोक्तम्। "परस्य स्वस्य सैन्यानां नाश्यं ज्ञात्वा विचक्षणः। आसनं स्वामिने ब्रूयात् मन्त्री स्वामिहिते रतः" इत्युक्ते ३विजिगीषोर्योगानिवर्त्तकव्यापारे च। आस्यतेऽत्र आधारे ल्युट्। ४उपवेशनाधारे कम्बलाद्यासने। "आसनं वसनं शय्या दारापत्यं कमण्डलुः। आत्मनस्तु शुचि प्रोक्तं न परेषां कदाचन" आ० त० पु०। "प्रवालशय्यासनया स्पृशागतः" रघु। "सहसादत्ते छनिकासने छविः" माघ "कृष्णासनं कौतुके-

दिमध्यम्" कुमा० "शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः" गीता "स्थापयेदासने तस्मिन् खिन्नं कार्येषणे म्हयाम्" मनु' । "स वासवेनासनसन्निकृष्टम्" "प्राञ्जलिर्जलासनम्" कुमा० । ५ देवतापूजाङ्गे उपचारभेदे तद्भेदादि कालि० पु०। "आसनं प्रथमं दद्यात् पौष्पं दारुजमेव वा । वास्त्रं वा चार्म्मणं कौशं मण्डलस्योत्तरे सृजेत् । पौष्पासनं यद्विहितं यस्य तद्यदि गर्भकम् । निवेदयेत्तदा पद्मे विपुले द्वारि चोत्सृजेत् । पौष्पं पुष्पैर्विरचितं कुसुमलतादिसंयुतम् । अतिप्रीतिकरं देव्या समाप्यन्यस्य भैरव ।। यत्तद्दारुसमुद्भूतमासनं सदृशं शुभम् । नोच्छ्रायं नातिविस्तीर्णमासनं विनियोजयेत् । अन्यदारुद्भवञ्चापि दद्यादासनमुत्तमम् । सकण्टकं क्षीरयुक्तं दारु सारविवर्जितम् । चैत्यश्मशानसम्भूतं वर्जयित्वा विभीतकम् । वास्त्रं कौषजं फालं वस्त्रमेतत्त्रयं मतम् । रोमजं कम्बलञ्चैव तदनेन चतुष्टयम् । अनेन रचितं दद्यादासनं चेष्टभूतये । सिंहव्याघ्रतरक्षूणामागस्य महिषस्य च । गजानां तुरगाणाञ्च कृष्णसारस्य चर्म्मणा । चमरस्याथ रामस्य मृगाणां नवभेदिनाम् । चर्म्मभिः सर्व्वदेवानामासनं प्रीतिदं स्मृतम् । वास्त्रे'षु कम्बलं प्रशस्तमासनं देवतुष्टये । राङ्कवं चार्म्मणं श्रेष्ठं दारवं चन्दनोद्भवम् । यन्मासनं कुशमयं तदासनमनुत्तमम् । सर्वेषामपि देवानामृषीणाञ्च यतात्मनाम् । योगपीठस्य सदृशमासनं स्यामसुच्यते । आसनस्य प्रदानेन सौभाग्यं भुक्तिमाप्नुयात् । चमरो रोहितो न्यङ्कुः शबरो बभ्रुणो रुरुः । शशेणहरिणाश्चेति मृगा नवविधा मताः । हरिणस्यापि विज्ञेयं पञ्चभेदोऽत्र भैरव ।। कृष्णः खड्गो रुरुश्चैव पृषतश्च मृगस्तथा । एते बलिप्रदानेषु चर्म्मदाने च कीर्त्तिताः' । सर्व्वेषां तैजसानाञ्च आसनं ज्येष्ठमुच्यते । आवसं पञ्जिधित्वा तु कांस्यं सीसकमेव च । शिलामयं मणिमयं तथा रत्नमयं मतम् । आसनं देवताभ्यस्तु भक्त्या सम्यक् समुत्सृजेत् । अत्रैव साधकानाञ्च आसनं शृणु भैरव ।। वशासीनः पूजकस्तु सर्व्वसिद्धिमवाप्नुयात् । ऐणञ्च चार्म्मणं वास्त्रं तैजसञ्च चतुष्टयम् । आसनं साधकानाञ्च सततं परिकीर्त्तितम् । पूर्व्वोक्तं यच्च देवेभ्य आसनं परिकीर्त्तितम् । तत् सर्व्वमासनं शस्तं पूजाकर्म्मणि साधके । न सच्छेदासनो भूयात् पूजाकर्म्मणि साधकः । काष्ठादिकासनं कुर्य्यात् सितमेवं सदा बुधः। चतुर्व्विंशत्यङ्गुलेन दीर्घं काष्ठासनं मतम् । षोडशाङ्गुलविस्तीर्णमुत्सेधे चतुरङ्गुलम् । पञ्चाङ्गुलं वा कुर्य्यात्तु नोच्छ्रितं घातं कारयेत् । पूर्व्वोक्तं वर्ज्जयेदुच्चैरासनं पूजनेष्वपि । वास्त्रं द्विहस्तादूर्द्ध्वं दीर्घं सार्द्धहस्तान्न विस्तृतम् । तदूर्द्ध्वं तास्तु तथोच्छ्राय पूजाकर्म्मणि सन्त्यजेत् । यथेष्टं चार्म्मणं कुर्य्यात् पूर्व्वोक्तं सिद्धिदायकम् । षडङ्गुलाधिकं कुर्य्यान्नोच्छ्रये तु कदाचन । कम्बलं चार्म्मणं चैव महामायाप्रपूजने । पशस्तमासनं प्रोक्तं कामाख्यायास्तथैव च । त्रिपुरायाश्च सततं विष्णोश्चापि कुशासनम् । बहूच्छ्राय न चैव स्यात् तथैव बहुविस्तृतम् । दारु भूमिसमं प्रोक्तमन्यस्यापि सर्व्वकर्म्मणि । पृथक् पृथक् कल्पयेच्च शोभनं तादृगासनम् । न पत्रमासनं कुर्य्यात् कदाचिदपि पूजने । न प्राच्यञ्च न मृद्भूतमस्थिजं छिद्रदारुजे । शातद्रुदलसञ्जातमासनं कामिके चरेत् । चर्म्म पूर्व्वोदितं ग्राह्यं तथा गन्धमृगस्य च । सलिले यदि कुर्व्वीत देवतानां प्रपूजनम् । तत्राप्यासनमासीनो नोत्थितस्तु समाचरेत् । तोये शिलामयं कुर्य्यादासनं कौशमेव वा । दारवं तैजसं वापि नान्यदासनमाचरेत् । आसनारोपणस्थानस्थानाभावे तु पूजकः । आसनं कल्पयित्वा तु मनसा पूजयेज्जले । सद्यासनस्य संस्थानं तोयमध्ये न विद्यते । अन्यत्र वा तदा स्थित्वा देवपूजां समाचरेत् । इत्येतत् कथितं पुत्र । पूज्यपूजकसङ्गतम्" । आस्यतेऽनेन करणे ल्युट् । ५ देहस्थैर्य्यसाधने करचरणादिविन्यासभेदरूपे योगाङ्गभेदे "यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधयोऽष्टावङ्गानि" विभज्य "स्थिरसुखमासनम्" पात० सू० लक्षित तस्य ठक्ति यथा "निश्चलं सुखावहं च यदासनं तद्योगाङ्गम् । आस्यतेऽनेनेत्यासनं तच्च द्विविधम् बाह्यं शारीरं च तत्र चैलाजिनकुशोत्तरं बाह्यं, शारीरं पद्मस्वस्तिकादि । तत्र पद्मासनं प्रसिद्धम् । सव्यमाकुञ्चितचरणम् दक्षिणजङ्घोर्व्वन्तरे, दक्षिणं च सव्यजङ्घोर्व्वन्तरे, निक्षिपेदिति स्वस्तिकासनम् । द्वे पादतले वृषणसमीपे सम्पुटीकृत्य सम्पुटोपरि पाणिकच्छपिकां न्यसेदिति भद्रासनम् । योगपट्टेन सोपाश्रयासनम् । जानुप्रसारितबाहोः शयनं पर्य्यङ्कासनं क्रौञ्चोष्ट्रगजादिनिषदनवशेन क्रौञ्चाद्यासनं द्रष्टव्यम् । आसनस्थैर्य्योपायमाह । "प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्" पात० सू० । "स्वाभाविकप्रयत्नशैथिल्यादासनसिद्धिजनक तस्योपरमेणासनं सिध्यति अनन्ते नागनायके स्थिरतरफणासहस्रविधृतविश्वम्भरामण्डले चित्तस्य समापत्त्या देहाभिमानाभावेनासनदुःखासंस्पर्शेनासनं सिध्यति । तत्सिद्धिलिङ्गमाह । "ततो द्वन्द्वानभिघातः", पात० सू० । "आसन-

कायुसरणवत आकाशस्य शाब्दबोधापत्ते नचैव गिरि-र्भुक्तमग्निमान् देवदत्तेनेत्यादितो गिरिरग्निमान् भुक्तं देवदत्तेनेत्यन्वयबोधापत्तिरिति वाच्यं तथा तात्पर्य-ग्रहसत्त्वे इष्टापत्ते कदाचित्तु तत्र तथान्वयबोधस्य सर्वैरेव इष्टत्वात् नचैवं क्वचिद्योजनायाः कथमुपयोग इतिवाच्यं तात्पर्य्यग्रहार्थं तदुपयोगितेत्युक्तत्वादिति प्राञ्च अव्यवधानेनान्वयप्रतियोग्युपस्थितिरासत्तिरुक्ता सा च शाब्दबोधादेव तथा च तत्रापि आसत्तिः कारणं सा च शाब्दबुद्धिरूपा तस्याञ्च यद्यपरासत्तिः कारणं तदा अन-वस्था फलीभूता चेत् अन्योन्याश्रय इत्यतआह सा चेति प्रसङ्गादन्वयबोधनिर्वाहकपदजन्यपदार्थोपस्थितिपरिपाटीं प्रदर्शयि...माशङ्कते अथेति नव्यास्तु ननु एकत्रा पद जन्यप-दार्थोपस्थितिर्यदासत्तिस्तदा नानाविशेषणकस्थाने कथमन्वय-बोधः ? सर्व्वासां पदार्थोपस्थितीनाम् एकदाऽसम्भवादि-त्याशङ्कते अथेति इत्याहुः। नेत्यक मेलनम्। विशेषणज्ञान-साध्यत्वादिति विशेषणं पदार्थस्तदुपस्थितिसाध्यत्वात् इत्यर्थः उत्तरा पदधीजन्येत्यादि। विशिष्टज्ञानस्य शाब्दबोधात्मक-त्वस्य। मेलकात् समूहात् एकदैव तावत्पदस्मृति न च सक-लपदगोचरस्मरणाभावेऽपि प्रत्येकपदानुभवजनितप्रत्येकपदार्थ-स्मरणाहितसंस्कारेभ्य एव सकलपदार्थगोचरमनेकं स्मरणं सम्भवति तथा च सकलपदगोचरैकस्मरणपर्य्यन्तानुधा-वन विफलमिति वाच्यं प्रकारान्तरेण पदार्थोपस्थितेः शाब्दबोधाहेतुत्वात् यद्ज्ञानजन्यत्वोपपत्तये तदनुधावनात् ननु श्रोत्रेण प्रत्येकपदानुभवोऽपि न सम्भवति तथाहि आदौ घोत्पत्तिस्ततो द्वितीयकाले घत्वनिर्विकल्पकोत्पत्तिः अकारोत्पत्तिश्च अथ तृतीयकाले अकारत्वस्य निर्विकल्पक-वत्त्वविशिष्टघोटोत्पत्तिवनायाः ततश्चतुर्थकाले अत्वविशिष्टधी टटत्वनिर्विकल्पकाकारनाशश्चरमाकारोत्पत्तय इदानीञ्च घकारनाश न सम्भवति प्रत्यक्षं प्रति विषयस्य हेतुत्वात् ततः पञ्चमकाले टत्वविशिष्टबोधाकारस्त्वनिर्विकल्पकटकारनाशाः इदानीं माथमिकाकारनाश न सम्भवति तदभावात् ततः षष्ठक्षणे अत्वविशिष्टबोधाकारनाशो इदानीं टकारनाश न सम्भवति तदभावात् तथा च कथं वर्णसमूहात्मकपद-गोचरश्रौत्रानुभवः न च पूर्व्वपूर्व्ववर्णोपनयसहितान्त्य-वर्णसन्निकर्षात् श्रौत्रानुभवसम्भव इति वाच्यं बहि-रिन्द्रियजप्रत्यक्षे उपनीत विशेषणतयैव भासते इति नियमात् प्रत्येकवर्णसमूहस्वविशेष्यकपदप्रत्यक्षस्योपनय-मर्य्यादया असम्भवात् पदप्रत्यक्षे प्रत्येक सर्वस्य वर्णस्य विशेष्यत्वात् न च पूर्व्ववर्णोऽन्त्यवर्णविशेषणतया भासत इति वाच्यं पूर्व्ववर्णेऽन्त्यवर्णविशेषणत्वनियामकस्य तत्सम्बन्धस्याभावात् इति चेत् मैवं घादिसमुदायमात्रं न घटादिपदं टघादेरपि घटपदत्वापत्तेरपि तु अव्यवहितो-त्तरत्वसम्बन्धेन पूर्व्वपूर्व्ववर्णवदुत्तरोत्तरवर्णं एव पदं तत्र अव-सान दुर्ग्रहः पूर्व्वपूर्व्ववर्णोपनयसहकारेणाव्यवहितोत्तरत्व सम्बन्धेन उत्तरोत्तरवर्णविशेषणतया पूर्व्वपूर्व्ववर्णग्रहसम्भवात्" वैयाकरणास्तु पूर्व्ववर्णस्य ज्ञानरूपाया उपनयशामग्र्या सत्त्वे-ऽपि पूर्व्ववर्णस्यैवोत्तरवर्णे विशेषणत्वेन भाने नियाम-काभात् विनिगमनाभावेन अव्यवहितपूर्व्वत्वसम्बन्धेनैव उत्तरोत्तरवर्णस्यापि विशेषणतया भानस्य दुर्वारतया सतृतशब्दयोस्तुल्यपदत्वापत्तेः तथा च अतृपदोच्चारे तपदस्य श्रवणा याज्ञत्वापत्तिरित्यतोवर्णसमुदयादन्य स्फोट एव पदमित्याहुः तद्विषय स्फोटशब्दे वक्ष्यते।

अलाय विशेषः। चिन्तामणिमते शब्दाध्याहारएव मनु-दानाधेन तु आसत्तिप्रकरणे अर्थाध्याहारोऽपीति व्यवस्थापितम्। यथा "अस्तु वा शब्दाध्याहार एवावश्यक तथापि तज्जन्यपदार्थोपस्थितित्वेन कुतो हेतुत्वं अन-वात् पदार्थोपस्थितित्वेन हेतुत्वस्यौचितत्वात् तथा च ओदनं पचतीत्यादौ सति तात्पर्य्ये यथाकथञ्चिदुप-स्थितकलायादेरप्यन्वयबोध इत्यर्थाध्याहारपक्ष एव समक्" "वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चय " सा०द०। "आसत्तिक्रमेणान्वय" रघु०।

**आसदन** न० आ+सद–ल्युट्। १प्राप्तौ २नैकट्यसम्बन्धे च।

**आसन** न० आस–ल्युट्। १स्थितौ "एकासनभोजनै" स्मृतिः। २सन्ध्यार्थस्थितिरूपे राज्ञां षड्गुणान्तर्गतगुण-भेदे च। तद्विवृतिरामन्दके। "परस्परस्य सामर्थ्य-विघातादासनं स्मृतम्। अरेश्च विजिगीषोश्च यानवत् पञ्चधा स्मृतम्"। आसनस्य पञ्चविधत्वञ्च। "विगृह्य सन्धाय तथा सम्भूयाथ प्रसङ्गतः। उपेक्षया च निपुणैर्यानं पञ्चविधं स्मृतमिति" तत्रैवोक्तम्। "परस्य स्वस्य चैवास्य सामर्थ्यं... विवेचय। आसनं स्वामिने ब्रूयात् मन्त्री स्वामिहिते रतः" इत्युक्ते ३विजिगीषोर्व्यापारा-वर्ज्जकव्यापारे च। आस्यतेऽत्र आधारे ल्युट्। ४उपवेशना-धारे कम्बलादासने। "आसनं वसनं शय्या दाराणां कमण्डलु। आत्मनस्तु शुचि प्रोक्तं न परेषां कदाचन" प्रा०त०पु०। "प्रयत्नसत्कासनया स्वकागतः" रघु०। "स्वकृदत्तं मुनिनासनं शनिः" माघ० "कृष्णासनं कौतुके

पस्थितेरव्यवधानेन तत्पदार्थोपस्थितिस्तत्पदद्वयजन्यतत्पदार्थयोरन्वयबोधे आसत्तिरिति विवक्षितत्वात् । एवञ्च यत्र पदोपस्थितिरव्यवधानेन, पदार्थोपस्थितिश्च व्यवधानेन, यत्र वा पदार्थोपस्थितिरव्यवधानेन, पदोपस्थितिश्च व्यवधानेन, तत्रोभयत्रापि नासत्तिः किन्त्वेकपदोपस्थितिजन्यपदार्थोपस्थितिरपरपदोपस्थितिश्च समूहालम्बनरूपा ततोऽपरपदार्थोपस्थितिः पदान्तरोपस्थितिश्च समूहालम्बनरूपेत्यादिक्रमेण पदार्थोपस्थितिस्तत्रासत्तिः पदोपस्थितेरव्यवधानमपि पूर्वोत्तरलक्षणसाधारण प्रकृतान्वयबोधाननुगुणलक्षणघटितं बोध्यम् ननु आसत्तिभ्रमादन्वबोध इति सर्वैर्गीयते स कुत्रेति वाच्यं यत्र व्यवहितपदोपस्थितावव्यवहितत्वधीर्व्यवहितायां पदार्थोपस्थितौ अव्यवहितत्वधीर्वा तत्र तत्सम्भवात् । यथैवमासत्तिज्ञानस्य शाब्दबोधहेतुत्वे रूपसत्याः पदजन्यपदार्थोपस्थितेः पृथक्कारणत्वे किं मानं, न च विशेषणज्ञानसाध्यं विशिष्टज्ञानमिति विशेषणज्ञानत्वेन कारणमिति वाच्यम् आसत्तिज्ञानस्यैव पदार्थविषयकत्वेन विशेषणज्ञानत्वादिति चेन्न तद्विलम्बेनापि शाब्दधीविलम्बात् तस्यापि पृथक्कारणत्वात् न च तद्व्यतिरेकस्थाने आसत्तिविलम्बादेव शाब्दधीविलम्ब इति वाच्यं नह्यासत्तिः स्वरूपसती हेतुः किन्तु तज्ज्ञानमेव तद्व्यतिरेकस्थानेऽपि सम्भवादिति निर्णयकृतस्तद्वत् एकत्रदुपस्थापकातिवर्त्तमानयोरन्वयबोधस्थानेऽव्याप्तेर्यत्रानुमित्यादिना एकदैव पदजातमनुमितं स्मृतं वा तत्रैव समूहालम्बनपदार्थस्मरणजात तत्राव्याप्तेश्च तत्र प्रत्येकपदार्थोपस्थितेरभावात् न च तत्रापि क्रमिकप्रत्येकपदार्थोपस्थितिः कल्पनीयेति वाच्यम् अनुभवविरोधात् प्रत्येकपदार्थोपस्थितिमन्तरेणापि तत्र शाब्दबोधस्यानुभविकत्वात् किञ्च तस्याः स्वरूपसत्त्वेहेतुत्वं स्वयमेव निराकृतं क्रमिकप्रत्येकपदार्थोपस्थितेः शाब्दबोधात् पूर्वं विनष्टत्वात् नाप्येतज्ज्ञानं कारणं मानाभावात् तदुपस्थितिज्ञानविलम्बात् शाब्दबोधविलम्बस्यानुभविकं न च दैवाददृष्टादिना पदार्थोपस्थितौ पदजन्यत्वभ्रमेण शाब्दबोधानुदयात् तज्ज्ञानस्यापि हेतुत्वमिति वाच्यं इत्थं पदजन्यपदार्थोपस्थितेः स्वरूपसतोहेतुत्वात्तद्भ्रमे शाब्दबोधाभावात् अव्यवधानावैयर्थ्याच्च न चैतद्भ्रमानन्तरं शाब्दानुभवदर्शनादेतज्ज्ञानं हेतुरिति वाच्यं नहि यत्सत्त्वे यदुत्पद्यते तदेव तत्कारणं, घटाव्यवहितपूर्ववर्त्तियावत्पदार्थानामेव घटहेतुत्वापत्तेः

न च पदजन्यपदार्थोपस्थितौ अव्यवहितत्वाव्यवहितपदजन्यत्वयोः संशये व्यवहितत्वव्यवहितपदजन्यत्वनिश्चये च शाब्दबोधानुत्पत्तेस्तन्निश्चयोहेतुः तयोः प्रतिबन्धकत्वकल्पने गौरवादिति वाच्यं तात्पर्यज्ञानसत्त्वे व्यवहितत्वव्यवहितपदजन्यत्वग्रहेऽपि शाब्दबोधदर्शनादनुत्पत्तेरेवासिद्धेः नचैवं व्यवहितपदकदम्बात्मकश्लोकादौ योजनाया कारितायामेवान्वयबोधोनतन्यथा इत्यत्र किं बीजमिति वाच्यं योजनायास्तात्पर्यग्राहकत्वात् । अतएव यस्य योजना विनैव तात्पर्यग्रहस्तस्य न योजनापेक्षा । एतेन अन्वयप्रतियोगिपदं तदुपस्थापकपरं तथा च तदुपस्थापकपदोपस्थित्यव्यवधानेन तदुपस्थापकपदोपस्थितिस्तयोरासत्तिः न तु पदार्थोपस्थितीनामव्यवधानमपेक्षितमिति केषाञ्चिन्मतमप्यपास्तं वक्ष्यमाणान्योन्याश्रयाग्रहानुत्थितेः समूहालम्बनोपस्थितिमादाय सर्वत्रास्याः सत्त्वेन आसत्त्यानासत्त्यर्थविभागव्याघातापत्तेः । न च भेदगर्भमव्यवधानं विवक्षणीयं पूर्व्वोक्तदोषाणामपि इत्तेः । एतज्ज्ञानस्य कारणत्वे उक्तरूपेण मानाभावाच्च । केचित्तु अव्यवधानेनेति विशेषणे तृतीया अन्वयप्रतियोगिपदञ्च अन्वप्रतियोगिन उपस्थिति र्यस्मात् इति व्युत्पत्त्या अन्वयप्रतियोग्युपस्थापकपरं तथा च तत्पदार्थान्विततत्पदार्थशाब्दबुद्धौ तत्पदे तत्पदाव्यवधानमासत्तिः नत्पस्थितीनामव्यवधानं विवक्षितं मौनिश्लोकादौ लिप्यादिरूपदोषविशेषात् अव्यवधानभ्रमेणान्वयबोधः । न चैवं श्लोकादौ योजनायामप्यन्वयबोधो न स्यात् वक्त्रेदं व्यवधानेनोच्चारितमिति विशेषदर्शनेन भ्रमासम्भवात् इति वाच्यं योजनयोपस्थितवाक्यान्तरादेव तत्रान्वयबोधात् न तु श्लोकादितः । अव्यवधानज्ञानमनुगुणत्वभेदाभेदसाधारणं स्वपरसाधारणञ्च वाच्यं तेनैकपदाद्युपस्थितयोः क्रतिवस्तु मानत्वयोरन्वयबोधेऽपि न काप्यनुपपत्तिरित्याहुः तदप्यसत् वक्ष्यमाणान्योन्याश्रयग्रहानुत्थितेस्तात् पर्यादिज्ञानसत्त्वे अव्यवधानज्ञानाभावेऽपि शाब्दबुद्धेरानुभविकत्वाच्च नव्यास्तु इत्थं पदधीजन्यपदार्थोपस्थितिरासत्तिरियञ्च स्वरूपसत्येव हेतुः अतएव लिङ्गपरामर्श आसत्तिस्तु यद्यपि स्वरूपसत्येव प्रयोजिका इत्यादिप्रभाकरोपाध्यायेनोक्तं न च एतस्या अपि कारणत्वे मानाभाव इति वाच्यं तथासति घानयेति वाक्यमाकर्णयतः प्रत्यक्षेण घटं पश्यतोघटस्य शाब्दबोधापत्तेः घटमानयेति वाक्यमाकर्णयतः कारणतया घटपदकारणा

कालव्यवधानेन आकाशस्य शाब्दबोधापत्तेः न चैवं गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादितो गिरिरग्निमान् भुक्तं देवदत्तेनेत्यन्वयबोधापत्तिरिति वाच्यं तथा तात्पर्य्यग्रहदशायां इष्टापत्तेः कदाचित्तु तत्र तथान्वयबोधस्य सर्व्वैरेव इष्टत्वात् न चैव कश्चिद्योजनया कथमुपयोग इति वाच्यं तात्पर्य्यग्रहार्थं तदुपयोगितेत्युक्तत्वादिति प्राञ्चः अव्यवधानेनान्वयप्रतियोग्युपस्थितिरासत्तिरुक्ता सा च शाब्दबोधादेव तथा च तत्रापि आसत्तिः कारणं सा च शाब्दबुद्धिरूपा तस्याञ्च यद्यपरासत्तिः कारणं तदा अनवस्था फलीभूता चेत् अन्योन्याश्रय इत्यतआह सा चेति प्रत्यक्षादन्वयबोधनिर्वाहकपदजन्यपदार्थोपस्थितिपरिपाटीं प्रदर्श्य विभागछते अथेति नव्यास्तु ननु एवं पदजन्यपदार्थोपस्थितिर्यदासत्तिस्तदा नानाविशेषणकस्थाने कथमन्वयबोधः? सर्व्वासां पदार्थोपस्थितीनाम् एकदाऽसम्भवादित्याशङ्कते अथेति इत्याहुः। मेलक मेलनम्। विशेषणज्ञानसाध्यत्वादिति विशेषण पदार्थस्तदुपस्थितिसाध्यत्वात् इत्यर्थे इत्तत्रा पदधीजन्येयादिः। विशिष्टज्ञानस्य शाब्दबोधानुभवस्य। मेलकात् समूहात् एकदैव तावत्पदस्फूर्त्ति न च सकलपदगोचरस्मरणाभावेऽपि प्रत्येकपदानुभवजनितप्रत्येकपदार्थस्मरणाहितसंस्कारेभ्य एव सकलपदार्थगोचरमनेकं स्मरणं सम्भवति तथा च सकलपदगोचरैकस्मरणपर्य्यन्तानुधावनं विफलमिति वाच्यं प्रकारान्तरेण पदार्थोपस्थितेः शाब्दबोधाहेतुत्वात् पदज्ञानजन्यत्वोपपत्तये तदनुधावनात् ननु श्रोत्रेण प्रत्येकपदानुभवोऽपि न सम्भवति तथाहि आदौ घोत्पत्तिस्ततो द्वितीयकाले घत्वनिर्विकल्पकोत्पत्तिः अकारोत्पत्तिश्च अथ तृतीयकाले अकारतत्त्वनिर्विकल्पकघत्वविशिष्टधीटोत्पत्तिघनाशाः ततश्चतुर्थकाले घत्वविशिष्टधी टत्वनिर्विकल्पकाकारनाशघनाशाकारोत्पत्तय इदानीं च घकारभानं न सम्भवति प्रत्यक्षं प्रति विषयस्य हेतुत्वात् ततः पञ्चमकाले टत्वविशिष्टबोधाकारत्वनिर्विकल्पकटकारनाशा इदानीं प्राथमिकाकारभानं न सम्भवति तदभावात् ततः षष्ठक्षणे अत्वविशिष्टबोधाकारनाशौ इदानीं टकारभानं न सम्भवति तदभावात् तथा च कथं वर्णसमूहात्मकपदगोचरश्रौत्रानुभवः न च पूर्व्वपूर्व्ववर्णोपनयसहितान्त्यवर्णसन्निकर्षात् श्रौत्रानुभवसम्भव इति वाच्यं बहिरिन्द्रियजप्रत्यक्षे उपनीतं विशेषणतयैव भासते इति नियमात् प्रत्येकवर्णसमूहस्य विशेष्यकपदप्रत्यक्षस्योपनयमर्य्यादया असम्भवात् पदप्रत्यक्षे प्रत्येकं सर्व्वस्य वर्णस्य उपस्थितेः विशेष्यत्वात् न च पूर्व्ववर्णोऽन्त्यवर्णे विशेषणतया भासत इति वाच्यं पूर्व्ववर्णेऽन्त्यवर्णे विशेषणत्वनियामकस्य तत्सम्बन्धस्याभावात् इति चेत् नैवं शब्दसमुदायमात्रं न पदं घटादिपदं टघादेरपि घटपदत्वापत्तेः तु अव्यवहितोत्तरत्वसम्बन्धेन पूर्व्वपूर्व्ववर्णप्रकारकोत्तरवर्ण एव पदं तत्र श्रवणं न दुर्घटं पूर्व्वपूर्व्ववर्णोपनयसहकारेणाव्यवहितोत्तरत्वसम्बन्धेन उत्तरोत्तरवर्णविशेष्यकतया पूर्व्वपूर्व्ववर्णप्रकारकसम्भवात्" वैयाकरणास्तु पूर्व्ववर्णस्य ज्ञानरूपाया उपनयप्रत्यासत्त्याः सत्त्वेऽपि पूर्व्ववर्णस्योत्तरवर्णे विशेषणत्वेन भाने नियामकाभावात् विनिगमनाविरहेण अव्यवहितपूर्व्वत्वसम्बन्धेन उत्तरोत्तरवर्णस्यापि विशेषणतया भानस्य दुर्वारतया घटटघयोस्तुल्यपदत्वापत्तेः तथा च अनुपदोच्चारणे तत्पदस्य श्रवणग्राह्यत्वापत्तिरित्यतो वर्णसमुदायादन्यः स्फोट एव पदमित्याहुः तद्विशेषश्च स्फोटशब्दे वक्ष्यते।

अत्राय विशेषः। चिन्तामणिमते शब्दाध्याहार एव मथुरानाथेन तु आसत्तिपर्य्याये अर्थाध्याहारोऽपीति व्यवस्थापितम्। यथा "अस्तु वा शब्दाध्याहार एवावश्यकस्तथापि तज्जन्यपदार्थोपस्थितित्वेन कुतो हेतुत्वं लाघवात् पदार्थोपस्थितित्वेन हेतुत्वस्योचितत्वात् तथा च श्वोदन पचतीत्यादौ पचति तात्पर्य्यग्रहे यथाकथञ्चिदुपस्थितकलायादेरन्वयबोध इत्यर्थाध्याहारपक्ष एव सम्यक्" "वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः" सा॰द॰। "आसत्तिक्रमेणान्वयः" रघु॰।

**आसदन** न॰ आ+सद–ल्युट्। १प्राप्तौ २सैन्यसमन्वये च।

**आसन** न॰ आस–ल्युट्। १स्थितौ "एकासनभोजने" स्मृतिः। २स्वस्थानस्थितिरूपे राज्ञां षड्गुणान्तर्गतगुणभेदे च। तद्विवृतिराग्नेये। "परस्परस्य सामर्थ्यविघातादासनं स्मृतम्। अरेश्च विजिगीषोश्च यानवत् पञ्चधा स्मृतम्"। यानस्य पञ्चविधत्वञ्च। "विगृह्य सन्धाय तथा सम्भूयाथ प्रसङ्गतः। उपेक्षया च निपुणैर्यानं पञ्चविधं स्मृतमिति" तत्रैवोक्तम्। "परस्य स्वस्य सैन्यानां नाशं ज्ञात्वा विचक्षणः। आसनं स्वामिने ब्रूयात् मन्त्री स्वामिहिते रतः" इत्युक्ते ३विजिगीषोर्व्वाऽभिवर्षव्यापारे च। आस्यतेऽत्र आधारे ल्युट्। ४उपवेशनाधारे कम्बलाद्यासने। "आसनं वसनं शय्या दारापत्यं कमण्डलुः। आत्मनः शुचि नोक्तं न परेषां कदाचन" आ॰त॰पु॰। "प्रयतप्रक्षासनवा स्फागतः" रघु। "सहस्रदले कमलासने स्थितः" माघ "कूर्मासनं बौद्धमे-

टिमध्यम्" कुमा० "शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मन" गीता "स्थापयेदासने तस्मिन् खिन्नं कार्य्यक्षणे म्टगाम्" मनु । "स वासवेनासनसन्निकृष्टम्" "प्राञ्जलिर्जलजासनम्" कुमा० । ५ देवतापूजाङ्गे उपचारभेदे तद्भेदादि कालि० पु० । "आसनं प्रथमं दद्यात् पौष्पं दारुजमेव वा । वास्त्रं वा चार्म्मणं कौशं मण्डलस्योत्तरे सृजेत् । पौष्पासनं यदि स्थितं यस्य तद्युदि गर्भकम् । निवेदयेत्तदा पश्चे विपुलं द्वारि चोत्सृजेत् । पौष्पं पुष्पौघरचितं कुशस्तूलादिसंयुतम् । अतिप्रीतिकरं देव्या ममाप्यन्यस्य भैरव ।। यज्ञदारुसमुद्भूतमासनं सरूपं शुभम् । नोच्छ्राय नातिविस्तीर्णमासनं विनियोजयेत् । अन्यदारुभवञ्चापि दद्यादासनमुत्तमम् । सकण्टकं क्षीरयुक्तं दारु सारविवर्जितम् । चैत्यश्मशानसंभूतं वर्जयित्वा विभीतकम् । वास्त्रन्तु कौषजं फालं वस्त्रमेतत्त्रयं मतम् । रोमजं कम्बलञ्चैव तदनेन चतुष्टयम् । अनेन रचितं दद्यादासनं चेष्टभूतये । सिंहव्याघ्रतरक्षूणां छागस्य महिषस्य च । गजानां तुरगाणाञ्च कृष्णसारस्य चर्म्मणा । सृमरस्याथ रामस्य मृगाणां नवभेदिनाम् । चर्म्मभिः सर्व्वदेवानामासनं प्रीतिदं स्मृतम् । वास्त्रेषु कम्बलं शस्तमासनं देवतुष्टये । राङ्कवं चार्म्मणं श्रेष्ठं दारवं चन्दनोद्भवम् । यज्ञासनं कुशमयं तदासनमनुत्तमम् । सर्वेषामपि देवानामर्पणाञ्च यतात्मनाम् । योगपीठस्य सदृशमासनं स्यान्नचोच्यते । आसनस्य प्रदानेन सौभाग्यं भुक्तिमाप्नुयात् । सृमरो रोहितो न्यङ्कुः शबरो बभ्रुणो रुरु । शशेणहरिणाश्चेति मृगा नवविधा मता । हरिणश्चापि विज्ञेय पञ्चभेदोऽत्र भैरव ।। ऋष्य खड्गो रुरुश्चैव पृषतश्च मृगस्तथा । एते बलिप्रदानेषु चर्म्मदाने च कीर्त्तिता" । सर्व्वेषां तैजसानाञ्च आसनं श्रेष्ठमुच्यते । आयसं वर्ज्जयित्वा तु कांस्यं सीसकमेव च । शिलामयं मणिमयं तथा रत्नमयं मतम् । आसनं देवताभ्यस्तु धर्म्म सर्व्वं समुत्सृजेत् । अत्रैव साधकानाञ्च आसनं शृणु भैरव ।। यत्रासीनः पूजकस्तु सर्व्वसिद्धिमवाप्नुयात् । ऐणञ्च चार्म्मणं वास्त्रं तैजसञ्च चतुष्टयम् । आसनं साधकानाञ्च सततं परिकीर्त्तितम् । पूर्व्वोक्तं यच्च देवेभ्य आसनं परिकीर्त्तितम् । तत् सर्व्वमासनं शस्तं पूजाकर्म्मणि साधके । न वष्टासनो भूयात् पूजाकर्म्मणि साधक । काष्ठादिकासनं कुर्य्यात् मितमेवं सदा बुध । चतुर्व्विंशत्यङ्गुलेन दीर्घं काष्ठासनं मतम् । षोडशाङ्गुलविस्तीर्णमुत्सेधे चतुरङ्गुलम् । पञ्चाङ्गुलं वा कुर्य्यात्तु नोच्छ्रितं चात्र कारयेत् । पूर्व्वोक्तं वर्ज्जयेद्वक्त्रमासनं पूजनेष्वपि । वास्त्रं द्विहस्तायो दीर्घं सार्द्धहस्ताच्च विस्तृतम् । त्र्यङ्गुलाम्नु तथोच्छ्राय पूजाकर्म्मणि संश्रयेत् । यथेष्टं चार्म्मणं कुर्य्यात् पूर्व्वोक्तं सिद्धिदायकम् । षडङ्गुलाधिकं कुर्य्यान्नोच्छ्राये तु कदाचन । काम्बलं चार्म्मणं चैव महामायाप्रपूजने । प्रशस्तमासनं प्रोक्तं कामाख्यायास्तथैव च । त्रिपुरायाश्च सततं विष्णोश्चापि कुशासनम् । बहूच्छ्रायं न चैव स्यात् तथैव बहुविस्तृतम् । दारुभूमिसनं प्रोक्तमप्रशस्तमपि सर्व्वकर्म्मणि । पृथक् पृथक् कल्पयेच्च शोभनं तादृशासनम् । न पत्रमासनं कुर्य्यात् कदाचिदपि पूजने । न प्रारब्धं न मृद्भूतमस्थिजं द्विरदादृते । मातङ्गदन्तसञ्जातमासनं कामिके चरेत् । चर्म्म पूर्व्वोदितं ग्राह्यं तथा गन्धमृगस्य च । सलिले यदि कुर्व्वीत देवतानां प्रपूजनम् । तत्राप्यासनमासीनो नोत्थितस्तु समाचरेत् । तोये शिलामयं कुर्य्यादासनं कौशमेव वा । दारवं तैजसं वापि नान्यदासनमाचरेत् । आसनारोपणस्थानस्थानाभावे तु पूजक । आसनं कल्पयित्वा तु मनसा पूजयेज्जले । सत्यासनस्य सस्थानं तोयमध्ये न विद्यते । अन्यत्र वा तदा स्थित्वा देवपूजां समाचरेत् । इत्येतत् कथितं पुत्र । पूज्यपूजकसम्मतम्" । आस्यतेऽनेन करणे ल्युट् । ६ देहस्थैर्य्यसाधने करचरणादिवन्धभेदरूपे योगाङ्गभेदे "यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधयोऽष्टावङ्गानि" विभज्य "स्थिरसुखमासनम्" पात० सू० उचितं तस्य रूपं तु यथा "निश्चलं सुखावहं च यदासनं तद्योगाङ्गम् । आस्यतेऽनेनेत्यासनं तच्च द्विविधम् बाह्यं शारीरं च तत्र चैलाजिनकुशोत्तरं बाह्यं, शारीरं पद्मस्वस्तिकादि । तत्र पद्मासनं प्रसिद्धम् । सव्यमाकुञ्चितचरणम् दक्षिणजङ्घोर्व्वन्तरे दक्षिणं च सव्यजङ्घोर्व्वन्तरे, निक्षिपेदिति स्वस्तिकासनम् । द्वे पादतले वृषणसमीपे सम्पुटीकृत्य सम्पुटोपरि पाणिकच्छपिकां न्यसेदिति भद्रासनम् । योगपट्टेन सोपाश्रयासनम् । जानुप्रसारितबाहोः शयनं पर्य्यङ्कासनं क्रौञ्चोष्ट्रगजादिवदुपवेशनं क्रौञ्चाद्यासनं द्रष्टव्यम्" । आसनस्थैर्य्योपायमाह । "प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्" पात० सू० । "स्वाभाविकप्रयत्नचलत्वादासननिवर्त्तक तस्योपरमेणासनं सिध्यति अनन्ते नागनायके स्थिरतरफणासहस्रविधृतविश्वम्भरामण्डले चित्तस्य समापत्त्या देहाभिमानाभावेनासनदुःखास्फूर्त्तेरासनं सिध्यति । तत्सिद्धिलिङ्गमाह । "ततो द्वन्द्वानभिघातः" पात० सू० । 'आसन-

विशोधनम्"। सात्त्विकादिपानकर्त्तृभेदेन चेष्टाविशेषाश्च तत्रोक्ताः "सात्त्विको गीतहास्यादि राजसो साहसादिकम्। तामसो निन्द्यकर्म्माणि निद्रां च मदिरां चरन्"। चरन् पिबन् कुर्य्यादिति शेषः। "विधिना मात्रया काले हितैरन्नैर्यथाबलम्। प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतं यथा। किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम्"
सुश्रुते तु मद्यभेदेन गुणविशेषादिकमुक्तं यथा
"सर्व्वं पित्तकरं मद्यमम्लं दीपनरोचनम्। भेदनं कफवातघ्नं हृद्यं वस्तिविशोधनम्। पाके लघु विदाह्युष्णं तीक्ष्णमिन्द्रियबोधनम्। विकाशि सृष्टविण्मूत्रं शृणु तस्य विशेषकम्। माद्वीकमविदाहित्वान्मधुरान्वयतस्तथा। रक्तपित्तेऽपि सततं बुधैर्न प्रतिषिध्यते। मधुरं तद्धि रूक्षञ्च कषायानुरसं लघु। लघुपाकि सरं शोषविषमज्वरनाशनम्। माद्वीकाल्पान्तरं किञ्चित् खार्ज्जूरं वातकोपनम्। तदेव विशदं रुच्यं कफघ्नं कर्षणं लघु। कषायमधुरं हृद्यं सुगन्धीन्द्रियबोधनम्। कासार्शोग्रहणीदोषमूत्राघातानिलापहा। स्तन्यरक्तक्षयहिता सुरा बृंहणदीपनी। कासार्शोग्रहणीश्वासप्रतिश्यायविनाशिनी। श्वेता मूत्रकफस्तन्यरक्तमांसकरी सुरा। छर्द्द्यरोचकहृत्कुक्षितोदशूलप्रमर्द्दनी। प्रसन्ना कफवातार्शोविबन्धानाहनाशिनी। पित्तलाल्पकफा रूक्षा यवैर्वातप्रकोपणी। विष्टम्भिनी सुरा गुर्वी श्लेष्मला तु मधूलिका। रूक्षा नातिकफा हृद्या पाचनी चाक्षिकी स्मृता। त्रिदोषो भेद्यहृद्यश्च कोहलो वदनप्रियः। ग्राह्युष्णोऽजगलः पक्ता रूक्षतृट्कफशोफहृत्। हृद्यः प्रवाहिकाटोपदुर्नामानिलशोषहृत्। बक्कसो हृतसारत्वाद्विष्टम्भी वातकोपनः। दीपनः सृष्टविण्मूत्रो विशदोऽल्पमदो गुरुः। कषायो मधुरः शीधुर्गौडः पाचनदीपनः। शार्करो मधुरो रुच्यो दीपनो वस्तिशोधनः। वातघ्नो मधुरः पाके हृद्य इन्द्रियबोधनः। तद्वत् पक्वरसः शीधुर्बलवर्णकरः सरः। शोफघ्नो दीपनो हृद्यो रुच्यः श्लेष्मार्शसां हितः। कर्षणः शीतरसिकः श्वयथूदरनाशनः। वर्णकृज्जरणः स्वर्य्यो विबन्धघ्नोऽर्शसां हितः। आक्षिकः पाण्डुरोगघ्नो व्रण्यः संग्राहको लघुः। कषायमधुरः शीधुः पित्तघ्नोऽसृक्प्रसादनः। जाम्बवो बद्धनिस्यन्दस्तुवरो वातकोपनः। तीक्ष्णः सुरासमो हृद्यो मूत्रलः कफवातनुत्। मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः। लघुर्मध्वासवश्छेदी मेहकुष्ठविषापहः। तिक्तः कषायः शोफघ्नस्तीक्ष्णः स्वादुरवातकृत्। तीक्ष्णः कषायो मदकृद्दुर्नामकफगुल्महृत्। कृमिमेदोऽनिलहरो मैरेयो मधुरो गुरुः। बल्यः पित्तहरो वर्ण्यो मृद्वीकेक्षुरसासवः। शीधुर्मधूकपुष्पोत्थो विदाह्यग्निबलप्रदः। रूक्षः कषायः कफहृद्वातपित्तप्रकोपणः। निर्द्दिशेद्रसतश्चान्यान् कन्दमूलफलासवान्। नवं मद्यमभिष्यन्दि गुरु वातादिकोपनम्। अनिष्टगन्धं विरसमहृद्यञ्च विदाहि च। सुगन्धि दीपनं हृद्यं रोचिष्णु कृमिनाशनम्। स्फुटस्रोतस्करं जीर्णं लघु वातकफापहम्। अरिष्टो द्रव्यसंयोगसंस्कारादधिको गुणैः। बहुदोषहरश्चैव दोषाणां शमनश्च सः। दीपनः कफवातघ्नः सरः पित्ताविरोधनः। शूलाध्मानोदरप्लीहज्वराजीर्णार्शसां हितः। पिप्पल्यादिकृतो गुल्मकफरोगहरः स्मृतः। चिकित्सितेषु वक्ष्यन्तेऽरिष्टा रोगहराः पृथक्। अरिष्टासवशीधूनां गुणान् कर्म्माणि चादिशेत्। बुद्ध्वा यथास्वं संस्कारमवेक्ष्य कुशलो भिषक्। सान्द्रं विदाहि दुर्गन्धं विरसं कृमिलं गुरु। अहृद्यं तरुणं तीक्ष्णमुष्णं दुर्भाजनस्थितम्। अल्पौषधं पर्य्युषितमत्यच्छं पिच्छिलञ्च यत्। तद्वर्ज्ज्यं सर्व्वदा मद्यं किञ्चिच्छेषन्तु यद्भवेत्। तत्र यत् स्तोकसम्भारं तरुणं पिच्छिलं गुरु। कफप्रकोपि तन्मद्यं दुर्जरञ्च विशेषतः। पित्तप्रकोपि बहुलं तीक्ष्णमुष्णं विदाहि च। अहृद्यं फेनिलं पूति कृमिलं विरसं गुरु। तथा पर्य्युषितञ्चापि विद्याद्दनिलकोपनम्। सर्व्वदोषैरुपेतन्तु सर्व्वदोषप्रकोपणम्। चिरस्थितं जातरसं दीपनं कफवातजित्। रुच्यं प्रसन्नं सुरभि मद्यं सेव्यं मदावहम्। तस्यानेकप्रकारस्य मद्यस्य रसवीर्य्यतः। सौक्ष्म्यादौष्ण्याच्च तैक्ष्ण्याच्च विकाशित्वाच्च वह्निना। समेत्य हृदयं प्राप्य धमनीरूर्द्ध्वमागतम्। विक्षोभ्येन्द्रियचेतांसि वीर्य्यं मदयतेऽचिरात्। चिरेण श्लैष्मिके पुंसि पानतो जायते मदः। अचिराद्वातिके दृष्टः पैत्तिके शीघ्रमेव तु। सात्त्विके शौचदाक्षिण्यहर्षमण्डनलालसः। गीताध्ययनसौभाग्यसुरतोत्साहकृन्मदः। राजसे दुःखशीलत्वमात्मत्यागं ससाहसम्। कलहं सानुबन्धन्तु करोति पुरुषे मदः। अशौचनिद्रामात्सर्य्यागम्यागमनलोलताः। असत्यभाषणञ्चापि कुर्य्याद्धि तामसे मदः। रक्तपित्तकरं शुक्तं छेदि भुक्तविपाचनम्। वैस्वर्य्यं जरणं श्लेष्मपाण्डुक्रिमिहरं लघु। तीक्ष्णोष्णं मूत्रलं हृद्यं कफघ्नं कटुपाकि च। तद्वत्तदासुतं सर्व्वं रोचनञ्च विशेषतः। गौड़ानि

रसशुक्तानि मधुशुक्तानि यानि च । यथापूर्व्वं गुरुतराण्य-भिस्यन्दकराणि च । तथा तु दीपनं हृद्यं हृत्पा-ण्डुक्रिमिरोगनुत् । ग्रहण्यर्शोविकारघ्नं भेदि सौवीरकं तथा । धान्याम्लं धान्ययोनित्वाद्दीपनं दाहनाशनम् । स्पर्शात्पानात्तु पवनकफतृष्णाहरं लघु । तीक्ष्णोष्णं निर्हं-रेदाशु कफं गण्डूषधारणात् । मुखवैरस्यदौर्गन्ध्यमल-शोषक्लमापहम् । दीपनं जरणं भेदि हितमास्थापनेषु च । समुद्रमाश्रितानाञ्च जनानां सात्म्यमुच्यते ।"

स्मृतौ तु जातिभेदेन मद्यविशेषपाननिषेधाय मद्य-विभागादि दर्शितं यथा प्रा० वि० मनुहारीतयमैः । "सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । तस्माद्ब्राह्मण-राजन्यौ वैश्यश्च न सुरां पिबेत्" । तथा च श्रुतिः "सुरा वै मलमन्नानामनृतं पाप्मतमं सुरेति" । यद्यप्यत्र शब्दः स्थूल-धान्यतण्डुलविकारविशेषे चोदने प्रसिद्धस्तथापि बहुतर-वचनात् पिष्टयवान्नादिविकारमपि लक्षयति । तेनान्न-विकारविशेषो मदहेतुः सुरा इत्युच्यते । अत्रि । "गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्व्वा न पातव्या द्विजोत्तमैरिति" त्रिविधैव सुरेति धान्यादिविकारव्यावृत्तस्य त्रितयस्यानुगतस्यैकस्य प्रवृत्तिनिमि-त्तस्याभावात् न पानक्रियाव्याप्यत्वम् इतरव्यावर्त्तकधर्म्मस्य महापातकहेतुपानकर्मत्वस्योपाधि सुराज्ञानाधीनं महा-पातकं तज्ज्ञानाधीनञ्च सुराज्ञानम् इतरेतराश्रयापत्तेः पुलस्त्यवचनविरोधाच्च यथा पुलस्त्यः । "पानसं द्राक्षं माधूकं खार्ज्जूरं तालमैक्षवम् । माध्विकं टाङ्कं माध्वीकमैरेयं नारि-केलजम् । समानानि विजानीयान्मद्यान्येकादशैव तु । द्वादशन्तु सुरा मद्यं सर्व्वेषामधमं स्मृतम्" । अनेनैकादशानां सुरात्वं निषेधति । मद्यशब्दस्तु मदहेतुद्रवद्रव्यमात्र-वचनः छत्रादिवत् वचनात् न तु मद्यमात्रं सुराशब्दस्यार्थः तथा च बृहस्पतिः । "गौडीं माध्वीं सुरां पैष्टीं पीत्वा-विप्रः समाचरेत् । तप्तकृच्छ्रं पराकञ्च चान्द्रायणमनुक्र-मात्" । त्रयाणां सुरात्वे क्रमेण प्रायश्चित्तत्रयं न स्यात् । तथा भविष्ये "सुरा पैष्टी तु मुख्योक्ता न तस्यास्त्वितरे समे" । पैष्टीति तण्डुलविकारमात्रोपलक्षणम् । इतरे गौडी-माध्व्यौ । अतो धान्यविकार एव सुराशब्दस्य मुख्यत्वात् त्रिविधा सुरेति गौडीमाध्व्योर्गौणसुरात्वज्ञापनार्थम् तेनै-तत्पानेऽपि महापातकत्वमतिदिशति यथैवैका तथा सर्व्वेति पैष्ट्या पूर्व्वप्रसिद्धिं दर्शयति यथा पैष्टी सुरा तथा सर्व्वा गौडी माध्वी च । पूर्व्ववचनोक्तापि पैष्टी दृष्टान्तत्वेनात्र-दर्शिता । न पातव्या द्विजोत्तमैर्ब्राह्मणैरित्यर्थः । त्रैवर्णिकपरत्वे उत्तमपदानर्थक्यात् । न तु बहुवच-नानर्थक्यपरीहारार्थं सुसमप्रातिपादिकानर्थक्य युक्तं बहुवचनस्य सजातीयोपस्थापकत्वेन चरितार्थत्वात् । अतो ब्राह्मणस्य त्रिविधसुरापानं महापातकम् । "क्षत्रियवैश्य-योस्तु" सुरा वै मलमन्नानामिति वचनेन पैष्ट्येवेति स्थितम् गोविन्दराजविश्वरूपवीरेश्वराणामयमनुमतोऽर्थः । अत एव "एवं माध्वी च गौडी च पैष्टी च त्रिविधा सुरा । द्विजातिभिर्न पातव्या कदाचिदपि कर्हिचित्" इतिमनुवच-नेऽपि द्विजातिपदं ब्राह्मणपरमेव । अतएव द्विविधसुरा-पाने क्षत्रियादीनां महापातकं तावदस्तु दोषाभावमेवाह भविष्यपुराणम् । "कामादपि हि राजन्यो वैश्यो वापि कथ-ञ्चन । मद्यमेवासुरं पीत्वा न दोषं प्रतिपद्यते" तदेव पैष्टी-निषेधस्त्रैवर्णिकानाम् गौडीमाध्वीनिषेधस्तु ब्राह्मणस्यैव ननु ब्राह्मणराजन्याविति कर्तृविशेषणं पुंलिङ्गं तत्र विवक्षि-तम् अतः कथं ब्राह्मण्याः सुरापानं महापातकम् उच्यते निषिध्यमानक्रियायाविधेयत्वेन तत्कर्त्तुरनुपादेयत्वात्त-द्विशेषणं लिङ्गमविवक्षितम् ग्रहैकत्ववत् । अतस्त-ज्जातिस्त्रीणामपि पाननिषेधः । तथा च भविष्ये "तस्मान्न पेयं विप्रेण सुरामद्यं कदाचन । ब्राह्मण्यापि न पेया वै सुरा पापभयावहा" । "यद्ब्राह्मणी सुरापी स्यान्न ता देवाः पतिलोकं नयन्तीति" श्रुतिः । "पतत्यर्द्धशरीरस्य भार्य्या यस्य सुरां पिबेत् । पतितार्द्धशरीरस्य निष्कृतिर्नो-पपद्यते" । न चैवं क्षत्रियवैश्यस्त्रीणामनिषेधः ब्राह्मणी-पदस्य निषिद्धसुरापानकर्त्तृभार्य्योपलक्षकत्वात् "भार्य्या यस्य सुरां पिबेदिति सामान्यश्रवणाच्च ।

वेदविहितः मद्यसवनप्रकारस्तु सौत्रामणीशब्दे वक्ष्यते । "यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् । तद्ब्राह्म-णेन नात्तव्यं देवानामश्नता हविः" मनुः । "अनासवाख्यं करणं मदस्य" कुमा० । "मामासवप्रार्थसमुत्सुकम्" काद० । "सुखं लालाक्लिन्नं पिबति चषकं सासवमिव" शान्तिश० । "सविदासवयोर्मध्ये सविदेव गरीयसी" तन्त्र० । भावे घञ् । २मद्यादेरभिषवे (मदचोयान) आसूयतेऽत्र आधारे घञ । ३अभिषवपात्रे । आ+सु-प्रसवे अच् । ६प्रसवकर्त्तरि त्रि० । "देवस्य सवितुर्मति-मासवं विश्वदेव्यम्" श्रुतिः । [त० । तालद्रुमे ।

आसवद्रु पु० आसवस्य (ताडी) मद्यभेदस्य कारणं द्रुः शाक० ।

आसवनीय त्रि० आ+सु-कर्म्मणि अनीयर् । अभिषवणीये०

अभि+सम् आभिमुख्येन सम्यग्गतौ सक० "त जातमभिसंयन्ति देवा" अथ ११,५,२, णिचि अबोधने गमादेशः। गमयति ते अजीगमत् त बोधने तु प्रत्या(प)ययति ते प्रत्यापिपत् त-प्रत्यायियत् त। सनि अबोधने गमादेश जिगमिषति बोधे तु० प्रतीयियिषति। उपसर्गस्यावर्णात् परस्य गुणभावेन एत्व प्राप्तौ वृद्धिरेकादेश। अयैति अयैमि उपैति।

इयड्ड पु०न० इदि-रण् द्व०। उभाकर्षके अयस्कारे पदार्थे 'अथेनमियड्डाभ्या परिगृह्णाति असौ वा आदित्य एषोऽग्निरहोरात्रे इयड्डे अह तदादित्यमहोरात्राभ्या परिगृह्णाति तस्मादेषोऽहोरात्राभ्या परिगृहीत यद्वेवैनमियड्डाभ्या परिगृह्णाति असौ वा आदित्य एषो अग्निरिमा उभयलोकाविण्डे अहं तदादित्यमाभ्या लोकाभ्या परिगृह्णाति तस्मादेष आभ्या लोकाभ्यां परिगृहीत परिमण्डले भवत परिमण्डलौ हीमौ लोकौ मोक्षे लिखती तस्यो एवोक्तोऽयो अनतिदाहाय" शत० ब्रा० ६,७,१,२५,२६, "परिमण्डलाभ्यामियड्डाभ्यामुखा परिगृह्णाति" कात्या०१६, ५,२,२, "उखा याभ्या गृह्यते तौ इयड्डौ" कर्क०।

इत् त्रि०एति गच्छति इ-क्विप्॥गत्वरे व्याकरणोक्ते प्रक्रियाकालोच्चारिते प्रयोगकालेऽस्थायिनि वर्णे वेदे यथा तिप् मिप् इत्यादौ पकारादि ते च "उपदेशेऽजनुनासिक इत्" "हलन्त्यम्" "न विभक्तौ तुस्मा" "आदिर्ञिटुडव" "ष प्रत्ययस्य" "चुटू" "लशक्वतद्धिते" पा०सूत्रैः सापवाद दर्शिता तस्य लोप" इत्यनेन तस्य प्रयोगेऽदर्शनञ्च विहितम् "आदिरन्त्येन सहेता" पा० २ अनन्तरार्थे ३अवधारणार्थे च अव्य० "यदेदना अदडहन्त पूर्वं आदिद्" यजु०१७,२५,, "आत् इत् इति च्छेद इत् एवार्थे" वेददी० "उपोषेनु मघवन्। भूय इन्नु" यजु०३,३४, इत् एवार्थे" वेददी० ५इदमित्यर्थे च 'अथाहित्येतानि वरुणस्य व्रतानि" यजु०४,३०, इदित्यव्ययमित्यमित्यर्थे' वेददी०

इत त्रि०इ-क्त।गते "वनितानितया रजनीवधू"रघु, भावे क्त। २गतौ "वर्दितादियादयो पय" शत०ब्रा०६,२,१,११। ३ज्ञाने च न०। "वीतसवीतस्वीत" सा०कौ०।

इतर त्रि०इमा कामेन तीर्यते तॄ-अप् तरति पचाद्यच् वा। १नीचे पामरे "इतरइव परिभूय ज्ञानम्, अविगणय्य नय प्रमाणम्, उन्मूल्य गाम्भीर्य्यं, मन्मथेन जडीकृतः" काद०। ईयतेऽनेन इत विशेषस्त राति रा क।

२भेदाश्रये। "इतरतापशतानि यथेच्छया वितर तानि सहे चतुरानन।" उद्भट। "यत्र हि द्वैतमिव भवति तदितर इतरम् पश्यति" श्रुति। "ते यतश्च पराक्रम्या विजयायेतराय वा" भा०आ०१०अ०। वर्णाश्रमेतराणा नो ब्रूहि धर्म्मानशेषत" या० स्मृ० "इतराणि च स्थानि मेतवर्णनरकोटिषु" 'इतरोदहने स्वकर्म्मणाम्" रघु "तमिम कुरु दक्षिणेतरम्" कुमा०। अस्य सर्व्वनाम कार्य्यम्। इतरे इतरस्मै इतरस्मात् इत्यादि। "विजयायेयराय वै इत्यादि छान्दसम् न तत्कार्य्यम्। वर्ण्याश्रमेतराणामित्यत्र बहुब्रीहि तेन न सर्व्वनामकार्य्यम्। एव"शर सव्येतरे भुजे" रघुश्लोकेऽपि बहुब्रीहि। तसिल् इतरत। "जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञ स्वराट्"भाग०। थाल् इतरथा"एव देवलेतरथा मानुषे"शत०ब्रा ६'८ १,५, इतरेण निर्वृत्तम् कक्लादि०अञ्। ऐतर। अस्त्रेनिर्वृत्ते त्रि० इतरस्या अपत्यम् शुभ्रा० ढक्। ऐतरेय तदपत्ये पु'स्त्री।

इतरेतर त्रि०इतर+द्वित्व समासवद्भावश्च। अन्योन्यशब्दार्थे। "स्त्रीनपु सकयोरुत्तरपदस्यामिभक्तेराम्भावो वा वक्तव्य" वार्त्ति० इतरेतराम् इतरेतर वा इमे ब्राह्मण्यौ कुले वा भोजयत सि०कौ०। समासवद्भावात् टीत्तमे न पु भाव इतरेतरेण "द्वन्द्वे टावभाव क्लीवे चाद्विरह स्वमो। समासे चोरलुक् चेति मिद्ध बाहुलकात्त्रयमित्युक्त कार्य्यं तेन क्लीवे इतरेतरमित्येव। "इतरेषा तु वर्णानामितरेतरकाम्यया"मनु। "यथा नाभिचरेता तौ वियुक्तावितरेतरम्" मनु। परन्तु तदादिवत् सर्व्वनामकार्य्यम्। किन्तु नादुड इति भेद "व्यूढावुभौ तावितरेतरस्मात्" रघु

इतरेतरयोग पु०इतरेतरस्य योगः अन्वय। प्रत्येकप्राधान्येन सर्व्वेषामन्वये। तदर्थे हि द्वन्द्वसमास इष्यते सथानेकवत् प्रत्येकप्राधान्यात्। धवश्च खदिरश्च इति वाक्ये हि धरखदिरौ इत्यत्र भिनत्तीत्यादि क्रियाया प्रत्येकस्य प्राधान्येनैवान्वय तया च एकजातीयक्रियान्वयितावच्छेदकविशिष्टे प्रत्येकान्वयबोधकत्वे इतरेतर योगस्य द्वन्द्व सं.. प्राधान्ये तु समाहारद्वन्द्व इति भेद। २परस्परसम्बन्धे च।

इतरेतराश्रय पु० इतरेतरमाश्रयति आ+श्रि-अच्। अन्योन्याश्रये तर्कदोषभेदे अन्योन्याश्रय शब्दे २१७२० दृश्यम्।

इतरेद्युस् अव्य० इतरस्मिन्नह्नि इतर+एद्युस्। इतरदिवसे इत्यर्थे।

इतश्चेतश्च अव्य०। इतश्च इतश्च। अनियतदिग्भागा

बर्हिरिति” वचनात् स्तुवश्च । “इध्मप्रमाणं चारत्निरिति सद्भिः प्रकीर्त्तितमिति 'कात्यायन (कर्मप्रदीपे) तथा “समित्-पवित्रं वेदं च कुर्य्यात् प्रादेशसम्मितम् । इध्मस्तु द्विगुणः कार्य्यः परिधिस्त्रिगुणः स्मृतः” “चार्त्तं प्रादेशं इध्मो वा द्विगुणं परिधिस्ततः” इति । “एकविंशति वा” सू०। अथ वा एकविंशतिमेकविंशतिसंख्याककाष्ठकमिध्मं कुर्य्यात् तथा चापस्तम्बः “खादिरं पालाशं वैकविंशतिदारुकमिध्मं करोति” । “तत्र परिधीनेके” सू० । एके आचार्य्यास्तत्र एकविंशतिसंख्यकाष्ठकादिध्मात्त्रीणि काष्ठान्युद्धृत्य पालाशान्येवोपादाय परिधीन् परिदधति “तत्रैकइध्मस्यैवैतान् परिधीन् परिदधतीति” श्रुते । अथ वैकमेवेदं सूत्रम् “एकविंशति वा तत्र परिधीनेके” इति एके आचार्य्या विकल्पेन एकविंशतिसंख्यकाष्ठमिध्मं कुर्वन्ति तत्र इति तस्मादेवैकविंशतिकाष्ठकेध्मात् परिधीन् परिदधति च । एतदेव युक्ततरम् आपस्तम्बसूत्रे एकविंशतिकाष्ठानां विभागदर्शनात् । तथाचापस्तम्बः “खादिरं पालाशं वैकविंशतिदारुकमिध्मं करोति तत्र परिधय पालाशकाष्ठकाः खादिरौदुम्बरबिल्वरोहितकविकङ्कतानां ये वा यज्ञिया वृक्षा आर्द्राः शुष्का वा सत्वचः, स्थविष्ठो मध्यमोऽणीयान्द्राघीयान्दक्षिणार्ध्यो ह्रसिष्ठ उत्तरार्ध्यौ द्वे, आघार समिधावनुयाज समिदेकविंशति अमूलानामनूलाना वा दर्भाणां पूर्ववच्छुल्वं कृत्वोदगग्रं निधायेति” । अथ एतद्विषमेकीयमतम् यदेकविंशतिकाष्ठक इध्मः । तस्मिन् पक्षे चेध्मादेव त्रीणि काष्ठान्यादाय परिधिमपरिधानमिति । अत्र मानन्तरमिध्मबर्हिषोर्भूमौ निधानं न कार्य्यम् आपस्तम्बसूत्रे अनभोनिदधातीत्युक्तत्वात् । तत्रैक इध्मस्यैवैतान् परिधीन् परिदधतीत्यत्र हरिस्वामिन तद् तथा न कुर्य्यादनवक्लृप्ता हि तस्यैते भवन्तीति वाक्यमात्रे परिधिभिरा- [illegible] भवितव्यम् । इध्मस्तु शुष्क इन्धनत्वादेव द्विमात्रेयश्च [illegible] ते इध्मैकदेशभूता परिधित्वायासमर्था [illegible] [illegible] आधानाय होति शुष्का ह्यादाधेय [illegible] मात्रयाहवनीये शरे सम्पद्यन्तीत्यभिप्राय यस्तु परिधिबुद्ध्या आहरति सोऽवश्यमेष्मोयाद्ग्निस्वरादतिरिक्तमेवाहरति अग्निवेश्म च दारुभयाच्च शुल्बमिति [illegible] पा इति' कात्या० १,२,१४,२१ ।

'अपरिमित प्रणयनीय त्रियूनम्” सू०। “प्रणयनस्याय प्रणयनीयः प्रणयनीयमग्निप्रणयनार्थमिध्ममपरिमितमपरिमितकाष्ठकं त्रियून त्रिवृन्ति सप्तदशरज्जुभिर्वेष्टितं कुर्य्यात् त्रीणि यूनानि बन्धनानि यस्य स त्रियूनः तं त्रियूनमिति । अपरिमितस्य च प्रागुक्तेध्मकाष्ठसंख्यापेक्षयातिशयेनाधिकसंख्यकाष्ठकत्वम् । तेन चतुर्विंशतिसामिधेनीको पञ्चदशापशुकाष्ठ सप्तविंशति काष्ठानि भवन्ति । ततश्च प्रणयनीये ततो ऽभ्यधिकानि अष्टाविंशतिप्रभृतीनि इष्टकासंख्यानि काष्ठानि भवन्ति कर्क० ।

छन्दोगप० “प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्त्तितम् । एवम्भूता भवेयुश्च समिधः सर्व्वकर्मसु । समिधोऽष्टादशेध्मस्य प्रवदन्ति मनीषिणः । दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशति । समिदादिषु होमेषु मन्त्रदैवतवर्जिता । पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत् । इध्मोऽप्येधार्थमाचार्य्यैर्हविराहुतिषु स्मृतः । यत्र चास्य निवृत्तिः स्यात्तत् स्फुटीकरवाण्यहम् । अङ्गहोमसमित्तन्त्रसोष्यन्त्याख्येषु कर्मसु । येषां चैतदुपर्य्युक्तं तेषु तत्सदृशेषु च । अक्षभङ्गादिविपदि जलहोमादिकर्मणि । सोमाहुतिषु सर्व्वासु नैतेष्विध्मो विधीयते । 'इध्मजातीयकाष्ठं समाय मेध्यं भवेत्” । “समन्द्रमीतिरिध्मभृति यक्ष्यन्” ऋ० ६,२०,१२ ।“इध्मानां काष्ठानां भृति” भा०। तुषितदेवगणभेदे स च भाग० ४स्क०१अ० दर्शितो यथा “तोष प्रतोष सन्तोषो भद्र शान्तिरिडस्पति । इध्म कविर्विभु स्वाह्नः सुदेवो रोचनोद्विषट् । तुषिता नाम ते देवा आसन् स्वायम्भुवेऽन्तरे” भाग० ।

इध्मजिह्व पु० इध्मं काष्ठं जिह्वेवास्य । वह्नौ ।

इध्मवाह पु० लोपामुद्रागर्भजाते अगस्त्यपुत्रे ऋषिभेदे “सहस्रसम्मित पुत्र एकोऽप्यस्तु तपोधन ।” इति लोपामुद्रया प्रार्थितोऽगस्त्यस्तस्या पुत्रमुत्पादयाम तस्य नाम दृढस्युरिध्मवहनाच्च इध्मवाह इति नामान्तरं तदेदुक्तं भा०व० । ९९।“तत आधाय गर्भन्तमगमत् वनमेव स ” “तस्मिन् वनगते गर्भोऽवर्द्धत सप्त शारदान् । सप्तमेऽब्दे गते चाथ प्राच्यवत् स महाकविः । ज्वलदग्निप्रभावेन दृढस्युर्नाम भारत ।। साङ्गोपनिषदान् वेदान् जपन्निव महातपाः । तस्य पुत्रोऽभवद्दृष्ये स तपस्वी महाद्विजः । स बाल एव तेजस्वी पितुस्तस्य निवेशने । इध्मानां भारवहनादिध्मवाहस्ततोऽभवत्” ।

इन गतौ तना०पर०सक०सेट् । निरुक्ते इन्वतीति बहुवचनात् इति केचित् इनोति इनुतः इन्वन्ति इनोमि इन्व इनुव इनुयात् इनोतु इनु इनवानि ऐनोत् । ऐनीत् इनेन । निरुक्ते इन्वसि इति एकवचनान्तत्वेन इन्वधातुरेवायमिति

यङ्घ' स च भ्वादि० प० सेट् । इन्वति ऐन्वीत् इन्वाञ्चकार तद्रूपम् । "मघायमाण इन्वसि" ऋ०१,१७६,१ ।

**इन** पु० इण-नक् । १ सूर्य्ये, "नन्दिनीमिह तनयमवर्ज्यपुत्र-व्यया इमाङ्घ्रिपदं सभोऽक्षम्" नीस० ता० । २प्रभौ "न न मङ्घीनमङ्घोनपराक्रमम्" रघु । ३स्वामिवर्य्ये च ।

**इनक्ष** व्याप्ति गतौ छान्दस इकारोपसर्जनं भा०पर०स०मक-तद्रूपम् इनक्षति "दूरे चत्तायच्छन्त सहकृतं यदिनक्षत्" ऋ०१,१२२,६, "इनक्षत् व्याप्नोति व्याप्त गतौ छान्दस इ-कारोपसर्जन इति भा० "शुक्रेण शोचिषाद्यामिनक्षत्, ऋ०१०,४५,७, [ इभे राजनि० ।

**इनानी** स्त्री इनमानयति आन-णिच्-अण् गौरा०। वटपत्री

**इत्थिहा** स्त्री ताजकोक्तायां सहमायाम् । तदानयन-प्रकारादि नील० ता० उक्तम् यथा "स्वजन्मलग्नात् प्रति-वर्षमेकैकराशिभोगा सुथहा क्रमेण । स्वजन्मलग्न रवि-तश्च्यात यद्युत सा स्फुटेत्थिहा स्यात् । मन्यङ्घ वर्षलिप्ता-भिर्वर्द्धते सानुपातत । सार्द्धमष्टय मासदत्याङ्क कोऽपि स्फुरय० । स्वामिसौम्येक्षणात् सौख्यं युतदृष्ट्या भय रुजः । भावालोकनसंयोगात् फलमस्या निरूप्यते । वर्षलग्नात् सुखासान्त्यरिपुरन्ध्रेष्वयोमना । पुत्रकर्मायगा स्वास्थ्यं दत्तेऽन्यतोद्यमाद्बनम् । यत्तुनय मानषतुष्टिलाभं मतापप्रवृ-त्त्यते प्रसादम् । शरीरपुष्टिं विविधोद्यमाय ददाति सौख्यं सुथहा तनुस्था । उत्साहतोऽर्थागमनं यशश्च स्ववन्धुवर्गामानसुपाश्रयाञ्च । मिष्टान्नभोगोवरपुष्टिसौख्य स्याद्वर्षभावे इथहा यदाब्दे । पराक्रमाद्वित्तयशः सुखाप्ति सौन्दर्यसौख्यं द्विजदेवपूजा । सर्वोपकारस्तनुपुष्टिकान्तिस्ते-पामयवे मुथहा तृतीये । शरीरपीडा रिपुभीः स्वगेहैर वनस्थापनिरुद्यमत्वे । स्वान्मन्यहाया सुखभावगाया जना-पवादाप्तमयर्त्तिरुङ् स्वम् । यदीत्थिहा पञ्चमगाब्दवेशे सद्-बुद्धिसौख्यात्मजवित्तलाभ । मतापशुद्धिर्विविधाभिलाषा देवद्विजार्चा न्पतिप्रसादं । क्षमन्यमङ्गे मु रिपूदयश्च भय रुजस्सम्स्करतो नृपाद्वा । कार्य्यार्थनाशो सुथहाऽरिगा चेत् दुर्बुद्धिवृद्धि स्वजतेऽनुताप । कलत्रवन्धुव्यसनारिभीतिस्त्-साहमङ्गो धनधर्म्मनाश । शरीरपगा चेन्मुथहा तनौ स्या-द्रुजा मनोमोहविरुद्धचेष्टा । भय रिपोस्तस्करतोविनाशो धर्मार्थयो सुव्यसनामयश्च । स्वर्त्तुस्थिता चेन्मुथहा नराणां बलक्षय स्याद्गमन विदूरे । स्वामित्वमर्थागमनो नृपे भ्योधर्मोत्सव पुत्रकलत्रसौख्यम् । देवद्विजार्चा परमं यशश्च भाग्योदयो भाग्यगतेत्थिहा स्यात् । नृपप्रसाद च

जनोपकारं सत्कर्मसिद्धिं द्विजदेवभक्तिम् । यशोऽभिवृद्धि विविधार्थलाभं दत्तोऽम्बरस्था मुथहा धनाप्तिम् । यदी-त्थिहा लाभगता विलाससौभाग्यनैरुज्यमन प्रसादाः । भवन्ति राजाश्रयतोधनाप्ति समित्रपुत्राभिमताप्तयश्च । व्ययाऽधिको दुष्टजनैश्च सङ्गोरुजस्तथा विक्रमतोऽप्यसिद्धि । धर्मार्थहानिर्मुथहा व्ययस्था यदा तदा सज्जनतोऽपि वैरम् । क्रूरैर्दृष्ट युतदृथा यो भावो मुथहाख्य चेत् । शुभ तद्भा-वज नश्येदशुभञ्चापि वर्द्धते । शुभस्वामियुक्तेक्षिता वीर्य्य-युक्तैत्थिहा स्वामिसौख्येत्यशालं प्रपन्ना । शुभ भावज पोषयेदशुभ साऽन्यथात्वेत्थिहा भाव कल्पोविमृश्य । जनुर्लग्नतोऽस्तान्त्यपष्ठ तृत्वन्तुस्थितावर्द्धे इता क्रूरखेटैस्तु चेत् । विनश्येत् स यत्रेत्थिहा भाव एव शुभस्वामिदृष्ट्या न नाश शुभ च । यदोभयत्रापि हतो भावोनश्येत् स स-र्वथा । उभयत शुभत्वे ऽपि भावोऽयौ वर्द्धतेतराम् । वर्षे स्व-मित्रगेहस्था यद्भावे जनुषि स्थिता । क्रूरोपघातात्तभाव ना-शयेत् शुभयुक् शुभा । जनुर्लग्नतस्तुर्य्यगा सौम्ययुक्ताब्दवेश पितुर्द्द व्यलाभं विधत्ते । नृपाङ्गीतिदा पापयुक्तातिकष्टाष्टमा-दावपीत्थ विमृश्याभिधेयम् । यस्मिन् भावे स्वामिसौम्येक्षिता सा भावोत्जन्मन्यपि यत्तस्य वृद्धि । एव मार्गेणाप्य उक्तास्तु तस्येत्युद्यं वीर्य्याद्यैव, सौख्यमेव । यदीत्थिहा सूर्य्ययुक्ते युतेक्षिता सूर्य्येण राज्य नृपवङ्गमञ्च । दत्ते शुभाना परभागमाप्तिं स्थानान्तरस्था फलदा इयर्ति । कुजेन युक्ता कुजभे कुजेन दृष्टा च पित्तोष्णरुजन्ननोति । शस्त्राभिघातं रुधिरप्रकोप चौरेक्षिता मौरम्यङ्के विशेषात् । चन्द्रेण युक्ते-न्दुगृहेऽथ दृष्टेन्दुनापि वा धर्मयशोऽभिवृद्धिः । नैरुज्य स-न्तोषमतिप्रवृत्ति ददाति पापेक्षणतोऽतिदुःखम् । बुधेन शुक्रेण युतेक्षितापि तद्भेऽपि वा स्त्रीमतिलाभसौख्यम् । धर्मं यशश्चाप्यतुल विधत्ते कष्टं च पापेक्षणयोगत स्यात् । युतेक्षिता वा गुरुणा गुरोर्भे यदीत्थिहा सुतकलत्रसौ-ख्यम् । ददाति हैमाम्बररत्नकोष शुभेत्थशालादिह रा-ज्यलाभ । शनेर्गृहे तेन युतेक्षितापि यदीत्थिहा वातरुज-विधत्ते । मानक्षय बद्धिभय धनस्य हानिं च नीचेक्षणतः शुभाप्तिम् । तमोमुखे चेन्मुथहा धनाप्तिर्विदेश सुख धर्मसत्-कृतिश्च । सितेत्थयोगेऽखिल पदाप्ति, सुवर्णरत्नाम्बरल-भयश्च । भोग्या राह्वोर्लवास्तस्य सुख पृष्ठ गता स्थिता । तत सप्तभम पुच्छ विमृश्येति फलं वदेत् । तत्पृष्ठभागेन शुभा यदा स्यात्तत्पुच्छगापद्रिपुभीतिदुःखम् । पापेक्ष-पादर्थसुतस्य हानिर्वेत्तन्मनीत्य स्वप्नवित्तनाशः । के जन्म-

काले बलिनोऽब्दकाले चेद्‌ मेलाक्तं शुभं समाप्ते। विपर्य्यये पूर्व्वमनिष्टमन्त्यं तस्य फलं स्यादुभयत्र साम्ये। षष्ठेऽष्टमेऽन्त्ये भुवि चेन्त्रिहेशोऽस्तगोऽथ पक्षोऽशुभदृष्टयुक्तः। क्रूरान्तरर्थास्तगतश्च भव्योन साह्‌ न यच्छति वित्तनागम्। यद्यष्टमेशेन युतोऽथदृष्ट चुताख्यदृष्ट्या न शुभस्तदापि। योगद्वये स्यान्निधनं यदैकोयोगस्तदा मृत्युसमत्वमाहुः। शुभदृष्टान्तस्तिर्थापि जन्मानीचितयुक् शुभं। वर्षारम्भे शुभ दृष्टेऽब्देशेदन्तेऽन्यथा शुभम्”।

**इन्दम्बर** इदि–क्विप् इन्द् ऐश्वर्यान्वितमम्बरमिव नीलवर्णत्वात्। नीलोत्पले” शब्दमा०।

**इन्दि (न्दी)** स्त्री इदि–इन्। लक्ष्म्याम् वा ङीप् तत्रैव।

**इन्दिन्दिर** पु० इन्दि–किरच् नि०। भ्रमरे त्रिका०।

**इन्दिरा** स्त्री इदि–किरच्। लक्ष्म्याम्“इन्दिरा लोकमाता च लक्ष्मीस्तव। [ बहुब्री० २पद्मे ६त०। ३लक्ष्मीगृहे।

**इन्दिरामन्दिर** न० इन्दिरायामन्दिरमिव। १विष्णौ राज-

**इन्दिरालय** पु०६त०। १पद्मे २नीलोत्पले च। क्लीबत्वमपि।

**इन्दिवर** न०इन्दिर्लक्ष्मीस्तस्या वरं वरणीयम्। नीलोत्पले वा ङीप् इन्दीवरमप्यत्र। “इन्दीवरदलश्याममिन्दिरानन्दकन्दलम्” विष्णुस्तवः “इन्दीवरैरुत्पलचितान्तरेव” रघु २उत्पलमात्रे च“नावेन्दीवरलोचनत्रययुताम्”तन्त्र०[ २तद्युक्तलतायाञ्च।

**इन्दीवरिणी** स्त्री इन्दीवर+समूहे इनि। १उत्पलसमुदाये,

**इन्दीवरी** स्त्री इन्दीं लक्ष्मीं वृणाति वृ–अच् गौरा० ङीप्। शतमूल्याम्। मेदि० इन्द्रचिर्भिटा टावन्त राजनि०।

**इन्दीवार** पु० इन्द्यालक्ष्म्यावारो वरणमत्र। नीलोत्पले।

**इन्दु** पु० उनत्ति चन्द्रिकया भुवं क्लिन्नां करोति उन्द–उ आदेरिच्च। १चन्द्रे “दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव”रघु “तस्याः प्रसन्नेन्दुमुखप्रसादम्” मन्त्रोदधेः पूरइवेन्दुदर्शनात्”रघु “रामस्येन्दोरिव श्रियः”रघु “न नमः साचिव्यमकारि नेन्दुना”“चिन्वाहवेन्दो सवचोऽभिमेलम्”माघ “करैरिन्दोरनन्ताखुरिव इव सभिन्नमुकुल” वेणी० अमृतकरैः सकलतापनिवारणेनास्य इन्दुत्वम्। २तद्देवताके मृगशिरोनक्षत्रे “त्र्यग्नी इरोऽथेन्दुकरान्त्यमैत्रे दीपितिः ४एकसंख्यायुक्ते, नवेन्दुवेदेषुकुताश-नख्या” सि०शि०। ४कर्पूरे च।

अथ गगनमण्डले राशिचक्रे ग्रहाणां मध्ये सर्व्वेषाम् वस्तात् स्थितः यथाह सू० सि०। मन्दामरेज्यभूपुत्र सूर्य्यशुक्रेन्दुजेन्दवः। परिभ्रमन्त्यधोऽधस्था”। तस्य कक्षामानमाह सि० शि० यथा “बाहार्द्रिगोमनु सुराब्धिमितार्ककक्षा (४३३१४९७। ३० ) चान्द्री षडघ्न गुणितः जिनरामसंख्या”(३२४०००)। एतन्मितयोजनानि इन्दुकक्षामानम्। अनुपात गच्छतां ग्रहाणां राशिचक्रे इष्टसमये कीदृशांशेऽवस्थितिरिति ज्ञानाय अहर्गणेन तस्य स्फुटीकरणप्रकारादि तत्रैव दर्शितं यथा।“अभ्रेभिभाद्र गजकुञ्जरगोऽङ्कपक्षा ( २५९८८९८५० ) कक्षा स्फुटन्ति गणकाः भगणस्य चैषाम्। “अत्र रविकक्षातो भकक्षा षष्टि गुणा, एवं भकक्षायाः षष्ठ्यंशो रविकक्षा” प्रमि० “कल्पोद्भवैः क्षितिदिनैर्गगनस्य कक्षा भक्ता भवेद्दिनगतिर्गगनेचरस्य। “पादोनगोऽक्षधृतिभूमितयोजनानि ( ११-८५८४० ) खेटा व्रजन्त्यनुदिनं निजवर्त्मनीमे” सि०शि० “यदि कुदिनैः कक्षामितयोजनानि गच्छन्ति तदैकेन किमिति फलं दिनगतियोजनानि। तानि च स्फुटत्वेन तावत् पादोनगोऽक्षधृतिभूमितानि स्युः” प्रमि०। ग्रहानयनमाह। “अहर्गणात् क्षितिनवाङ्कमितात् ( ९९२१ ) नवेन्दुवेदेषुकृताश (२५४१९) लब्धा। अहर्गणघ्नो गोऽक्षधृतीन्दु (११८५९) भिन्नो विवर्जित स्फुटगतयोजनानि” स्वस्वया तानि पृथक् च कक्षया हृतानि वा स्युर्भगणादिकाग्रहाः” सि० शि०। “अहर्गणे भूनेत्रनवमन्द ९९२१ गुणे नवशशिर्धृतिवाणाग्निभिः २५४११ भक्ते यल्लब्धं तेन विवर्ज्जितं कार्य्यं। क ?। मन्देन्द्रियधृतीन्दु ११८ गुणोऽहर्गणः। एवं गतयोजनानि स्युः तेभ्यः पृथक् पृथक् स्वया स्वया कक्षया भाजितेभ्यो भगणादिका ग्रहाः भवन्ति अत्रोपपत्तिः। दिनगतियोजनैरहर्गणे गतयोजनानि भवन्तीति सुगमम्। अत सुखार्थं गोऽक्षधृतीन्दुभिः ११८५९ सपूर्णैरहर्गणो गुणितः। सोऽधिको जातः। यदधिकं तच्छोध्यम्। तस्याधिकस्य ज्ञानार्थमुपायः। परमोऽहर्गणः कुदिनतुल्यः। तेन गुणकेन गुणयः। एवं गोऽक्षधृतीन्दुभिघ्न मनुः सकलातोऽधिको भवति। तस्मात् खकक्षा विशोध्य शेषेणानुपातः। यदि कुदिनतुल्येनाहर्गणेनैतावदधिकं भवति तदिष्टेनाहर्गणेन किमिति। अत्र कुदिनानां तस्य शेषस्य च पञ्चपञ्चयुगवेदैरयुतगुणितैः ४४५५०००० रपवर्त्ते कृते सति, शेषस्थाने क्षितिनवाङ्का इतमाः कुदिनस्थाने मन्देन्दुवेदेषुकृताशाः। एवं त्रैराशिकेन यल्लभ्यते तेन स्फुटगतिगुणितेऽहर्गणे वर्जिते गतयोजनानि भवन्ति। सर्वेषां ग्रहाणां तान्येव गतेस्तुल्यत्वात्। अथ ग्रहार्थमनुपातः। यदि कक्षायोजनै-

तयोजनैरेको भगणस्तदैभि' किमिति फल गतभगणाद्या' सर्वे यहा भवन्तीत्युपपन्नम्" प्रमिता० ।
"ग्रहस्य कक्षैव हि तद्गपातयो'पृथक् च कल्प्यात तदीयसिद्धये । अर्कस्य कक्षैव सितज्ञयो सा ज्ञेया तयोरानयनार्थमेव । उक्त तयोर्यं चलतुङ्गकक्षे तत्रैव तौ च भ्रमतोऽकंगत्या" सि० शि० "ध्रतोऽङ्गस्य पातस्य च या कक्षा गच्छति सा तयोरानयनार्थमेव कल्प्या । अन्यथा या ग्रहस्य कक्षा सैव तयोरपि । यतो ग्रहकक्षाया छन्नप्रदेशस्योत्थपद्रेय । यत्र च विमण्डलेन सह सपातस्तस्य प्रदेशस्य पातसंज्ञेति गोले सम्यक् प्रतिपादितमस्ति । तथा बुधशुक्रयोरत्र ये चार्ककक्षाहृत्ये कक्षे चागच्छतस्ते तयोरानयनार्थमेव । किन्तु तयोर्यं चलकक्षे तत्रैव तौ च भ्रमत परमकेगत्या । एतदुक्तं भवति भूमध्यादर्कं प्रति नीतं सूत्रं यत्र घ्रचलकक्षाया लगति तत्र बुधो यत्र शुक्रच चलकक्षाया लगति तत्र शुक्रो भ्रमतीत्यर्थ "प्रमि०।

अत्र गगनकक्षा च कल्पाह्र्गण । यथाहार्य भट्ट' ।
"योयत्र भ्रमति सगस्तद्वृत्तं भवति तस्य कक्षाख्यम् । अम्बरकक्षा कल्पाहर्गणनामा भवेद्द्युगति" । खस्वकक्षायां स्थितानामपि ग्रहाणां नीचोच्चस्थानस्थितिवशत' परिधिभेदादिक भवतीति ग्रहशब्दे वक्ष्यते । अत्र बुधशुक्रकक्षयो रविकक्षातुल्यत्व यदुक्त तन्मध्यकक्षया फलानयनार्थम् । श्रीपतिना तु ग्रहान्तराणां कक्षामितिरुक्ता यथा ।"अभ्राङ्कषण्णगुणजा (८१४६६१६) चितिनन्दनस्य, व्यसेगटमत्तालखेन्दुमिताच (१०४२२११) जैवी । रूपाग्निनागयुगषट्शुगेन्दुवाणा (५११३७४८२१) खागन्द्रसागररसोन्नुतत्त्व (२६६४६२०) सितस्य । भूधराह्निनगनागरसत्सुसाधराम्बियमिन (१२७६६८७८७) शनिकक्षा । एतत्र खगोलशब्दे विस्तरेण वक्ष्यते ।
इन्दुश्च जलमय सूर्यसम्पर्कात् उज्ज्वलितो भवति तेन च दिने दिने यथा यथा शुक्ले पक्षे रविवियोगभेदात्तेज. सम्पर्कविशेषस्तथा तथा वर्द्धते कृष्णे तु रविमण्डलसन्निकृष्टतया क्रमशो दिने दिने तत्तेज सम्पर्कविशेषाभावस्तेन क्षीयते दिने दिने च इत्यादिकमप्युक्त सि० शि० ।
"तरणिकिरणसङ्गादेष पीयूषपिण्डो दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति । तदितरदिशि बालाकुन्तलश्यामलश्रीर्घट इव निजमूर्त्तिच्छाययैवातपस्थ' । सूर्यादध स्थस्य विधोरध स्यमर्धं भवत्यं सकलाऽसितं स्यात् । दर्शेऽथ भार्धान्तरितस्य शुक्लं तत् पौर्णमास्यां परिवर्त्तनेन । कक्षा-

चतुर्थं तरयोर्हि चन्द्र कर्णान्तरे तिर्यगिमौ यतोऽस्मात् । पादोनषट्काष्ठ (८५।४५) लवान्तरेऽतो दलं न्दश्यस्य दलस्य शुक्लम् । उपचितिमुपयाति शौक्ल्यमिन्दोस्त्यजत इनं भजतश्चेचकालम् । जलमयजलजस्य गोलकत्वात् प्रभवति तीक्ष्णविषाणरूपतास्य । यद्यास्योदक् तपनशशिनोरन्तर सोऽथ बाहु कोटिस्तूर्ध्वाधरमपि तयोर्यश्च तिर्यक् स कर्ण । दोर्मूलेऽर्क: शशिदिशि भुजोऽस्माच्च कोटिस्तदग्रे चन्द्र' कर्णो रविदिगनया दीयते तेन शौक्ल्यम्" ।
"प्राग्वद्भुमित्ते शरपार्श्वे चन्द्रकक्षां रविकक्षा च विलिख्य तत्रोर्ध्व रेखा तिर्यग्रेखा च कृत्वा चन्द्रकक्षोर्ध्व रेखाग्रपाते चन्द्रबिम्बं विलिख्येद दर्शयेत् । तिर्यग्रेखाया उपरि चन्द्रकक्षाव्यासार्धमितेऽन्तरेऽन्या तिर्यग्रेखा कुर्यात् । सा रेखा प्रत्यग्रविकक्षाया यत्र लग्ना तत्र स्थित एवार्कं ऊर्ध्व रेखावच्छिन्नचन्द्रबिम्बार्धं परिणतः शुक्ल भवति । तस्यार्धमध्यत्न मनुष्याऽश्यम् । तत्रस्थेऽर्के व्यर्केन्दु पादोनषड्भागेन(८५।४५)राशित्रय भवति । एतावत्येव व्यर्केन्दु भुजे बिम्बार्धं शशिन एव सा शुक्ल भवितुमर्हतीति प्रमि० "धाम्ना धामनिधेरयं जलमयो धत्ते सुधादीधिति' सद्य'प्रत्तमृणालकन्दविशदच्छायां विवस्वद्दिशि । कृष्णे घर्मभृणे करैर्घट इवान्यस्मिन् विभागे पुनर्बालाकुन्तलकालतां कलयति स्वच्छां तनोश्छायया" श्रीपति । "भानुसेत् प्रतिबिम्बितो जलमये शीतांशुगोले दिवा निस्तेजा निशि सम्भ कथमयो किं सूर्यबिम्बायम । गोलार्धं रविशोज्ज्वलं च सकल न स्यात् तडागे यथा भासार्धेऽखिलदश्यतेति गणकान् प्रामाह्य पृच्छति" ज्ञानराज ।
इह० स० शौक्ल्यादि प्रकारादि प्रदर्श्य तन्मारादिफलमुक्त यथा" निस्सम्भ स्यसेन्दोर्भाभिर्भानो सित भवत्यर्द्धम् । स्वच्छाययान्यदसितं कुम्भस्येवातपस्थस्य । सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् । क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्त । त्यजतो ऽर्कतल शशिन पश्चादवलम्बते यथा शौक्ल्यम् । दिनकरवशात्तथेन्दोः प्रकाशते ऽध प्रभृत्युदय । प्रतिदिवसमेवमर्कात् स्थानविशेषेण शौक्ल्यपरिवृद्धि । भवति शशिनोऽपराह्णे पश्चाद्भागे घटस्येव । ऐन्द्रस्य शीतकिरणो मूलाषाढाद्वयस्य वा युतः । याम्येन, बीजजलचरकाननघ्नो वह्निभयदश्च । दक्षिणपार्श्वेन गत शशी विशाखानुराधयो पाप. । मध्येन तु प्रशस्त पितृदैव विशाखयोरपि । षट्भागानि पौष्णाद् द्वादश रौद्राद्य मध्ययोगीनि । ज्येष्ठाद्यानि

धनिष्ठाप्राजापत्येन्दुविश्वदैवानि । मृद्नन् हिमकरतनय करोत्यवृष्टिं सरोगभयाम् । रौद्रादीनि मघान्तान्युपाश्रिते चन्द्रजे प्रजापीडा । शस्त्रनिपातक्षुद्भयरोगानावृष्टिसन्तापैः । हस्तादीनि विचरन् षड्भान्युपपीड़यन् गवामशुभ । स्नेहरसार्घवृद्धिं करोति चोर्वीं प्रभूतान्नाम् । आर्यम्णहौतभुज भाद्रपदामुत्तरां यमेश च । चन्द्रस्य सुतो निघ्नन् प्राणभृतां धातुसङ्क्षयकृत् । आश्विनवारुणमूलान्युपमृद्नन् रेवतीं च चन्द्रसुतः । पण्यभिषग्नौजीविकसलिलजतुरगोपघातकरः । पूर्वाद्युत्तलितयादेकमपीन्दोः सुतोऽभिमर्दयात् । क्षुच्छस्त्रतस्करामयभयप्रदायी चरन् जगतः । प्राकृतविमिश्रसङ्क्षिप्रतीक्ष्णयोगान्तघोरपापाख्याः । सप्त पराशरतन्त्रे नक्षत्रैः कीर्त्तिता गतयः । प्राकृतसंज्ञा वायव्यवाम्ययैतामहानि बहुलाश्च । मिश्रा गतिः प्रदिष्टा शशिशिवपितृभुजगदैवानि । सङ्क्षिप्ताया पुष्यः पुनर्वसुः फल्गुनीद्वयं चेति । तीक्ष्णाया भाद्रपदाद्वयं सशाक्राश्वयुक् पौष्णम् । योगान्तिकेति मूलं द्वे चाषाढे गतिः सुतस्येन्दोः । घोरा श्रवणस्त्वाष्ट्रं वसुदेवं वारुणं चैव । पापाख्या सावित्रं मैत्रं शक्राग्निदैवतं चेति । उदयप्रवासदिवसैः स एव गतिलक्षणं प्राह । चत्वारिंशत्त्रिंशद् द्विसमेता विंशतिर्द्विनवकं च । नव मासार्धं दश चैकसंयुताः प्राकृताद्यानाम् । प्राकृतगत्यामारोग्यवृष्टिसस्यप्रवृद्धयः क्षेमम् । सङ्क्षिप्तमिश्रयोर्मिश्रमेतदन्यासु विपरीतम् । ऋज्व्यातिवक्रा वक्रा विकला च मतेन देवलस्यैताः । पञ्चचतुर्द्व्येकाहा ऋज्व्यादीनां षडभ्यस्ताः । ऋज्वी हिता प्रजानामतिवक्रार्थं गतिर्विनाशयति । शस्त्रभयदा च वक्रा विकला भयरोगसञ्जननी । पौषाषाढश्रावणवैशाखेष्विन्दुजः समाघेषु । दृष्टो भयाय जगतः शुभफलकृत् प्रोषितस्तेषु । कार्त्तिकेऽश्वयुजि वा यदि मासे दृश्यते तनुभयं शिशिरांशोः । शस्त्रचौरहुतभुग्गदतोयक्षुद्भयानि च तदा विदधाति । रुद्धानि सौम्येऽस्तमिते पुराणि यान्युद्गते तान्युपयान्ति मोक्षम् । अन्ये तु पश्चादुदिते वदन्ति लाभं पुराणां भवतीति तज्ज्ञाः । हेमकान्तिरथ वा शुकवर्णः सस्यकेन मणिना सदृशो वा । स्निग्धमूर्त्तिरलघुश्च हिताय व्यत्यये न शुभकृच्छशिपुत्रः"। गगने बुधस्योत्पत्तिः भा०५ स्क० । "ततो बुधः सोमसुत उपलभ्यमान ततः उपरिष्टात् प्रायेण शुभकृत् । यदार्कात् व्यतिरिच्येत तदातिभयप्रायानावृष्ट्यादिभयमावहते" । इन्दुजातेन्दुनन्दनेन्दुपुत्रादयोऽप्यत्र । २नर्मदाख्यायां नद्यां स्त्री सा च मेकलकन्यका सोमसुता मुनिशापात् नदीत्वमाप्ता । इयं च प्रतीच्यामवन्तिषु स्थिता प्रत्यक्स्रोतोवहा च यथा । "अवन्तिषु प्रतीच्यां वै कीर्त्तयिष्यामि ते दिशि । यानि तत्र पवित्राणि पुण्यान्यायतनानि च । प्रियङ्ग्वाम्रवणोपेता वानीरफलमालिनी । प्रत्यक्स्रोता नदी पुण्या नर्मदा तत्र भारत । त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च । सरिद्वनानि शैलेन्द्रा देवाश्च सपितामहाः । नर्मदायां कुरुश्रेष्ठ । सह सिद्धर्षिचारणैः । स्नातुमायान्ति पुण्यौघैः सदा वारिषु भारत" भा० आ० ८९अ० ।

इन्दुजनक पु० ६त० । १अत्रिमुनौ तस्य ततउत्पत्तिकथा अत्रिजातशब्दे ११३ पृष्ठे दृश्या । २समुद्रे ततस्तस्योत्पत्तिकथा "शत यतसहस्रांशुर्मथ्यमानात्तु सागरात् । प्रसन्नात्मा समुत्पन्नः सोमः शीतांशुरुज्ज्वलः" भा०आ०१८अ० । दृश्या । [ जाम्बलीदले ।

इन्दुपुष्पिका स्त्री इन्दुरिव शुभ्रं पुष्पमस्याः । (विषलाङ्गला)

इन्दुभ न० इन्दोश्चन्द्रस्य भं नक्षत्रं राशिर्वा । चन्द्रदेवताके १मृगशिरोनक्षत्रे अश्लेषाशब्दे ४९८पृष्ठे नक्षत्राणामीशा दर्शिताः । २कर्कटराशौ च "कुजशुक्रबुधेन्द्वर्कसौम्यशुक्रावनीभुवाम्—क्षेत्राणि सुरजादयः ज्यो० । [ २चन्द्रप्रभायाम् ।

इन्दुभा स्त्री इन्दुना भाति भा—क ३त० । १कुमुद्वत्याम् । ६त० ।

इन्दुभृत् पु० इन्दुं बिभर्त्ति भृ–क्विप् । शिवे । तस्य चन्द्राधारत्वमिन्दुमौलिशब्दे ९२६पृष्ठे सप्रमाणं दर्शयिष्यते ।

इन्दुमणि पु० इन्दुः कान्तोऽस्य तत्करेण स्यन्दनात् तादृशो मणिः शाक०त० । १चन्द्रकान्तमणौ तस्य चन्द्रोदये निष्यन्दात् तन्मणित्वम् । तत्प्रियोमणि स इव शुभ्रो मणिर्वा । २मुक्तायाम् ।

इन्दुमण्डल न० ६त० । चन्द्रस्य बिम्बे मण्डलाकारे पदार्थे "कृत्वा स्तुत्वा नमस्कृत्य विसृजेदिन्दुमण्डले" तन्त्रसा० । तन्मण्डलमानञ्च सि० शि० दर्शितं यथा । "बिम्बं रवेर्द्विद्विशरर्त्तु (६५२२) संख्यानीन्दोः खनागाम्बुधि(४८०) योजनानि । भूव्यासहीनं रविबिम्बमिन्दुकर्णाहतं भास्करकर्णभक्तम् । भूविस्तृतिर्लब्धफलेन हीना भवेत् कुभाविस्तृतिरिन्दुमार्गे" "रवेर्योजनात्मकं बिम्बं मध्यमं द्वियमबाणषट्कतुल्यानि (६५२२) योजनानि । इन्दोस्तु शून्यवसुवेद (४८०)मितानि । अथ राहोरुच्यते । रविबिम्बं भूव्यासेन(१५८१) हीनं (४९४१)कृत्वेन्दुकर्णेन स्फुटेन योजनात्मकेन संगुण्य रविकर्णेन स्फुटेन भजेत् फलेन भूव्यासतो वर्जिते चन्द्रकक्षायां भूभाव्यासो भवति

कलानि योजनमितानि । अत्रोपपत्तिः यस्मिन् दिने अर्कस्य मध्यतुल्यैव स्फुटा गतिः स्यात् तस्मिन् दिने उदयकाले चक्रकलाव्यासार्धमितेन यष्टिद्वितयेन मूलमिलितेन तत्स्थदृष्ट्या तदग्राभ्यां विम्बप्रान्तौ विध्येत् । या यष्ट्यग्रयोरन्तकलास्ता रविविम्बकला भवन्ति मध्यमाः । ताश्च द्वात्रिंशत् किञ्चिदधिकैकत्रिंशत्कलाधिका ३२ ३१ । ३२ । एवं विधोरपि पौर्णमास्यां यदा मध्यैव गतिः स्फुटा तदा विध्येत् तस्यैव द्वात्रिंशत् कलाः ३२ । ० । ८ । उत्पद्यन्ते । विम्बकलानां योजनीकरणायानुपातः । यदि त्रिज्याव्यासार्धे एतावत्प्रमाणं विम्बं तदा पठितश्रुतियोजनैः किमित्येवमुत्पद्यन्ते द्विद्विषट्तु (६५२२) सङ्ख्यानि योजनानि । विधोस्तु खनागाब्धि (४८०) मितानीति”। प्रमि० । विम्बमेव गोलस्य व्यासशब्देनाभिधीयते “व्यासारवीन्दुक्षितिगोलकानां क्रमेण तेजोजलमृण्मयानाम् । स्युर्योजनन्यासतिबाणषड्भि(६५२२) र्व्योमाष्टवेदै (४८०) र्भुजगेषुचन्द्रैः । (१५८१) इति श्रीपतिना विम्बस्थाने व्यासशब्दप्रयोगात् । तस्यैव विष्कम्भ इति संज्ञा । “विष्कम्भमानं किल यत्न यत्र” इति लीला० व्यासस्थाने विष्कम्भशब्दप्रयोगात् अतएवार्यभट्टेन मानविरूपणे । “शशिविष्कम्भविवर्जितमित्युक्तम् ।” “व्यासे भनन्दाग्नि(१८२७) हते विभक्ते खबाणसूर्यैः (१२५० परिधिः स सूक्ष्मः” इति लीला० उक्तदिशा रविचन्द्रयोरुक्तव्यासमानेन परिधिरानेयः । स च रवेः किञ्चिदून (२०४९९) योजनमितः, चन्द्रस्य किञ्चिन्न्यून(१५०८) योजनमितः । तथा च मण्डलशब्दस्य व्यासपरत्वे (४८०) योजनानि परिधिपरत्वे किञ्चिन्न्यून (१५०८) योजनानि इन्दोर्मण्डलस्य मानमित्यवधेयम् ।

इन्दुमती स्त्री इन्दुः प्रशस्तोऽस्त्यस्याम् प्राशस्त्ये मतुप् । १पौर्णमास्याम् २अजनृपपत्न्यां विदर्भराजभगिन्याञ्च । “अथेश्वरेण क्रथकैशिकानां स्वयंवरार्थं स्वसुरिन्दुमत्याः” रघु । “मनोवभूवेन्दुमतीनिराशम्” रघु । सा च हरिणी नाम सुराङ्गना तृणविन्दुशापात् मानुषजन्मप्राप्ता तदेतत् वर्णितं रघौ । “चरतः किल दुश्चरं तपस्तृणविन्दोः परिशङ्कितः पुरा । प्रजिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम् । स तपःप्रतिबन्धमन्युना प्रमुखाविष्कृतचारुविभ्रमाम् । अशपद्भव मानुषीति तां शमवेलाप्रलयोर्मिणा भुवि । भगवन् ! परवानयं जनः प्रतिकूलाचरितं क्षमस्व मे । इति चोपनतां क्षितिस्पृशं कृतवानासुरपुष्पदर्शनात् । क्रथकैशिकवंशसम्भवा तव भूत्वा महिषी चिराय सा । उपलब्धवती दिवश्च्युतं विवशा शापनिवृत्तिकारणम्” इति अजं प्रति वशिष्ठसन्देशः ।

इन्दुमौलि पु० इन्दुर्मौलावस्य । महादेवे स हि इन्दुतपसा तुष्टस्तत्कलां शिरसैका दधारेति काशी० कथा यथा “तुष्टेन देवदेवेन स्वमौलौ या धृता सदा । आदाय तां कलामेकां जगत्सञ्जीवनीम् पराम् । पश्चात् दक्षस्य शापोऽपि मासान्ते क्षयमाप्य च । आप्याय्यतेऽसौ कलया पुनरेव तथा शशी”।

इन्दुरत्न न० ६त० इन्दुरिव शुभ्रं रत्नम् वा । मुक्तायां तस्याः चन्द्रदेवताकत्वात्, चन्द्रदोषोपशान्त्यर्थत्वेन तत्प्रीतये दीयमानत्वात् तद्वच्छुभ्रत्वाच्च तद्रत्नत्वम् । ग्रहशब्दे ग्रहरत्नानि वक्ष्यन्ते ।

इन्दुलेखा स्त्री इन्दोर्लेखेव । १चन्द्रकलायाम् २तदंशजन्यायां १सोमलतायाम्, तस्याः सोमाद्युद्भवकथा इन्दुवल्लीशब्दे ८२८पृष्ठे द्रष्टव्या । तद्वदाप्यायनकारिण्याम् ३अमृतायां, तद्वद्गुणत्वात् ४यमानिकायाञ्च । लस्य रः । इन्दुरेखाप्यत्र ।

इन्दुलोक पु० ६त० । चन्द्रलोके । स हि कर्म्मिणामुपभोगस्थानतया श्रुत्यादिषु कथितः । चन्द्रलोके कर्म्मिणाम् आप्यशरीरं जायते तच्च कर्म्मसमवायिजलद्रव्यात् शेष्य एवेति निरूपणाय छा० उ० पञ्चाग्निविद्या प्रस्ताविता यथा “असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्, रश्मयो धूमो,ऽहरर्च्चिः, चन्द्रमा अङ्गारा, नक्षत्राणि विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति १। पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो, विद्युदर्च्चिरशनिरङ्गारा, ह्रादनयो विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति तस्या आहुतेर्वर्षं सम्भवति २। पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाकाशो धूमो, रात्रिरर्च्चिर्दिशोऽङ्गारा, अवान्तरदिशो विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नं सम्भवति ३। पुरुषो वाव गौतमाग्निस्तस्य वागेव समित्, प्राणो धूमो, जिह्वाऽर्च्चिश्चक्षुरङ्गाराः, श्रोत्रं विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुतेरेतः सम्भवति ४। योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद्यदुपमन्त्रयते स धूमो, योनिरर्च्चिर्यदन्तः करोति तेऽङ्गारा, अभिनन्दा विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवति ५। इति

तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्बावृतो गर्भो दश वा नव वा मासानन्तः शयित्वा यावद्वाथ जायते स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति" छा० उ०। "असौ वाव लोकोऽग्निर्हे गौतम। यथाऽग्निहोत्राधिकरणम् आ-हवनीयम् इह तस्याग्नेर्द्युलोकाख्यस्यादित्य एव समित् तेन हीद्धोऽसौ लोको दीप्यते यत समिन्धनात् समि-दादित्य। रश्मयो धूमस्तदुत्थानात् समिधो हि धूम उत्तिष्ठति। अहरर्चिः प्रकाशसामान्यात् आदित्यका-र्यत्वाच्च। चन्द्रमा अङ्गारा अङ्ग प्रशमेऽभिव्यक्तेः अर्चिषो हि प्रशमेऽङ्गारा अभिव्यज्यन्ते। नक्षत्राणि वि-स्फुलिङ्गाश्चन्द्रमसोऽवयवा इव विप्रकीर्णत्वसामान्यात्। तस्मिन्नेतस्मिन् यथोक्तलक्षणेऽग्नौ देवा यजमानप्राणा अग्न्यादिरूपाः अधिदैवतं श्रद्धाम् अग्निहोत्राहु-तिपरिणामावस्थारूपाः सूक्ष्मा आपः श्रद्धाभाविताः श्रद्धा उच्यन्ते "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"-त्यपां हौम्यतया प्रश्ने श्रुतत्वात्। "श्रद्धा वा आपः श्रद्धामे-वारभ्य प्रणीय प्रचरन्तीति"च विज्ञायते। ता श्रद्धामब्रूपा जुह्वति। तस्या आहुतेः सोमो राजा। अपां श्रद्धाश-ब्दवाच्यानां द्युलोकाग्नौ हुतानां परिणामः सोमो राजा सम्भवति। यथा ऋग्वेदादिपुष्परसा ऋगादिमधु-करोपनीतास्त आदित्ये यश आदिकार्यं रोहितादिरूप-लक्षणमारभन्त इत्युक्तम्। तथेमा अग्निहोत्राहुतिसम-वायिन्यः सूक्ष्मा श्रद्धाशब्दवाच्या आपो द्युलोकमनुप्र-विश्य चान्द्रं कार्यमारभन्ते फलरूपमग्निहोत्राहुत्योः। यजमानाश्च तत्कर्त्तार आहुतिमया आहुतिभावना-भाविता आहुतिरूपेण कर्मणाऽऽकृष्टाः श्रद्धासमवायिनो द्युलोकमनुप्रविश्य सोमभूतामवन्ति। तदर्थं हि तैरग्नि होत्रं हुतम्। आहुतिपरिणाम एव पञ्चाग्निसम्बन्धक्र-मेण प्राधान्येन विवक्षित उपासनार्थम्। न यजमानानां गतिम्। तां त्वविद्वृषां धूमादिक्रमेणोत्तरत्र वक्ष्यति वि-दुषाञ्चोत्तरां विद्याकृताम् १। द्वितीयहोमपर्य्यायार्थमाह। पर्जन्यो वाव पर्जन्य एव गौतमाग्निः पर्जन्योनाम दृष्ट्यु-पकरणाभिमानी देवताविशेषः। तस्य वायुरेव समित्, वायुना हि पर्जन्योऽग्निः समिध्यते पुरोवातादिप्रा-बल्ये वृष्टिदर्शनात्। अभ्रं धूमो, धूमकार्यत्वाद्धूमवच्च लक्ष्यमाणत्वात्। विद्युदर्चिः प्रकाशसामान्यात्। अश-निरङ्गारा काठिन्याद् विद्युत्सम्बन्धाद्वा। ह्रादुनयो

विस्फुलिङ्गाः। ह्रादुनयो गर्जितशब्दाः मेघानां वि-प्रकीर्णत्वसामान्यात्। तस्मिन्नेतस्मिन्नग्नौ देवाः पूर्ववत् सोमं राजानं जुह्वति। तस्या आहुतेर्वर्षं सम्भवति। स-ह्याख्या आपः सोमाकारपरिणता द्वितीये पर्य्याये पर्जन्या-ग्निं प्राप्य वृष्टित्वेन परिणमन्ते २। पृथिवी वाव गौतमा-ग्निरित्यादि पूर्ववत्। तस्याः पृथिव्याख्यस्याग्नेः संवत्-सर एव समित् संवत्सरेण हि कालेन समिद्धा पृथिवी व्रीह्यादिनिष्पत्तये भवति। आकाशो धूमः पृथिव्या इवो-त्थित आकाशो दृश्यते यथाऽग्नेर्धूमो, रात्रिरर्चिः, पृथिव्याह्यप्रकाशात्मिकाया अनुरूपा रात्रिः तमोरूप-त्वात् अग्नेरिवानुरूपमर्चिः। दिशोऽङ्गारा उपशान्तत्वसा-मान्यात्। अवान्तरदिशो विस्फुलिङ्गाः क्षुद्रत्वसा-मान्यात्। तस्मिन्नित्यादि समानम्। तस्या आहुतेरन्नं व्रीहियवादि सम्भवति ३। पुरुषो वाव गौतमाग्निः। तस्य वागेव समित् वाचा हि मुखेन समिध्यते पुरुषो न मूकः। प्राणो धूमो धूम इव मुखान्निर्गमनात्। जिह्वार्चिर्लो-हितत्वात्। चक्षुरङ्गारा भाः आश्रयत्वात्। श्रोत्रं वि-स्फुलिङ्गा विप्रकीर्णत्वसाम्यात्। समानमन्यत्। अन्नं जुह्वति व्रीह्यादि संस्कृतम्। तस्या आहुते रेतः स-म्भवति ४। योषा वाव गौतमाग्निः। तस्या उपस्थ एव समित् तेन हि सा पुत्राद्युत्पादनाय समिध्यते। यदुपमन्त्रयते स धूमः स्त्रीसम्भवादुपमन्त्रणस्य। योनिरर्च्चिर्लोहितत्वात्। यदन्तः करोति तेऽङ्गारा अ-ग्निसम्बन्धात्। अभिनन्दा सुखलवा विस्फुलिङ्गाः क्षुद्रत्वात्। तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवतीति ५। एवं श्रद्धासोमवर्षान्नरेतोरू-पपर्य्यायक्रमेणाप एव गर्भीभूतास्ताः। तत्रापामाहुति-समवायित्वात् प्राधान्यविवक्षा आपः पञ्चम्यामाहुतौ पुरुषवचसो भवन्तीति। नत्वाप एव केवलाः सोमादिका-र्य्यमारभन्ते। न चापोऽत्रिवृत्कृताः सन्तीति। त्रिवृ-त्कृतत्वेऽपि विशेषसञ्ज्ञालाभो दृष्टः पृथिवीयमिमा आपोऽयमग्निरित्यन्यतमबाहुल्यनिमित्तः। तस्मात् समु-दितान्येव भूतानि बाहुल्यात् कर्मसमवायीनि सोमादिकार्य्या-रम्भकाण्याप इत्युच्यन्ते। दृश्यते च द्रवबाहुल्यं सोम-वृष्ट्यन्नरेतोदेहेषु बहुद्रवञ्च, शरीरं यद्यपि पार्थिवं तत्र पञ्चम्यामाहुतौ हुतायां रेतोरूपा आपो गर्भीभूता। इति तु एवन्तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति व्याख्यात एकः प्रश्नः। यत्तु द्युलोकादीनां प्रत्याहतयोरा-

त्वस्मात् यावत्कर्मणः क्षय इत्यर्थः । तावत्तस्मिंश्चन्द्रमण्डले उषित्वा अथाऽनन्तरमेतमेव वच्यमाणमध्वानं मार्गं पुन र्निवर्त्तन्त इति प्रयोगात्पूर्वमप्यसकृच्चन्द्रमण्डलं गता निवृत्ताश्चासन्निति गम्यते । तस्मादिह लोके इष्टादिकर्मोपचित्य चन्द्रं गच्छन्ति तत्क्षये चावर्त्तन्ते । क्षणमात्रमपि तत्र स्थातुं न लभ्यते स्थितिनिमित्तकर्मक्षयात् स्नेहक्षयादिव प्रदीपस्य । किं तत्र येन कर्मणा चन्द्रमण्डलमारूढस्तस्य सर्वस्य क्षये तस्मादवरोहण किं वा सावशेष इति । किन्तत । यदि सर्वस्यैव क्षयः कर्मणश्चन्द्रमण्डलस्थस्यैव मोक्षः स्यात् न वेति तत्र आगतस्येह शरीरोपभोगादि न सम्भवति । ततः शेषेणेत्यादिस्मृतिविरोधश्च स्यात् । नन्विष्टापूर्त्तदत्तव्यतिरेकेणापि मनुष्यलोके शरीरोपभोगनिमित्तानि कर्माण्यनेकानि सम्भवन्ति न च तेषां चन्द्रमण्डल उपभोग । अत क्षीणानि यन्निमित्त चन्द्रमारूढास्तान्येव क्षीणानीत्यविरोधः शेषशब्दश्च सर्वेषां कर्मत्वसामान्यादविरुद्ध "भा०। एवं चान्द्रायणादिकं तत्प्राप्तिहेतुः ।

**इन्दुलौह** न० ६त० । इन्दुर्देवताके, लौहे धातौ रौप्ये धातुमध्ये तस्येन्दुवर्णत्वात् इन्दुदोषोपशान्त्यर्थं देयत्वाच्च तथात्वम् । स्वार्थे कन् । तत्रैव ।

**इन्दुवदना** स्त्री०"इन्दुवदना भजसनैः सगुरुयुग्मैः" वृत्त०र० उक्ते चतुर्दशाक्षरपादके वर्णवृत्तभेदे ।

**इन्दुवल्ली** स्त्री ६ त०। चन्द्रनामिकायां सोमलतायाम् । तत्प्राप्तिस्थानश्चोक्तं सुश्रुते यथा "सेवासादयितुं शक्या सोमा सोमसमास्तथा । पीताश्वेयमवस्त देवैर्वेश्वपुरोगमैः । निहित सोमवीर्यास्तु सोमे चाप्योपभोगतो । देवकुन्दे ह्रदवरे तथा सिन्धौ महानदे । दृश्यते च जलान्तेषु मध्ये ब्रह्मशर्वला" तत्समाख्य ओषधिशब्दे वक्ष्यन्ते

**इन्दुवार** पु०"चापोक्तिमे (२,६,८,१२,)यदि खगा स किलेन्दुवारो न स्याच्छुभ कथन ताजकशास्त्रगीतः" नी० ता० उक्ते वर्षलग्नत (२,६,८,१२,) स्थानानामन्यतमस्थामे सर्वग्रहस्थितिरूपयोगभेदे ।

**इन्दुव्रत** न० इन्दुलोकप्राप्त्यर्थं व्रतम् शाक०त०। चान्द्रायणे व्रते तस्य चन्द्रलोकप्राप्तिसाधनत्वात् चन्द्रह्रासवृद्धिवशानुसारेण भोजने ह्रासवृद्धिमत्त्वाच्च चान्द्रायणत्वम् तदेतत् पञ्चविधं तत्स्वरूपविभागादि प्रा०वि० दर्शितं यथा । "एकैकं ह्रासयेत् पिण्डं कृष्णे, शुक्ले च वर्द्धयेत् । उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं चरेत् । एतदेव विधिं कृत्स्नमाचरेत् यवमध्यमे । शुक्लपक्षादि नियतश्चरेच्चान्द्रायणव्रतम्"। "अष्टावष्टौ समश्नीयात् पिण्डान्मध्यदिने गते । नियतात्मा हविष्यस्य यतिचान्द्रायणं चरन् । चतुरः प्रातरश्नीयात् पिण्डान् विप्र समाहितः । चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं व्रतम् । अष्टावष्टौ समश्नीयात् पिण्डान्मध्यदिने गते । मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम्"मनु । एतत् पञ्चविधं चान्द्रायणम् पिपीलिकातनुमध्यम्, यवमध्यं, यतिचान्द्रायणम्, सर्वतोमुखं शिशुसंज्ञञ्च । यथाह जाबालः "पिपीलिकायवमध्यं यतिचान्द्रायणं तथा । चान्द्रायणं तथा ज्ञेयं चतुर्थं सर्वतोमुखम् । पञ्चमं शिशुसंज्ञञ्च तुल्यं पुण्यफलोदयम्" । कृष्णप्रतिपदमारभ्य मासमेकं यदा क्रियते तदा पिपीलिकामध्यं भवति, शुक्लप्रतिपदारम्भे यवमध्यमुभयत्रामावास्यायामभोजनं कृष्णप्रतिपदि चतुर्दशग्रासभोजनारम्भे ह्रासक्रमेण चतुर्दश्यामेकग्रासः अमावास्यायामभोजनम् एव प्राप्नोति तथा च वसिष्ठ । "मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश"। नन्वेवं क्रमेण पञ्चविंशत्युत्तरं ग्रासशतद्वयं स्यात् न चत्वारिंशदुग्रासाधिकं शतद्वयम् तच्च याज्ञवल्क्येनोक्तम्" "यथा कथञ्चित् पिण्डानाञ्चत्वारिंशच्छतद्वयमिति"।"यथा कथञ्चित् पिण्डानां तिस्रोऽशीतीः समाहितः" इति मनुनाप्युक्तम् । उच्यते प्रथमदिवसे पौर्णमास्याम् अमावास्यायां वा पञ्चदशग्रासभोजनेन सङ्ख्यापूरणसम्भवात् अथ वा पञ्चदश्यादिकमेवेदं व्रतम् न प्रतिपदादिकं चतुर्दश्यामेव व्रतसङ्कल्पः । यथाह गौतमः पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वैकैकापचयेनापरपक्षमश्नीयात् अमावास्यामुपोष्य एकैकोपचयेन पूर्वपक्षम्, विपरीतमेकेषाम्" शङ्खलिखितौ "अमावास्यायां व्रतोपायनं यवमध्यम् अमावास्यायां पञ्चदश पिण्डानश्नीयात्" उपायनमारम्भः । शुक्लच्छेदम् अमावास्यायामपि पञ्चदशकलात्मकस्य चन्द्रमसः सूर्य्यप्रविष्टत्वात् तत एकैककलानिर्गमस्य प्रतिपदादिषु वृद्धियन्त्राच्यत्वात् । जाबाल "एकैकं वर्द्धयेद्ग्रासं शुक्ले कृष्णे च ह्रासयेत् । अमावस्यां न भुञ्जीत यवमध्यं चरन् द्विजः। एकैकं ह्रासयेद्ग्रासं कृष्णे शुक्ले च वर्द्धयेत् । पौर्णमास्यां न भुञ्जीत पिपीलिकतनुमध्यमम्" । अत्र कल्पतरुव्याख्यानम् । एकैकं ह्रासयेदिति कृष्णप्रतिपदि पञ्चदशग्रासमारभ्य एकैकापचयेनामावास्यायामेकोग्रास तदनन्तरं शुक्लप्रतिपदि द्वौ ग्रासावेव वृद्धिक्रमेण चतुर्दश्यां पञ्चदश ग्रासाः सम्पद्यन्ते पौर्णमास्याञ्चोपवास इति" पिपीलिका

श्रुत सुत" तत्रैव १२अ०। ६म० श्रुत०। "दशमो ब्रह्मसावर्णिरुपश्लोकसुतो महान्" इत्यु० "सुधामसविरुद्धाद्या देवा शम्भु सुरेश्वर" १२अ०। १०म० शम्भु०। "मनुर्वै धर्मसावर्णिरेकादशम आत्मवान्" इत्यु० "विहङ्गमा कामगमा निर्वाणरुचय सुराः। इन्द्रस्तु वैधृतस्तेषा ऋषयश्चारुणादय" १२अ०। ११म० वैधृत। "भविता रुद्रसावर्णिर्नाम द्वादशमो मनु" इत्यु० "ऋतधामा च देवेशो देवाश्च हरितादय" १२अ०। ११म० ऋतधामा। "मनुस्त्रयोदशो भव्यो देवसावर्णिरात्मवान्" इत्यु० "देवा सुकर्मसुत्रामसंज्ञा इन्द्रो दिवस्पति" १२अ०। १२म० दिवस्पति। "मनुर्वा इन्द्रसावर्णिश्चतुर्दशम एष्यति" इत्यु० "पवित्राश्चाक्षुषा देवा शुचिरिन्द्रो भविष्यति" १२अ०। १४म० शुचि। पुराणान्तरादौ नामान्तराणि चतुर्दश कल्पभेदादविरुद्धानि। विस्तरभयात्तानि नोक्तानि। एवंशक्रनामसंख्यास्यात् १० चतुर्दशसंख्यायाम्। स च शचीपति बलादिहन्ता, पूर्वदिक्पाल, एष्टिदायक, अमरेश मेघपथ तस्य पुत्रो जयन्त, वन नन्दन हयउच्चैश्रवा, गजऐरावत, पुरी अमरावती नेत्राणि सहस्र वज्रमस्त्रम् हरीवाह। विंशतिशतच्छन्दे इन्द्रा। तस्यानेकविधानि कार्य्याणि पुराणादौ वर्णितानि विस्तरभयान्नोक्तानि मनुकालपर्य्यन्तं तस्याधिकारकालस्तत्समाप्तौ तस्य प्रजापते सकाशात् ब्रह्मविद्याप्राप्तेरपवर्गप्राप्त्या कैवल्यप्राप्ति "यो यो देवानां प्रत्यबुध्यत" इत्यादिश्रुते। इत्येतत् नानाशास्त्रश्रुतीतिहासेषु प्रसिद्धम् स्वकालमध्येऽपि त्वष्टृपुत्रविश्वरूपवधजनितब्रह्महत्यास्कन्दनभिया तस्य स्वपदच्युति। तत्पापस्य विभज्यान्यत्र संक्रामणे पुन स्वपदप्राप्ति। असुरादिभिरपि बलाधिक्यात् त युधि निर्जित्य कियत्कालपर्य्यन्तं तत्पदेऽधिकारिता प्राप्ता इत्यपि पुराणादौ प्रसिद्धम् "जित्वा च सकलान् देवान् इन्द्रोऽभून्महिषासुर" देवीमा० "शताश्वमेधकरणे अन्यस्यापि इन्द्रत्वप्राप्तियोग्यतेत्यत्र इन्द्रलोकशब्दे प्रमाणं वक्ष्यते।

इन्द्रस्य प्रजापतिसकाशात् एकशतवर्षं ब्रह्मचर्य्याचरणेन ब्रह्मविद्याप्राप्तेति छा० उ० वर्णित यथा "यदाहुरेकशत ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्य्यमुवास तस्मै होवाच। मघवन्। मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीर प्रियाप्रियाभ्यामात्तो न वै सशरीरस्य सत प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इत्यादि।

"मघवन्। मर्त्यं वै मरणधर्मि शरीरम्। यन्मन्यसेऽध्याहारादिलक्षण सम्प्रसादलक्षण आत्मा मयोक्तो विनाशमेवापीतो भवतीति। शृणु तत्र कारणम्। यदिदं शरीरं पश्यसि तदेतन्मर्त्यं विनाशि। तच्चात्तं मृत्युना ग्रस्तं सन्ततमेव। कदाचिदेव म्रियत इति मर्त्यमित्युक्ते न तथा सन्त्रासो भवति यथा ग्रस्तमेव सदा व्याप्तमेव मृत्युनेत्युक्ते इति वैरस्यार्थं विशेष इत्युच्यते आत्तं मृत्युनेति। कथं नाम देहाभिमानतो विरक्तः सन्निवर्त्तेत इति। शरीरमित्यत्र सेन्द्रियमनोभिरुच्यते। तच्छरीरमस्य सम्प्रसादस्य त्रिस्थानतया गम्यमानस्यामृतस्य मरणादिदेहेन्द्रियमनोधर्मवर्जितस्येत्येतत्। अमृतस्येत्यनेनैवाशरीरत्वे सिद्धे पुनरशरीरस्येति वचनं वाय्वादिवत्सावयवत्वमूर्त्तिमत्त्वे मा भूतामिति। आत्मनो भोगाधिष्ठानम् आत्मनो वा सत दर्शितस्तेजोऽबन्नादिक्रमेणोत्पन्नमधिष्ठानम् जीवरूपेण प्रविश्य सदेवाधितिष्ठत्यधिष्ठीयते वाधिष्ठानम्। यस्येदृशं नित्यमेव मृत्युग्रस्तं धर्माधर्मजनितत्वात् प्रियाप्रियवदधिष्ठानं तदधिष्ठितत्वात् सशरीरो भवति। अशरीरस्वभावस्यात्मनस्तदेवाहं शरीरं शरीरमेव चाहमित्यविवेकादात्मभाव सशरीरत्वम्। अत एव सशरीर सन्नात्तो ग्रस्त प्रियाप्रियाभ्याम्। प्रसिद्धमेतत् तस्य च न वै सशरीरस्य सत प्रियाप्रिययोर्बाह्यविषयसंयोगवियोगयोर्निमित्तयोर्बाह्यसंयोगवियोगौ ममेति मन्यमानस्यापहतिर्विनाश उच्छेद सन्ततिरूपयोर्नास्तीति। तं पुनर्देहाभिमानादशरीरस्वरूपविज्ञानेन निवर्त्तितविवेकज्ञानमशरीरं सन्तं प्रियाऽप्रिये न स्पृशत। स्पृशि प्रत्येकं सम्बध्यते प्रियं न स्पृशत्यप्रियं न स्पृशतीति वाक्यद्वयं भवति। न ह्यग्न्याश्रयधर्म्मिकं सह सम्भावेतेति यद्वत्। धर्माधर्मकार्य्ये हिताहिते, यतोऽशरीरता स्वतत्स्वरूपमिति। तत्र धर्माधर्मयोरसम्भवात्तत्कार्य्याभावो दूरत एवेत्यतो न प्रियाप्रिये स्पृशत। ननु यदि प्रियमप्यशरीरं न स्पृशतीति यन्मघवतोक्तं सुषुप्तस्य विनाशमेवापीतो भवतीति तदेवेहाप्यापन्नम्। नैष दोषो धर्माधर्मकार्य्ययोः शरीरसम्बन्धिनो प्रियाप्रिययो प्रतिषेधस्य विवक्षितत्वात् "अशरीरं न प्रियाप्रिये स्पृशत" इत्यादिश्रुत्या। आगमापायिनोर्हि स्पर्शशब्दो दृष्टो यथा शीतस्पर्श उष्णस्पर्श इति। न त्वग्नेरुष्णप्रकाशयो स्वभावभूतयोरग्निना स्पर्श एव भवति। तथाग्ने सवितुर्वौष्ण्यप्रकाशवत्स्वरूपभूतस्य नित्यस्य प्रियस्यापि

नेह प्रतिषेधो "विज्ञानमानन्दम्" 'आनन्दो ब्रह्मेति' श्रुतिभ्य इहापि "भूमैव सुखम् इत्युक्तत्वात्" भा०। इत्युपक्रम्य बहूपदेशः कृतः। प्रपञ्चस्तत्र दृश्यः।

इन्द्रश्च देवानां मध्येऽतिशयेन ब्रह्मवित्तम तथाहि। केनोपनिषदि असुरविजये देवानां महिमाभिमाने जाते तदभिमानापनोदनार्थं यक्षभूतेनाविर्भूतेन परब्रह्मणा अग्निवाय्वोरभिमाननिरसने तयोर्निरस्तौ तदभिज्ञमिन्द्रं प्रत्येव हैमवत्युपदेशेन तस्यातिशयमहिमा सूचितः ततो दिङ्मात्रं तद्वाक्यमुदाह्रियते। "ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त त ऐक्षन्तास्माकमेवाय विजयोऽस्माकमेवाय महिमेति तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानन्त किमिदं यक्षमिति। तेऽग्निमब्रुवन् जातवेद एतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तमभ्यवदत् कोऽसीति अग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति। तस्मिंस्त्वयि किं वीर्यमित्यपीदं सर्वं दहेयं यदिदं पृथिव्यामिति। तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति" के० उ०। एवं वायोरप्यभिमाननिरसनमुपवर्ण्य "अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तस्मात्तिरोदधे। स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं तां होवाच किमेतद्यक्षमिति। सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदाञ्चकार ब्रह्मेति। तस्माद्वा एते देवा अतितरामिवान्यान्देवान् यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पर्शुस्ते ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति तस्माद्वा इन्द्रोऽतितरामिवान्यान् स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति" के० उ०। 'अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि इत्यादिपूर्ववदिन्द्रः परमेश्वरो मघवान् बलवत्त्वात्तथेति तदभ्यद्रवत्तस्मादिन्द्रादात्मसमीपगतात्तद्ब्रह्म तिरोदधे तिरोभूतमिन्द्रस्याभिमानोऽतितरां निराकर्त्तव्य इत्यतः सम्वादमात्रमपि नादात् ब्रह्मेन्द्राय।

तद्यक्षं यस्मिन्नाकाशे आकाशप्रदेशे आत्मानं दर्शयित्वा तिरोभूतमिन्द्रश्च ब्रह्मणस्तिरोधानकाले यस्मिन्नाकाशे आसीत् स इन्द्रस्तस्मिन्नेवाकाशे तस्थौ। किं तद्यक्षमिति ध्यायन्न निववृतेऽग्न्यादिवत्तस्येन्द्रस्य भक्तिं बुद्ध्वा विद्या उमारूपिणी प्रादुर्भूता स्त्रीरूपा। स इन्द्रस्तामुमां सर्वेषां हि शोभमानानां शोभनतमां विद्यां तदा बहुशोभमानेति विशेषणमुपपन्नं भवति। हैमवतीं हेमकृताभरणवतीमिव बहुशोभमानामित्यर्थः। अथवा उमैव हिमवतो दुहिता हैमवती नित्यमेव सर्वज्ञेन ईश्वरेण सह वर्त्तत इति ज्ञातुं समर्था इति कृत्वा तामुपजगाम इन्द्र उमां ह तां किलोवाच पप्रच्छ ब्रूहि किमेतद्दर्शयित्वा तिरोभूतं यक्षमिति। सा ब्रह्मेति होवाच ह किल ब्रह्मण ईश्वरस्यैव विजये ईश्वरेणैव जिता असुरा यूयं तत्र निमित्तमात्रं तस्यैव विजये यूयं महीयध्वं महिमानं प्राप्नुथ। एतदिति क्रियाविशेषणार्थम्। मिथ्याभिमानस्तु युष्माकमस्माकमेवायं महिमेति। ततस्तस्माद्विद्याया वचनाद्ध एव विदाञ्चकार ब्रह्मेति अवधारणात्ततो हैवेति न स्वातन्त्र्येण। यस्मादग्निवाय्विन्द्रा एते देवा ब्रह्मणः सम्वाददर्शनादिना समीपमुपगतास्तस्मादैश्वर्यगुणैरतितरामिव शक्तिगुणादिभिर्महाभाग्यैरन्यान्देवानतितरामतिशयेन शेरते इवैते देवाः। इवशब्दोऽनर्थकोऽवधारणार्थो वा। यदग्निर्वायुरिन्द्रस्ते हि देवा यस्मादेनद्ब्रह्म नेदिष्ठमन्तिकं समीपं प्रियतमं पस्पर्शुः स्पृष्टवन्तो यथोक्तैर्ब्रह्मणः सम्वादादिप्रकारैस्ते हि यस्माच्च हेतोरेनद्ब्रह्म प्रथमः प्रथमाः प्रधानाः सन्त इत्येतद्विदाञ्चकार विदाञ्चक्रुरित्येतद्ब्रह्मेति। यस्मादग्निवायू अपीन्द्रवाक्यादेव विदाञ्चक्रतुः इन्द्रेण ह्युमावाक्यात्प्रथमं श्रुतं ब्रह्मेत्यतस्तस्माद्वा इन्द्रोऽतितरामतिशयेन शेते इवान्यान्देवान्, स ह्येनन्नेदिष्ठं पस्पर्श यस्मात्स ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति" भा० ११ अन्तरात्मनि "इन्द्रियमिन्द्रलिङ्गमित्यादि" पा० १२ ऐश्वर्यान्विते त्रि०। भावे रन्। १३ऐश्वर्ये। १४इन्द्रवारुण्यां स्त्री टाप्। राजनि०। 'इन्द्रायेन्दो! पवस्व' ऋ० ९, ६४, २२। 'तदिन्द्रसन्दिष्टमुपेन्द्र! यद्वच' माघ। "हरौ इन्द्रस्य" निरु०। १५ऋषभमात्रे "महोक्ष ऐन्द्रस्तमवेक्ष्य स च्यवनम्" नैष०। 'राष्ट्रस्यैतत् कृत्यतमं राज्ञा यदभिषेचनम्। अनिन्द्रमवसं राष्ट्रं दस्यवोऽभिभवन्त्युत" भा० शा० ६७अ० "देवताद्वन्द्वे उत्तरपदस्थस्य नेन्द्रस्य परस्य न वृद्धि आग्नेन्द्रम् कर्म सि० कौ०। लिङ्गाद्यर्थे घ। इन्द्रियम्। इन्द्रियशब्दे विवृतिः। इन्द्रो जीविकास्य देवपथा० कन् तस्य लुप्। इन्द्रस्यानुमूर्त्तिर्जीविकायति लुपि व्यक्तिवचनत्वात् पु०। इन्द्रो देवताऽस्य अण्। इन्द्रदेवताके हविरादौ "ऐन्द्रं दध्यमावास्यायाम्" श्रुतिः। स्त्रियां ङीप्। "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" श्रुतिः। 'ऐन्द्रीतमऽऐन्द्रम्"

देशीमा॰ ऐन्द्री दिक् "उपमितसमासे उत्तरपदस्य श्रेष्ठत्वद्योतकः मनुजेन्द्र वारणेन्द्र इत्यादि ।

**इन्द्रक** न॰ इन्द्रस्य राज्ञः क सुखं यत्र । १सभागृहे हेम॰ । ६त॰ । २इन्द्रसुखे ।

**इन्द्रकर्म्मन्** पु॰ इन्द्रस्येव ऐश्वर्य्यान्वितं कर्म्मास्य । विष्णौ "इन्द्रकर्म्मा महाकर्म्मा कृतकर्म्मा कृतागम" विष्णुस॰ ।

**इन्द्रकील** पु॰ इन्द्रस्य कील इव अत्युच्चत्वात् । १मन्दरपर्व्वते इन्द्रस्य कील इव । २इन्द्रध्वजे न॰ "विशमेन्द्रकीलचक्र-ध्वजश्चक्राणामुपरिष्टात्" सुश्रु॰ ।

**इन्द्रकुञ्जर** पु॰ ६त॰ । ऐरावते तस्यान्तमन्थनकाले इन्द्रेण गृहीतत्वात् तथात्वम् यथाह "श्वेतैर्दन्तैश्चतुर्भिस्तु महाकायस्ततः परम् । ऐरावणो महानागोऽभवद्वज्रभृता हृत "भा॰आ॰ १८अ॰ । इन्द्रगजशक्रगजादयोऽप्यत्र ।

**इन्द्रकूट** पु॰ इन्द्र ऐश्वर्य्यान्वित कूटोऽस्य । पर्व्वतभेदे "ततस्तु पर्व्वता सप्त कोशलं समुपस्थिता । जयन्तो वजयन्तोऽथ नीलो रजतपर्व्वत । महामेरु सकैलास इन्द्रकूटश्च नामत " हरि॰ ३७१ अ॰ ।

**इन्द्रकृष्ट** न॰कृष कर्षणे भावे क्त तत अस्त्यर्थे अच् इन्द्रेण इन्द्रहेतुकवर्षणेन कर्षणजातम् । वृष्टिजलसम्पन्ने धान्यभेदे "इन्द्रकृष्टैर्वर्त्तयन्ति धान्यैर्यैश्च नदीमुखैः "भा॰स॰५१अ॰।

**इन्द्रकोष** पु॰ इन्द्रस्य कोष इव सुखदायकत्वात् । १मञ्चे, २खट्टायाञ्च । [पर्व्वतादयोऽप्यत्र ।

**इन्द्रगिरि** पु॰इन्द्रनामा गिरिः । महेन्द्रपर्व्वते । इन्द्र-

**इन्द्रगुरु** पु॰ ६त॰ । बृहस्पतौ इन्द्राचार्य्यादयोऽप्यत्र ।

**इन्द्रगोप** पु॰ इन्द्रो गोपो रक्षकोऽस्य वर्षाभवत्वात्तस्य । वर्षाकालिके कीटभेदे शक्रगोपादयोऽप्यत्र । "अविरलवपुर-सुरेन्द्रगोपा " किरा॰ । "इन्द्रगोपकवर्णाभा शुक्लवर्णा मनोजवाम्" भा॰स॰४॰ अ॰ । शुभ्रतया वर्णनात् "हृदयेशमया शक्रगोपकालोहितरागेणांशुकेन" काद॰ रक्ततया वर्णनाच्च तस्य कीटस्य द्वैविध्य रक्तश्वेतभेदात् ।

**इन्द्रघोष** पु॰ इन्द्र इतिशब्देन विसृष्टं घुष्यते घुष-कर्म्मणि घञ् । इन्द्रे "इन्द्रघोषस्त्वा वसुभि पुरस्तात् पातु"यजु॰ ५,११ । [ श्वेतचन्दने राजनि॰ ।

**इन्द्रचन्दन** न॰ इन्द्रप्रिय चन्दनम् शा॰त॰ । हरिचन्दने

**इन्द्रचाप** पु॰इन्द्रे इन्द्रस्वामिके मेघे चापइव । १शक्रधनुषि । "विद्युत्वन्तं ललितवनिता सेन्द्रचाप सचित्रा " मेघ॰ दू॰ । "विद्युता सहित सूर्य्य सेन्द्रचापे घने यथा" भा॰व॰२२०अ॰ । तद्युत्पत्तिप्रकारादि वृह॰स॰उक्तम् इन्द्रायुधशब्दे विवृतिः ६त॰ । २शक्रस्य शरासने च

**इन्द्रचिर्भिटी** इन्द्रस्यात्मन प्रिया चिर्भटी शा॰त॰। लताभेदे । सा च इन्द्रतुल्यवर्णकुसुमा पुष्पान्वितमञ्जरीका दीर्घवृन्ता, युग्मफलान्विता कट्वी शीतवीर्य्या पित्तश्लेष्मकासव्रण-दोषकृमिनाशिनी चक्षुष्या च राजनि॰ ।

**इन्द्रच्छन्दस्** न॰ इन्द्र इव सहस्रनेत्रेण सहस्रगुच्छेन छाद्यते छद-असुन् नि॰नुट् । सहस्रगुच्छे हारभेदे हेम॰ ।

**इन्द्रजनन** न॰ इन्द्रस्यात्मन जनन देहसम्बन्धभेद । आत्मनो देहसम्बन्धभेदे । तदधिकृत्य कृतं ग्रन्थे छ । इन्द्रजननीयं तदधिकारेण कृते ग्रन्थभेदे न॰ ।

**इन्द्रजाल** न॰ इन्द्रेण कौशलादैश्वर्य्येण जाल इव तुर्न्नेत्रावरणं यथास्थितवस्तुदर्शनाक्षमत्वसाधनात्, इन्द्रस्य परमेश्वरस्य जालं मायेव वा । मन्त्रौषधादिना अन्यथास्थितस्य वस्तुनोऽन्यथात्वेन दर्शनसाधने (कुहक) (बाजी) १पदार्थे २मायारूपे जाले च । "अतएव महान्तोऽस्या प्रवदन्तीन्द्रजालताम् । एतस्मात् किमिवेन्द्रजालमपर यद्गर्भवासस्थित रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानाङ्कुरम् । पर्य्यायेण शिशुत्वयौवनजरावेशैरनेकैर्वृतं पश्यत्यत्ति शृणोति जिघ्रति तथा गच्छत्यथागच्छति। देहवद्वटधानासौ सुविचार्य्यावलोक्यताम् । क धाना क च वा वृक्षस्तस्मान्मायेति निश्चिनु" प॰द॰ "स्थूणाकर्णेन्द्रजालञ्च सौरञ्चापि तथार्ज्जुन । आग्नेयञ्चापि सौम्यञ्च सर्वं कुरुनन्दन " भा॰ व॰२७४अ॰ । इन्द्रेण इन्द्रकृतेन योगविशेषेण जालम् । ३चक्षुरुपायभेदे च । इन्द्रजालञ्च द्रव्यविशेषप्रयोगेन अद्भुतवस्तुदर्शकव्यापार (किमिट्रि) इति इंलण्डभाषा प्रसिद्धं मन्त्रद्रव्यविशेषेण वस्तुनोऽन्यथा करणञ्च । तच्च दत्तात्रेयतन्त्रे मन्त्रविशेषसाध्यम् विस्तरेणाभिहितम् । इन्द्रजालतन्त्रे तु औषधिविशेषेण तथाकरण यदुक्तं ततोदिङ्मात्र प्रदर्श्यते । "अथातः संप्रवक्ष्यामि चेन्द्रजालमनुत्तमम्" इत्युपक्रम्य

"अथात सम्प्रवक्ष्यामि चौषधीना विधिं परे । । येन विज्ञानमात्रेण सर्व्वसिद्धिर्भविष्यति । महाकालस्य बीजानि प्रस्थमेक समाहरेत् । भल्लीरसेन देवेशि । सप्त वारान् विभावयेत् । कर्त्तव्या गुटिका ता तु मुखे निक्षिप्य पार्व्वति । । अचिरेणैव कालेन स्वय पारावतो भवेत् । अथात सम्प्रवक्ष्यामि शृणु त्व मम वल्लभे । । छागस्य शोर्षं संगृह्य तत्र कृष्णमृत्तिका पूरयित्वा पुनर्धत्तूरबीजानि वापयेत् यत्काले तानि पुष्पितानि भवन्ति तदा यस्योपरि

नक्षत्रमङ्गलमुहूर्त्तैः । मास्थानिकैर्वनमियाद्दैवज्ञः सूत्रधारश्च । उद्यानदेवतालयपितृवनवल्मीकमार्गचितिजाताः । कुब्जोर्द्ध्वशुष्ककण्टकिवल्लीवन्दाकयुक्ताश्च । बहुविहगालयकोटरपवनानलपीडिताश्च ये तरवः । ये च स्युः स्त्रीसंज्ञा न ते शुभाः शक्रकेत्वर्थे । श्रेष्ठोऽर्जुनोऽश्वकर्णः प्रियकधवोदुम्बराश्च पञ्चैते । एतेषामन्यतमं प्रशस्तमथवाऽपरं वृक्षम् । गौराऽसितमृत्तिकभवं सम्पूज्य यथाविधि द्विजपूर्व्वम् । विजने समेत्य रात्रौ स्पृष्ट्वा ब्रूयादिमं मन्त्रम् । 'यानीह वृक्षे भूतानि तेभ्यः स्वस्ति नमोऽस्तु वः । उपहारं गृहीत्वेमं क्रियतां वासपर्य्ययः । पार्थिवस्त्वां वरयते स्वस्ति तेऽस्तु नगोत्तम । ध्वजार्थं देवराजस्य पूजेयं प्रतिगृह्यताम्' । छिन्द्यात् प्रभातसमये ह्युदक्प्राङ्मुखोऽपि वा भूत्वा । परशोर्जर्जरशब्दो नेष्टः स्निग्धो घनश्च हितः । नृपजयदमविध्वस्तं पतनमनाकुञ्चितं च पूर्व्वोदक् । अविलग्नं चान्यतरौ विपरीतमतस्त्यजेत्पतितम् । छित्त्वाग्रे चतुरङ्गुलमष्टौ मूले जले क्षिपेद्यष्टिम् । उद्धृत्य पुरद्वारं शकटेन नयेन्मनुष्यैर्वा । अरभङ्गे बलभेदो नेम्या नाशो बलस्य विज्ञेयः । अर्थक्षयोऽक्षभङ्गे तथाणिभङ्गे च वर्द्धकिनः । भाद्रपदशुक्लपक्षस्याष्टम्यां नागरैर्वृतो राजा । दैवज्ञसचिवकञ्चुकिविप्रमुख्यैः सुवेशधरैः । अहताम्बरसंवीतां यष्टिं पौरन्दरीं पुरं पौरैः । स्रग्गन्धधूपयुक्तां प्रवेशयेच्छङ्खतूर्य्यरवैः । रुचिरपताकातोरणवनमालालङ्कृतं प्रहृष्टजनम् । सम्मार्जितार्च्चितपथं सुवेशगणिकाजनाकीर्णम् । अभ्यर्च्चितापणगृहं प्रभूतपुण्याहवेदनिर्घोषम् । नटनर्त्तकगेयज्ञैराकीर्णचतुष्पथं नगरम् । तत्र पताका श्वेता विजयाय भवन्ति रोगदा पीता । जयदाश्च चित्ररूपा रक्ता शस्त्रप्रकोपाय । यष्टिं प्रवेशयन्तो निपातयन्तो भयाय नागाद्याः । बालानां तलयुद्धे सङ्ग्रामः कत्ययुद्धे वा । संतक्ष्य पुनस्तक्षा विधिवद्यष्टिं प्ररोपयेद्यन्त्रे । जागरमेकादश्यां नरेश्वरः कारयेत्तस्याम् । सितवस्त्रोष्णीषधरः पुरोहितः शाक्रवैष्णवैर्मन्त्रैः । जुहुयादग्निं सांवत्सरो निमित्तानि गृह्णीयात् । इष्टोद्रव्याकारः सुरभिः स्निग्धो घनोऽनलोऽर्च्चिष्मान् । शुभकृदतोऽन्यो नेष्टो यात्रायां विस्तरोऽभिहितः । स्वाहावसानसमये स्वयमुज्ज्वलार्च्चिः स्निग्धः प्रदक्षिणशिखो हुतभुङ् नृपस्य । गङ्गादिवाकरसुताजलचारुहारां धात्रीं समुद्ररशनां वशगां करोति । चामीकराशोककुरण्टकाब्जवैदूर्य्यनीलोत्पलसन्निभेऽग्नौ न । ध्वान्तमन्तर्भवनेऽवकाशं करोति रत्नांशुहतं नृपस्य । येषां रथौघार्णवमेघदन्तिनां समस्वनोऽग्निर्यदि वापि दुन्दुभेः । तेषां मदान्धेभघटाविघट्टिता भवन्ति याने तिमिरोपमा दिशः । ध्वजकुम्भहयेभभूभृतामनुरूपे वशमेति भूभृताम् । उदयास्तधराधराधरा हिमवद्विन्ध्यपयोधरा धरा । द्विरदमदमहीसरोजलाजैर्घृतमधुना च हुताशने सुगन्धे । प्रणतनृपशिरोमणिप्रभाभिर्भवति पुरस्फुरितेव भूमिपस्य । उक्तं यदुत्तिष्ठति शक्रकेतौ शुभाशुभं सप्तमरीचिरूपैः । तज्जन्मयज्ञग्रहशान्तियात्राविवाहकालेष्वपि चिन्तनीयम् । गुडपूपपायसाद्यैर्विप्रानभ्यर्च्च्य दक्षिणाभिश्च । श्रवणेन द्वादश्याम् उत्थाप्याऽन्यत्र वा श्रवणात् । शक्रकुमार्य्यः कार्य्याः प्राह मनुः सप्त पञ्च वा तज्ज्ञैः । नन्दोपनन्दसंज्ञे पादेनार्द्धेन चोच्छ्रायात् । षोडशभागाभ्यधिके जयविजये द्वे वसुन्धरे चान्ये । अधिका शक्रजनित्री मध्येऽष्टांशेन चैतासाम् । प्रीतैः कृतानि विबुधैर्यानि पुरा भूषणानि सुरकेतोः । तानि क्रमेण दद्यात् पिटकानि विचित्ररूपाणि । रक्ताशोकनिकाशं चतुरस्रं विश्वकर्म्मणा प्रथमम् । रशनां स्वयम्भुवा शङ्करेण चानेकवर्णधरम् । षडश्रि नीलरक्तं तृतीयमिन्द्रेण भूषणं दत्तम् । असितं यमस्तुर्य्यं मञ्जरकं कान्तिमदयच्छत् । मञ्जिष्ठाभं वरुणः षडश्रि तत्पञ्चमं जलोर्म्मिनिभम् । मायूरं केयूरं षष्ठं वायुर्जलदनीलम् । स्कन्दः स्वं केयूरं सप्तममददद्ध्वजाय बहुचित्रम् । अष्टममनलज्वालासदृशं हव्यभुग्दत्तम् । वैदूर्य्यसदृशमिन्दुर्नवमं ग्रैवेयकं ददावन्यत् । रथचक्राभं दशमं त्वष्टा प्रभाचयैर्युक्तम् । एकादशमथ विश्वे देवाः सरोजसदृशम् । द्वादशमपि च निवेशं मुनयो नीलोत्पलाभासम् । किञ्चिद्ध्वजोर्द्ध्वनिर्गतमुपरि शिवाय लयोदयं केतोः । शिरसि बृहस्पतिशुक्रौ लाक्षारससन्निभं ददतुः । यद्यद्येन विनिर्मितममरेण विभूषणं ध्वजस्यार्थे । तत्तद्दैवत्यं विज्ञातव्यं विपश्चिद्भिः । ध्वजपरिमाणत्र्यंशः परिधिः प्रथमस्य भवति पिटकस्य । परतः प्रथमात्प्रथमादष्टांशाष्टांशहीनानि । कुर्य्यादहनि चतुर्थे पूरणमिन्द्रध्वजस्य शास्त्रज्ञः । मनुना चागमगीतान् मन्त्रानेतान् पठेन्नियतः । 'हरार्कवैवस्वतशक्रसोमैर्धनेशवैश्वानरपाशभृद्भिः । महर्षिसिद्धैः सदिगप्सरोभिः शुक्राङ्गिरःस्कन्दमरुद्गणैश्च । यथा त्वमूर्जस्कर भैक्ष्यरूपैः समर्च्चितस्त्वाभरणैरुदारैः । तथेह तान्याभरणानि देव शुभानि सम्प्रीतमना गृहाण । अजोऽव्ययः शाश्वत एकरूपो विष्णुर्वराहः पुरुषः पुराणः । त्वमन्तकः सर्वहरः कृशानुः सहस्रशीर्षा शतमन्युरीड्यः ।

पुण्यस्त्रिदिवात् प्रच्युतः कीर्त्तिर्मे व्युच्छिन्नेति स मामुपातिष्ठद्ध प्रत्यभिजानाति मां भवानिति । तमहमब्रवं न वयं रासायनिकाः कार्य्यचेष्टाकुलत्वाच्च प्रत्यभिजानाम्यात्मनोऽर्थानामनुष्ठाने न शरीरोपतापेनात्मनः समारम्भोऽर्थानामनुष्ठाने स मामुवाच अस्त्यन्यस्त्वत्तश्चिरजात इति तमहमब्रवम् अस्ति खलु हिमवति प्राकारकर्णो नामोलूकः प्रतिवसति स मत्तश्चिरजातो भवन्तं यदि जानीयादिति प्रकृष्टे चाध्वनि हिमवांस्तत्रासौ प्रतिवसतीति । ततः स मामश्वो भूत्वा तत्रावहद्यत्र बभूवोलूकः अथैनं स राजा पप्रच्छ प्रतिजानाति मां भवानिति । स मुहूर्त्तमिव ध्यात्वाऽब्रवीदेनं नाभिजानामि भवन्तमिति । स एवमुक्ते इन्द्रद्युम्नः पुनस्तमुलूकमब्रवीद्राजर्षिः । अथास्ति कश्चिद्भवतः सकाशाच्चिरजात इति स एवमुक्तोऽब्रवीदस्ति खल्विन्द्रद्युम्नं नाम सरस्तस्मिन्नाडीजङ्घो नाम बकः प्रतिवसति सोऽस्मत्तश्चिरजाततरस्तं पृच्छेति । तत इन्द्रद्युम्नो माञ्चोलूकमादाय तत्सरोऽगच्छद्यत्रासौ नाडीजङ्घो नाम बको बभूव । सोऽस्माभिः पृष्टो भवानिममिन्द्रद्युम्नं राजानमभिजानाति स एवं मुहूर्त्तं ध्यात्वाऽब्रवीन्नाभिजानाम्यहमिन्द्रद्युम्नं राजानमिति ततः सोऽस्माभिः पृष्टः कश्चिद्भवतोऽन्यश्चिरजाततरोऽस्तीति स नोऽब्रवीदस्ति खल्वस्मिन्नेव सरस्यकूपारो नाम कच्छपः प्रतिवसति स मत्तश्चिरजाततरः स यदि कथञ्चिदभिजानीयादिमं राजानं तमकूपारं पृच्छध्वमिति । ततः स बकस्तमकूपारं कच्छपं विज्ञापयामास । अस्त्यस्माकमभिप्रेतं भवन्तं कञ्चिदर्थमभिप्रष्टुं साध्वागम्यतां तावदिति तच्छ्रुत्वा कच्छपस्तस्मात् सरस उत्थायाभ्यगच्छद्यत्र तिष्ठामो वयं तस्य सरसस्तीरे आगतञ्चैनं वयमपृच्छाम भवानिममिन्द्रद्युम्नं राजानमभिजानातीति । स मुहूर्त्तं ध्यात्वा वाष्पसम्पूर्णनयन उद्विग्नहृदयो वेपमानो विसंज्ञकल्पः प्राञ्जलिरब्रवीत् । कथमहमेनं न प्रत्यभिज्ञास्यामीह ह्यनेन सहस्रकृत्वश्चितिषु यूपा आहिताः । सरश्चेदमस्य दक्षिणाभिर्दत्ताभिर्गोभिरतिक्रममाणाभिः कृतम् । अत्र चाहं प्रतिवसामीति । अथैतत् सकलं कच्छपेनोदाहृतं श्रुत्वा तदनन्तरं देवलोकाद्देवरथः प्रादुरासीद्वाचश्चाश्रूयन्त इन्द्रद्युम्नं प्रति प्रस्तुतस्ते स्वर्गो यथोचितं स्थानं प्रतिपद्यस्व कीर्त्तिमानस्यव्यग्रो याहीति” ।

एतत्परयोक्तवाक्ये वर्णितं तत्राधिकृत्य । “इन्द्रद्युम्नसरः प्राप्य हंसकूटमतीत्य च । गतश्चैव महाराज । तापसः समतप्यत” इत्युक्तेः गतश्चेन्द्रपर्व्वतसमीपे हंसकूटानन्तरं तत्सरः इति गम्यते । “हंसकूटस्य यच्छृङ्गमिन्द्रद्युम्नसरः प्रति” इति हरिवं० १५७ उक्तेश्च हंसकूटसन्निकटत्वमस्यावगम्यते । पुरुषोत्तममूर्त्तिप्रकाशकथापरं पुरुषोत्तमशब्दे तद्विवृतिर्वक्ष्यते ।

इन्द्रद्रु पुं० इन्द्रस्य इन्द्रध्वजार्थो द्रुः । १अर्जुनवृक्षे । तस्य तद्ध्वजनिर्म्माणे प्रथमोपादानत्वात् तथात्वम् । इन्द्रध्वजशब्दे विवृतिः । इन्द्रनामा द्रुः । २कुटजवृक्षे राजनि० ।

इन्द्रद्रुम न० इन्द्रद्रुवत् विग्रहः । अर्ज्जुनवृक्षे शब्दर० ।

इन्द्रधनुस् न० इन्द्रे इन्द्रस्वामिके मेघे धनुरिव । इन्द्रायुधशब्दे वक्ष्यमाणे पदार्थे “विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च” मनुः । तस्य ऋजुत्वे रोहितत्वम् । वक्रत्वे इन्द्रधनुरिति भेदः ।

इन्द्रध्वज पुं० इन्द्रस्य तत्सन्तोषार्थो ध्वजः । भाद्रशुक्लद्वादश्यां स्वराज्ये वृष्ट्यादिसम्पत्त्यर्थं तत्प्रीतये राज्ञा क्रियमाणे ध्वजे तदुत्पत्तितत्करणप्रकारादि दर्शितं बृहत्संहितायां यथा

“शक्राणमूचुरमरा भगवन्नशक्ता स्म नासुरान् समरे । प्रतियोधयितुमतस्त्वां शरण्य शरणं समुपयाताः ॥ देवानुवाच भगवान् क्षीरोदे केशवः स वः केतुम् । यं दास्यति तं दृष्ट्वा नाजौ स्थास्यन्ति वो दैत्याः ॥ लब्धवरा क्षीरोदं गत्वा ते तुष्टुवुः सुराः सेन्द्राः । श्रीवत्साङ्कं कौस्तुभमणिकिरणोद्भासितोरस्कम् ॥ श्रीपतिमचिन्त्यमसमं समन्ततः सर्वदेहिनां सूक्ष्मम् । परमात्मानमनादिं विष्णुमविज्ञातपर्यन्तम् ॥ तैः संस्तुतः स देवस्तुतोष नारायणो ददौ चैषाम् । ध्वजममरसुरवधूसकमलवनतुषारतीक्ष्णांशुम् ॥ तं विष्णुतेजोभवमष्टचक्रे रथे स्थितं भास्वति रत्नचित्रे । देदीप्यमानं शरदीव सूर्यं ध्वजं समासाद्य मुमोद शक्रः ॥ सकिङ्किणीजालपरिष्कृतेन सच्छत्रघण्टापिटकान्वितेन । समुच्छ्रितेनामरराट् ध्वजेन निन्ये विनाशं समरेऽरिसैन्यम् ॥ उपरिचरस्यामरपो वसोर्ददौ चेदिपस्य वेणुमयीम् । यष्टिं तां स नरेन्द्रो विधिवत्सम्पूजयामास ॥ प्रीतो महेन मघवान् प्राहैवं ये नृपाः करिष्यन्ति । वसुवच्चेमं नृपास्ते भुवि सिद्धार्था भविष्यन्ति ॥ मुदिताः प्रजाश्च तेषां भयरोगविवर्जिताः प्रभूतान्नाः । ध्वज एव चाभिधास्यति जगति निमित्तैः फलं सदसत् ॥ पूजां तस्य नरेन्द्रैर्बलवृद्धिजयार्थिभिर्यथा पूर्वम् । शक्राज्ञया प्रयुक्तां तामागमतः प्रवक्ष्यामि ॥ तस्य विधानं शुभकरणदिवस-

नक्षत्रमङ्गलमुहूर्त्तैः। प्रास्थानिकैश्चैनमियाद्दैवज्ञः सूत्रधारश्च। उद्यानदेवतालयपितृवनवल्मीकमार्गचितिजाताः। कुब्जोर्द्ध्वशुष्ककण्टकिवल्लीवन्दाकयुक्ताश्च। बहुविहगालयकोटरपवनानलपीडिताश्च ये तरवः। ये च स्युः स्त्रीसंज्ञा न ते शुभाः शक्रकेत्वर्थे। अर्जुनोऽश्वकर्णः प्रियकधवोदुम्बराश्च पञ्चैते। एतेषामन्यतमं प्रशस्तमथवाऽपरं वृक्षम्। गौरासितचितिभवं सम्पूज्य यथाविधि द्विजः पूर्व्वम्। विजने समेत्य रात्रौ स्पृष्ट्वा ब्रूयादिमं मन्त्रम्। 'यानीह वृक्षे भूतानि तेभ्यः स्वस्ति नमोऽस्तु वः। उपहारं गृहीत्वेमं क्रियतां वासपर्य्ययः। पार्थिवस्त्वां वरयते स्वस्ति तेऽस्तु नगोत्तम। ध्वजार्थं देवराजस्य पूजेयं प्रतिगृह्यताम्'। छिन्द्यात् प्रभातसमये दृष्टवदनः प्राङ्मुखोऽथवा भूत्वा। परशोर्ज्जर्ज्जरशब्दो नेष्टः स्निग्धो घनश्च हितः। नृपजयदमविध्वस्तं पतनमभग्नाकुञ्चितं च पूर्वोदक्। अविलग्नं चान्यतरौ विपरीतमतस्त्यजेत् पतितम्। छित्त्वाग्रे चतुरङ्गुलमष्टौ मूले जले क्षिपेद्यष्टिम्। उद्धृत्य पुरद्वारं शकटेन नयेन्मनुष्यैर्वा। अरभङ्गे बलभेदो नेम्या नाशो बलस्य विज्ञेयः। अर्थक्षयोऽक्षभङ्गे तथाणिभङ्गे च वर्द्धकिनः। भाद्रपदशुक्लपक्षस्याष्टम्यां नागरैर्वृतो राजा। दैवज्ञसचिवकञ्चुकिविप्रमुखैः सुवेषधरैः। अहताम्बरसंवीतां यष्टिं पौरन्दरीं पुरं पौरैः। स्रग्गन्धधूपयुक्तां प्रवेशयेच्छङ्खतूर्य्यरवैः। रुचिरपताकातोरणवनमालालङ्कृतं प्रहृष्टजनम्। सम्मार्जितार्च्चितपथं सुवेषगणिकाजनाकीर्णम्। अभ्यर्च्चितापणगृहं प्रभूतपुण्याहवेदनिर्घोषम्। नटनर्त्तकगेयज्ञैराकीर्णचतुष्पथं नगरम्। तत्र पताकाः श्वेता विजयाय भवन्ति रोगदाः पीताः। जयदाश्चित्ररूपा रक्ताः शस्त्रप्रकोपाय। यष्टिं प्रवेशयन्तीं निपातयन्तो भयाय नागाद्याः। बालानां तलशब्दे सङ्ग्रामः सत्त्वयुद्धे वा। सन्तक्ष्य पुनस्तस्यां विधिवद्यष्टिं प्ररोपयेद्यन्त्रे। जागरमेकादश्यां नरेश्वरः कारयेत्तस्याम्। सितवस्त्रोष्णीषधरः पुरोहितः शाक्रवैष्णवैर्मन्त्रैः। जुहुयादग्निं सांवत्सरो निमित्तानि गृह्णीयात्। इष्टद्रव्याकारः सुरभिः स्निग्धो घनोऽनलोऽर्चिष्मान्। शुभकृदतोऽन्यो नेष्टो यात्रायां विस्तरोऽभिहितः। स्वाहावसानसमये स्वयमुज्ज्वलार्च्चिः स्निग्धः प्रदक्षिणशिखो हुतभुङ् नृपस्य। गङ्गादिवाकरसुताजलचारुहारां धात्रीं समुद्ररसनां वशगां करोति। चामीकराशोककुरण्टकाब्जवैदूर्य्यनीलोत्पलसन्निभेऽग्नौ न। ध्वान्तमन्तर्भवनेऽवकाशं करोति रत्नांशुहतं नृपस्य। येषां

रथौघार्णवमेघदन्तिनां समस्वनोऽग्निर्यदि वापि दुन्दुभेः। तेषां मदान्धेभघटाविघट्टिता भवन्ति याने तिमिरोपमा दिशः। ध्वजकुम्भहयेभभूभृतामनुरूपे वशमेति भूभृताम्। उदयास्तधराधराधरा हिमवद्विन्ध्यपयोधरा धरा। द्विरदमदमहीसरोजलाजैर्घृतमधुना च हुताशने सगन्धे। प्रणतनृपशिरोमणिप्रभाभिर्भवति पुरश्छुरितेव भूर्नृपस्य। उक्तं यदुत्तिष्ठति शक्रकेतौ शुभाशुभं सप्तमरीचिरूपे। तज्जाप्यवश्यप्रहृयान्तियात्राविवाहकालेष्वपि चिन्तनीयम्। गुडपूपपायसाद्यैर्विप्रानभ्यर्च्य दक्षिणाभिश्च। श्रवणेन द्वादश्यामुत्थाप्याऽन्यत्र वा श्रवणात्। शक्रकुमार्य्यः कार्य्याः प्राह मनुः सप्त पञ्च वा तज्ज्ञैः। नन्दोपनन्दसंज्ञे पादेनार्द्धेन चोच्छ्रायात्। षोडशभागाभ्यधिके जयविजये द्वे वसुन्धरे चान्ये। अधिका शक्रजनित्री मध्येऽष्टांशेन चैतासाम्। प्रीतैः कृतानि विबुधैर्यानि पुरा भूषणानि सुरकेतोः। तानि क्रमेण दद्यात् पिटकानि विचित्ररूपाणि। रक्ताशोकनिकाशं चतुरस्रं विश्वकर्म्मणा प्रथमम्। रशना स्वयम्भुवा शङ्करेण चानेकवर्णधरी। षडश्रि नीलरक्तं तृतीयमिन्द्रेण भूषणं दत्तम्। असितं यमश्चतुर्थं मञ्जरकं कान्तिमद्यच्छत्। मञ्जिष्ठाभं वरुणः षडश्रि तत्पञ्चमं जलोर्म्मिनिभम्। मायूरं केयूरं षष्ठं वायुर्ज्जलदनीलम्। स्कन्दः स्वं केयूरं सप्तममददद्ध्वजाय बहुचित्रम्। अष्टममनलज्वालासङ्काशं हव्यभुग्दत्तम्। वैदूर्य्यसदृशमिन्दुर्नवमं ग्रैवेयकं ददावन्यत्। रथचक्राभं दशमं सूर्य्यस्त्वष्टा प्रभाचयैर्युक्तम्। एकादशन्तु विश्वे देवाः सरोजसङ्काशम्। द्वादशमपि च निवृत्तं मुनयो नीलोत्पलाभासम्। किञ्चिद्ध्वजोर्द्ध्वं निर्गतमुपरि शिरःस्थं त्रयोदशं केतोः। शिरसि बृहस्पतिशुक्रौ लाक्षारससन्निभं ददतुः। यद्यद्येन विनिर्मितममरेण विभूषणं ध्वजस्यार्थे। तत्तद्दैवत्यं विज्ञातव्यं विपश्चिद्भिः। ध्वजपरिमाणत्र्यंशः परिधिः प्रथमस्य भवति पिटकस्य। परतः प्रथमात्प्रथमादष्टाष्टांशोनतानि। कुर्य्यादहनि चतुर्थे पूरणमिन्द्रध्वजस्य शास्त्रज्ञः। मनुना चागमगीतान् मन्त्रानेतान् पठेन्नियतः। 'हरार्कवैवस्वतशक्रसोमैर्धनेशवैश्वानरपाशभृद्भिः। महर्षिसङ्घैः सदिगप्सरोभिः शुक्राङ्गिरःस्कन्दमरुद्गणैश्च। यथा त्वमूर्जस्कर भैकरूपैः समर्चितस्त्वाभरणैरुदारैः। तथैव तान्याभरणानि देव शुभानि सम्प्रीतमना गृहाण। अजोऽव्ययः शाश्वत एकरूपो विष्णुर्वराहः पुरुषः पुराणः। त्वमन्तकः सर्व्वहरः कृशानुः सहस्रशीर्षा शतमन्युरीड्यः।

स हस्ते मैथुनीभावे पतिर्दासो भविष्यति”। “यानि कानि च बीजान्यङ्कोलतैलेन मेलयेत्। सफलो जायते वृक्ष सिद्धियोग उदाहृत। शशकस्य विन्दुमात्रं तत्तैलं निक्षिपेद् यदि। एकयाम भवेत् जीवो नान्यथा शङ्करोदितम्। शिग्रुबीजस्थितं तैलं पारावतपुरीषकम्। वराहस्य वसायुक्तं गृहीत्वा च समं समम्। गर्दभस्य वसायुक्तं हरिताल मनःशिलाम्। एभिस्तु तिलकं कृत्वा यथा लङ्केश्वरोऽन्तप्य। उष्ट्रविष्ठा गृहीत्वा त्वेरण्डतैलेन मेषयेत्। यस्याङ्गे निक्षिपेत् बिन्दुं सविभ्रो जायते ध्रुवम्। सर्पदन्तं गृहीत्वा तु कृष्णवृश्चिककण्टकम्। अङ्कोलारक्तसंयुक्तं सूक्ष्मचूर्णन्तु कारयेत्। यस्याङ्गे निक्षिपेच्चूर्णं सद्यो याति यमालयम्। सिन्दूर गन्धकं तालं समं पिष्ट्वा मनःशिलाम्। तन्निक्षिप्तस्य शिरसि अग्निवत् दृश्यते ध्रुवम्। अर्कक्षीरं वटक्षीरं क्षीरं डुम्बरसम्भवम्। गृहीत्वा पात्रके क्षिप्रे जलपूर्णं करोति च। दुग्धं तत्र भवेत् सद्यो महाकौतुककौतुकम्। अङ्कोलतैलक्षिप्ताङ्गो दृश्यते राक्षसाकृतिः। पलायन्ते नराः सर्वे पशुपक्षिगजा हयाः। अङ्कोलस्य तु तैलेन दीपं प्रज्वालयेन्नर। रात्रौ पश्यति भूतानि खेचराणि महीतले। बुधे वा शनिवारे वा कृकला प्राह्य यत्नतः। शतमन्त्रयते यत्र कृकला तत्र निक्षिपेत्। निखनेद्भूमिमध्ये पु उद्धृते च पुनः सुखी। नपुंसकं भवेत् सत्य नान्यथा शङ्करोदितम्। गन्धकं हरितालञ्च गोमूत्रञ्च विषं तथा। सूक्ष्मचूर्णमयं कृत्वा 'किञ्चिदङ्गे' विनिक्षिपेत्। विभ्रा सर्वे पलायन्ते यथा युद्धेषु कातरा” दत्तात्रेयतन्त्रे ११प०

**इन्द्रजालिक** त्रि० इन्द्रजाल शिल्पतयाऽस्त्यस्य ठन्। इन्द्रजालकारके। स्त्रियां ङीप्। इन्द्रजालीत्यप्यत्र स्त्रियां ङीप्।

**इन्द्रजित्** पु० इन्द्रं जितवान् जि–भूते क्विप्। १दितिवंश्ये असुरभेदे चाक्षुषमन्वन्तरे “दित्या पुत्रद्वयं जज्ञे कश्यपादिति विश्रुतम्। हिरण्यकशिपुश्चैव हिरण्याक्षश्च वीर्यवान्”। इत्युपक्रम्य तत्पुत्रपौत्रादिवर्णने “इन्द्रजित् सर्वजिच्चैव वज्रनाभस्तथैव च” हरिवं० ३अ०। २रावणपुत्रे मेघनादे च “पुत्रमिन्द्रजितं वीरं रावण प्रत्यभाषत। जहि राममितघ्नं सुग्रीवञ्च सलक्ष्मणम्। त्वया हि मम सत्पुत्र! यशो दीप्तमुपार्ज्जितम्। जित्वा वज्रधरं संख्ये सहस्राक्षं शचीपतिम्” भा०व० २८७। “तौ वीरौ शरबन्धेन बद्धाविन्द्रजिता रणे” भा०व० २८८ अ०।

**इन्द्रजिद्धन्तृ** पु० इन्द्रजितं हन्ति हन–तृच् ६त०। दशरथात्मजे लक्ष्मणे। तद्धननकथा। “अविध्यदिन्द्रजित्तीक्ष्णैः सौमित्रिं मर्मभेदिभिः। सौमित्रिस्त्वनलस्पर्शैरविध्यद्रावणिं शरैः”। इत्युपक्रम्य “एकेनास्य धनुष्मन्तं बाहुं देहादपातयत्। द्वितीयेन शरेणास्य भुजं भूमौ न्यपातयत्। तृतीयेन तु बाणेन पृथुधारेण भास्वता। जहार सुनसञ्चापि शिरो भ्राजिष्णुकुण्डलम्। विनिकृत्तभुजस्कन्धं कबन्धं भीमदर्शनम्। तं हत्वा सूतमप्यस्त्रैर्जघान बलिनां वरः” भा०व० २८८अ०।

**इन्द्रतापन** पु० इन्द्रं तापयति तप+णिच्+ल्यु। १असुरभेदे “इन्द्रतापनवातापी केतुमान् बलदर्पितः” असुरनामोत्कीर्त्तने” हरिवं० २६अ०। २मेघनादे च। दशग्रीवश्च वाली च मेघराजो दशावरः। टिट्टिभो विटभूतश्च संह्रादश्चेन्द्रतापनः” भा०स०प० ०अ० वरुणसभावर्णने।

**इन्द्रतूल** न० इन्द्रस्येव तूलमाकाशे उड्डीयमानत्वात्। आकाशे मरुता चाल्यमाने कार्पासे सूत्रे त्रिका०।

**इन्द्रतोया** स्त्री इन्द्रमैश्वर्य्यान्वितं तोयमस्याः, इन्द्रेण पूरितं तोयमस्या वा। गन्धमादनसमीपस्थे नदीभेदे। “इन्द्रतोयां समासाद्य गन्धमादनसन्निधौ” भा० अनु० प० २४।

**इन्द्रदमन** पु० “बाणस्य चेन्द्रदमनो लौहित्यामुदपद्यत” हरिवं० १अ० उक्ते बाणासुरपुत्रभेदे।

**इन्द्रदारु** पु० इन्द्रस्य तद्ध्वजस्य साधनं दारु। देवदारुवृक्षे। इन्द्रध्वजशब्दे ८४६ पृष्ठे तस्य तद्ध्वजसाधनत्वम् दृश्यम्। इन्द्रद्रुमादयोऽप्यत्र।

**इन्द्रद्युम्न** इन्द्रस्येव द्युम्नं धनमस्य। भाडवेये १ऋषिभेदे २असुरावतारराजभेदे ३राजभेदे च। तत्र असुररूपोऽन्तपः कृष्णेन हतः यथा। “इन्द्रद्युम्नो हतः कोपाद्यवनश्च कसेरुमान्। हतः सौभपतिः शाल्वस्त्वया सौभं च पातितम्” भा० व० १२ अध्याये कृष्णं प्रति व्यासवाक्यम्। ऋषिभेदस्तु। “ततस्ते ब्राह्मणाः सर्वे सक दाम्भाग्रमपूजयन्नित्युपक्रम्य “द्वैपायनो नारदश्च जामदग्न्यः पृथुश्रवाः। इन्द्रद्युम्नो भालुकिश्च कृतचेताः सहस्रपात्”इति कतिचित् ब्राह्मणानभिधायाह। “एते चान्ये च बहवो ब्राह्मणाः संशितव्रताः। अजातशत्रुमानर्च्चुः पुरन्दरमिवर्षयः” भा० स० २६ अ०। राजभेदस्तु मार्कण्डेयादपि प्राचीनः तत्कथा भा०व० १९८अ०। युधिष्ठिरं प्रति मार्कण्डेयवाक्यम्। “स तातु प्राचाशि खलु राजर्षिरिन्द्रद्युम्नो नाम क्षीण-

पुण्यक्षितिपात् प्रच्युतं कीर्त्तिर्मे व्युच्छिन्नेति स मा-
मुपातिष्ठत्स प्रत्यभिजानाति मां भवानिति । तमह-
मब्रवं न वयं रासायनिकाः कार्य्यचेष्टाकुलत्वाच प्रत्य-
भिजानाम्यात्मनोऽर्थानामनुष्ठानं न शरीरोपतापेनात्मन
समारभामोऽर्थानामनुष्ठानं स मामुवाच अस्त्यन्यस्त्वत्तश्चिर-
जात इति तमहमब्रवम् अस्ति खलु हिमवति प्राका-
रकर्णो नामोलूकः प्रतिवसति स मत्तश्चिरजातो भवन्तं
यदि जानीयादितः प्रकृष्टे चाध्वनि हिमवांस्तत्रासौ
प्रतिवसतीति । ततः स समारुह्य भूत्वा तत्रावहद्यत्र
बभूवोलूकः अथैनं स राजा पप्रच्छ प्रतिजानाति मां
भवानिति । स मुहूर्त्तमिव ध्यात्वाऽब्रवीदेनं नाभिजानामि
भवन्तमिति । स एवमुक्त इन्द्रद्युम्नः पुनस्तमुलूकमब्रवी-
द्राजर्षिः । अथास्ति कश्चिद्भवतः सकाशाच्चिरजात इति
स एवमुक्तोऽब्रवीदस्ति खल्विन्द्रद्युम्नं नाम सरस्तस्मिन्नाडी-
जङ्घो नाम बकः प्रतिवसति सोऽस्मत्तश्चिरजाततरस्तं
पृच्छेति । तत इन्द्रद्युम्नो मां चोलूकमादाय तत्सरोऽगच्छ-
द्यत्रासौ नाडीजङ्घो नाम बको बभूव । सोऽस्माभिः पृष्टो
भवानिममिन्द्रद्युम्नं राजानमभिजानाति स एवं मुहूर्त्तं
ध्यात्वाऽब्रवीन्नाभिजानाम्यहमिन्द्रद्युम्नं राजानमिति ततः
सोऽस्माभिः पृष्टः कश्चिद्भवतोऽन्यश्चिरजाततरोऽस्तीति स
नोऽब्रवीदस्ति खल्वस्मिन्नेव सरस्यकूपारो नाम कच्छपः
प्रतिवसति स मत्तश्चिरजाततरः स यदि कथञ्चिदभि-
जानीयादिमं राजानं तमकूपारं पृच्छामेति । ततः
स बकस्तमकूपारं कच्छपं विज्ञापयामास । अस्त्यस्माक-
मभिप्रेतं भवन्तं कञ्चिदर्थमभिप्रष्टुं साध्वागम्यतां ताव-
दिति तच्छ्रुत्वा कच्छपस्तस्मात् सरस उत्थायाभ्यगच्छ-
द्यत्र तिष्ठामो वयं तस्य सरसस्तीरे आगतञ्चैनं वयमपृच्छाम
भवानिममिन्द्रद्युम्नं राजानमभिजानातीति । स मुहूर्त्तं
ध्यात्वा वाष्पसम्पूर्णनयन उद्विग्नहृदयो वेपमानो विसंज्ञ-
कल्पः प्राञ्जलिरब्रवीत् । कथमहमेनं न प्रत्यभिज्ञास्यामी-
ह ह्यनेन सहस्रकृत्वश्चितिषु यूपा आहिताः । सरश्चेदमस्य
दक्षिणाभिर्दत्ताभिर्गोभिरतिक्रममाणाभिः कृतम् । अत्र
चाहं प्रतिवसामीति । अथैतत् सकलं कच्छपेनोदाहृतं
श्रुत्वा तदनन्तरं देवलोकाद्देवरथः प्रादुरासीद्वाचश्चाश्रू-
यन्त इन्द्रद्युम्नं प्रति प्रस्तुतस्ते स्वर्गो यथोचितं स्थानं
प्रतिपद्यस्व कीर्त्तिमानस्यव्यग्रो याहीति" ।
एतत्पूर्वोक्तवाक्ये वर्णितं तत्राधिकृत्य । "इन्द्रद्यु-
म्नसरः प्राप्य कूर्मकूटमतीत्य च । शतस्त्रं महाराज ।
तापसं मप्रतपत्" इत्युक्ते गतस्त्रपर्वततत्समीपे
कूर्मकूटानन्तरं तत्सरः इति गम्यते । "कूर्मकूटस्य
पश्चादिन्द्रद्युम्नसरः प्रति" इति हरिवं० १५७ अध्याये
कूर्मकूटसन्निकृष्टत्वमस्यावगम्यते । पुरुषोत्तममूर्त्तिप्रकाश-
कथापरं पुरुषोत्तमशब्दे तद्विवृतिर्दृश्यते ।

इन्द्रद्रु पु० इन्द्रस्य इन्द्रध्वजार्थो द्रुः । अर्जुनवृक्षे । तस्य तद्-
ध्वजनिर्माणे प्रथमोपादानत्वात् तथात्वम् । इन्द्रध्वजशब्दे
विवृतिः । इन्द्रनामा द्रुः । २कुटजवृक्षे राजनि० ।

इन्द्रद्रुम न० इन्द्रद्रुवत् विग्रहः । अर्जुनवृक्षे शब्दर० ।

इन्द्रधनुस् न० इन्द्रे इन्द्रस्वामिके मेघे धनुरिव । इन्द्रायुध
शब्दे वक्ष्यमाणे पदार्थे "विद्युतोऽशनिमेघांश्च रोहितेन्द्र
धनूंषि च" मनुः । तस्य धनुष्ट्वे रोहितत्वम् । वक्रत्वे
इन्द्रधनुरिति भेदः ।

इन्द्रध्वज पु० इन्द्रस्य तत्सन्तोषार्थो ध्वजः । भाद्रशुक्ल
द्वादश्यां स्वराज्ये दृष्ट्यादिप्रत्यूहार्थं तत्प्रीतये राज्ञा
क्रियमाणे ध्वजे तदुत्पत्तितत्करणप्रकारादि दर्शितं
वृहत्संहितायां यथा
"शक्राद्यामसुरसुरा भगवन्तं मत्वा नासुरान् समरे । प्रति-
योधयितुमतस्त्वां शरणं शरण्य समुपयाताः । देवानुवाच
भगवान् क्षीरोदे केशवः स व केतुम् । यं दास्यति तं
दृष्ट्वा नाजौ स्थास्यन्ति वो दैत्याः । लब्धवराः क्षीरोद
गत्वा ते तुष्टुवुः सुराः सेन्द्राः । श्रीवत्साङ्कं कौस्तुभ-
मणिकिरणोद्भासितोरस्कम् । श्रीपतिमचिन्त्यमसमं सम-
न्ततः सर्वदेहिनां सूक्ष्मम् । परमात्मानमनादिं विष्णु-
मविज्ञातपर्यन्तम् । तैः संस्तुतः स देवस्तुतोष नारायणो
ददौ चैषाम् । ध्वजममरतरुतरुवधूसकमलवनतुषारतीक्ष्णा-
शुम् । तं विष्णुतेजोभवमष्टचक्रे रथे स्थितं भास्वति
रत्नचित्रे । देदीप्यमानं शरदीव सूर्य्यं ध्वजं समासाद्य
मुमोद शक्रः । स किङ्किणीजालपरिष्कृतेन स्रक्छत्रघण्टापि-
टकान्वितेन । समुच्छ्रितेनामरराट् ध्वजेन निन्ये विनाशं
समरेऽरिसैन्यम् । उपरिचरस्यामरपो वसोर्ददौ चेदिपस्य
वेणुमयीम् । यष्टिं तां स नरेन्द्रो विधिवत्सम्पूजयामास ।
प्रीतो सत्त्वेन मघवान् प्राहैव ये नृपाः करिष्यन्ति ।
वसुवच्छैमवन्तस्ते भुवि सिद्धाज्ञा भविष्यन्ति । मुदिताः
प्रजाश्च तेषां भयरोगविवर्जिताः प्रभूतान्नाः । ध्वज एव
चाभिधास्यति जगति निमित्तैः फलं शुभदसत् । पूजा तस्य
नरेन्द्रैर्बलवृद्धिजयार्थिभिर्यथा पूर्वम् । शक्राज्ञया प्रयुक्ता
तामागमतः प्रवक्ष्यामि । तस्य विधानं शुभकरणदिवस-

सत्त्वहानिकरं च तत् । पृष्ठं चैवोन्नतं सार्द्धहस्तमात्रायतं भवेत् । तद्धि वारणनाथस्य सुखरोगकरं मतम् । चतुरङ्गुलमानं तु सूक्ष्मं रोमाविलञ्च यत् । तत् प्रशस्तं गजेन्द्राणां सुखालङ्कारकारकम् । अरत्निपरिणाहञ्च करिणां सत्त्वशक्तिदम् । वामनं हस्तहीनञ्च परिणाहविवर्जितम् । अव्यक्तञ्च न शंसन्ति शातकुम्भं विपत्करम् । द्वादशाङ्गुलविस्तारं दैर्घ्येणाष्टादशाङ्गुलम् । व्यक्तं शुक्तिपुटाकारं तद्भर्त्तुर्लाभकारकम् । गर्त्ताकारे च निर्मांसे कठिने चातिकुत्सिते । शिरश्छोरोगजनने गजस्यारोहकस्य च । सम्पूर्णे सुकुमारे च सुप्रशस्ते प्रकीर्त्तिते । राज्यवृद्धिकरे नित्यं भर्त्तुर्विजयकारके । इदमेव हि विज्ञेयं लक्षणं कटपार्श्वयोः । अतःपरं प्रवक्ष्यामि लक्षणं कुम्भयोरपि । विषमत्वमरोमत्वं देहच्छायाविवर्णता । समता कण्ठपृष्ठाभ्यां समाधिक्यमपूर्णता । व्यक्तता वामनत्वं च परिणाहविहीनता । तनुभावः शिखरयोः कुम्भदोषा दश स्मृताः । भर्त्तुर्व्यापत्करौ ज्ञेयौ विषमौ रोमवर्जितौ । देहच्छायाविवर्णौ तु भर्त्तुर्लोकविमर्द्दनौ । कण्ठपृष्ठसमौ चैव प्रयातुः प्रविनाशनौ । मानाधिकौ च हीनौ च भर्त्तुरुच्छेदकारकौ । व्याप्तौ च वामनौ चैव भर्त्तुः कीर्त्तिविनाशनौ । परिणाहविहीनौ च कोषक्षयकरौ मतौ । शिखरस्य तनुत्वेन युक्तौ कुम्भौ तु रोगदौ । अशुभं लक्षणं ह्येतत्तास्मतञ्च शुभं शृणु । समौ दीर्घकचाक्रान्तौ विस्तीर्णशिखरौ तथा । कर्णमूलात्समारभ्य हस्तार्द्धजमितोच्छ्रयौ । सुसंहतौ च पीनौ च कामिनीकुचसन्निभौ । समाक्रान्तललाटौ च देहच्छायासमप्रभौ । आरोहकशरीरार्द्धदर्शनावरणक्षमौ । सश्रीकौ च सुवृत्तौ च शुभौ कुम्भौ प्रकीर्त्तितौ । समौ च दीर्घरोमाणौ भर्त्तुः श्रीसौख्यकारकौ । समानौ रिपुनाशाय तथैव च समुन्नतौ । सुसंहतौ च पीनौ च वरस्त्रीलाभकारकौ । शत्रुनाशकरौ ज्ञेयौ कामिनीकुचसन्निभौ । समाक्रान्तललाटौ च सुखदौ रोगनाशनौ । आरोहिस्थगिताङ्गौ च सश्रीकौ च जयप्रदौ । ईदृशौ च हस्तिनां कुम्भौ सुखालङ्कारकारकौ । अतःपरं प्रवक्ष्यामि कर्णयोरपि लक्षणम् । निर्लोमशौ व्रणाकीर्णौ तनुच्छिद्रौ तनुत्वचौ । (व्रणा शिरा) सङ्कटौ विषमौ रूक्षौ त्रुटिताग्रौ च निष्ठुरौ । स्तब्धौ च वर्त्तुलौ चैव कर्णौ नागस्य निन्दितौ । फलञ्च साम्प्रतं वक्ष्ये यथावदनुपूर्व्वशः । निर्लोमशौ व्रणाकीर्णौ गजस्य कर्णरोगदौ । निष्ठुरौ त्रुटिताग्रौ च यातुः कोषहरौ मतौ । स्तब्धौ च वर्त्तुलौ चैव गजस्यायुर्विनाशनौ । अतः परं प्रवक्ष्यामि शुभकर्णविनिश्चयम् । द्विरत्निमानसंयुक्तौ शिराजालविवर्जितौ । समत्वचौ महाच्छिद्रौ स्निग्धौ दुन्दुभिनिस्वनौ । कपोलमण्डलास्फालाद्दत्तशब्दौ मुहुर्मुहुः । कर्णौ चामरसङ्काशौ मृदुरोमकृतार्पणौ । अजर्जरमृदुप्रान्तावीषद्गुप्ताग्रचूलिकौ । मयूरतालवृन्ताभौ सुविस्तीर्णसमौ शुभौ । द्विरत्निमानसंयुक्तौ भर्त्तुरायुःकरौ मतौ । व्रणाजालविनिर्मुक्तौ शिरोरोगविनाशकौ । समत्वचौ महाच्छिद्रौ गजलाभकरौ मतौ । स्निग्धौ कान्तिकरौ नित्यं जयदौ दुन्दुभिस्वनौ । शत्रुनाशकरौ प्रोक्तौ मृदुरोमीकृततार्द्धनौ । अजर्जरमृदुप्रान्तौ प्रयातुः सौख्यकारकौ । गजस्योपचयायैव ईषद्गुप्ताग्रचूलिकौ । मयूरतालवृन्ताभौ तरङ्गबलवर्द्धनौ । सुविस्तीर्णौ समौ भर्त्तुर्भूमिलाभकरौ मतौ । कर्णयोस्तु समाख्यातं मयैतत् शुभलक्षणम् । कण्ठस्य साम्प्रतं वक्ष्ये यथावदनुपूर्व्वशः । अवक्रोऽहीनो दीर्घश्च कण्ठः शुभदो भवेत् । आरोहकप्रभूणाञ्च क्रमशः कुञ्जरस्य च । अवक्रः परिणाहेन सप्तषष्ट्यधिकं शतम् । अङ्गुलानां तथायामे द्वादशैवाङ्गुलानि तु । सम्पूर्णपिण्डितोदग्रश्चान्तर्मणिविभूषितः । कण्ठो वारणनाथस्य एवं भूतः सुपूजितः । ऋजुः प्रमोदजननः सम्पूर्णः कार्य्यसिद्धिदः । अहृस्वो जयदस्तद्भर्त्तुः कीर्त्तितः पूर्णपिण्डकः । उदग्रो वंशवृद्धिं च प्रतापं कुरुते तथा । अन्तर्मणिसमायुक्तो मणिरत्नप्रदो भवेत् । करालस्यातिनिम्नं च आसनं न प्रशस्यते । करालं यातुरशुभं निम्नं च व्रणकारकम् । दैर्घ्येण हस्तमात्रं तु विस्तीर्णञ्च शुभं स्मृतम् । विस्तीर्णं विस्तृतं राज्यं सम्पूर्णं कुरुते जयम् । वंशस्याथ प्रवक्ष्यामि लक्षणं तु शुभाशुभम् । अत्युच्छ्रितो निम्नपारं हृस्वो वंशो न शस्यते । राज्ञा च पादरोगाणां कर्त्ता च स भवेत्सदा । पञ्चत्र्यङ्गुलायामासनात्पश्चिमासनम् । यावत् प्रपूर्य्यते पार्श्ववंशोऽश्वफलकाकृति । शुभो ज्ञेयो गजेन्द्राणामायामं कुरुते सुखम् । पूर्णपार्श्वस्तु लाभाय धत्तु पृष्ठ श्रिय भवेत् । अरत्निद्वयमानं तु पेचकात्पश्चिमासनम् । घनास्थि विषमं निम्नकुब्जितं पुच्छरोगदम् । मांसोपचयपूर्णं च विस्तीर्णञ्च शुभं मतम् । जघनोपरि रोगाणां तद्धि नाशकरं मतम् ।(पेचकात् पुच्छमूलात्)। पुच्छो गजस्य नो शस्तो बहुदीर्घोऽतिलम्बितः । करोति महतीं पीडां राज्ञश्चाधोरणस्य च । हृस्वपुच्छस्तु पृथुत्वेन दैर्घ्येणाष्टाङ्गुलः । सपुच्छः पेचकोऽज्ञेयो गजभर्त्तुः सुखप्रदः ।

विषाणस्य विषाणौ पार्श्वउन्नतौ । उपाहृतौ विषाणेन दन्तैकेन वारणः । अनुन्नताभ्यां सपक्षः कुदन्तः स्थाप्तावधिः । ऊर्द्ध्वं पश्चान्तराणस्य प्रविनामसमौ द्विजौ । ह्रस्वस्थूलातिदीर्घेण दन्तेनैकेन वा युता । पर्य्यासे शुभकामेन सर्व्व एवातिगर्हिताः । अथद्वये नदीजानां पञ्चमेऽब्दे वनौकसाम् । दन्तमूलपरीणाहान् द्विगुणानुकल्पयेत्परे । परयत्किधनुयक्रम्भूत्पप्विहलक्षणाः । दन्तापराजयो यस्य स नृप वोढुमर्हति । रोमशा तु सम्यो यत्र पिटक स उदाहृतः । स ज्येष्ठः सप्तभागोनो मध्यमोऽसौ मतङ्गज । अन्त्य षड्भागहीन स्यादतोऽन्योऽपि न पूजित । सुस्थाय पेचके दैर्घ्यं पृष्ठपार्श्वोदरान्तरम् । आनाहउच्छ्रय पादाद्विश्येयो यावदासनम्" । वनविशेषेण गजलक्षण तत्रैव वाहस्पत्यसंहिता । "वनाना मध्ये प्राच्यं कालिङ्गकमापरान्तिक च त्रीणि वनान्यतिशोभनानि । तयापमपि प्राच्य वन मध्यवनमपरेषामिव शोभनम् । तत्रैरावतकुलप्रसूतिसम्भवा प्रायेण मृगमिश्रभद्रलक्षणा महाकाया करिणो भवन्ति । विनयसत्त्वशक्तिसम्पन्ना पूगफलप्रभाभास्वत्त्विष प्रविरलमदा गजा युद्धे चापसर्पणोपसर्पणनीरवा भवन्ति नातिक्रोधना सङ्ग्रहेजिता' सत्त्व दर्शयन्ति । ते च एवं कवले कायोपघातातिशयेन मदाभितप्ताः कर्त्तव्याः । कालिङ्गके वाऽऽपरान्तिके च त्रेतायुगोत्पन्नाः मन्दा महागजान्वयजा मन्दाभिधाना प्रायशो मृगावयवा सङ्कीर्णाः गजाः समुत्पद्यन्ते । नात्युद्धा जलदाभा नातिस्थिरा मन्दा युद्धप्रियाश्च गजा भवन्ति । तथा कारुषदाशार्णमागधेयकाभिधानेषु मध्यमा गजाः समुत्पद्यन्ते मृगमन्दजातय ते च पार्श्वयमा मध्यमसत्त्वमध्यमप्रमाणा स्थूलरोमाविलशरीरास्तनुरदा मन्दगतय । तथा सौराष्ट्रे पाञ्चनदाभिधाने द्वापरयुगोत्पन्ना मृगमतङ्गजान्वया मृगप्राया गजाभवन्ति भीरव कुत्सिताङ्गा' नातिपरक्षाद्दुर्मदा दुर्वृत्ताश्च एवंविधा गजा समुत्पद्यन्ते वनाच्च वनान्तरे गतेषु दुर्वृत्तेषु गजेषु धेनुकासम्पर्केण शुभवनेऽपि कालिङ्गकेऽपि । तासशीलश्च भीरुश्च ह्रस्ववामनमस्तक । हीनाङ्गभोगो दुःशीलस्त्वसहतशरीरभृत् । समुच्छ्रितस्तनायामो परीणाहविवर्जित । मृगस्वरूपोदीनश्च मृगजातिर्गजाधम । अत पर प्रवक्ष्यामि संकीर्णस्य च लक्षणम् । पशुस्थाहारणामाश्च मक्षतां च वियोनिषु । धेनुकाश्च भवन्त्येते गजा स-

कीर्णलक्षणा । भद्रोमन्दोमृगोवाथ शुद्धजाति, प्रजायते । तस्मान्मिश्राणि रूपाणि गदतोमे निबोधत । आमन्त्यान्नि अज्ञातानां निश्चयोनोपपद्यते । तथापि किञ्चिदुद्देशान्मिश्रलक्षणमुच्यते । भद्रमन्द्रो भद्रमृगो भद्रमन्द्रमृगस्तथा । द्रष्ट भेदत्रय मन्दमृगयोरपि जायते । भद्रादीनां च सर्वेषां रूप सकीर्णसंज्ञितम् । ऊर्द्ध्व कार्य्यभेदेन तज्जाति भिद्यते द्विधा । त्रिधा च भिद्यतेभूय एकैकन्तु यथाक्रमम् । एवमष्टादशविध कीर्त्तित मिश्रलक्षणम् । शुभाशुभं विभागेन साम्प्रतम् निगदाम्यहम् । भद्रमन्द्रोभवेदिष्टोमृगमन्दस्तथाधम । भद्रमन्द्रमृगश्चैव मध्यम परिकीर्त्तित । भद्रजाति महाकायोगजोमध्ये च दन्तिनाम् । मन्दोऽवयवयोगेन स शक्तो भवति द्विप । मृगस्यापि हि रूपेण किञ्चिन्मात्रानुगतेन यै । अशुभत्वं न भद्रस्य जायते शोभनोऽपि स । लोचमाना प्रधानस्य यस्माच्छास्त्रेषु कीर्त्तितम् । तस्मान्मृगाश्रिय सक्तोभद्रोऽपि हि न शस्यते । भाद्रेणो परिकायेण मान्द्रेनाधोगतेन वा । उन्नतोऽपि गजानान्तु भद्रमन्द्रोभवेद्गज । अनेनैव हि रूपेण विपर्य्यासेन यो गज । सोऽपि शोभन एव स्यान्मन्दभद्रइति स्मृत । एव विधात् मृगे चापि लक्षणान्मिश्रलक्षणम् । महावयवबाहुल्यात् मृगरूपस्य लेशत । भद्रावयवनिर्मुक्तोमध्यमोऽसौ गजो भवेत्" कायेन यो भवेद्भद्रो मन्द्रोवापि मतङ्गज । मृगगात्रोऽपरस्यैव स भवेद्वेगवान् गज' । मृगरूपाधिकत्व च दृश्यते यस्य दन्तिन । अधमस्तु स विज्ञेय' सत्त्वशक्तिविवर्जित । करदन्ताक्षिकुक्षौ च यो मृगोजायते गज । शेषावयवभद्रोऽपि हीन एव भवेदसौ । एवमुद्देशमात्रेण मिश्रभेदा मयोदिता । नोदिता येऽपि तेऽत्रापि मिश्रा ज्ञेया मनीषिभि । मिश्रलक्षणस योग उत्कृष्ट यस्य दृश्यते । रूपनामधेयोऽसौ जायते हि मतङ्गज । अत' परम्प्रवक्ष्यामि लक्षण गिरिचारिणाम् । तथा नदीचराणां च तथैवोभयचारिणाम् । महाबला महाकायायितासा गिरिचारिण । सुपार्श्वासारुदिग्धाङ्गाढपादागतक्लमा । उदपानिर्भयाश्चैव सल्लकीकवलप्रिया । तटाघातविधौ भुग्नदन्तदारितभूतला । शार्दूलादिमहासत्त्वस्फोटासङ्घर्षिता । मदस्रावक्षतोत्थाहादुर्दमावारिभीरव । पांशुक्रीडारता नित्य द्रुमोन्मूलनतत्परा । विषाणवेष्टनाशीला स्वेदसन्तापनीरका । कराग्रस्फोटनिरता सीत्कारकरणप्रिया । अनुद्रवाघनश्यामा शीकरोद्गिरणप्रिया । तोयकर्मणि निःशङ्कामतङ्गाश्च नदीचरा । उभयेषुचर-

न्त्येते नरोपम तत्तानुप। ये गजाः कूटमनसस्ते भवन्त्यतिशोभनाः। सर्वेषामेव नागानां छायालक्षणमुत्तमम्। यच्छाया जायते यस्य तत्तयैवाभिधीयते। सत्त्वांशकत्वाद्भद्रस्य पाटला भवति प्रभा। नवपल्लवसच्छाया स्निग्धा तनुतनूरुहा। तथा तमोंऽशकत्वाच्च कृष्णा मन्द्रस्य जायते। तरुणाम्बुदसङ्काशा स्थूलकृष्णकचाचिता। रजोंऽशकत्वाच्च तथा मृगस्यापि हि धूसरा। मलिनाम्बुदसङ्काशा रूक्षा तनुतनूरुहा। एवं छायाविशेषाः स्युर्भद्रादीनां नयोदिताः। छाया च मिश्रभावाच्च मिश्रा भवति दन्तिनाम्। वनजातिगुणैर्भद्र गजस्त्रैधो नरोत्तम। तमोंऽशकत्वं मन्द्रस्य यद्युक्तं निबोध मे। दुर्मनस्त्वं तथाऽऽलस्यं निद्रालुत्वं च मूढता। गम्भीरवेदिता चेति मन्द्रस्य तम उच्यते। एवं रजोगुणो राजन् मृगस्तेन रजोंऽशकः। धैर्यं स्थैर्यं पटुत्वं च विनीतत्वं सुकर्मता। व्यत्ययवेदिता चैव भयस्थानेषु मूढता। सुभगत्वं च धीमत्त्वं सत्त्वस्यैते गुणाः स्मृताः। अत सत्त्वांशको राजन् भद्रजातिरुदाहृतः। चित्रत्वं बाहुशिरसोरन्तर्मणिगतं तथा। दन्तयोर्मधुवर्णत्वं नेत्रयोर्मधुपिङ्गता। आसनस्य पृथुत्वञ्च पूर्णता कुक्षिपार्श्वयोः। पृथुत्वं पृष्ठभागस्य समत्वं समसन्धिता। स्निग्धच्छाया त्वथायामपरिणाहोच्छ्रयौ तथा। स्थौल्यत्वं गुरुत्वं च कायस्यैते गुणाः स्मृताः। सर्वलक्षणसम्पूर्णो दृश्यते न मतङ्गजः। प्रधानावयवे लोके यत्नः कार्यो मनीषिभिः। हीनं कृष्णं च कल्माषं पुष्करं न प्रशस्यते। सम्पूर्णं मांसलं रक्तं सुकुमारं शुभं स्मृतम्। त्र्यङ्गुलन्तु भवेद्धीनं हीनस्पतिविनाशनम्। कृष्णं भर्तृविघाताय कल्माषं भर्तृरोगदम्। सम्पूर्णं सिद्धिदं भर्तुः पुष्करं चतुरङ्गुलम्॥ सौभाग्यदं मांसलन्तु सुकुमारं तथार्थदम्। रक्तपद्मदलच्छायं तथा मिष्टान्नपानदम्। अत परं शुभे स्येते श्रोतसी पाटलोदरे। पञ्चाङ्गुलप्रमाणेन वर्तुलत्वेन चार्थदे। अत्यायुश्च ताम्रं च कर्णतालं सुखप्रदम्। ह्रस्वा स्थूला च विपुला चित्रिणी श्यामलोमिता। कुञ्चिता च तथा दृष्टिः सप्तधा दन्तिनां मता। तासां तु त्र्यङ्गुलायामा सा ह्रस्वेत्यभिशंसिता। ह्रस्वा करोति नृपतेर्विनाशं शीघ्रमेव हि। स्थूला दुर्भिक्षकरणी श्यामला व्यसनं सदा। करोति चित्रिणी नित्यं तस्यैव तु पराजयम्। भुग्ना दृष्टिर्विनाशाय राज्ञो धनविनाशिनी। कुञ्चिता हीनयोश्चैव युद्धकाले रिपोर्जयम्। अत परं प्रवक्ष्यामि क्रमेण करलक्षणम्। स करं दीर्घमिच्छन्ति मातङ्गे शास्त्रपण्डिताः। न वालधिसमं ह्रस्वं नातिदीर्घं क्रमायतम्। न ततं नातिकायं च न रूक्षं न क्षतव्रणम्। नाक्रमेण क्षतोत्सेधं न हीनं दशनान्तरम्। न ह्रस्वाङ्गुलिसंयुक्तं नातिसंकटपुष्करम्। एतल्लक्षणसंयुक्तं करं शंसन्ति कोविदाः। वालधेः सुसमो हीनः समोऽथ दन्तिदुःखदः। अतिदीर्घो भवेद्भर्तुरायुषः क्षयकारकः। तनुर्व्याधिकरो यादृगतिकायोऽर्थनाशनः। रूक्षो व्याधिव्रणकृद्योद्धातुर्भयकृता व्ययाम्। प्रतिलोमेन च स्थूलो गजस्य सुखनाशनः। असमञ्जसहीनश्च असमञ्जसवर्तुलः। दुःखशोकभयायासकर्त्ता भवति नित्यशः। दशनान्तरहीनश्च जायते दन्तिरोगकृत्। कथितं पूर्वमेवेष्टं पुष्कराङ्गुलिलक्षणम्। अतो मया न कथितं साम्प्रतं करलक्षणे। निर्मलोकोटीर्घरोमा क्रमवृत्तत्वसंयुतः। अणुबिन्दुविचित्रश्च दैर्घ्येण च शताङ्गुलः। वालधेः पुष्करं यावदायामो जायते यथा। अरत्निवयाऽऽनाहश्च हीनहीनतरक्रमात्। युक्तस्त्वनेन मानेन करः पूज्यतमो भवेत्॥ निर्मलोके च सौभाग्यं दीर्घरोमाऽर्थदः स्मृतः। क्रमवृत्तोऽजयं कुर्यादणुबिन्दुयुतो धनम्। सुप्रमाणो भवेद्राज्ञः करस्य परिवर्द्धनं। आनाहश्चार्थसततं राज्यस्फीतिकरो भवेत्। करस्य कीर्त्तितं ह्येतल्लक्षणं शुभशंसितम्। अत परं प्रवक्ष्यामि लक्षणं दन्तवेष्टयोः। कचहीनावतिस्थूलौ विषमौ शिथिलौ तथा। दन्तवेष्टौ सदा भर्तुः प्रमाणाभ्यासशौख्यदौ। दन्तमूले सुसम्बद्धौ सकषौ किञ्चिदुन्नतौ। दृष्टौ सदा तथा भर्तुर्हृदौ परिकीर्त्तितौ। अथ परं प्रवक्ष्यामि लक्षणन्तु विषाणयोः। व्यस्तता सङ्कटत्वं च प्रांशुता भग्नशुभ्रता। वक्रत्वं ह्रस्वता चैव धूसरत्वं च रूक्षता। कटुताऽधोगतित्वञ्च हीनता मूलमध्ययोः। प्रान्तयोः स्थूलता चैव दीर्घता चातिमात्रता। सर्पच्छत्रककान्तित्वं दोषाह्येते चतुर्दश। दन्तयोस्तु समाख्याताः फलं तेषां निबोध मे। व्यस्तौ च सङ्कटौ दन्तौ मदहानिकरौ तु तौ। दन्तिनस्तन्तायुक्तौ व्याधिदौ परिकीर्त्तितौ। भग्नशुभ्रौ तथा भर्तुर्भेदक्षोभकरौ मतौ। वक्रौ चार्थविनाशाय ह्रस्वौ च परिकीर्त्तितौ। धूसरौ रूक्षतायुक्तौ गजस्यायुर्विनाशनौ। मृदुत्वयुक्तौ नागस्य शस्त्रव्रणकरौ मतौ। स्थूलाग्रावधोगतिस्थे च भर्तुर्यातुश्च दुःखदे। अशुभं लक्षणं ह्येतद्दन्तयोः कथितं मया। शुभं च साम्प्रतं वक्ष्ये यथावदनुपूर्वशः। स्निग्धौ समौ सुनिष्क्रान्तौ संपृक्तौ व्रणवर्जितौ। मुकुलाग्रौ दृढौ चापि ताम्रचूडौ फलोपमौ। दक्षिणाभ्युन्नतौ किञ्चित् मृणालकुमुदप्रभौ। मुग्धकुन्ददलच्छायौ रोमचम्पक

यक्त स्थूलञ्च ह्रस्वं च पुच्छं कचविवर्जितम् । समानाहं च नागस्य सर्व्वदोषकरं भवेत् । अयक्त म्रजुदीर्घञ्च ग्रन्थिहीनं सुपेशलं । गोपुच्छबालप्रतिमकचमात्रविभूषितं । भूमिं तु न स्पृशेत् यस्तु चतुर्भिश्चाङ्गुलैः सदा । स शुभो बालधिर्ज्ञेयो गजभर्त्तृसुखप्रदः । अतिप्रमाणं ह्रस्वं च कर्बूरं विगतप्रभम् । सिरालं चाशुभं मेढ्रं राजहस्तिपदुःखदम् । यत्तं षडङ्गुलायामं नाहतः षोडशाङ्गुलम् । सिराजालविनिर्मुक्तमाम्रपल्लवसप्रभम् । द्व्यङ्गुलं स्रोतसा युक्तं बिन्दुमालाविवर्जितम् । मेढ्रं प्रशस्तं विज्ञेयं भर्त्तृजीवितवर्द्धनम् । अतः परं प्रवक्ष्यामि लक्षणं गात्रयोरपि । हीने तनू च दीर्घे च समभासोच्छ्रये तथा । विषमे च कचाक्रान्ते गात्रे नागस्य निन्दिते । हीने तनू च कुरुतः प्रयातुर्विनिपातनम् । समभासोच्छ्रये यात्तुर्विषमे च विपत्करे । कचाविद्धे गजस्यैव गात्ररोगकरे तथा । अतःपरं प्रवक्ष्यामि गात्रयोः शुभलक्षणम् । सार्द्धहिरत्निश्चिरत्निं यथाङ्गुलसमायता । एवंविधे स्थिते गात्रे भर्त्तुरारोग्यसौख्यदे । घने च कचहीने च गजलाभकरे तथा । गजस्य पुष्टिदे नित्यं मांसले च घने स्थिते । गात्रे वारणनाथस्य एवं भूते शुभे मते । चिपिटे वा कफलके गात्ररोगकरे सदा । सम्पूर्णे राज्यदे भर्त्तुर्गजस्य बहुसुप्रदे । तथैव रोमनिह्निते गजस्य गजोरगदे । अतः परं प्रवक्ष्यामि नखानाञ्च शुभाशुभम् । हीना कृष्णाश्च खण्डाश्च रूक्षाश्च न नखा शुभाः । सदा च रोगदा हीना कृष्णा भर्त्तृविनाशनाः । खण्डारूक्षा गजस्यैव पादव्याधिविवर्द्धनाः । स्निग्धाश्चन्द्रार्द्धसङ्काशा मानेनैव पुरोनखाः । तथादिपञ्च वक्ष्यामि चाङ्गुलानि क्रमेण हि । एवं विधा नखा यस्य भर्त्तुरारोग्यकारकाः । अतः परं प्रवक्ष्यामि पादयोरपि लक्षणम् । हीनौ सङ्कुचितौ रूक्षौ चरणौ दन्तिदुःखदौ । हस्तप्रमाणौ दैर्घ्येण कूर्म्माकारौ सुखप्रदौ । अतः परं प्रवक्ष्यामि लक्षणञ्चापरांश्रितम् । आयुष्मिते च हीने च निन्दिते चापरे तनू । सम्पूर्णे च शुभे ज्ञेये त्र्यरत्न्यायामसंयुते । निन्दिते रोगदे ज्ञेये पूजिते प्रभुसौख्यदे । द्वादशाङ्गुलहीनं तु चासनात्पश्चिमासनम् । अपरपादयोश्चापि आयामोऽरत्निमात्रकः । नखानां च तथा मानं षडादिचतुरङ्गुलम् । यथामायवमानन्तु लक्षणं कथितं यथा । उत्सेधायामनाहानां साम्प्रतं कथयाम्यहम् । समतन्तुसमायुक्ततन्तुना वर्त्तितेन च । सुप्रशस्ते दिने नित्यं मानं कुर्वीत मानवित् । सप्तारत्निं गजेन्द्राणां प्रमाणं वनजन्मनाम् ।

आसनं यावदुत्सेधस्तलसन्धिश्च कीर्त्तितः । पेचकात्मनि मानन्तु आयामोऽरत्नयो नव । मध्यदेशे तदानाहो दश रत्निः प्रकीर्त्तितः । मानमेतद्धि भद्रस्य मुनिभिः परिकीर्त्तितम् । सप्तमेन तु भागेन हीनं मन्दस्य जायते । मन्दाद्धीनं मृगाख्यस्य षड्भागेन प्रकीर्त्तितम् । एवं क्रमेण सङ्कीर्णं मानं मानविशारदैः । किञ्चिन्न्यूनाधिके वापि न दोषं स प्रपद्यते । दोषाणां च गुणानाञ्च दृष्टिरेव फलप्रदा । सत्त्वं हि वारणेन्द्राणां नित्यं तन्त्रेषु संस्थितम् । स्निग्धे मधुनिभे दीप्ते कलविङ्काक्षिसन्निभे । रक्तपद्मदलच्छाये पद्मरागमणिप्रभे । नीलच्छाये अतीक्ष्णे च गजे सत्त्वं प्रतिष्ठितम् । मार्जारवानरादीनां सदृशे नीलके गजे । हीनसत्त्वाश्च जायन्ते गिरिकूटोपमा अपि । अधिकं पुष्करं यस्य मांसलत्वेन जायते । प्रभयाच कषायं स्यान्मानेनाङ्गुलपञ्चकम् । किञ्चिदूने च विज्ञेये स्रोतसी चतुरङ्गुले । स्थूलपक्षाङ्गुलायामा त्र्यङ्गुला नाहमानता । हस्तोऽपि पूर्वमानस्य स्थूलत्वेनाधिकोऽभवेत् । रोमयोनातिदृढश्च दृश्यः षड्भिरङ्गुलैः । आयामेन च हीनं स्यात् पूर्वमानात् षडङ्गुले । नातिगोपुच्छसंस्थानं कृष्णबिन्दुविभूषितं । आनाहे रत्निमानौ तु सार्द्धहस्तद्वयायतौ । पीयूषकुसुदच्छायौ किञ्चिन्नम्रकपिङ्गलौ । स्निग्धौ सुघनमावेव दन्तौ नागस्य कीर्त्तितौ । दन्तावेतावतिस्थूलौ कचाक्रान्तौ सनिष्ठुरौ । पञ्चाङ्गुलौ कटौ ज्ञेयौ मांसोपचयपूरितौ । ज्ञेये कटोपरि तथा स्रोतसी द्व्यङ्गुलान्तरे । एकाधोनवाङ्गुलानाहे द्विषष्ठ्यङ्गुलायते । किञ्चिन्नत कचाक्रान्तं बाह्यस्य परिकीर्त्तितम् । प्रतिमानं तु विज्ञेयं हस्तं सचतुरङ्गुलं । अध्यर्द्धरत्निमानं च प्रमाणान्तरभेदतः । आयामस्तु विज्ञेयस्त्वधरस्तु दशाङ्गुलः । त्र्यङ्गुलमानस्तु परिणाहोऽभिधीयते । पञ्चाङ्गुलं तु चिबुकं सृक्किणी तु नवाङ्गुले । षड्विंशदङ्गुलायामे सङ्गते परिकीर्त्तिते । अध्यर्द्धरत्निकौ कर्णौ विस्तारेण कचान्वितौ । कषायपक्ष्मणौ स्थूलौ कृष्णबिन्दुविचित्रितौ । सपद्मागकरायामावनपूलौ कचान्वितौ । पञ्चाङ्गुलान्तरौ पीनायुभावोष्ठौ दशाङ्गुलौ । कर्णात् कर्णान्तरं यावत् सप्तसप्तत्यङ्गुलं शिरः । शातकुम्भं तथा ज्ञेयं स्थूलं सप्तदशाङ्गुलम् । षडङ्गुला मात्र सार्द्धमात्रा हि द्व्यङ्गुलाधिकम् । आयतत्वं च वक्षस्तु दशाङ्गुलमिति स्मृतम् । भद्रस्यैवासनं ज्ञेयं तयोक्तं सप्तरत्निकम् । षडङ्गुलोच्छ्रितं स्थूलं तुल्यं चाङ्गुलसमानतः । पुच्छमूलाद्धि हिरण्यन्तु जायते पश्चिमासनम् । उच्छ्रयेण

तु हीन स्यादायत पञ्चभिरङ्गुलैः । मेचकस्त्र्यङ्गुला यामोत्सेधत्वेनाङ्गुलत्रयम् । विंशत्यङ्गुलमानाढ्ये भवेत् पुच्छोऽयथागमम् । प्रान्तपादक्रमेणैव तथायामेऽङ्गुलत्रयम् । दैर्घ्येण तु स विज्ञेयो भूमेरष्टाङ्गुलोच्छ्रितः । इदं मानविधानं तु मन्द्रस्य परिकीर्त्तितम् । सार्द्धद्वारत्निके मूले अपरे संप्रकीर्त्तिते । उदरे चातिमात्रं स्यान्मेढ्रं हस्तद्वयायतम् । विंशत्यङ्गुलमानाढ्ये लम्बच्छाय सदा भवेत् । पञ्च चत्वारि च त्रीणि चाङ्गुलानि नखा क्रमात् । आपाण्डुविवराः कुन्दाभासाश्चापरपादयोः । अनेनैव तु मानेन गात्रपादसमाश्रया । नखा मन्द्रस्य विज्ञेयाश्चरणास्तु कथापि वा । अतिस्थूलं पृथुत्वेन सार्द्धहस्ताधिकं करं । अरत्निकं वा, दैर्घ्येण प्रमाणं गात्रयोरपि । उरोमणिस्तथा श्वयोरत्निमात्रोऽतिमांसलः । विंशत्यङ्गुलमानस्तु अन्तर्गलमणिर्भवेत् । अनेनैव हि मानेन मातकुम्भः प्रकीर्त्तितः । एते प्रशस्ता मन्द्रस्य नूनाय । कथितास्तथा । प्रोक्ता ये तेऽपि भद्रस्य विज्ञेया समलक्षणाः । मृगस्य साम्प्रतं वच्मि प्रदेशान् लक्षणान्वितान् । त्र्यङ्गुलं पुष्करं तस्य त्र्यङ्गुले स्रोतसी तथा । अङ्गुलानि च चत्वारि कीर्त्तितास्तस्य चाङ्गुलाः । तनुः करस्त्र्यरत्निःस्यादानाहे सार्द्धरत्निकः । वाहित्थात् पुष्कर यावन्मानं सद्भिरुदाहृतम् । तथा तनुतरौ दन्तौ दैर्घ्ये सार्द्धद्वारत्निकौ । ह्रस्वौ च मस्तकौ स्यातान्तयोः सप्तदशाङ्गुलौ । प्रतिमानं तथा ज्ञेयं निम्नं पञ्चदशाङ्गुलम् । द्व्यङ्गुलं चिबुकं तस्मादधरस्तु षडङ्गुलः । अष्टादशाङ्गुलानाहे सृक्कणी तु षडङ्गुले । स्यातामङ्गुलविस्तौ कपोलौ निम्नमध्यगौ । कटौ द्व्यङ्गुलमानौ तु विवरे चतुरङ्गुले । नेत्रे चापि तथा स्यातामिषत्प्रभे स्थूलतारके । नातिव्यक्तं समाप्य सार्धातकुम्भं दशाङ्गुलम् । गर्त्ताकारस्तु निम्नं च कटकुम्भं तथैव तु । अष्टाङ्गुलान्तरं कुम्भ आयामे षोडशाङ्गुलः । विंशत्यङ्गुलकौ कर्णौ स्तब्धौ ह्रस्वौ च वर्तुलौ । पञ्चचत्वारिंशदङ्गुलानाहा आयामे षोडशाङ्गुला । ग्रीवा मृगस्य विज्ञेया करालमांसला भवेत् । सार्द्धद्वारत्निकायामः कृशतनोऽतिमानया । वंशो मृगस्य विज्ञेयो निम्नमत्स्यनिभप्रभः । स्थूलास्य विषमं निम्नं पुष्करमध्यद्वरत्निकम् । आसनेन सम चैव मृगस्य परिमाणकम् । पञ्चाङ्गुलस्तु विज्ञेयः मेचकोगुदजः स्मृतः । कथापन्थिषमाकोश स्थूलोऽगुरुश्च चाऽऽथ । अपरापादपार्ष्णिभ्यां हस्तमात्रपरिवृतः । शेषं तद्वत्तु हस्त्यस्योद्भिणात्यङ्गुलावृतः । वत्प्रमाणे तथा गात्रे चिपिटे चापि निष्प्रभे । चरणाश्च गतच्छायैश्चतुस्त्रिद्व्यङ्गुलैर्नखैः । स युक्ता स्फुटिता निन्ना माने नाष्टाद्यङ्गुला । एतदुद्देशमात्रेण कथितं मृगलक्षणम् । अतः परं प्रवक्ष्यामि तेषां बलपरीक्षणम् । गजा न बलहीनेन सुरूपेणापि शोभनाः गुणेष्वपि बलं श्रेष्ठं तत् परीक्षेत पण्डितः । शरीरान्तर्गतं प्राणो बलशब्देन कीर्त्यते । क्रियते वारणस्यास्य तस्योपायैः परीक्षणम् । जाम्बूनदस्य ताम्रस्य पलानां रजतस्य वा । अष्टादशसहस्राणि गृह्य सन्धृत्य वेगवान् । दशयोजनमध्वानं गच्छति श्रमवर्जितः । यो गजो गजमध्ये तु स उत्तमबलः स्मृतः । यश्चतुर्दशसाहस्रभारमादाय गच्छति । सप्तयोजनमध्वानं स मध्यबलो मतः । दशसाहस्रिकं भारं गृहीत्वा पञ्चयोजनम् । अध्वानं यो हि सयाति स हीनबल उच्यते । सन्निभागहिहस्तेन परिणाहेन संयुतम् । चतुर्हस्तनिखातं तु योभिनत्त्युत्तमो हि सः । अथ वोत्पाटयेद्वापि बलेन महता युतः । सार्द्धत्रिहस्तखातन्तु सप्तहस्तोच्छ्रितं तथा । पञ्चाशदङ्गुलीकेन परिणाहेन संयुतम् । भिनत्ति यो गजः शीघ्रं क्षिपत्युद्धृत्य वा पुनः । स गजानान्तु सर्वेषां मध्ये मध्यबलो मतः । हस्तत्रयनिखातन्तु षड्हस्तोच्छ्रयमेव वा । युक्तं स्थूलतया चैव पूर्वस्यार्द्धमात्रया । भिनत्ति हेलया यस्तु उत्खातं वा करोति वा । स्तम्भं कुञ्जरमध्ये तु स हीनबल उच्यते । गुरुत्वं च यतः श्रेष्ठं गुरुत्वादधिकं बलम् । बलादभ्यधिकं सत्त्वं तस्मात्सत्त्वं निरूपयेत् । शुद्धस्फटिकसङ्काशं सत्त्वं हृदि शरीरिणाम् । दुर्लक्ष्यं विद्यते सम्यगुपायैस्तद्धि लक्षयेत् । सुप्रशस्ते दिने लग्ने गजो गैरिकमण्डितः । कक्ष्यैश्चामरघण्टादिभिराभरणभूषितः । पादान्दोलनसञ्जातघण्टारवमिभस्सन । आरोहककरास्फालकृतोत्साहोन्नताननः । अत्यन्तं ढौकयेच्छत्रीन् पार्श्वकोलाहलाकुलः । वेगोत्थानकृतास्फोटदन्तसंघट्टमर्दने । लता कामपि न हस्तस्य वेदना यो न मन्यते । यो हि मदे कृतास्फालैः स्वकटं भर्तुमिच्छति । नापसर्पति भीत्वा मो प्रतियाति रणात् क्वचित् । कण्ठगर्जितनादेन परिपूरितदिङ्मुखः । निवर्त्तते च दुःखेन स भवेत् सत्त्ववान् गजः । पदात्यश्वसमूहं वा गजमालातिभीषणम् । रागोत्थामहत्तुङ्गगम्भीरकलकलाकुलम् । उत्थाय समरे गच्छेदोपरक्षितशोभनः । दन्तदारणरागेण प्रतिनागकृतेक्षणः । प्रहारैरतिरूक्षैर्भिः यत्र कम्पमहैः । दोषच्छविवेगेन स भवेत् सत्त्ववान्-

जायते नागो एतदाख्यातुमर्हसि” इति नकुलपृष्टो इन्द्रसूतिरुवाच । “यथा जातकयोगेन जन्तूना च शुभाशुभम् । तथा बन्धनकालोत्थङ्गजानामपि जायते । सुलग्नावस्थिते सौम्यपक्षे पीडाविवर्जिते । बन्धनं यस्य जायेत स भवेत् सत्ववान् गजः । क्षीणचन्द्रेषु गृह्यन्ते ये गजाः क्रूरदृष्टिभिः । ये चालोकितनक्षत्रास्ते भवन्ति भयाकुलाः” । उक्तञ्च शम्भुना “मृगजातयोऽपि हि क्रूरा भवन्ति मधुपिङ्गललोचना स्निग्धाः । वृषसिंहमीनवृश्चिकलग्नेषु स्वीकृता करिणः” । पुनर्नकुलप्रश्ने गुरोः प्रत्युक्तिस्तत्रैव । “राजन् पञ्चविधं चैव गजानां विदितं मतम् । अल्पार्थं प्रथमं ज्ञेयं प्रत्यर्थं च तथापरम् । अन्वर्थं चैव गम्भीरमुत्तानं पञ्चमं भवेत् । प्रतोदाङ्कुशदण्डाद्यैर्विद्यादुद्वेजितानि यः । तीव्रसङ्कुचितस्पृष्टः स स्यादल्पार्थवेदिता । स्तोकं बहु बहु स्तोकं चापि मन्येत यो गजः । वागङ्कुशादिभिर्नित्यं स हि प्रत्यर्थवेदिता । जानात्यङ्कुशतोत्राद्यैर्यद्यथा तत्तथैव हि । चतुर्णामयभयैर्युक्तोऽन्वर्थश्च स गजो भवेत् । अङ्कुशादिव्रणान् राजन् यश्चिरेणावगच्छति । तीव्रानपि स गम्भीरवेदी भवति वारणः । रोमेषु स्पर्शं तृणेनापि स्पृष्टं वेत्ति तु यो गजः । उत्तानवेदिनं तन्तु गजं विद्धि महाभुज । सर्वाणि वेदितव्यानि भद्रादीनां भवन्ति वै । प्रकृतिस्थस्य सततं भद्रस्यान्वर्थवेदिता । गम्भीरवेदिता चापि मन्दस्यैव प्रकीर्त्तिता । उत्तानवेदिता नित्यं मृगस्यैव भवेन्नृप । वेदित्वं गजजातीनां तिसृणामपि जायते । साम्प्रतञ्च यथाशास्त्रं कथ्यते वेगलक्षणम् । तिसृणामपि जातीनामुत्तमाधममध्यमम् । न चाल्पं न च दृढं द्विपञ्चपदसंस्थितम् । गजोत्थानसमुत्थानं नरः प्राप्नोति येन तु । रथाविष्टेन समधा स वेग उत्तमोमतः । (द्विपञ्चपदसंस्थितं दशपदस्थितं गजोत्थानसमुत्थानं गजधावनसमयधाविनम् ) येन वेगेन गृह्णाति नरं सप्तपदान्तरम् । पदानां शतमात्रन्तु स मध्यमजवो भवेत् । येन पञ्चपदस्थं हि नरं गृह्णाति नोदितः । पदामान्तु शतं सार्द्धं स हीनोजव उच्यते । शतद्वयं वा धनुषा गच्छेदुच्छ्वसिताननः । द्वात्रिंशता च मात्राभिः स उत्तमजवो भवेत् । पञ्चाशता च मात्राभिर्यायाद्यस्तु शतद्वयम् । स मध्यमोऽधमो ज्ञेयो मात्राणाञ्च शतद्वयात् । एवं परीक्ष्यते राजन् । वेगो वीथिषु दन्तिनाम् । अतः परं प्रवक्ष्यामि गजस्य शुभलक्षणम्” ।

तत्र कल्याणशील “भारार्द्दितोवा तृषितः क्षीणः श्रान्तोनुबुभुक्षितः । रात्रौ वा दिवसे वापि निर्विकारस्तु यो भवेत् । कल्याणशील स ज्ञेयो समस्तगजलक्षणैः । विकारं कुरुते यस्तु पीड्यमानः क्षुधादिभिः । तमकल्याणिनं राजन् गजन्दृष्टं प्रकल्पयेत् । कोपोऽपि द्विविधो ज्ञेयः शिशुश्चाशिशुस्तथा । द्विविधस्यापि राजेन्द्र ! यथावच्छृणु लक्षणम् । उद्वेजितोऽपि कालेन कोपं बध्नाति निर्भरम् । क्षिप्रं गृह्णाति च क्रोधं दुर्निवारं मुहुः शमम् । शिशुक्रोधः स विज्ञेयो गजलक्षणकोविदैः । वार्यमाणोऽपि यत्नेन न शमं याति मुह्यति । स ज्ञेयस्त्वशिशुक्रोधो राजन् । स हि रणप्रियः । साम्प्रतञ्चैव वक्ष्येऽहमायुर्लक्षणमुत्तमम् । आभ्यन्तरं च बाह्यञ्च लक्षणं द्विविधं स्मृतम् । आभ्यन्तरं योगसाध्यं बाह्यं किञ्चिच्च लक्ष्यते । तेनान्तरं परित्यज्य बाह्यं लक्षणमुत्तमम् । क्षेत्रसत्त्वसमायोगा । भवन्ति द्वादशैव हि । एकं हस्तगतं क्षेत्रं द्वितीयं वदनाश्रितम् । तृतीयञ्च विषाणस्थञ्चतुर्थं शिरसि स्थितम् । पञ्चमं नयनस्थं च षष्ठं कर्णाश्रितं भवेत् । कण्ठस्थं सप्तमञ्चैव अष्टमं तालसंस्थितम् । नवमं चरणे ज्ञेयं शेपाङ्गस्थं द्विपञ्चमम् । एकादशञ्च कान्तिस्थं द्वादशं सत्त्वसंस्थितम् । एवं द्वादश क्षेत्राणि मातङ्गानां भवन्ति हि । द्वादशैव दशाज्ञेया शेपाङ्गेष्वभिलक्षिताः । विंशोत्तरं वर्षशतं भद्रस्यायुः प्रकीर्त्तितम् । अष्टाशीतिर्मन्दस्य चत्वारिंशत् मृगस्य च । मिश्रस्य चायुषः संख्या जातिभावेन जायते । प्रदेशस्थानतत्त्वज्ञो जातिं समुपलक्षयेत् । सर्वक्षेत्रैः सुसम्पूर्णैः सम्पूर्णायुर्गजो भवेत् । हीनैश्च हीयते चायुर्यावदभिधीयते । दशाब्दानां क्षयं कुर्यात्तत्तल्लक्षणवर्जितः । विंशत्यब्दविनाशस्तु हीने क्षेत्रद्वये भवेत् । क्षेत्रत्रयावहीने च त्रिंशदब्दपरिक्षयः । चत्वारिंशत्समाहानिर्हीने क्षेत्रचतुष्टये । (समा वत्सरः) । पञ्चाशदब्दाहीयन्ते हीने तु क्षेत्रपञ्चके । षट्क्षेत्रहीनतायान्तु षष्टिवर्षविनाशनम् । सप्तत्यब्दविनाशाय सप्तक्षेत्रविहीनता ॥ अशीतिरष्टभिर्हीने वर्षाणाञ्च विनश्यति । नवतिर्नवभिर्हीनैः क्षेत्रैर्नाशं हि प्रयाति । दशभिश्च तथा हीनैर्भश्यत्यब्दशतं ध्रुवम् । दशोत्तरं चाब्दशतं हीना छाया विनाशयेत् । विंशोत्तरं चाब्दशतं हीने सत्त्वे विनश्यति । एवं दशाब्दनाशं च क्षेत्रं कुर्यादलक्षणम् । एवमायुःक्षयं विद्यात् गजस्य गजकोविदः । सामान्यलक्षणं ह्येतत् जीवितस्य परीक्षणे । विशेषलक्षणं यावद्बहुलक्षणजातितः । एवमुद्देशमात्रेण गजायुर्लक्षणं तव । कथितं साम्प्रतं राजन् । दोषमप्यतिमं लक्षणम् । पादानां लक्षणं सम्यक् दन्तदोषं प्रणाश-

सौख्यं कुर्व्वन्ति रमणीयताम् । दन्ताः स्निग्धाश्चलस्वाश्च सुवृत्ताश्च मधुप्रभा । तालवृन्तसमाकारा बाला भर्त्तुर्जय प्रदाः । शुन पुच्छसमा रूक्षा कपिला स्फुटितास्तथा । घनस्वातिशयोपेताः सुवृत्तास्त्वतिनिन्दिता । भर्त्तुरो-हिगजानान्तु नित्योद्वेगकरास्तु ते । अत परं प्रवक्ष्यामि केशानामपि लक्षणम् । अभिन्ना ऋजवः स्निग्धा घना मधुकरप्रभा । केशा वारणनाथस्य क्षेमवृद्धिकरा मता । रूक्षास्तु निष्ठुरा पिङ्गाः स्फुटिताश्च जुगुप्सिता । कुर्व्वन्ति दन्तिनो नित्यं स्वस्य नाथस्य चाशुभम् । पद्मवालकेशरोमणां लक्षणं कथितं मया । फणिमार्जारसम्बूकशृगालैश्च समप्रभम् । वानरस्य समं चैव मुखं नागस्य निन्दितम् । स्निग्धान्यापूर्णगण्डानि गिरिकूटनिभानि च । आपूर्णमेघरूपाणि पूजितानि मुखानि वै । मदहीनं तथा ह्रस्वं बाहिर्यन्निप्रभं तथा । वराहलोचनाक्रान्तमवृत्तचिबुकं तथा । ललाटतटपर्य्यन्तगर्त्ताक्षतिभिरन्वितम् । सगदं हीनतायुक्तं मुखं नागस्य निन्दितम् । मुखस्य लक्षणं सम्यक् कथितं तव सुव्रत । । अत परं प्रवक्ष्यामि मातङ्गगतिलक्षणम् । समा च लघुपाटा च वेगेऽप्यतिशुभा मता । दीर्घक्रमा सुसोत्क्षिप्ता गात्रसंवरहारिणी । शुभलक्षणसंयुक्ता पुरुषस्य सकस्य च । मातङ्गहंससिंहाना गतिस्तुख्या शुभा मता । क्रोशचालितगात्रा या विषमा सुलघुक्रमा । वेगेऽपि मन्दसञ्चाराविशेषान्दोलितासना । मृगस्य शकलासस्य जम्बूकस्य खरस्य च । गमनेन समा या, सा शुभा नो दन्तिनाकृतिः । कथितं तव राजेन्द्र! गजानां गतिलक्षणम् । स्थितानाञ्च यथायोगं साम्प्रतं लक्षणं शृणु । पञ्चस्थितसप्तस्थित नवस्थित द्वादशस्थिताश्चैव । पुण्यवतां जायन्ते राज्ञा गिरिसन्निभा करिणः । लक्षणसहितैः स्निग्धैः करदन्तविषाणकर्णनयनैश्च । संयुक्तो भवति गजो वसुदः पञ्चस्थितो नाग । (वसुदं धनदं) परिणाहायामोच्छ्रयबलविक्रमधैर्य्यकान्तिसम्पन्नं । भर्त्तु प्रतापजननो ज्ञेय सप्तस्थितो हस्ती । उत्साहवेगसाहसमदसत्वगुरुस्पदत्वतायुक्तः । करदन्तकर्म्मसु कुशलो नवस्थित करी भवति । वक्षिमेधा सत्वं यत्र कुक्षौ तथाऽक्षिणी हृदयम् । रोमाणि चरणपादाः तथासनं पृष्ठवंश । द्वादश चैतानि यदा स्थितानि दृश्यन्ते यस्य नागस्य । स द्वादशस्थितोऽपि भवति गजः सर्व्वसौख्यकरः । सञ्चार स्थितभेदाः कथिता गुणसञ्चया गजेन्द्राणाम् । दिव्याद्यमसत्वानां लक्षणमिह साम्प्रतं वक्ष्ये । निहतद्विपदन्तव्यदकुणपांश्च स्पृशति च न यो म्लाति । न च जिघ्रति मूत्रादीन् स वारणो दिव्यसत्वस्तु । दत्तञ्च योऽत्ति मांस सत्वाना सर्वं तु लोभेन । जिघ्रति मूत्रपुरीषाणि पिशाचसत्व स विज्ञेयः । एवं सत्वपरीक्षा क्रियते नरनाथ । वारणेन्द्राणाम् । स्वरलक्षणमिदानीमशुभं शुभञ्च वक्ष्यामि । स्थानान्यष्टौ नृपते । भवन्ति शब्दस्य वारणेन्द्राणाम् । ताल्वोष्ठशिरउर करजिह्वामूलं गलकपोलौ च । गम्भीरसौम्यहृष्टास्तथाम्भीरितास्तथा स्निग्धा । नादा शुभा नराधिप । षडेव कथिता गजेन्द्राणाम् । चत्वारस्त्वशुभा रौद्राभयशोकसङ्गमोत्पन्ना । एवं शुभाशुभाश्च दशप्रकाराः स्वरा ज्ञेयाः । अन्येऽपि गलवल्गानिशास्फालनोद्भवा बहवः । शब्दा भवन्ति करिणा शुभाशुभं न तैर्भवति । निम्नोच्चितचिबुकायितविरञ्चितकूजितखरोष्ट्रनादनिभा । वायसजम्बूककपिकाष्ठभङ्गसदृशारवास्त्वशुभा । ज्ञेयानि शुभानि सदा मृदङ्गजीमूतदुन्दुभिनिभानि । पातायितगर्जितहसितानि वृंहितानि नागानाम् । पातायितञ्च ताल्वोष्ठसम्भव गर्जितञ्च चैव । जिह्वासमुद्भव च फेनायितमित्यभिख्यातम् । हसित कपोलजनित पुष्करविवरोद्भवञ्च नागानाम् । भवति धनधान्यवाहनभूलाभकर नरेन्द्रस्य । हस्तेन मृदङ्गरव तु कर्णाभ्या दुन्दुभिस्वनञ्चैव । दर्दुररव तु मेचकेन करोति योऽसौ जयकर । सर्वस्थानसमुत्था शब्दा नरनाथ । वारणेन्द्राणाम् । आचार्य्यैः सर्व्वैर्वृंहितशब्दाश्च रवाः शुभा ज्ञेया । एते च जयपराजयकथनसमर्था भवन्ति भूपानाम् । गर्ज्जितशुभप्रदेशस्थानाङ्कपरिवर्ज्जिता नादा । शुष्कवृक्षकाष्ठकण्टकवल्मीकास्थिश्मशानदुष्टाश्च । पाषाणाङ्गारादिषु भूमिषु यदि संस्थिताः करिणः । वृंहन्ति हीनलक्षणमेतद्भर्त्तुस्तदाऽसुखं भवति । प्रभूतमृदङ्गरव तु यदि वृंहन्त्यानन्दपूरिताः करिणः । प्रस्थाने भवति तदा नराधिपस्य विजयस्तदा राजन् । । सभामध्ये च यदा वृंहन्ति शार्दूलवत् गजाहृष्टा । भवति ससैन्यस्य तदात्रिजय सङ्ख्ये नरेन्द्रस्य । (संख्ये संग्रामे) कलहंसनाद मधुर किञ्चिद्दीर्घोत्क्षिप्तपुष्करस्तु यदा । वृंहति यदा च हस्ती तदापि जयोभवेद्भर्त्तु । सुखविवरकपोलगत वृंहत्यसकृत् गजो यदा हृष्टः । मधुरकूजहसितञ्च जयप्रदं भवति भूपानाम् । त्रीन् वारान् क्रौञ्चरव हंसरव वृंहितं यदा कुरुते । एतदपि नागहसितञ्जयप्रदम्भवति भूपानाम् । गर्जति घनवत् सतत यदि वारण प्रहृष्टमनाः सुखरम्भनिविष्टकरस्तदाऽरिविजयोऽभवेद्भर्त्तुः । घनद्रव

एकोऽपि याममंस्याद्यद्यपि भवेद्युद्धप्रियोऽसौ द्विरद । राज्ञा तथापि तल्लक्षणविवर्जितो वर्जनीयश्च । स्थूलसुखहस्तकर्णौ निःशोभजयमापरक्तनूरुश्च । महता मेढ्रेण युतो नष्टमद कोपमहांश्च । मन्दालोकननिरतो महाशिराः पृथुविशालनयनश्च । हस्ती नपुंसकोऽसौ विवर्जनीयश्च संग्रामे । अल्पायुषो भवन्ति हि सङ्कालजिह्वोष्ठतालुका नागा । नरपतिभिस्ते सततं विवर्जनीया प्रयत्नेन । आयामपरिहीनं समनाहोच्छ्रायसुखेन नमितम् । उच्छ्रितवक्त्रं कुब्जं विषमकुम्भं कुक्कुरसमानहीनहस्तं च । एवम्भूतं तु गजं राजा दूरेण वर्जयेन्मतिमान् । स्पृश्याति मन्द्रबृंहिर्यस्तस्य शुभक्षयो भवति । लक्षणयुक्तोऽपि गजो हानिं यात्येकविंशतिनखश्च । एकोनविंशतिनखः सप्तदशनखश्च यो भवति । षोड़श पञ्चदश वा नखान् धत्ते युक्तो वा चतुर्दशभि । एकादशत्रयोदशनवदशभिर्द्विदशनखैश्चैव । संयुक्तस्त्वशुभकर सप्ताष्टाभिश्च पापनखैः । द्विरदावाष्टादशनखाः विंशतिनखयुक्ताश्च शुभाः । कुरुते स्वामिविनाशं द्वाविंशतिनखोऽयश्च । एकोनविंशतिनखो युवराजविनाशं कुरुते । सप्तदशनखस्तु गजो नरपतिपात्रविनाशने समर्थः । षोड़शनखस्मातङ्गो नायकनाशं ध्रुवं कुरुते । पञ्चदशनखश्च योऽसौ सेनापतिनिधनकृद्गजो भवति । कुरुते चतुर्दशनखोऽव्याधिं पुरवासिनां हस्ती । त्रयोदशनखो राष्ट्रवित्तविनाशङ्करोति भूपस्य । द्वादशनखस्तु कुरुते पदातितुरगक्षयं स सङ्ख्ये । एकादशनखयुक्तो मजहानिकरो भवेत् स गजः । पुरदाहं च दशनख. करोति हस्ती दुराकोकम् । चतुरङ्गस्य बलस्य ना शनन्तु नवनखो गजः कुरुते । अष्टनखश्च पुरोहितवंशसन्तानसमर्थं । सप्तनख प्रतिहारं नाशयति च षड्नखोऽमात्यम् । पञ्चनखो भक्तिकरं चतुर्नखो द्वारपालस्य । त्रिनखोविनयाद्यपं द्विनखश्चान्तः पुरादमन्यस्य । एकनखोनखरहितोराष्ट्रविनाशं ध्रुवं कुरुते । एवम्भूतसङ्ग्रामे नरपतिना न ते गजाश्चाह्या । लाक्षमञ्जिष्ठाभोऽतिलोमशो रोमकर्णकरवाल । हस्ती विवर्जनीयो हीनमद पूतिलोमा च । ज्वलनभयं मरकतं दुर्भिक्षभयं महद्भयं कुरुते । यस्मिन् देशे वसति नाशयति सर्वं स दुष्टात्मा । यस्य न भवतोदन्तौ ज्वलनभयं दुर्भिक्षभयं महद्भयं कुरुते । यस्मिन्देशे स वसति नाशयति सर्वं स दुष्टात्मा । यस्य न भवतो दन्तौ कुलरूपवतोऽपि गर्भदोषेण । स गजोमदकृपणाख्यो न तं रणे योजयेद्राजा ।

कुञ्जरघटागतोऽसौ हरति गजानां बलं च सत्वञ्च । अतएव समरकाले नराधिपैर्वर्जनीयश्च । तत्पुरुषदोषघटनोद्भूतिसङ्कटचक्रविघटितविपाश । एकदशनस्त्वधोमुखरदनश्च गज प्रमं त्यजति । रदनविहीनो हस्ती निःशेषलक्षणयुतोऽपि । भवति न नृपतियोग्योमदजलसिक्त गण्डोऽपि । दूषितविरहितदीने सत्वरहिते विवर्णे च । निष्प्रभकुम्भकुहरे राजा नारोहति सच्चाहरहिते च । एवम्भूतास्त्वाङ्काः मित्रनाशका रणे करिणः । अक्षिभ्यामम्बुजलं निपतति नागस्य यस्य नित्यं हि । नयनव्याधिवियुक्तस्य तस्य भर्त्ता रणे म्रियते । यद्भनयोलायनक्षा भर्तुर्य्यैव सबाधनकरा: । जिह्वानखमुखमेहननयनानि भवन्ति यस्य कृष्णानि । बाह्नित्यपित कृष्णं च गजोभर्तुः क्षय कुरुते । बाह्यासफलकपीठो राजन् । क्रयेन पृथवशेन । वदनेन च कपिवदनात्तुल्यारिपानिन्द्रितो हस्ती । कर्णौ दन्तौ च समौ न नतौ भवतो यस्य नरनाथ । । स नराधिपबलविनाशकर करी जायते समरे । पिङ्गौ रोमचितौ वा स्थूलौ वातिप्रलम्बितायौ वा । कोपी कोपविनाशं स करोति नागश्च भूपानाम् । सितविन्दुभिर्विचित्रं श्वेतं वा यस्य जायते मेढ्रम् । स गजः शक्ति विनाशङ्करोति भूपस्य सङ्ग्रामे । छागस्येव विचित्राणि यस्य देहे भवन्ति रोमाणि । स गजः प्रतिगजबलेन विहतो निजबलं दहति । सुप्तोत्थितस्य वदनात् यस्य गजेन्द्रस्य गलति रुधिरजालम् । ज्वलनबलं सृजति सदसौ भर्तृनाशकर: । इति कथितं तव नृपते । दुष्टमातङ्गलक्षणं सम्यक् । पापकरिण्याललक्षणमत. पर स प्रवक्ष्यामि । यल्लक्षणं मयोक्तंभद्रादीनां शुभं च दुष्टं च । तत्करिणीष्वपि योज्यं जातिविभागेन च युक्तया । लक्षणेन कलितानि करेणुकानामङ्गानि भवन्ति । युवतिसदृशानि पुरुषोचितानि च तथा पीनान्यङ्गानि करेणुनाम् । गलमस्ताना करिणी निर्मितदन्ता सुपीनकाया च । स्थूलायता च सतत प्रभूतदया मता च करिणीनाम् । प्राच्यवनसमुद्भूताः प्रायेण सुलक्षणयुता भवन्ति करिण्य: । सुलक्षणेषु च छाया लक्षण प्रधान तच्च पञ्चविध भवति । पृथिव्यप्तेजोवाय्वाकाशात्मकम् । तत्र पृथिव्यप्तेज आत्मकं प्रशस्तं वाय्वाकाशात्मकमप्रशस्तम् । क्रमेण छायाभिधीयते यथोपन्यासेन हस्तपद्यते । तस्यैव देहोद्द्योतजननी स्निग्धा प्रभाऽभिधीयते । छायाफलस्य हिरण्यफलसमान्नफला प्रभा

प्रभूतमिति सूरिभिः। दक्षिणन्दक्षिणाङ्गं च हस्तिनः पुण्य-
दं मतम्। तथा वामं च वामाङ्गं हस्तिनीफलदं मतम्।
लक्षणं दक्षिणाङ्गोत्थं फलं भूमिभुजां मतम्। मध्यदन्तं
भवेयदास्य लक्षणं तन्महाफलम्। यदल्पप्रकाशस्य तद-
ल्पफलदं मतम्। मध्यमानफलं मध्यं लक्षणं तु समादिशेत्।
शुभाशुभेन मिश्रेण बहुत्वेनादिशेत् फलम्। कदाचित्
शुभदं चास्य गजानामप्यलक्षणम्। शुभकर्म्माणमाशाद्य
राजानमथ वा द्विजम्। यथा हि सर्व्वचरितं समुद्रं समु-
पेत्य हि। स्वरसेन वियुज्यन्ते भवन्ति लवणाम्भसः। एव-
माशाद्य भर्त्तारं बहुलक्षणलक्षितम्। भवन्ति बाधिता-
नीह दुर्लक्षणफलानि च"। इत्युपक्रम्य गजदेहस्थानवि-
भागनामभेदस्तत्रैव दर्शितः। यथा "विषाणयोर्यस्तिर्य्यक्स्था-
दायतश्चो यथोऽपि सः। किलिका च प्रदेशाच कुम्भो-
परि च बिम्बकः। अथ घण्टोपरिस्थोऽपि पुरणकरोऽपि
भवेत्तथा। तथा घण्टोपरिस्थे च किलिकोपरिभागके।
वाहित्थोपरि केशाश्च मस्तकं च तथा मतम्। स्यातां म-
स्तकपिण्डौ च मस्तकस्याथ बिन्दुकः। तथा बिन्दूपरि स्यातां
वितानौ बिन्दुपार्श्वतः। ततोऽन्तरवितानं च पृष्ठं तत्र वि-
निर्दिशेत्। बिन्दुवितानयोश्चान्तः पुरस्तात् पाकलौ किल।
प्रोक्ते मस्तकपिण्डाद्धि वितानबिन्दुपाकलः। निर्य्याणं च
वितानोर्द्ध्वं कर्णौ चापि तत्र कटौ। कटयोः स्रोतसी
चापि कटस्थायस्तयोरधः। पृष्ठतः कटिसन्धी च गण्डौ च
कटयोरधः। कटगण्डान्तसद्भागे चाटसन्धी च चाटके।
चाटासन्धुपरिष्टाञ्च कर्णसन्धिसमीपगे। अवग्रे गात्रग
ण्डाश्च कपोलौ च तदन्तरे। रोमकूर्चौ च पादौ च कपो-
लाधस्तथा मतौ। ततः सगदसन्धी च सगदान्तरमत्र च।
आसगदात् इन्द्रवंश प्रदेशः शिरसोमतः। अक्षिकूटावुप-
र्य्यस्यावभावुपरि वै तयोः। शुक्तेवाक्षोऽधरः स्यात्तु नेत्रस्रावौ
तयोरधः। अपाङ्गावक्षिबाह्ये च तत्सन्धी चाक्षिपृष्ठतः।
पक्ष्मणोर्मण्डले चाथ तत्सन्धी वर्त्ममण्डलौ। वर्त्ममण्डल-
सन्धौ च ततश्च श्वेतमण्डले। श्वेतमण्डलसन्धी च ततः
कृष्णे च मण्डले। तत्सन्धी च ततः कृष्णे सत्सन्धी
वर्त्ममण्डले। तयोरपि तथा सन्धी प्राग्भागे चक्षुषो-
रपि। कनीनिके समाम्नाते सन्धी तत्र तथानयोः।
दृष्टिविगतदेशानां समुद्देशो भवेदिह। किल विष्टौ च
कर्णौ च कर्णयोश्चूलिका ततः। तदधः कर्णपिप्पल्यौ
चक्षिके द्वे प्रदेशगे। कर्णमस्तकसन्धी च पश्चात् कर्णापव-
र्त्तयः। तदन्तश्च समस्यामावुद्यासौ परिकीर्त्तितौ। कर्ण-
चूलिकयोरग्रे पिङ्गलाख्यौ च भाषितौ। पुरस्तात् कर्णपि-
प्पल्याः कर्णसंवेशचर्म्मणी। कर्णान्तः कर्णनाड्यौ च सम्वे-
ता तस्य भागतः। तयोर्व्वीथिःकवन्धस्य सवाहुमध्यकर्णयोः।
कर्णसन्ध्योरधश्चाथ तथाथ सन्धिसन्धितौ। तदध कर्ण-
पाल्यौ च प्राक् कर्णोपरितश्चयो। नाडीपार्श्वगतौ चात्र
मध्यकर्णौ तयोरधः। अधःकर्णौ घनाख्यातौ बहिःकर्णा-
पवर्त्तयोः। पार्श्वकर्णौ बहिः कर्णौ कर्णयोश्च क्रमाद्
बहिः। अन्तरान्तरकर्णौ च पर्य्यन्तकर्णपाशयोः। अथ स्या-
च्छिति भागा स्युः कर्णयोः क्षरिणोऽपि च। ग्रीवाया
प्राग्भयोभागो ग्रीवा सन्धिस्ततस्तथा। ग्रीवापृष्ठं ततः
स्याच्च मध्ये तत्र कपाटिका। ग्रीवापृष्ठे तथाभस्माद्गल-
माङ्गर्दिपस्य च। अथ कण्ठस्तयोर्योर्द्ध मन्ये ते गलकण्ठ-
यो। धमन्यौ कण्ठपार्श्वे च तयोश्चावलिपिण्डिका।
गलस्य पार्श्वयोरूर्द्ध्वं दर्दुरौ चात्र निर्दिशेत्। शुष्के मन्यो-
परिस्यातामुपरिष्टात्तयोस्तथा। किकिकौ च तथा चोक्तौ
पश्चादुपरि चैतयोः। पार्ष्णिवातौ च संख्यातौ, पार्ष्णि-
घातान्तरे तथा। उत्सङ्गावुपरि स्यातां स्कन्धादूर्द्ध्वं तथा-
भयो। तन्मध्ये पणवयोर्द्ध्वमिति ग्रीवायचयह। (हस्ति-
पकेन पार्ष्णिभ्यां यौ देशौ हन्येते तौ पार्ष्णिघातौ) गात्र-
मात्रमायतं च भवेदासनमादितः। तत्पार्श्वयोः प्रतोकाश्यौ
तावंसौ च तयोरधः। तदधः प्रत्यगसौ च तथैवांसफले तथा।
तदधस्थास्ततोबाहू ततोबाहूत्तरं तथा। वर्म्मागतः गुह्ये तत्र
बाहुपृष्ठोद्भवे अपि। अपारे च तदूर्द्ध्वं च तयोस्तन्नाविकौ
तथा। पार्श्वावपाङ्गादूर्द्ध्वं च तयोरायामपृष्ठतः। पार्श्वन्ताग्र-
पुरस्ताच्च भुजयोरुदितौ यवौ। यवभागोपरि तथा पुरस्तात्
फलकोच्छ्रितौ। पिण्डिकाथ च वेमाख्यौ विशेषौ यव-
योरधः। उत्सङ्गौ च विशेषाथ प्रष्ठौ चापि तयोरधः।
तत्सन्धी च ततः पश्चसन्धानौ तदधोगतौ। तदध
पाणिपादौ वै कूर्चौ चानु तयोरधः। तदधोमध्यकूर्च्चाश्च
ततो नखशिखा दश। पुरःपुरोनखौ नाम्ना सनखौ चैव
विस्तृतौ। तत्पश्चात्तु नखश्रेणी विशेषा पार्श्वतोगताः।
अन्तःपार्श्वं बहिः पार्श्वे स्यातां पार्श्वमखेषु च। कयाश्च
राजवशात्र पादनाडाविकास्तथा। तलसन्धौ ततः स्यातां
तले च तदनन्तरम्। तलप्रदेशपुरतस्तत्परा नखवप्रतः।
तलकर्णौ ततः पश्चात् तलपक्ष्मौ ततः परौ। तलयोरन्तरं
चैव हृदये च करोरके। किलिनोराजयसेति तलसङ्काविका
अपि। पक्षकौ ततः स्यातामन्तर्बाहू ततोऽन्तरे।
बहिर्बाहू बहिर्योर्द्धं गात्रं सर्व्वं ततोऽपि च। कक्षौ गात्र

प्रदो मतः । द्विपान्त्यकरा ह्रस्वा हीनपार्श्वाश्च दन्तिदा । पुष्कर हीनमव्यक्तं विद्यादूर्द्ध्वं विनाशनम् । युक्तमाने नितासे च निर्मलश्रोतसो शुभे । सुसमाहिते च स्यातासत् मलापसमद्युती । उन्नतौ क्रमवृद्धौ च स्निग्धावभ्युदितौ समम् । दक्षिणौ च समानौ च प्रकारप्रगुणच्छवी । ततः प्रदक्षिणावर्त्तौ युदात्तौ दन्तिना रदौ । करस्य गात्रतो चापि श्वेतास्थिसदृशद्युती । विषाणे च तथा स्यातां श्रीमाये वारणस्य च । यो दक्षिणैकदन्तस्य श्रिया तु रहितो गजः । वामैकदन्तो दन्ती च दुःखदः स्वामिनोमतः । दृष्टा माघ चतुर्थी च द्वितीया यस्य न द्विजौ । स्थूलावनायतौ स्यातां स मूढो नाम दुर्गजः । ऊर्द्ध्वस्थानवक्रौ च प्रतिमानगतौ न वा । युयुत्सामिव कुर्व्वाणा यस्य बाला सदुर्द्दिनः । दन्तौ हलोपमौ यस्य दीर्घौ पार्श्वेन चोन्नतौ । दक्षिणेन विषाणेन वामदन्तदरन्तथा । कारयेद्यस्तु मातङ्गो वामदारी स वै भवेत् । तथा दक्षिणदारी च दक्षिणदरण तथा । वामेन कारयेन्नोष्टौ यावत् स्वामिनमेव स । तथा हलविषाणेन दन्तेनैकेन दन्तिन । स्थूलेनाखर्वदीर्घेण दुःस्थिताख्योऽपि वर्ज्जितः । अन्तर्नताभ्यां सद्दन्त कुदन्तोऽपि नतावच । कूर्मे वामोन्नतिश्चापि रदाभ्यां द्विरदः क्वचित् । दन्तदुर्वासवाख्यो हि द्विरदोऽमध्यलक्षण । बहिर्नतौ हस्तलम्बौ रदौ यस्य स दुर्गज । कृष्णायतौ रदौ मूले विनिहन्ति मदागतिम् । श्यानलाकाररदनापान्यसदृशनास्तथा । दुर्जाता विषमा वक्रफलकाश्च लयास्तथा । अतिदीर्घातिह्रस्वाश्च वदनेनावशासिनः । निरक्षिमितमेढस्य पञ्चरालिमितोरदः । यश्चिदन्तोऽनुकथितो राजपुत्र मनीषिभिः । प्रपूर्णं प्रतिमानस्य ताराभ वलिवर्जितम् । सूक्ष्मविन्दुसमानञ्च मृदुत्वक्कायरोमशम् । स्वायतं पृथुबाहित्यं सर्व्वगात्रसमाहितम् । रक्तौष्ठतालुदशनविभ्रमसुलक्षणस्थितिम् । त राजा वर्जयेत् युद्धे शुभलक्षणवर्जितम् । बालार्कसदृशे यस्य हरिवर्णविलोचने । मन शिखाप्रभे वापि हर्यक्षोऽसौ शुभिच्छदः । पद्मापाङ्गे च विपुले सुप्रसन्ने सितासिते । यस्याक्षिणी सवाक्षिभ्यां विभक्तारव्यौ हितमद । यस्य तुङ्गे च नयने मृदुनो दृष्टिमण्डले । स्निग्धनिर्मलवर्णे च तारकाश्च स सम्मत । यस्याक्षजं समाभासे हंसाकारे विलोचने । पारावताक्षं नाग तं प्रशंसन्ति प्रियप्रदम् । सुस्ने माल्यायते नेत्रे प्रसन्ने सूक्ष्मदर्शने । यस्य स्यातां स वाध्यक्षो वारणे शुभलक्षण । ईषद्वैरिकसङ्काशे दृश्येते यस्य चाक्षिणी । ध्वाङ्क्षाक्षः स विनिर्दिष्टो दुर्भिक्षारिभयावहः । कृष्णापाङ्गे शुभे नेत्रे कांस्यसदृशप्रभे । यस्य स्यातां भवेन्नायं न्यूकराक्ष स गर्हितः । समन्ततो नोपचिते सस्पष्टे च मनागुद्दर्शौ । पीडाक्षिकूटौ यस्यापि विष्वगक्ष स दुर्भगः । वैषम्याद्विमप्रेक्षी नेष्टो ह्वरितया दृशा । तथा निम्नमया दृष्ट्या वर्ज्जितः काचपिङ्गलः । तन्द्रीयस्यानुदृश्येत विरूपं विषम तथा । तथैव तिर्य्यग्दृक् ह्रस्वो तिर्य्यक्प्रेक्षी स दूषण । अध प्रेक्षी च यो यः स्यादूर्द्ध्वगामिविलोचनः । सदृशो बभ्रुमार्जारमर्कत्यमतचक्षुषाम् । स स्यादनिष्टदृक् ह्रस्वो तिर्य्यक्प्रेक्षी च दूषण । अध प्रेक्षी च सप्रेक्षो मृदूर्द्ध्वगामिदर्शनः । दृष्टि स्निग्धा प्रफुल्ला च सुस्थितामलतारका । ऊर्द्ध्वं यच्च प्रसन्नस्य वारणस्य विलोक्यते । उद्यतारको नाम्ना वाम्ना पार्श्वविसर्पिणी । विस्तब्धाचलपक्ष्मा तु कुपिताऽनेकपस्य दृक् । सर्वाङ्गलक्षणेभ्योऽपि चक्षुर्लक्षणमुत्तमम् । इत्येवं लक्षणग्रामा पूर्वैषामनुशासनम् । प्रशस्तनेत्रे द्विरदे न्यपोभद्राणि पश्यति” कलकादिलक्षणन्तु प्रायेण बार्हस्पत्योक्तलक्षणसममित्यतस्तन्नोक्तं यत्र विशेषस्तदुच्यते । “एककूपप्रजातानि स्निग्धानि च मृदूनि च । रोमाणीष्टानि रोमाणाञ्च पेचको दक्षिणाङ्गजः । लाङ्गूलस्यैव रोमाणि दृश्यन्ते यस्य दन्तिनः । संहतानि विचित्राणि स पूज्यो वारणोत्तमः ।”

करिणो वामनत्वादौ कारणान्तरं तत्फलञ्चोक्तं तत्रैव “वाय्वाकाशगुणाधिक्यपृथिवीगुणवर्ज्जनात् । जायते किल मातङ्ग कुब्जो वा वामनोऽपि च । यतो भूतगुणोऽन्योन्यमधितिष्ठति मानव । तैर्गुणैर्जायते सर्वो दन्तीति मुनयो विदु । हीनाङ्गो हानिकारी स्यादधिकाङ्गोऽधिक हरेत् । राज्ञाहितौ भवेतान्तु खञ्जकुब्जाविति स्थिति । आयामानाह प्रयुक्तो ह्रस्वाकारो हि वामनः । मध्योऽध्यन्तरनिर्याणो महास्थिसगदोऽपि च । अस्थिश्वेतौ च कृष्णौ च दन्तौ यस्याश्रितौ करम् । स भक्षयित्वा राजानं हत्वा वाथ पलायते । ह्रस्वमेदाङ्गुलिकर श्रोत्राक्षिश्वेतरोमयुक् । कपिकौशिककाकाहिनकुलप्रख्यलोचन । कालपिङ्गलनेत्रश्च तन्मामनहृतुस्तथा । वल्या समाननिर्याणः प्रत्यग्पृथुमेचकः । मण्डूकाभरुचित्वक् च साञ्जानलसमोऽपि च । परिमण्डलकर्णश्च स्पष्टध्वाङ्क्ष विषध्वजः । प्रौढोन्नताक्षिकूटाश्च रुक्षिताशाङ्घ्रिमेहन । व्यालहत्यवगन्तव्यो निर्मदो दन्तिदूषण । सवलौ यस्य सदानौ मौक्षौ चापि कषायितौ । चिबुके चायतस्थूले मणेश्च तनुराविला । अधोवक्त्राणि रोमाणि

सादसद्दये छत्रचामरवीथिभिः । सोमसूर्य्यसमाभासैः शिबिकायानमूर्त्तिभिः । दृष्टे शुभाय नृपतेर्निन्द्यमपि हि समाकृति । श्वक्रव्यादनिभाकारं रणापसरकारणम् । धूमाभं पुष्पमिच्छन्ति नृत्यवेऽग्निभयाय च । तथा पुष्पं तथा नेष्टं द्विपद्रोगविवर्द्धनम्” । इति पुष्पम्

‘भूखाग्न्यम्बुमरुज्जाता भवेच्छाया विषाणिनाम् । शस्ता भूजलयङ्कुत्स्या न शस्ता खानिलोद्भवा । छायायाः सम्भवः पूर्वं, परतः पतति प्रभा । छायाया सम्भवं पूर्वं प्रभा तत्परमश्नुते । वर्णमालम्बिता च्छाया प्रभा वर्णस्य नाश्रय । लक्षणानि तु नागानां पापानि च शुभानि च । छायावशात् फलन्त्येव छाया तेनातिलक्षणम् । यस्य स्यात् लक्षणं भद्रं छाया भद्रा भवेन्न तु । न चासौ शुभदो हस्ती छायोपहतलक्षणः । पापलक्षणयुक्तोऽपि शुभच्छायायुतो गजः । फलं लक्षणजं हित्वा छायाफलमवाप्नुयात् । नीराजनेऽभिषेके च ध्वजोच्छ्राये रणोदये । तेषु तेषु च कार्य्येषु भवेच्छाया च शोभना । वक्षसि प्रतिमानेऽंसे कुम्भे कर्णे कटेषु च । निर्य्याणे मस्तकस्थाने वेदयोश्च कपोलयोः । पिण्डिकाजघनाभोगे तेषु तेषु पदेषु च । प्रदेशेषु प्रधानेषु छायाया वीक्षणं भवेत् । प्रशस्ता पार्थिवी छाया वह्निजा जलजापि च । नेष्यते व्योमजा छाया मातरिश्वभवापि च । पार्थिवी स्निग्धगम्भीरा सर्ववर्णैर्विभाव्यते । छाया श्यामा च रक्ता च स्निग्धा जाम्बूनदाग्निजा । छाया नीलाम्बुदाभासा स्निग्धा सलिलसम्भवा । अव्यक्तरूपा तस्य छाया गगनजा मता । धूम्रा रूक्षा च वायव्या भस्माभा निष्प्रभा तथा । एताश्छायाः परीक्ष्याः सुमतङ्गे राजपूजिते । नीलाम्बुजेन्द्रनीलाभा नीलाञ्जननिभाऽपि च । काप्युक्ता पार्थिवी च्छाया सुभिक्षक्षेमकारिणी । बालार्कपद्माकञ्जल्कशक्रगोपकसन्निभा । ज्वालाभा तप्तहेमाभा वह्निजा विजयप्रदा । छायाम्मयी पयःशङ्खकुन्दरूप्यनिभद्युतिः । सौम्याख्यया मतीता च भर्त्तुरर्थप्रदा सदा । जलबुद्बुदसङ्काशा धूम्रद्युतिरतिस्थिरा । निन्द्या च व्योमजा छाया नित्योद्वेगकरी मता । सर्ववर्णैरुपेताऽपि निष्प्रभा भस्मसन्निभा । विच्छिन्ना विकृता च्छाया वायवी सा भयावहा । वैरिञ्ची वैष्णवी शैवी छाया माघवनी तथा । कौमारी राक्षसी सार्पी गान्धर्वी च तथाऽऽसुरी । पैशाची चेति याश्छाया च्छायाद्या क्वचित् शुभा । भूतोत्थलक्षणे तासां भेदोऽनेन तु कीर्त्तितः । तेजोऽतिसक्ता भद्रस्य पाटला भवति प्रभा । छाया रक्तकला रक्तपद्मपर्णनिभाऽपि या । कृष्णा च मन्दकरिणश्छाया तु मृगहस्तिनः । मलिनाम्बरधूम्रेव शीर्णायुधदर्शना” इति छाया ।

“हस्तिनां विविधा ध्वाना रन्ध्रेभ्यः करतोऽपि च । भवन्ति वायुवशतो गात्राणां वेष्टनेन च । प्रयाणे भूमिपिक्तेषु ध्वजे जातिकुलेषु च । नागेषु बृंहितं ग्राह्यं मत्तस्कन्धे न जातिषु । हृषितोऽथ स्तनिद्रान्तस्तृषितो बृंहति क्वचित् । यदि दन्ती शुभे देशे समये च सुखप्रदः । दर्शयेद्बृंहितं भद्रं तत्फलं शोभनमादिशेत् । सरोवरे तथाऽऽरामे गोष्ठे विबुधवेश्मनि । निकुञ्जे हृद्यदेशे हि विज्ञेयः शुभदो ध्वनिः । यात्रायामभिषेके च उत्सवादिसमये तथा । समये चैव पुण्ये च बृंहितं स्याच्छुभप्रदम् । श्मशानादिकोष्ठे वल्मीकदुष्टस्थाने भयप्रदः । क्षुधार्त्ते च प्रधूमे च प्रतिश्यायदिनेषु च । अतिशीतेऽतिघर्मे च प्रभाते वायुभैरवे । भूतले न्यस्तहस्तो हि पर्य्यश्रुनयनो गजः । कूजन् निर्स्पन्दनं कुर्य्यात् यदि वा नश्यतीश्वरः । करेण बृंहितो नागो दुश्चित्तामुपरिस्रुतः । आदिशेन्मन्त्रिणो नाशमथवा पृथ्वीपतेः । व्यायतश्रमहस्तश्च वातावेगतचक्षुषः । जघने वामतो वालं तथा निक्षिपतोऽसकृत् । (वाल वालधिः) । निषीदतो लङ्घयतो हृष्टरोम्णो विमूर्च्छितः । ग्रामे निक्षिप्य गण्डूषं बृंहितं स्यादनर्थकृत् । खेभ्यः स्रवति नागानां धमता यदि शोणितम् । (खेभ्य छिद्रेभ्य )तथा सन्ध्यान्तदेशे च मारणं क्षयमादिशेत् । यद्याग्नेयीमुखीभूता प्राच्यां वाऽर्कोदयं प्रति । दन्ती तीव्रस्वरं कुर्य्यात्तदा स्यात् पावकाद्भयम् । करेण यदि मातङ्गो दंष्ट्रमाणं स्तनं स्पृशेत् । आलाने लम्बमानस्तु संयुतिं क्षयमादिशेत् । (संयुति युद्ध) । आलाने लम्बमानस्तु शीत्कुर्वन् कुरुते ध्वनिम् । गात्रं प्रक्षालयन्नागस्ततः प्रस्थानमादिशेत् । क्षिप्त्वा करं विषाणस्य विषमं कूजते यदि । निरीक्षमाणो गगनं हता शत्रुस्तदा हरेत् । यदाभ्युन्नतपक्षेण स्तनस्थानञ्च जिघ्रतः । तथा कुञ्चितहस्तेन हस्तं गात्रं च जिघ्रत । कुर्वतो दक्षिणं हस्तं मर्मणि क्षिपतोऽपि यत् । बृंहितं स्यात्तदिष्टं तथान्योन्यकरस्पृश । भक्षीत्वा शुभवस्तूनि कुसुमादीनि चेद्द्विप । कुर्य्याच्छब्दं शुभं तेन फलं शुभतरं भवेत् । उच्चैरभिमुखः शान्तो यदा नदति वारणः । घर्घरमध्यमानेन सदा तत्र जयो ध्रुवः । सुखेन समृङ्करवान् कर्णाभ्यां दुन्दुभिध्वनिम् । करेण मुरजारावान् कुर्वन् कल्याणकारकः । कच्छपादिसमारावा

शिष्यक्रोधोऽग्निमीढः स्यादमिष्टोऽशिष्यरोषणः । यः क्रुध्यति चिरेणैव स्वल्पक्रोधो भवेदपि । वाग्दण्डमात्रमप्येव प्रतिपिद्धो न मुञ्चति । अनुशास्यति रोषाञ्च स शिष्यक्रोधसंज्ञितः । इष्यते सर्व्वकार्य्येषु शुभजातिर्मतङ्गजः । यः क्रुध्यत्यचिरेणैव स्वल्पक्रोधो भवेदपि । प्रतिपिद्धश्च वाग्दण्डतीक्ष्णमज्जनकाङ्कुशैः । मुञ्चत्येव चिरेणापि रोषाद्विरनिमेति च । अशिष्यक्रोधसञ्ज्ञोऽसौ विज्ञेयो वारणाधमः" इति कोषः । विस्तरस्तु पालकाव्यादौ दृश्यः ।

**इभकणा** स्त्री॰ इभोपपदा कणा शाक॰त॰ । गजपिप्पल्याम् ।

**इभकेशर** पु॰ इभमद इव केशरोऽस्य । नागकेशरे "श्वङ्गाटकाम्बुगुभ्रभकेशरागुरुचन्दनैः" सुश्रु॰ ।

**इभगन्धा** स्त्री इभस्य गन्ध एकदेशोदन्त इव पुष्पमस्याः । नागदन्त्याम् सा च स्थावरविषभेदः यथा सुश्रुते "मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सारएव च । निर्य्यासोधातवश्चैव कन्दश्च दशमः स्मृतः" इत्युपक्रम्य "कुमुद्वतीरेणुकाकरम्भमहाकरम्भकर्कोटकरेणुकखद्योतकचर्म्मरीभगन्धा सर्पघातिनन्दनसारपाकादीनि द्वादश फलविषाणि" इति विभज्य "शुष्कशोफः फलविषैर्दाहोऽन्नद्वेष एव चेति" तद्विकारो दर्शितः ।

**इभदन्ता** स्त्री इभस्य दन्त इव शुभ्रं पुष्पमस्याः । गजदन्तशुभ्रपुष्पवत्यां १नागदन्त्याम्, सा च स्थावरफलविषा ।

**इभनिमीलिका** स्त्री इभं हस्तिनमपि निमीलयति सेवनात् निद्रापयति । १भङ्गायाम् । इभस्येव निमीलिका । २वैदग्ध्याम्

**इभपालक** पु॰ इभं पालयति । (माहुत) हस्तिपके ।

**इभपोटा** स्त्री पोटा पुंलक्षणा इभी परनिपातः पुंवद्भावश्च । पुंगजलक्षणयुक्तायां हस्तिन्याम् ।

**इभभर** पु॰६त॰ । गजसमूहे [ सिंहे ।

**इभमाचल** पु॰ इभमाचलयति आ+चल-णिच्-वा॰ख ।

**इभया** स्त्री इभैर्यायते भक्ष्यतया प्राप्यते या-कर्म्मणि घञर्थे क ३त॰ । स्वर्णक्षीरीवृक्षे रत्नमाला इभयेति वा पाठः ।

**इभयुवति** स्त्री युवतिरिभी पूर्व्वनि॰ पुंवद्भावश्च । युवत्यां हस्तिन्याम् वा ङीप् ।

**इभाख्य** पु॰ इभस्याख्याख्या यस्य । नागकेशरे त्रिका॰ ।

**इभानन** पु॰ इभस्याननमिवाननं यस्य । गजानने गणेशे तस्य यथा तदाननत्वं तथोक्तं "स्वयं गोलोकनाथश्च पुण्यकस्य प्रभावतः । पार्व्वतीगर्भजातश्च तव पुत्रो भविष्यति । स्वयं देवगणानाञ्च यस्मादीशः कृपानिधिः । गणेश इति विख्यातो भविष्यति जगत्त्रये । "शनिदृष्ट्या शिरश्छेदात् गजवक्त्रेण योजितः । गजाननः शिशुस्तेन नियतिः केन बाध्यते" ब्रह्मवै॰ पु॰ ई॰ख॰ । शनिदृष्ट्या तच्छिरश्छेदकथा तत्रैव १२अ॰ । "पार्व्वतीवचनं श्रुत्वा सोऽनुमेने हृदा स्वयम् । पश्यामि किं न पश्यामि पार्व्वतीसुतमित्यहो । यदि बालो मया दृष्टस्तस्य विघ्नो भवेद् ध्रुवम् । अन्यथा मे प्रलापस्तनृपरत स्वात्मरणम् । इत्यालोच्य च धर्म्मज्ञो धर्म्मं कृत्वा स्वसाक्षिणम् । बाल द्रष्टुं मनश्चक्रे न बालमातरं शनिः । विषण्णमानसः पूर्वं शुष्ककण्ठोष्ठतालुकः । सव्यलोचनकोणेन ददर्श च शिशोर्मुखम् । शनिश्च दृष्टिमात्रेण चिच्छेद मस्तकं मुने ! । चक्षुर्निवारयामास तस्थौ नम्रानन शनिः" एवं शिरश्छेदमुक्त्वा । "तान् सर्व्वान् मूर्च्छितान् दृष्ट्वा चारुह्य गरुडं हरिः । जगाम पुष्पभद्रां स उत्तरस्यां दिशि स्थिताम् । पुष्पभद्रानदीतीरे ददर्श काननस्थितम् । गजेन्द्रं निद्रितं तत्र शयानं हस्तिनीयुतम् । दिश्युत्तरस्यां शिरसं मूर्च्छितं सुरतश्रमात् । परितः शावकान् कृत्वा परमानन्दमानसम् । शीघ्रं सुदर्शनेनैव चिच्छेद तच्छिरो मुदा । स्थापयामास गरुडे रुचिराक्तं मनोहरम्" । गजशिरश्छेदमुक्त्वा तत्पत्न्या स्तुतेन हरिणा तस्य कल्पान्तजीवनं वरोदत्त इत्युपवर्ण्य । "आगत्य बालकस्थानं बालं कृत्वाऽथ वक्षसि । रुचिरं तच्छिरः कृत्वा योजयामास बालके । ब्रह्मस्वरूपी भगवान् ब्रह्मज्ञानेन लीलया । जीवनं योजयामास हुङ्कारोच्चारणेन च । पार्व्वतीं बोधयित्वा तु दत्त्वा क्रोडे च तं शिशुम् । बोधयामास तां नाथ आध्यात्मिकविबोधनैः" "सेनाचरीभवदिभाननदानवारिवासेन यस्य जनितासुरभीरणश्री" नैष॰ । इभवक्त्रमुखगजाननादयोऽप्यत्र । "तं नमामि गजाननम्" माघः ।

**इभारि** पु॰ ६त॰ । सिंहे इभामित्रादयोऽप्यत्र । [शब्दच॰ ।

**इभोषणा** स्त्री इभोपपदा उषणा शाक॰त॰ । गजपिप्पल्यां

**इभ्य** त्रि॰ इभं गजमर्हति दण्डा॰ यत् । १प्रचुरगजादिधनाढ्ये २नृपे ३हस्तिपके च पु॰ । "उषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास" छा॰उ॰ तस्य भाष्ये इभो हस्ती तमर्हतीतीभ्य ईश्वरो हस्त्यारोहोवेति । "जामिसिन्धूना भ्रातेव स्वस्रामिभ्यान्न राजा वनान्यत्ति" ऋ॰१, ६५,४, स्वार्थे कन् । इभ्यकस्तत्रैव स्त्रियान्तु टापि वा अत इत्त्वम् इभ्यका-इभ्यिका । इभाढ्यायां स्त्रियाम् ।

**इभ्यतिल्विल** त्रि॰ इभ्यतिल्विल इत्यृत्व । गजादिभिः प्रचुरे आढ्ये । "यदि प्रतीपीयादिभ्यतिल्विल इव धाम्यति-

ल्पिको भविष्यतीति विद्यात्” शत० ब्रा० ४,५,८,११,

**इभ्या** स्त्री इभमर्हति सेव्यत्वेन दण्डा० यत् । १हस्तिन्यां २यज्ञकौडम्बे च मेदि०।

**इमथा** अव्य० इदम्—इवार्थे—थाल् “प्रत्नपूर्वविश्वेमात् थाल् छन्दसि” पा० सू० निर्देशात् नि० इमादेशः । इदानीन्तनतुल्ये । “त प्रत्नथा पूर्वथा विश्वथेमथा इव ज्येष्ठतातिं बर्हिषदं स्वर्विदम्” ऋ० ५,४४,१ । “प्रत्नथा पुरातनयजमाना इव पूर्वथास्मदीया पूर्वे यथा । विश्वथा विश्वे सर्वे प्राणिनो यथा । इमथा इदानीं वर्त्तमाना यजमाना इव” भा० “इदस्तक्”यजु०७अ०११च पठिता ।

**इयक्षु** त्रि० यज+सन उ वेदे नि सम्प्रसारणम् । यष्टुमिच्छौ “भव्यन्निव माया असि त्वमग्न इयक्षवे” ऋ०१०,४,१, वेदे प्रायेण सर्वत्र वि० सम्प्रसा०।“तुभ्यं वां सूरिर्वपा- वियक्षन्”१,१५२,२, देवाना इयक्षन्नो यजमान इयक्षति” ऋ०८, ११,११५,

**इयत्** त्रि० इदं परिमाणमस्य इदम्—वतुप् । एतावदर्थे “नीतं यदि नवनीत कियदिति यशोदया पृष्टः। इयदिति गुरुजनसविधे विघृतघनितम्बपयोधरः पायात्” उद्भट । “इयान् शाव किल मधुर्यावती यथा”ऐत० “इयन्ति वर्षाणि तया सहोग्रम्”रघु “इष्टि निक्षिपतीति विश्वमियता मन्यामहे तु स्थितम्”सा०द०। अत्र साधनप्रकारः इदम्+परिमाणार्थे वतुप् तस्य घः इदम इश् “यस्येति” पा०प्रक्रीयारत्नोमे । त्वश्मात्रस्थिति । अतएवात्र वैयाकरणा औमनियदात्र पठन्ति । “उदितवति परस्मिन् प्रत्यये शास्त्रयोनौ गतवति विलयञ्च प्राकृतेऽपि प्रपञ्चे । सपदि पदमुदीत केवल प्रत्ययोत्थ यदियदिति मिमीते कोऽद्य पवित्रितोऽपि” । स्त्रियां ङीप् ।

**इयत्तका** स्त्री कुत्सिता इयत्ता कुत्सितार्थे कन् ह्रस्व' । कुत्सितेयत्तायाम् । तत अर्श आ० अच्यर्थे अच् । कुत्सितेयत्तायुते अल्पप्रमाणे“इयत्तकं कुषुम्भकस्तक भिनद्मि अश्मना” ऋ० १,१९१,१५,

**इयत्ता** स्त्री इयतो भाव तल् । १सीमायां, २परिमाणे, ३संख्यायाञ्च । “न गुणानामियत्तया” “यशः परिच्छेत्तुमियत्तयालम्”“ ईं कृतया रूपमियत्तया वा”इति च रघु ।

**इयस्** त्रि० इ—कर्त्तरि असुन् किञ्च । १गन्तरि भावे असुन् । २गतौ ‘तेषां इयसेवास किमिह कर्त्तव्यम्” शत०ब्रा०२, २,३,२,

**इर**—ईर्षायां कण्ड्वा०यक् उभ० । इर्यति इर्यते ।

**इरज्**—ईर्षायां कण्ड्वादि०यक् प०। इरज्यति । “इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे राय”ऋ०१०,१४०,४ । “इरज्यन्त यस्य सुदभोविमाचि”ऋ०७,२१,२, यदेयामग्ने जगतामिरज्यसि’ ऋ०१०,७५,२ । “युग विप्रस्य मन्मनामिरज्यथ”ऋ०१,१५१,६ ।

**इरण** त्रि० ईरिण+पृ० । ऊषरभूमौ अमरटीका रमा० ।

**इरम्मद** पु०इरया जलेन अन्नेन वा माद्यति मदते इरा—मद्—खश् नि० मुम् ह्रस्व च । १वज्राग्नौ २वाडवाग्नौ च । “इरम्मदं वृहदुक्थं यदत्र’ यजु०११,७४ । “इरया अन्नेन माद्यति उग्र पश्येत्यादि”पा०नि०“वेदृदी०।“इष्टते पथामन्दे इत्येतदिरम्मदमितीरया अन्नेन मत्त” शत०ब्रा०६,६,२,४ ।

**इरस्** इरज्वत् कण्ड्वा०इरस्यति “मातपूषवाश्च इरस्यः” ऋ०७,४०,६।“यथा इरस्यसीदम्”ऋ०१०,८६,२ ।

**इरा** स्त्री इण्-रक् इ काम राति रा—क वा । १भूमौ, २वाचि, ३सुरायाम्, ४जले, ५अन्ने च । “इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवी रेतसावति” ऋ० ५,८३, १।“इरामदः ओदनं पिन्वमाना”शत०ब्रा०६,६,२२। ६कश्यपस्य पत्नीभेदे । “धर्मपत्न्यः समाख्याता कश्यपस्य वदाम्यहम् । अदितिर्दितिर्दनुःकाला अनायुः सिंहिका मुनि. । कद्रू प्राधा इरा क्रोधा विनता सुरभिःखसा” इत्युपक्रम्य “इरा इयलतावल्लीतृणजातीश्च सर्वशः” । असूतेति शेषः । गरुडपु० ।

**इराचीर** पु० इरा जलं चीरमिवास्य । चीरसमुद्रे ।

**इराचर** न० इरायां जले भूमौ वा चरति चर—ट इत० । १वर्षोपले त्रिका०२भूचरे ३जलचरे च त्रि०स्त्रियां ङीप् ।

**इराज** पु० इरा इव अजति विक्षिपति अज—अच् न वी भाव । कन्दर्पे हारा० । [त्रिका० ।

**इराम्बर** न० इरा जलमम्बरमिव यस्य । वर्षोपले करकायाम् ।

**इरावत्** इरा+भूम्नि मतुप् मस्य व । समुद्रे तत्र भव अण् ऐरावतः । अर्जुनेन नागकन्यायामुत्पादिते २वीरभेदे तदुत्पत्तिकथा” भा०भी० ९१अ० ।

“अर्जुनस्यात्मजः श्रीमानिरावान्नाम वीर्यवान् । सुतायां नागराजस्य जातः पार्थेन धीमता । ऐरावतेन सा दत्ता ह्यनपत्या महात्मना । पत्यौ हते सुपर्णेन कृपणा दीनचेतसा । भार्यार्थं तां च जग्राह पार्थः कामवशानुगाम् । एवमेष समुत्पन्नः परक्षेत्रेऽर्जुनात्मजः । स नागलोके संवृद्धो मात्रा च परिरक्षितः । पितृव्येण

परित्यक्तः पार्थद्वेषाद्दुरात्मना । रूपवान् बलसम्पन्नो गुणवान् सत्यविक्रमः । इन्द्रलोकं जगामाशु श्रुत्वा तत्रार्जुनं गतम् । सोऽभिगम्य महाबाहुः पितरं सत्यविक्रमः । अभ्यवादयदव्यग्रो विनयेन कृताञ्जलिः । न्यवेदयत चात्मानमर्जुनस्य महात्मनः । इरावानस्मि भद्रं ते पुत्त्रश्चाहं तव प्रभो । । मातुः समागमो यश्च तत्सर्वं प्रत्यवेदयत् । तच्च सर्वं यथावृत्तमनुसस्मार पाण्डवः । परिष्वज्य सुतञ्चापि सोऽऽत्मनः सदृशं गुणैः । प्रीतिमानभवत् पार्थो देवराजनिवेशने । सोऽर्जुनेन समादिष्टो देवलोके तदा नृप । । प्रीतिपूर्वं महाबाहुः स्वकार्य्यं प्रति भारत । युद्धकाले त्वयास्माकं सहा देयमिति प्रभो । बाढमित्येवमुक्त्वा च युद्धकाल इहागतः" ।

"इरावन्तं तु निहतं दृष्ट्वा पार्था महारथाः" भा०भो० ९२अ० । "पुत्रं विनिहतं श्रुत्वा इरावन्तं धनञ्जय ।" ९५ अ० । २नदीभेदे स्त्री ङीप् । भा० स०प०९अ० वरुणसभावर्णने । "इरावती वितस्ता च सिन्धुर्देवनदी तथा" "इरावत्या हतो भोजः कार्त्तवीर्य्यसमो युधि" भा० व० १२अ० "शतद्रुकाञ्च तीर्त्वा तथा रम्यामिरावतीम्" । भा०क०४४ अ० । "इरावत्यां महाभोजावग्निसूर्य्यसमौ युधि" हरिवं० १९१ । "इरावती धेनुमती हि भूत" ऋ०७,९९,२ । ४अन्नादियुक्ते त्रि० 'यावष्ट वर्त्तिरश्विनाविरावत्" ऋ०७,४०, ५ । "इरावत् हविरन्नादियुक्तम्" भा० । "सूनृतावन्त सुभगा इरावन्तोहसामा" अथ० ७,६०,६ ।

इरावती स्त्री इरा भूमिम् अवति अव–भा०अतृ ङीप् । वटपत्रीवृक्षे, सा हि शाखाभेदनेनापि भूमिमाच्छादनात् पालयतीति तस्यास्तथात्वम् ।

इरिकावन न० इरैव कन् अत इत्त्वम् इरिकाप्रधानं वनम् । क्षुभ्ना० "इरिकादीनि वनोत्तरपदानि संज्ञायाम्" पा० ग०सू० पाठात् न णत्वम् । जलप्रधाने वनभेदे । इरिकादीनि च "इरिका तिमिर समीर कुबेर हरि कर्म्मार" ।

इरिण न० ऋ–इनन् किच्च । १ऊषरभूमौ, २निराश्रये, ३शून्ये च । "यथा गौरो अपाकृतं तृष्यन्नेत्यवेरिणम्" ऋ०८,४, ३ । "यथेरिणे वीजमुप्त्वा न वप्ता लभते फलम्" मनुः ।

इरिन् त्रि० इर–कण्ड्वा० णिनि यलोपः । १प्रेरके । "न येषामिरी सधस्थ ईष्ट आ" ऋ०५,८७,२ । २ईर्ष्यके च ।

इरिमेद पु० इरौ रोगादौ मेदः, मेदोनिर्य्यासो यस्य । विट्खदिरे । "इरिमेदः कषायोष्णो मुखदन्तगदास्रजित् । हन्ति कण्डूं विषश्लेष्मकृमिकुष्ठविषव्रणान्" भावप्र० ।

इरिविल्लिका स्त्री इरिविल्लैव कन् । "पिड़काभिः समाकीर्णा दृत्तावत्परुजाज्वराम् । सर्वात्मिका सर्वलिङ्गां जानीयादिरिविल्लिकामिति" निदानोक्ते मस्तकस्थे व्रणभेदे । कनभावे इरिविल्लाप्यत्र । "इरिविल्ला गन्धनाम्नी कक्षा विस्फोटकास्तथा । पित्तजस्य विसर्पस्य क्रियया साधयेद्भिषक्" सुश्रु० ।

इरेश पु० ६त० । १वरुणे, २वागीशे, ३भूमिपतौ, ४विष्णौ च

इर्गल न०स्त्री अर्गल+पृ० । द्वाररोधके काष्ठभेदे तस्मै हितम् अपूपादि० यत् । इर्गल्य छ इर्गलीय । तत्साधने द्रव्ये ।

इर्य्य त्रि० इर–कण्ड्वा० अच् वेदे नि० न यलोपदीर्घौ । प्रेरके । "यूयं राजानमिर्य्यं जनाय विभ्वतष्टम्" ऋ०५,५८,४ ।

इर्वारु स्त्री उर्व्व–आरु पृषो० । ( काकुड़ ) १कर्कट्याम् । २हिंसके त्रि० । "सिंहव्याघ्रवृकतरक्षुऋक्षद्वीपिमार्ज्जारशृगालमृगेर्व्वारुकाभ्यन्तरयो गुहाशयाः" सुश्रुत । मृगेर्वारुकः मृगहिंसकः । आलु । इर्व्वालुरप्युक्तार्थे ।

इर्वारु(लु)शुक्तिका स्त्री इर्वारु (लु) शुक्तिकेव स्वयंस्फोटनात् । (फुटी) ( स्वयं भिन्नविपक्वकर्कट्याम् ) ।

इल शयने अक० गतौ क्षेपे च सक० तुदा०पर० सेट् । इलति । ऐलीत् इयेल ईलतुः इलितः इलः ।

इल क्षेपणे चुरा०उभ०सक० सेट् । एलयति ते ऐलिलत् त । ऐलयीत् ऐलिष्ट "कथं वातमेलयति कथं न रमते मनः" अथ०१०,७,३७ । "आशा देवतानां यावां कामयते सा भूत्वेलयति" शत०ब्रा० १०,२,८,८ ।

इलविला स्त्री पुलस्त्यसुनिपत्न्याम् कुबेरजनन्याम् । एतत्सम्बन्धेनैव कुबेरस्य ऐलविल इति नाम ।

इला स्त्री इल–क । १भूमौ, २गवि, ३वाचि, ४जम्बुद्वीपस्य नववर्षमध्ये वर्षभेदे तत्सीमा चेलावृतशब्दार्थे वक्ष्यते । ५ वैवस्वतमनुकन्यायां बुधपत्न्याम् । सा हि विष्णुवरात् पुंस्त्वमासाद्य पुनः शङ्करशापात् स्त्रीत्वं गता बुधस्तामुपगम्य पुरूरवसमुत्पादयामासेति पुराणे प्रसिद्धम् । तत्र इडाशब्दे उक्तप्रायम् ६ स्वप्रयोज्ये त्रि० ।

इ(ए)ला कण्ड्वा० यक् प० अक० सेट् । इ(ए)लायति ।

इलावृत न० इला पृथिवीवावृतं निषधादिभिः । नववर्षात्मकजम्बुद्वीपस्य वर्षभेदे तच्च वर्षम् "पश्चान्माल्यवतः, प्राच्यां गन्धमादनपर्वत । इलावृत नीलगिरेर्याम्यतो, निषधादुदक् ऽन्तु मध्य सीमार्वच्छिन्ने देशेऽस्ति । "माल्यवान्

यामपि "अप इष्य होतरित्यप इच्छ होतरित्येवैतदाह" शत० ब्रा० १,८,२,१५। गतौ तुदादिरपि इषति निरु०।

अनु+अन्वेषणे गवेषणे "अन्विष्यन्नसतत सीताम्" रामा० 'यावदेनामन्वेष्यामि' शकु०। "न रत्नमन्विष्यति मृग्यते हि तत्" कुमा०। "तस्यान्विष्यन् वेतसगूढं प्रभवं स" रघु०। स्वार्थे णिच्। तत्रैव "राममन्वेषयामि" सा०द०।

प्र+प्रेरणे। "अप्रैषीद्राजपुत्री मा सुराहारीं तवान्तिकम्" भा०व०१६ अ०। 'गत्वा प्रैषीश्च रावणम्' भट्टि "अध्वर्युप्रेषितो मैत्रावरुणः प्रेष्यति" आश्व०गृ०। "शौनःशेफं च प्रेष्यति" कात्या०१२,६,१ "अग्नीषोमाभ्यां छागस्य वपायै मेदसे प्रेष्य" शत० ब्रा० ३,८,२,२७। घञ् प्रैष। ण्यत् प्रैष्य। स्वार्थे णिच्। प्रेषयति प्रेषयामास। "स च मां प्रेषयामास" रामा०। [ षित। पर्य्येषणा।

परि+सत्कारपूर्व्वकनियोजने पर्य्येष्यति स्वार्थे णिच् पर्य्ये-

इष वाञ्छायाम् तुदा०पर०सक०सेट् वेट् क्त्व०। १इच्छति, "इच्छामि संवर्द्धितमाज्ञया ते" कुमा०। इच्छेत् "यदीच्छेद्विपुलान् भोगान्" मल० त०पु०। "राजान्तेवासियाज्येभ्यः सीदद्भ्यो इच्छेद्धनं क्षुधा" या०स्मृ०। ऐच्छत् ऐषीत् "ऐषी पुनर्जन्मजयाय यत्नम्" भट्टि इयेष "इयेष सा कर्त्तुमवन्ध्यमात्मनः" कुमा० ईषतु। इच्छतु "किमिच्छन् कस्य कामाय किमर्थमनुसञ्ज्वरेत्" श्रुति०।

एषिता—ऐष्टा एषित्वा—इष्ट्वा। भावे श इच्छा "आत्मजन्या भवेदिच्छा" न्यायका०। इष्ट "इष्टोऽसि मे सखा चेति" गीता। कर्मणि इष्यते "निराकाङ्क्षिष्यते" स्मृति०। एष्टव्य एषितव्य.। "एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्" पु०।

अनु+अन्वेषणे। "त खनन्त इवान्वीषु" शत० ब्रा०। "हन्त तमात्मानमन्विच्छामो यमन्वेष्टा" छा०उ०। "अनुपदमन्वेष्टा" पा० "अथ तत्त्वान्वेषात् मधुकर। हतास्त्वं खलु कृती" शकु०

प्रति+ प्रतिपक्षे प्रतीच्छति ( प्रतिगृह्णाति )। "तत प्रतीच्छ प्रहरेति वादिनी" नैष० "कृपा प्रतीच्छ मे कन्याम्" प्राप्तौ च 'बुद्धौ शरणमन्विच्छ' गीता। स्वार्थे णिच् वेदे०नि० गुणाभाव। इषयति "इच्छं छन्दास्तरायेष मदन्त इषयेम ज्योतिः" ऋ० १,१८५,८। "इषयेम इच्छाम" भा०।

परि+अन्वेषणे च परीच्छति (अन्विष्यति) "भगवन्त मा अहमेभिरास्येभ्यः पर्य्येषिषम्" छा०उ०।

अभि+अभिगिच्छायाम् अभीष्टम्।

इष आभीक्ष्ण्ये क्र्यादि० पौनःपुन्ये पर०सक० सेट्। इष्णाति इष्णातु इषाण। "इष्णन्निषाणामुं मइषाण सर्व्वलोक मइषाण" यजु० ३१,२२,भा०। ऐष्णात् ऐषीत्। एषित एषित्वा। प्रेरणे च। "भिनद्गिरिं शवसा वज्रमिष्णन्" ऋ० ४,१७,३। इष्णन् प्रेरयन्" भा०। इच्छार्थेऽपि "पृश्नीरिषवरति मध्व इष्णन्" ऋ० १,१८१,६। "मध्व मधुन इष्णन् इच्छन्" भा०। आभीक्ष्ण्यञ्च क्रियापौनःपुन्यम्। क्रिया च धात्वर्थविशेषः स च वाञ्छागत्यादिरेव तस्यैवाभीक्ष्ण्यद्योतनेऽस्य साधुत्वम्

इष गतौ भ्वा० उभ०सक० सेट्। एषति ते। ऐषीत् ऐषिष्ट अनु—अनुसरणे। अन्वेषति। "अन्वेषन्त्वेव राजन्" 'देशमन्य दुराचारमन्वैषन् वानरास्तया" रामा०।

इष् त्रि० इष—इच्छायां क्विप्। १इच्छायुक्ते। इष्टचर०। "पिदादूर्जं गतक्रतु पिदादिषम्" ऋ२,१२,४। कर्मणि क्विप्। २इष्यमाणे त्रि० ३अन्ने स्त्री 'मधुमतीमिषस्कृधि' यजु० ७,२, "आश्विनायश्वरीरिव १,२,१। "इषे त्वोर्ज्जे त्वा" यजु० १,१,। इष्यतेरिष—अन्तर्भूतण्यर्थे कर्मणि क्विप्। ४एषणीये। "इषस्तुतो महामहे' ऋ० ५,५०,५, "इष एषणीयस्य" भा०। इष-गतौ भावे क्विप्। ५यात्रायाम् स्त्री

इष पु० इष-गतौ क्विप्-इष्ट् यात्रा शास्मिन् मासे जिगीषूणामस्ति अर्श आ०अच्। सौरे चान्द्रे च आश्विने १मासि। "आश्वयुजे माङ्गमासे युवतिर्व्रजगते चार्थलाभं प्रदिष्ट" राजमा०उक्ते "सौराश्विनस्य यात्राया अर्थलाभदत्वात्तथात्वम्"। अत एव रघौ'शरत्' कुर्वती गाथा पथवाप्सामकर्दमान्। यात्रायै नोदयामास त प्रक्ते प्रथमं शरत्"। शरत्कालस्य राज्ञा यात्रार्थत्वमुक्तम्। शरदृतु च"इषश्चोर्जश्च शरदिति" श्रुत्युक्त आश्विनकार्त्तिकमासरूप काल तस्य च सौरत्वमृतुशब्दे वक्ष्यते "आमेखलं सञ्चरतां घनानां छायामिषे सानुगतां निषेव्य" कुमा० पाठान्तरम्। "ध्वनिमिषेऽनिषेवणमभ्यत" माघ। तत्र चान्द्रे "इषे मास्यसिते पक्षे नवम्यामार्द्रयोगत "तिथि० देवीपु० अत्र चान्द्रोऽपि "यच्छरद्यूर्जं च ओषधः पच्यन्ते तेनोर्जेताविषश्चोर्जश्च" शत० ब्रा० ४,३,१,१७, "अन्तर्भूतण्यर्थे भावे घञर्थे क"। ७प्रेषणे "इषवान् मम रेजति" ऋ० १,२९,६, "इषवान् प्रेषणवान्" भा०। इष—इच्छायां कर्मणि घञर्थे क ६अन्ने न०निरु०।

इषणि स्त्री इष—भावे अनि वेदे०नि० गुणाभाव। प्रेषणे

यवनभोधकम् । तत्रापमण्डलप्राच्या याम्या सौम्या च दिक् सदा । कदम्बभ्रमवृत्त चेति" । अतो विक्षेपः कदम्बाभिमुखो भवति । ध्रुवाभिमुख्या क्रान्त्या सह कथं तस्य भिन्नदिक्कस्य योगवियोगावुचितौ । तयोर्यत्किञ्चिदिष्टं तदायनवलनवशात् । अथ तद्गोलोपरि प्रदर्श्यते । यथोदितं गोलं विरचय्य क्रान्तिवृत्ते यद्ग्रहचिह्नं तस्मात् परितो नवतिभागान्तरेऽन्यत् त्रिज्यावृत्तं निवेश्यम् । अथ ग्रहचिह्नाद्ध्रुवोपरिगामि सूत्रं तस्मिन् वृत्ते यत्र लगति तत्कदम्बयोरन्तरस्य ज्या त्रिज्या स कर्णः । तयोर्वर्गान्तरपदं कोटिः । सा च यष्टिसंज्ञा । क्रान्त्यपाक्षिप्तः कदम्बाभिमुखः कर्णरूपः । तस्य कोटिरूपकरणायानुपातः । यदि त्रिज्याकर्णे यष्टिः कोटिस्तदा शरकर्णे का । फलं क्रान्तिसंस्कारयोग्यो विक्षेपो भवति । तेन संस्कृता क्रान्तिः स्फुटा । विक्षेपाग्रस्थस्य ग्रहस्य विषुवन्मण्डलस्य च यद्याम्योत्तरमन्तरं सा स्फुटा क्रान्तिरुच्यते अयानुकल्पेऽप्येयमेव वासना । अत्र सत्रिराशिग्रहक्रान्तिज्या भुजस्थाने कल्पिता स भुजः । तद्द्युज्या यष्टिस्थाने कल्पिता सा कोटिः । तत्रापि त्रिज्या कर्ण इति सर्वमुपपन्नम्" प्रमि० । तत्रैव स्थानान्तरेऽप्युक्तम् ।

"नाडिकामण्डलात् तिर्य्यगत्रापमः क्रान्तिवृत्तावधिः क्रान्तिवृत्तात्खरः । खेपवृत्तावधिस्तिर्य्यगेवं स्फुटो नाडिकावृत्तखेटान्तरालेऽपमः" मू० । "क्रान्तिवृत्ते यत् स्फुटग्रहस्थानं तस्य नाडिकावृत्तात् तिर्य्यगन्तरं सा क्रान्तिः अथ विमण्डले च यत् ग्रहस्थानं तस्य क्रान्तिवृत्ताद्यत् तिर्य्यगन्तरं स विक्षेपः । अथ विमण्डलस्थग्रहस्य नाडीवृत्ताद्यत् तिर्य्यगन्तरं सा स्फुटा क्रान्तिः" प्रमि० ।

२सामवेदविहिते यज्ञभेदे । "इषुवज्रौ सामवेदे विहितौ" सि०कौ० । इषुप्रकारः स्वार्थे कन् । इषुकः शरप्रकारे

**इषुकामशमी** स्त्री पुरीभेदे "पूर्व्वेषुकामशमी" सि०कौ० ।

**इषुकार** पु० इषुं करोति कृ—अण् उप० । बाणकारके शिल्पिभेदे "पिङ्गला कुररः सर्पः सारङ्गोऽन्वेषणं विना । इषुकारः कुमारी च षडेते गुरवो मम" भौवनोक्तं समर्थयितुं पिङ्गलादीनां यथोपदेशकारित्वात् गुरुत्वं तथा वर्णितम् यथा । "आशा बलवती राजन् ! नैराश्यं परमं परमं सुखम् । आशां निराशां कृत्वा तु सुखं स्वपिति पिङ्गला । सामिषं कुररं दृष्ट्वा बध्यमानं निरामिषैः । आमिषस्य परित्यागात् कुररः सुखमेधते । स्टहारम्भो हि दुःखाय न सुखाय कदाचन । अपः परकृतं वेश्म प्रविश्य सुखमेधते । सुखं जीवन्ति मुनयो भैक्ष्यवृत्तिसमाश्रिताः । अयत्नेनैव जीवन्ति सारङ्गा इव पक्षिणः । इषुकारो नरः कश्चिदिषावासक्तमानसः । समीपेनापि गच्छन्तं राजानं नावबुद्धवान्" "बहूनां कलहो नित्यं द्वयोः सङ्कथनं ध्रुवम् । "एकाकी विचरिष्यामि कुमारीशङ्खको यथा" भा० शा० प० अ० १७८ इषुकृदादयोऽप्यत्र ।

**इषुकृत** त्रि० इषुरिव शीघ्रगामी ऋजुगामी वा कृतः । बाणतुल्यं शीघ्रगामितया ऋजुगामितया च कृते । "श्रिये पूषन्निषुकृतेव देवा नासत्या" ऋ० १८४,३ । इषुकृतेव इवार्थे एवार्थे । आजिधावनाय इषुवच्छीघ्रमृजुगामिनौ कृताविव सन्तौ" भा० इषुकृता इव नासत्या इत्यादौ सर्वत्र छान्दस आ । एतेन इषुकृच्छब्दस्योदाहरणतया एतस्याः ऋच उपन्यासः प्रमादिक एव ।

**इषुध** शरधारणे कण्ड्वा० प० अक० सेट् । इषुध्यति ऐषुध्यीत् इषुध्यिता-इषुधिता । याच्ञायामपि "विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसि" ऋ० ६,५०,१ । "पतिं वो अघ्न्यानां धेनूनामिषुध्यसि" ऋ० ८,५८,२ । भावे अ । इषुध्या प्रार्थनायां स्त्री । "दिवोनास्तोष्यवृषस्य वीरैरिषुध्येव मरुतो रोदस्योः" ऋ० १,१२२,१ । उण् इषुध्यु प्रार्थके "इषुध्यव ऋतसापः पुरन्धिः" ऋ० ५,४१,६ ।

**इषुधर** पु० इषु धरति धृ—अच् ६त० । बाणधरे इषुभृदादयोऽप्यत्र । "यशांसि सर्वेषुभृतां निरास्थत्" भट्टिः ।

**इषुधि** पुंस्त्री० इषवो धीयन्तेऽत्र धा—कि इषुध—इन् वा लोपो वा । बाणाधारे बाणधारके वा तूणे । स्त्रीत्वे "धनुर्गोधामुपमादाय तथाऽक्षय्ये महेषुधी" भा० व० २८अ० । निषङ्गिणेन इषुधीरसक्तः" ऋ० १,३३,३ । पुंस्त्वे "बद्धाऽक्षय्यौ महेषुधी" रामा० । "बह्वीनां पिता बहुरस्य पुत्रश्चिश्चाकृणोति समनावगत्य" । "इषुधिः सङ्काः पृतनाश्च" ऋ० ६,७५,५ । "बहव इषवो धीयन्ते इषूणां निधानत्वात् "इषुधिरिषूणां निधानम्" यास्कः" भा० ।

**इषुप** पु० इषु पिबति पा०पाने क उप०स० । असुरभेदे सहि अंशावतारे नग्नजिन्नामा राजासीत् यथाह भा० आ० ६७अ० "इषुपो नाम यस्तेषामसुराणां बलाधिकः । नग्नजिन्नाम राजासीत् भुवि विख्यातविक्रमः" ।

**इषुपुङ्खा** स्त्री इषोः पुङ्खमिव पुष्पमस्याः । शरपुङ्खायाम् ।

**इषुपुष्पा** स्त्री इषुरिव पुष्पमस्याः । शरपुष्पायाम् ।

**इषुमत्** पु० इषव सन्त्यस्य प्राशस्त्येन मतुप् । प्रशस्तबाणधरे । "इषुमति रघुसिंहे दन्दशूकान् जिघांसौ" भट्टिः ।

वलनशोधकम् । तत्रापमण्डलप्राच्या याम्या सौम्या च दिक् सदा । कदम्बभ्रमवृत्त चेति" । अतो विक्षेपः कदम्बाभिमुखो भवति । ध्रुवाभिमुख्या क्रान्त्या सह कथं तस्य भिन्नदिक्कस्य योगवियोगावुचितौ । तयोर्यत्किञ्चिद्दिक्कं तदायनवलनवशात् । अथ तद्गोलोपरि प्रदर्श्यते । यथोदितं गोलं विरचय्य क्रान्तिवृत्ते यद्ग्रहचिह्नं तस्मात् परितो नवतिभागान्तरेऽन्यत् तिर्य्यग्वृत्तं निवेश्यम् । अथ ग्रहचिह्नाद्ध्रुवोपरिगामि सूत्रं तस्मिन् वृत्ते यत्र लगति तत्कदम्बयोरन्तरस्य ज्या त्रिज्या स कर्णः । तयोर्भागान्तरपदं कोटिः । सा च यष्टिसञ्ज्ञा । क्रान्त्यग्राद्विक्षेप कदम्बाभिमुख कर्णरूपः । तस्य कोटिरूपकरणायानुपात । यदि त्रिज्याकर्णे यष्टि कोटिस्तदा शरकर्णे का । फलं क्रान्तिसंस्कारयोग्यो विक्षेपो भवति । तेन संस्कृता क्रान्तिः स्फुटा । विक्षेपाग्रस्थस्य ग्रहस्य विषुवन्मण्डलस्य च यद्याम्योत्तरमन्तरं सा स्फुटा क्रान्तिरुच्यते अथात्र कल्पेऽपीयमेव वासना ।' अत्र चलिराशिग्रहक्रान्तिज्या भुजस्थाने कल्पिता स भुज । तद्द्युज्या यष्टिस्थाने कल्पिता सा कोटि । तत्रापि त्रिज्या कर्ण इति सर्वमुपपन्नम्"प्रमि० । तत्रैव स्थानान्तरेऽप्युक्तम् ।

"नाडिकामण्डलात् तिर्य्यग्लापमः क्रान्तिवृत्तावधिः क्रान्तिवृत्तात्खर । खेटवृत्तावधिस्तिर्य्यगेवं स्फुटो नाडिकावृत्तखेटान्तरालेऽपमः" मू० ।"क्रान्तिवृत्ते यत् स्फुटग्रहस्थानं तस्य नाडिकावृत्तात् तिर्य्यगन्तरं सा क्रान्तिः अथ विमण्डले च यत् ग्रहस्थानं तस्य क्रान्तिवृत्तावधि तिर्य्यगन्तरं स विक्षेपः । अथ विमण्डलस्थग्रहस्य नाडीवृत्तावधि तिर्य्यगन्तरं सा स्फुटा क्रान्ति " प्रमि० ।

३सामवेदविहिते यज्ञभेदे । "इषुवज्रौ सामवेदे विहितौ" सि०कौ० । इषुप्रकारः स्वार्थे० कन् । इषुक शरप्रकारे

**इषुकामशमी** स्त्री पुरीभेदे "पूर्व्वेषुकामशमी" सि०कौ० ।

**इषुकार** पु० इषुं करोति कृ–अण् उप० । बाणकारके शिल्पिभेदे "पिङ्गला कुररः सर्पः सारङ्गोऽन्वेषणं विना । इषुकारः कुमारी च षडेते गुरवो मम" बोधेनोक्तं समर्थयितुं पिङ्गलादीनां यथोपदेशकारित्वात् गुरुत्वं तथा वर्णितम् यथा ।"आशा बलवती राजन् ! नैराश्यं परमं सुखम् । आशां निराशां कृत्वा तु सुखं स्वपिति पिङ्गला । सामिषं कुररं दृष्ट्वा बध्यमानं निरामिषैः । आमिषस्य परित्यागात् कुररः सुखमेधते । गृहारम्भो हि दुःखाय न सुखाय कदाचन । सर्पः परकृतं वेश्म प्रविश्य सुखमेधते । सुखं जीवन्ति मुनयो भैक्ष्यवृत्तिसमाश्रिताः । अयत्नेनैव जीवन्ति सारङ्गा इव पक्षिणः । इषुकारो नरः कश्चिदिषावासक्तमानस । समीपेनापि गच्छन्तं राजानं नावबुद्धवान्" बहूनां कलहो नित्यं द्वयोःसङ्कथनं ध्रुवम् । "एकाकी विचरिष्यामि कुमारीशङ्खको यथा" भा०शा० प० अ० १७८ इषुकृदादयोऽप्यत्र ।

**इषुकृत** त्रि० इषुरिव शीघ्रगामी ऋजुगामी वा कृतः । बाणतुल्य शीघ्रगामितया ऋजुगामितया च कृते । "श्रिये पूषन्निषुकृतेव देवा नासत्या" ऋ०१८४,३ । इषुकृतेव इवशब्द एवार्थे । आनिधावनाय इषुवच्छीघ्रऋजुगामिनौ कृताविव सन्तौ" भा० इषुकृता इव नासत्या इत्यादौ सर्वत्र छान्दस आ ।.एतेन इषुकृच्छब्दस्योदाहरणतया एतस्या ऋच उपन्यासः प्रामादिक एव ।

**इषुध** शरधारणे कण्ड्वा प०अक०सेट् । इषुध्यति ऐषुध्यीत् इषुध्यिता–इषुधिता । याच्ञायामपि "विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसि" ऋ०६,५०,१ । पतिं वो अघ्न्यानां धेनूनामिषुध्यसि" ऋ० ८,५८,२ । भावे अ । इषुध्या प्रार्थनायां स्त्री । "दिवोदासोष्वगुरस्य वीरैरिषुध्येव मरुतो रोदस्यो "ऋ०१,१२२,१ । उण् इषध्यु मार्थके "इषध्यव ऋतसापः पुरन्धि " ऋ०५,४१,६ ।

**इषुधर** पु० इषुं धरति धृ–अच् ६त० । बाणधरे इषुभृदादयोऽप्यत्र । "यशांसि सर्वेषुभृतां निरास्थत्" भट्टिः ।

**इषुधि** पुंस्त्री० इषवो धीयन्तेऽत्र धा–कि इषुध–इन् यलोपो वा । बाणाधारे बाणधारके वा तूणे । स्त्रीत्वे "धनुर्गाण्डीवमादाय तथाऽक्षय्ये महेषुधी" भा०व० २८अ० । निसर्वसेन इषुधीरसक्त:" ऋ०१,३३,३ । पुंस्त्वे "बद्धाऽऽसज्यौ महेषुधी"रामा० ।"बह्वीनां पिता बहुरस्य पुत्रश्चिश्चाकृणोति समनावगत्य" । "इषुधि सङ्का पृतनाश्च" ऋ० ६,७५,५ । "बह्व इषवो धीयन्ते इषूणां निधानत्वात् 'इषुधिरिषूणां निधानम्' यास्क "भा० ।

**इषुप** पु० इषुं पिबति पा०पाने क उप०प० । असुरभेदे स हि अंशावतारे नग्नजिन्नामा राजासीत् यथाह भा० आ०६७अ०"इषुपो नाम यस्तेषामसुराणां बलाधिकः । नग्नजिन्नाम राजासीत् भुवि विख्यातविक्रम "।

**इषुपुङ्खा** स्त्री इषोः पुङ्खमिव पुष्पमस्याः । शरपुङ्खावृक्षे ।

**इषुपुष्पा** स्त्री इषुरिव पुष्पमस्याः । शरपुष्पायाम् ।

**इषुमत्** पु० इषव सन्त्यस्य प्राशस्त्येन मतुप् । प्रशस्तबाणधरे । "इषुमति रघुसिंहे दन्दशूकान् जिघांसौ" भट्टिः ।

इषुमात्र न० इषुः प्रमाणमस्य इषु+मात्रच्। १शरप्रमाणे अग्नि-वेदिमां २कुण्डे कुण्डशब्दे विवृतिः। ३इषुप्रमाणमात्रे त्रि० स्त्रियां ङीप्। "यद्येक पशुः स्यात् एकप्रादेशां कुर्य्यात् अथ यदि पञ्च पशवः स्युः पञ्चप्रादेशां कुर्य्यादिषुमात्रीं वा वीर्य्यं वा इषुर्वीर्य्यसम्मितैव तद्भवति। पञ्चप्रादेशा इषुमात्र्येव पुरेषुर्भवति" शत० ब्रा० ६,५,२,१०। इष्टकामभिलक्ष्य शब्दः। उखां करोतीत्युपक्रम्य "पञ्चप्रादेशामिषुमात्रीं वा तिर्य्यक् पञ्चपशौ" कात्या० १६,२,२५, उक्तेः। इषुमात्रं च अङ्गुल्यष्टाशीत्यङ्गुलपर्य्यन्तमात्रं तच्च प्रादेशत्रयम् याज्ञिकसम्प्रदायसिद्धम्। ४शरगतिपर्य्यन्तमाने च। "अथ यदग्नौ पर्य्यस्येति। तस्मादु ह अपीषुमात्रमेव तिर्य्यक् वर्द्धते इषुमात्रं ह्याङ्गोऽर्वावर सम्-इम् दधावर" शत० ब्रा० १,६,२,११ तत्राप्युक्तलक्षण प्रकार। "इषुमात्रं धनुषः सकाशात् बलात् प्रयुक्त इषु यावद्दूरं गच्छति तावन्मात्रं प्रतिपार्श्वं तिर्य्यक् उभय पार्श्वतः प्रवर्द्धत" भा०। शरविक्षेपप्रमाणस्य। इषु-विक्षेपशब्दे दृश्यम्।

इषुविक्षेप पु० इषोर्विक्षेपयोग्यदेश। सार्द्धशतहस्तमिते शरविक्षेपयोग्ये देशे तन्मानमाह स्मा० त० पितामह "मध्यमेन च चापेन प्रक्षिपेत् शरत्रयम्। हस्तानाञ्च शते सार्द्धे लक्ष्य लक्ष्या विचक्षणः। तत्प्रमाणदेशातिक्रमेणैव पुरीषोत्सर्गः कार्य्यः। "तत्र कल्यं समुत्थाय कुर्य्यात् मैत्रं नरेश्वर। नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुव"। मैत्रं मित्रदेवताकपायुसम्बन्धात् पुरीषोत्सर्गं इषुविक्षेपमतीत्य इषुविक्षेपयोग्यदेशाद्बहिः" स्मा० त० रघु०।

इषेत्वक पु० इषे त्वा इतिभागोऽस्त्यत्रानुवाके अध्याये वा गोपथा० वुन्। इषेत्वा इतिशब्दयुक्ते अनुवाके अध्याये च। स च यजुर्वेदीय प्रथमाध्याय तस्यादौ इषे त्वोर्जेत्वेति मन्त्रदर्शनात् तस्य तथात्वम् एव तदन्तर्गतोऽनुवाकोऽपि तथा।

इष्कर्त्तृ त्रि० निस्+कृ-तृच् 'निसस्तपतावनासेवने' इति प्राति-शाख्यसूत्रेणोपसर्गैकदेशनकारलोप। निष्कर्त्तरि। "इष्कर्त्तारमध्वरस्य प्रचेतसम्" ऋ० १०,१४०,५। इष्कृतादयोऽप्यत्र।

इष्कृति स्त्री निस्+कृ-क्तिच् इष्कर्त्तृवत् नलोपः। गर्भान् निष्क्रमकारिण्यां मातरि जनन्याम्। "इष्कृतिर्नाम वो माता सोयूय स्थ निष्कृतीः" यजु० १२,८३,। "इष्कृतिर्नाम निष्कृतिमाम्नी माता जननी" वेददी०।

इष्ट त्रि० इष-कर्मणि क्त। १अभिलषिते, २प्रिये "इष्टोऽसि मम्या चेति गीता० च। यज भावे क्त। ३यज्ञादौ न० कर्म्मणि, क्त। ४पूजिते ५एरण्डवृक्षे पु०। ६संस्कारे न०। "एकाग्निकर्म्म हवनं त्रेतायां यच्च हूयते। अन्तर्वेद्याञ्च यद्दानमिष्टं तदभिधीयते। अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम्। आतिथ्यं वैश्वदेवञ्च प्राहुरिष्टमिति स्मृतम्" जातूकर्ण्योक्ते ७कर्म्म-काण्डे न०। इष्टञ्च इच्छाविषय तच्च द्विविधं गौणं मुख्यञ्च। तत्र इतरेच्छानधीनेच्छाविषयोऽसुखं तत्साधनं गौणम्। तत्र मुख्यमिष्टं सुखं दुःखाभावश्च। तदिच्छाया इतरेच्छानधीनत्वात्। तत्साधनं पाकभोजनादि गौणं सुखदुःखाभावेच्छयैव तदिच्छाया सम्भवात् अ-धिकमिच्छाशब्दे ९१२ पृष्ठे उक्तम्। तत्र कर्म्मणि "सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः। अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्"। "अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्म्म चोच्यते"। "इष्टान् हि वो देवा दास्यन्ते यज्ञभाविता" इति च गीता। यज्ञे "पुरोडाशमनुजानिष्टमिष्टं कर्त्तुमलन्तराम्" माघ इष्टे यागः इष्टमतीत कर्त्तुमलन्तरामित्यर्थः। "इष्टं दत्तमधीतं वा विनश्यत्यनुकीर्त्तनात्" देवल। इष्टं यजनम्" शु० त० रघु०। इष्टते च "दर्पेरिष्टं क्रतुगणम्" विक्रमो०। श्रुतिपरिभाषिते इष्टकर्म्मणि द्विजातीनामेवाधिकारः न स्त्रीशूद्रयोः, यथाह "इष्टञ्च द्विजातीनां धर्म सामान्य उच्यते। अधिकारी भवेच्छूद्रः पूर्त्ते धर्मे न वैदिके" जातूकर्ण्य 'वैदिके वेदसाध्ये अग्निहोत्रादाविति" रत्नाकरः। "पितृव्यगुरुदौहित्रान् भर्त्तुः स्वस्रीयमातुलान्। पूजयेत् कव्यपूर्त्ताभ्याम् वृद्धानाथातिथीन् स्त्रियः" इत्यस्मतिवचने स्त्रिया पूर्त्तमात्रेऽधिकारविधानात् तत्र 'जलाशयोत्सर्गरूपपूर्त्ते गोरवतारणात्मकत्वपयोयजमानकर्त्तृकमन्त्रपाठ विधानात् तत्र अमन्त्रकतया स्त्रीशूद्रयोरनधिकारेण महति यागेऽपि तयोर्नाधिकारविशेषोपदेशाभावात्" इति द्वैतनिर्णयः तत्त्वसारिव। इष्टोत्सर्गे तदङ्गहोम इव ब्राह्मण द्वारा तन्मन्त्रपाठसम्भवात्तयोरपि तत्राधिकारः इति रघुनन्दनादय। "अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते" वराहपु० "तद्धुतमुक्तलक्षाम्नौ न स्त्री जुहुयादनुपेतः" आप० वचन तु स्वयंहोमविषयम्। "श्रौतस्मार्त्तक्रियाहेतोर्वृणुयादृत्विजः स्वयम्" याज्ञ० श्रौत इव स्मार्त्तेऽपि कर्मणि ऋत्विग्वरणोक्ते। अतएव "ऋत्विग्दारे नियुक्तश्च समौ सम्परिकीर्त्तितौ। यज्ञे स्वाध्याय-

प्रे दृग्न इति (१८,२८ ) प्राङ् यात्वा यथार्थम्" १८सू०। "गच्छेत्" क०। "आरोहेत् पार्श्वतो गच्छेत्"१६सू०। 'यजमान संस्कारात्"क०। "अन्दे सर्जत्यक्रन्ददग्निरिति (११,२२( जपति" २०सू०। "अर्जन च यत्करयम्" क०। 'पासेऽग्न्हरत्युद्धतावोक्षितउत्तरत समिदाधान प्र-प्रायश्चितिं (१२,२४) २१सू०। "यत्र वासस्तत्रैवापहरणम् न प्रागवहते एवं ह्याह (६,८,१,१२) स यदि पुरावसत्यै विमुञ्चेतानस्येवाग्निं स्यादिति' वसत्या तु उत्तरतोऽग्नेरवतार्य समिदाधान "प्र-प्रायश्चिति"। उद्धतावोक्षितग्रहण च परिसमूहनाद्युपसग्रहार्थमपि स्मार्तं ह्येतदनूद्यते (६,४,४,१८) उद्धते वा ऽवोक्षितेऽग्निमादधातीति' एत च सति तदपचारे स्मार्तं प्रायश्चित्तम्"क०। "वासार्थे रथे उत्तरस्यां दिशि अग्निमवतारयति" सप०। "वनोवाहनमेतद्दीक्षासु यदेच्छेत्" २२सू०। "वनोवाहनमिति' कर्मास्य कर्मणः सा च संव्यवहारार्था "अहं वनोवाहमादिति" (२५सू०) तच्च दीक्षासु कर्तव्यम्। यदेच्छोपजायते महावीरकरणयूपच्छेदनवनोवाहनानि दीक्षासु क्रियन्ते क्रमस्तु नैषाम् पाठाभावात्" क० "अप्सू स्वभस्मावपन क्रयणीयादौ' २३सू०। उखाभस्मावपनमप्सु कर्तव्यम् आदौ क्रयणीयस्याह्न"क०। "अन्यत्र चेच्छन्"२४सू०। "करोति"क०। 'ऊर्ध्वं वनोवाहनात् क्रमयोगात्" २५सू०। अन्यत्रेच्छया कुर्वन् वनोवाहनादूर्ध्वं करोति मन्त्राणां पाठक्रमयोगात्" क०। "वनोवाहनादूर्ध्वं सोमक्रयदिने आदौ अन्यत्र दीक्षा भस्मावपनम्। कुतः क्रमयोगात् पूर्वं वनोवाहनमन्त्राः पश्चाद्भस्मापोऽभ्यवहरणस्य' सप० 'पलाशपुटेनापो देवीरित्येकया (१२,३५) २६सू०। "पलाशपुटेन भस्म गृहीत्वाप्सावपति"क०। "ततो द्वाभ्याम्' (१२,३६ ३७) २७सू०। "पुनरावपति द्वाभ्यामृग्भ्याम्"क०। 'आद्याभ्यां (१२,३५-३६) वा पूर्वम्" २८सू०। "पूर्वमावपनं द्वाभ्यामृग्भ्याम् तत एकया वा" वाशब्दो विकल्पार्थः तुल्यश्रुतित्वात्" क०। "अनामिकया प्रासादादत्से प्रसद्येति (१२,३८-४१) २६सू०। "प्रास्ताङ्गुलेन कियदप्यनामिकयादत्ते" (६,८,२,७)। "प्रास्तोत्साम्युपतिष्ठते बोधा मद्धति' (१२,४२) ३०सू०। "यत्तदात्त भस्म तत्प्रासु" क०। "प्रायश्चित्ति समिधोपहृत्य" ३१सू०। ईकण्डिका।

'आज्य' विश्वकर्मन्हविषेति (१२,४१) जुहोति" १सू०।

"प्रायश्चित्तिरित्यस्य होमस्य संज्ञा उपपूर्वस्य हन्तिर्ग्रहणार्थो दृष्टोऽन्यत्रापि "अथ स्रुचोपहन्त्याज्यमिति (२,४, १,२५)" क०। "समिधा करणभूतया स्रुक्स्थानीयया उपहृत्य गृहीत्वा" सप०। "उत्थाय दधाति समिधं पुनस्त्वेति (१२,४४) २सू०। उत्थानग्रहण च प्रतिपत्तित्वात् गुणार्थं चेति। नैमित्तिकान्यत्रैव प्रकरणे पठन्ते तदर्थमाह" क० "गार्हपत्योऽनुगते निर्मथ्य" ३सू०। "आदधाति मन्त्रम प्राप्तत्वादनाज्यम् उच्यते प्रायश्चित्तार्थम्'। "प्राजहिते उपशान्ते मथित्वा प्रायश्चित्ती करोति' सप०। "कुल्यावाहनीये शांकाग्निनेम हृत्वा" ४सू०। "सत्यासु वर्तमानासु आहवनीयेऽनुगते शांकाग्निनेन हृत्वा तमादधाति" शाकाग्निशब्दः प्रणयनेष हृत्येत्यर्थेक एतच्चोच्यते पूर्ववत्प्रणयन मा भूदिति" क०। "आहवनीयेऽग्निप्रणीतेऽनुगते शांकाग्निनेम हृत्वा अञ्जना सदोहविर्धानमध्यमार्गेणैव हृत्वा" सप०। "आग्नीध्रीयमुत्तरेण सद' ५सू०। "हृत्वा निदधाति उत्तरेण सदो हृत्वेतीधाव्युदासार्थं" क०। आग्नीध्रीयमग्निमनुगतं सदस उत्तरेणैव हृत्वा" सप०। "प्रदङ्ग्यादाहृतोखेय" ६सू०। "उख्ये चानुगते पूर्ववत्प्रदङ्ग्रात् अय तु विशेषः आहृता आहृदुपहृण च मन्त्रनिवृत्त्यर्थम्। "एतयैवाहमातुपहरन् यजुरिति (६,६,४,८) श्रुते"क०। 'उख्येऽग्नावनुगते गार्हपत्यादाहवनीयमन्वग्निरित्याहृत्य (११,१७ समितमित्युपस्थाय (१२,५७ आहृता मन्त्रवर्जितक्रियामात्रेण पूर्ववदुखा प्रदङ्ग्रात् उखामाहवनीयेऽधिश्रित्योख्यमग्निमुत्पादयेत्' सप०। "अध्वरप्रायश्चित्ति च सर्वेषु यथाकालं पूर्वा-पूर्वाम्"७सू०। "अध्वरप्रायश्चित्ति च करोति सर्वेषु निमित्तेषु ता च पूर्वाम् पूर्वां चशब्दादाग्निकीं च। सर्वग्रहणं च भस्मापोऽभ्यवहरणार्थम्। (२२) तत्रापि हि विधीयेते (६,८,२,११) उभे प्रायश्चित्ती "करोतित्रे एवाग्नावनुगते इति" यथाकालमिति चाध्वरप्रायश्चित्त्यर्थमुच्यते आग्निकी तु विश्वकर्मणा एत्येव" क० "सर्वेषु पूर्वोक्तेष्वग्न्यनुगमेषु यथाकाल परमेष्ठ्यादिकालाकृति (७६,६,१) पूर्वा पूर्वा जुहुयात् पश्चादग्निप्रायश्चित्तिम् चकारात्" सप० "उखाभेदने मवस्याल्या मद्दामुख्यामुखाकपालमवधायावपति' ८सू०। यद्येपोखाभिद्येतेति" (६,६ ४,८) प्रकृत्य सर्वमिदमाम्नातम् एतच्चैकोखापक्षे भवति। नित्यपक्षे तु द्वयोरेवैकस्यामावपनम्"(६,५,२,२२)क०। "उखोपशये पिष्टा मृदा स-

एकादश भवन्ति त्रयोदश वा" क०। "क्षत्रियपुरोहितव्यतिरिक्तस्य द्वादशीस्त्रयोदश्याविच्छया भवत." सय० "स्वाहाकारं सर्वासूखायाम्' ४४सू०। "उखायामाधीयमानासु समित्सु, अतोऽन्यत्रापि स्वाहाकारो भवति सर्वास्वियभिधानात्" क०। "उखाया सर्वासु समित्सु स्वाहाकारो भवति" संप०। "औदुम्बर्यादि दण्डान्तमेके' ४५सू०। "एव सति प्रागौदुम्बर्यहोमादुखाधिश्रयणादि' तान्यु हैकउखायामेवैतान्यौदुम्बराणि जुह्वतीति वचनात्" (६,६,१,२२) क०। "अत्रावसरे" सप० इति ४ कण्डिका।

"यजमानः कण्ठे रुक्मं प्रतिमुञ्चते परिमण्डलमेकविंशतिपिण्डं कृष्णाजिननिष्यूत लोमसु शुक्लकृष्णेषु शणसूत्रे त्रिवृत्योतमुपरिनाभि बहिर्ष्पिण्डं दधानो रुक्म इति"(१२,१)। "रुक्मं हि प्रकृत्य सर्वमेवैतच्छ्रूयते (६,६,१,२), यजमानग्रहणाच्च स्वयमेव यजमान प्रतिमुञ्चते, द्वादशाहे च सर्वे यजमानाः प्रतिमुञ्चेयु अत ऊर्ध्वं मिण्ड्वाद्यन्वारम्भ एवं हि सर्वं कृत भवति" क०। "परिमण्डलं वर्तुलम्, एकविंशतिपिण्डम् पिण्डं निर्बाधम् निर्बाध्यन्ते उन्नता निकाश्यन्ते उन्नता स्वरूपाद्बहिर्निःसृता भवन्ति, कृष्णाजिनशुक्लकृष्णेषु लोमसु निष्यूत नितरां स्यूतम्, पुनः कीदृशम् त्रिगुणे त्रिवृति शणमये सूत्रे ओत प्रोतम् तथा उपरिनाभि, पुनः बहिष्पिण्डं बहिर्निर्बाधम्" संप०। "दण्डौ शिक्यासन्दीषु सुञ्जरज्ज्वश्चित्त्वतो मृद्दिग्धा'' २सू० उखा याभ्यां गृह्यते तौ दण्डौ, शिक्यं प्रतिद्रम्, आसन्दी च। अनुरक्ता रज्ज्ववो मृद्दिग्धा भवन्ति" क०। "मृद्दिग्धा कर्दमलिप्ता" सप०। "परिमण्डलाभ्यामिण्ड्वाभ्यामुखा परिगृह्णाति नक्तोषासेति" (१२,२) ३सू०। "हरति द्यावाक्षामेति" (१२,२) ४सू०। "तामेवोखाम्" क०। "आहवनीयस्य पुरस्तादुद्गात्रासन्दीवदाउद्या चतुरश्राङ्ग्या शिक्यवत्या निदधाति देवा अग्निमिति (१२,२) ५सू०। "उद्गात्रासन्दीवदिति प्रादेशपादी गम्यते" (१३,४,२) क०। सा च चतुरङ्गी सह पादैः, तस्या शिक्यवत्यासासन्द्या च निदधाति उखाम्" क०। "शिक्यपाशं प्रतिमुञ्चते षड्द्याम विश्वा रूपाणीति" (१२ ३) ६सू० "ग्रीवायाम्" क०। "सशिक्यं मास्म प्रगृह्णाति सुपर्णोऽसीति" (१२,४) पिण्डवत् ७सू०। "सह शिक्येन मास्मग्नि प्रगृह्णाति, पिण्डवदित्यूर्ध्वबाहु (३,८)। "धारण च" द्स०। "पिण्डवदेव उपरिनाभि' क०। अत्र द्वाभ्यामङ्काभ्या शुक्लयजुर्वेदस्याध्यायादि, त्रिभिरङ्कैः कात्यायनश्रौतसूत्रस्याध्ययकण्डिकादि। चतुर्भिरङ्कैः शतपथब्राह्मणस्याध्यायादि ज्ञेय तेन तत्तत्प्रतीकमात्रगृहीतमन्त्रसूत्रादि तत्तत्स्थाने द्रष्टव्यम् विस्तरस्तु शत० ब्रा० ६ अ० द्रष्टव्या। लौकिकेष्टरचितप्राचीरादौ इष्टकाघनफलेन इष्टकासंख्यानोपायो दर्शितोलीला० यथा "चितौ करणसूत्र सार्धवृत्तम्। उच्छ्रयेण गुणित चितेः किल क्षेत्रसम्भवफल घन भवेत्। इष्टकाघनहृते घने चितेरिष्टकापरिमितिश्च लभ्यते॥ इष्टकोच्छ्रयहृदुच्छ्रितिश्चिते स्युःस्तराश्च दृषदा चितेरपि॥ उदाहरणम्। अष्टादशाङ्गुल दैर्घ्यं विस्तारो द्वादशाङ्गुलः। उच्छ्रितिस्त्र्यङ्गुला यासामिष्टकास्ताश्चितौ किल॥ यद्विस्तृति पञ्चकराष्टहस्त दैर्घ्यं च यस्या त्रिकरोच्छ्रितिश्च। तस्या चितौ किं फलमिष्टकाना सङ्ख्या च का ब्रूहि कति स्तराश्च॥ इष्टकाया घनहस्तमानम् ३/१६ चिते क्षेत्रफलम्४०। उच्छ्रयेण ३गुणितं चितेर्घनफलम् १२०। यथोक्तकरणे लब्धा इष्टका सङ्ख्या २५६०। स्तरसङ्ख्या २४। एव पाषाणचयेऽपि" 'व्यासात् षोडशभाग सर्वेषां सद्मना भवति भित्ति। पक्वेष्टकाक्षताना दारुक्षताना च स विकल्पः। इष्ट०स०। "नेष्टकारचिते पितॄन् संतर्पयेत्" शङ्खलि०। "मृण्मयात् कोटिगुणित फलं स्याद्दारुभि स्तात्। कोटिकोटिगुण पुण्यं फल स्यादिष्टकामये" मठ०त० पु०। वास्तुयागे 'प्राकारपदे' इष्टकारोपाचार वास्तुयागशब्दे दृश्य।

इष्टकाचयन न० इष्टकयाऽग्नेश्चयनम्। इष्टकया अग्नेश्चयने तत्प्रकार कात्या०श्रौ०सू०। "एतया विकत्याभिमन्त्रकेऽन्यचित चिन्वन्ति द्रोणचिद्रथचक्रचित्कङ्कचित्प्रउगचिदुभयत प्रउग समुह्य पुरीष" १६,५,८। "एते अग्निविशेषा तदाकाराश्चिन्वन्त्येके एके सुपर्णचितम् विलिप्तत्वादस्या विक्ततेरग्न्यन्तरेष्वप्राप्तिर्मा भूदित्युच्यते एव हि श्रूयते "स हैकएतया विकत्याभिमन्त्रान्या चिति चिन्वन्तीति" (६,७,२,८ शत०ब्रा०) क०। 'विकत्या एतया ऋचा अन्यचित षडिवधमन्यमग्नि चिन्वन्ति तमेवाह द्रोणचिदित्यादि" सप०। "समुह्य पुरीषे प्रविश्य पुरीषाहरणम्" १० सू०। प्रविश्य पुरीषमाहृत्याहृत्य तेनैव चयनम्' क०। "विष्णुक्रमान् क्रमते विष्णो-

प्रेद्‌ग्न इति (१९,२९ ) प्राङ् यात्वा यथार्थम्" १८सू०। "गच्छेत्" क०। "आरोहेत् पार्श्वतो गच्छेत्"१९सू०। 'यजमान संस्कारात्'क०। "अदे स्वर्णस्यक्रन्ददग्निरिति (११,२२( जपति" २०सू०। "स्वर्जनं च शब्दकरणम्" क०। 'वासेऽग्न्यहरत्युद्धतावोक्षितउत्तरत समिदाधान प्र-प्रायमिति (१२,२४) २१सू०। "यत्र वास स्वर्णावहरणम् न प्रागवसते एवं ह्याह (६,८,१,१२) स यदि पुरावसत्यै विसृजेतानस्येवाग्नि स्यादिति वसत्या तु उत्तरतोऽग्नेनवसार्ये समिदाधान 'प्र-प्रायमिति'। उद्धतावोक्षितग्रहणं च परिसमूहनाद्युपलक्षणार्थमपि स्मार्तं ह्येतदनूद्यते (६,४,४,१८) उद्धते वाऽवोक्षितेऽग्निमादधातीति" एवं च सति तदपचारे स्मार्तं प्रायश्चित्तम्"क०। "वासार्थे रथे उत्तरस्यां दिशि अग्निमवतारयति" सप०। "वनीवाहनमेतद्दीक्षासु यदेच्छेत्" २२सू०। "वनीवाहनमिति" शकटस्य कर्षणं सा च संव्यवहारार्था "ऊर्ध्वं वनीवाहनादिति" (२५सू०) तच्च दीक्षासु कर्तव्यम्। यदेच्छोपजायते महावीरकरणयूपच्छेदनवनीवाहनानि दीक्षासु क्रियन्ते क्रमस्तु नैषाम् पाठाभावात्" क० "अपूर्वभस्मावपनं क्रयणीयादौ" २३सू०। उक्तभस्मावपनमपि कर्तव्यम् आदौ क्रयणीयस्याह्नः"क०। "अन्यत्र चेच्छन्" २४सू०। "करोति"क०। "ऊर्ध्वं वनीवाहनात् क्रमयोगात्" २५सू०। अन्यत्रेच्छया कुर्वन् वनीवाहनादूर्ध्वं करोति मन्त्राणां पाठक्रमयोगात्" क०। "वनीवाहनादूर्ध्वं सोमक्रयदिने आदौ अन्यत्र दीक्षा भस्मावपनम्। कुतः क्रमयोगात् पूर्वं वनीवाहनमन्त्राः पश्चाद्भस्मापोऽभ्यवहरणस्य' सप० 'पलाशपुटेनापो देवीरित्येकया ( १२,३५ ) २६सू०। "पलाशपुटेन भस्म गृहीत्वाप्स्वावपति"क०। "ततो द्वाभ्याम्' (१२,३६ ३७) २७सू०। "पुनरावपति द्वाभ्यामृग्भ्याम्"क०। 'आद्याभ्यां (१२,३५-३६) वा पूर्वम्" २८सू०। "पूर्वमावपनं द्वाभ्यामृग्भ्याम् तत एकयर्चा वायव्यो विकल्पार्थः तुल्यश्रुतित्वात्" क०। "अनामिकया मात्रादादत्ते प्रसद्येति (१२,३८-४१) २९सू०। "प्रास्तादुपन कियदप्यनामिकयादत्ते" (६,८,२,७)। 'प्रास्तोत्सामुपतिष्ठते बोधा मद्रति" (१२,४२) ३०सू०। "यत्तदात्त भस्म तत्रास्य" क०। "प्रायश्चित्ति समिधोपहृत्य" ३१सू०। ६कण्डिका।
'आज्य विश्वकर्मणइति ( १२,४२ ) जुहोति" १सू०।

"प्रायश्चित्तिरित्यस्य होमस्य संज्ञा उपपूर्वस्य हरतिर्ग्रहणार्थो दृष्टोऽन्यत्रापि "अथ स्रुचोपहृत्याज्यमिति (२,४,१,२५ )" क०। "समिधा करणभूतया स्रुक्स्थानीयया उपहृत्य गृहीत्वा" सप०। "उत्थाय दधाति समिध पुनस्त्वेति ( १२,४४ ) २सू०। उत्थानग्रहणं च प्रतिपत्तित्वात् गुणार्थं चेति। नैमित्तिकान्यत्रैव प्रकरणे पठ्यन्ते तदर्थमाह" क० "गार्हपत्येऽनुगते निर्मथ्य" ३सू०। "आदधाति मन्थन प्राप्तस्यादमाख्यम् उच्यते प्रायश्चित्तार्थम्। "प्राजहिते उपयान्ते मथित्वा प्रायश्चित्ती करोति' सप०। "गत्यावाहनीये शाकायिनेन हुत्वा" ४सू०। "गत्यास्तु दर्शमासात् आहवनीयेऽनुगते शाकायिनेन हुत्वा तमादधाति" शाकायिनशब्दः प्रागुणमेव हुत्वेत्यर्थक एतच्चोच्यते पूर्वस्मत्ययन मा भूदिति' क०। "आहवनीयेऽग्निप्रणीतेऽनुगते शाकायिनेन हुत्वा ऋजुना सदोहविर्धानमध्यमार्गेणैव हृत्वा" सप०। "आग्नीध्रीयमुत्तरेण सद" ५सू०। "हृत्वा निदधाति उत्तरेण सदो हविर्धानव्युदासार्थं" क०। आग्नीध्रीयमग्निमनुगतं सदस उत्तरेणैव हृत्वा" सप०। "प्रवृञ्ज्याद्वाहृतोऽखेः" ६सू०। "उखे चानुगते पूर्ववत्प्रवृञ्ज्यात् अथ तु विशेष आहृता आहृदुपहृत्य च मन्त्रनिवृत्त्यर्थम्। "एतयैवाहमाहुपहरन् यजुरिति ( ६,६,४,९) श्रुते "क०। "उखेऽग्नावनुगते गार्हपत्यादाहवनीयमन्वग्निरित्याहृत्य (११,१७ समितमित्युपस्थाय (१२,५७ आहृता मन्त्ररहितक्रियामात्रेण पूर्वप्रवृञ्ज्या प्रवृञ्ज्यात् उखामाहवनीयेऽभिनिरस्योख्यमग्निमुत्पादयेत्" सप०। "अध्वरप्रायश्चित्तिं च सर्वेषु यथाकालं पूर्वा-पूर्वाम्' ७सू०। 'अध्वरप्रायश्चित्ति च करोति सर्वेषु निमित्तेषु ता च पूर्वाम् पूर्वां चयव्रादाग्निकीं च। सर्वग्रहणं च भस्मापोऽभ्यवहरणार्थम्। (२२) तत्रापि हि विधीयेते (६,८,२,११) उभे प्रायश्चित्ती "करोतिने एवाग्नावनुगते इति" यथाकालमिति चाध्वरप्रायश्चित्त्यर्थमुच्यते आग्निकी तु विश्वकर्मणादत्येव" क० "सर्वेषु पूर्वोक्तेष्वग्न्यनुगमेषु यथाकालं परमेष्ठ्यादिकालाङ्कृति (२६,६,१ ) पूर्वा पूर्वां जुहुयात् पश्चादग्निप्रायश्चित्तिम् चकारात्' सप० "उखाभेदने नवस्यास्यां महाभुखासुखाकपालमवधायावपति' ८सू०। यद्योषोखाभिद्येतेति" (६ ६ ४,८) प्रकृत्य सर्वमिदमाम्नातम् एतच्चैकोखापक्षे भवति। मिस्वपक्षे तु इयोरेवैकस्यामावपनम्"(६,५,२,२२)क०। "उखोपघाये पिष्टा मृदा स-

क्रोष्ठा करोत्याष्टता" ९सू० । "उखाखण्डमेकयुगाया प्रभिन्नम् द्वितीयमुपधयया सह पिष्ट्वा, आष्टता मन्त्रमर्जम्, आष्टच्छन्देन क्रियामात्रमुच्यते तथा चोक्तम् (६,६,४, ७) एतयैवाष्टतानुपदहन्तु यजुरिति" च० । "आष्टता मन्त्ररहितेतिकर्त्तव्यतया" सप० । "पक्वायामावपति कपालं च १०सू० । "पक्वायामुखायाम् अग्निं कपालं च" क० । 'उखोपधये पिष्ट्वा संसृज्य निदधाति" ११सू० । "उखा-कपालमुपधया च पिष्ट्वा संसृज्य स्थापयति" क० ।

इदानीं चयनप्रकारमाह । अभ्यात्म चयनमुपविश्य' १२सू० । "आत्मनश्चाभिमुख्येन चयन कर्तव्यम् न परागिति, तथा च नैर्ऋतीषु वचनात्पराङ्चयनमुक्तम् (७, २,१,१२) । अपरो विशेष" "मध्यपाङ्क्तमन्तर लक्षोत्तर लक्षणाभिरिष्टकाभि" १३सू०" । "चेतव्य "क० । 'नित्ये सादनसूददोहसाउपधानादुत्तरे तया देवतया ता अ-स्येति (१७, ५३, ५५,) १४सू० । "सर्वास्विष्टकासु एते नित्ये भवत तया देवतयेति सादनम् ता अस्येति सूद-दोहसाधिवदनम्" क० । "अविशेषोपदेशात्" १५सू० । "अविशेषेण ह्यनारभ्य कश्चिदिष्टकाविशेषमेते श्रूयेते' क० । "विशेषमनुपादाय सामान्येन तयोरुपदेशात् विधा-नात्" संप० । "अनाम्नातप्रतिषेधाच्च" १६सू० । "यत्र नैर्ऋत्यादिषु नाम्नायेते नित्ये संहितायां न पठ्येते तत्रा-पि प्रतिषेध श्रूयते (७,१,१ १४) सादनसूददोहसाधि-वदतीति' "अत प्रतिषेधात् सर्वत्राप्येते भवत" सप० । "एकनोदनास्वेकदेशासु तन्त्रेण" १७सू० । एकनोदना अपस्या वपस्या इत्येवमादि, एकनोदना अपि यद्येकदेशा भवन्ति, यथा तासामेव देशभेद अपस्या पञ्चपञ्चानूकान्ते षु'त (१७,६,२) अतस्य सत्यमुक्त नित्ये, देशभेदे त्ववति तन्त्रेणेति"क० । "एकनोदना एक विधिवाक्य यासा ता । एको देश एकमुपधानस्थान यासा ता तत्र तन्त्रेण नित्ये भवत" सप० । "आत्मनि यजुष्मती' १८ सू० । "इष्टका उपदधाति न पक्षपुच्छयो" क० (८,७,२ २) । लोकम्पृणासु दशसु दशसु मन्त्रो लोक पृणेति (१२, ५४) । (९,९,२१२) १९सू० । 'आसा-दन च" २०सू० । लोक पृणानाम्, सूददोहसाधिवदनं तु भवति अप्रतिषिद्धत्वात्" क० । 'प्रतिचिति द्वे-द्वे उप-धाय' २१सू० । लोक पृणामन्त्रवचनम्, पुनर्दशसु दशसु । "प्रथम द्वे द्वे उपधाय ततो दश-दशोपदध्यात्" संप० । "अयुग्मगणमध्यमानूके" २२सू० । अयुग्मो य इष्टकागणो

यथोपास्थिता । तत्र तासा मध्यमानूके उपधेये" क० । "त्रिपञ्चसप्तादिगणा" सप० । "एका च" २३सू० । "या चैकेष्टका साप्यनूक एव, यथा विश्वज्योतिर्हि यजु-ष्मत्येवमादि" क० । "अभितो युग्मा" २४सू० । "अनूकमभि तोऽधोऽधिकया युग्मा उपधीयन्ते' क० । "दक्षिणौ वर्गौ पूर्वापरे' २५सू० । "यत्र पूर्वापरइति देशव्यपदेश तत्रोदगन्तगणा इष्टकावर्गा उपधीयन्ते' क० । "ति र्यगनूकमभितोऽन्यथायाधिके पूर्वापरे देशे इष्टकाना वर्गा समूहा उदगन्तगणा उपधेया" सप० । "प्राञ्चौ दक्षिणोत्तरे" २६सू० । 'यत्र तु दक्षिणोत्तरव्यपदेश तत्र प्रागन्तगणा इति" क० । "प्रागनूकमितोऽन्ययाया-धिके दक्षिणोत्तरे प्राञ्च प्रागन्तगणा उपधेया" सप० । "भिन्नकपालयोरचयनम्' (८,७,२ १६) २७सू० । "दीक्षाणामुत्तमेऽहनि वेद्यग्निमानम्" २८सू० । "कर्तव्यम्"क० । "उत्तमस्याने,धंव्यामेन गार्हपत्यस्य परि लिखति' २९सू० । "मण्डलमिति शेष' क० । "मण्ड लाद्वा प्रक्रमणमन्त पात्यस" ३०सू० । "पूर्वार्धाद्व्यामस्य त्रीन् प्राच प्रक्रमान् प्रक्रामतीति वचनात् (१०,२,२,१) । 'पूर्वाधादेव व्यामस्य प्रक्रमणम् न मण्डलात् प्रक्रमणमनग्नौ चरितार्थम्" क० । "सावधारणे, मण्डलादेवान्त पात्यस क्रमणम् न पूर्वार्धात् स्मात्" सप० । 'पश्चाद् प्राक्स्था-त्वादमात्रे चित्यस्य" ३१सू० । यूपावटे भव गर्तं यू-पानस्य तस्मात्पश्चात् पश्चालोकनात्रे चित्यस्याग्निक्षेत्रस्य स्थान भवति" सप० । 'यजमानेनोर्ध्वबाहुप्रपदोच्छ्रि-तेन समस्थितेन वा" ३२सू० । (१०, २,२,६) । "प्रपदोच्छ्रित पादाग्रे व्यवस्थित समस्थित प्रसिद्ध एव, तत्क्रियायामोदितत्वात् प्रक्रमणवदध्वर्युर्मा भूदिति यजमानग्रहणम्' क० । ७कण्डिका ।

"द्विपुरुषया रज्ज्वा मित्वा" १सू० । "द्विपुरुषा रज्जु मित्वेति निगदे व्याख्यातम्" । "उभयत पाशाम्" २सू० । "मध्य लक्षणम्" ३सू० । "अभितोऽर्धपुरुषयोश्च" ४सू० । "मध्य मात्रलक्षणात् पुरुषपञ्चमे" सप० "अर्धे च" ६सू० । "पुरुष-पञ्चमस्यार्धे' क० । "चतुष्टयामायस्य पाशयो शङ्कू मध्ये ऽर्धपुरुषयोश्च" ७सू० । "पाशावुन्मुच्यार्धपुरुषीययो प्रतिमुच्य दक्षिणायाम्य मध्यमे मितोद करोति" ८सू० । "गर्तम्" संप० "उन्मुच्य पाशावेक मध्यमे प्रतिमुच्य दक्षिणाधिमितोदमायस्य मध्यमे शङ्कु "९सू० । 'तावन्, पाश प्रतिमुच्य पूर्वार्धे च दक्षिणायस्य मध्यमे शङ्कु,

१०सू० । "पश्चार्द्धपुरुषे च" ११सू० । "उन्मुच्य पूर्वार्द्धात् पश्चार्धे प्रतिमुच्य दक्षिणायस्य मध्यमे शङ्कु" १२सू० । "अभितोऽर्धपुरुषयोश्च" १३सू० । "एवमुत्तरोऽन्त" १४सू० । "दक्षिणे पार्श्वे पूर्ववदायस्य पञ्चमभागीये शङ्कु"१५सू० । "तस्मिन् पाशं प्रतिमुच्य पूर्वे चार्धपुरुषीये पञ्चमभागीयार्धपुरुषीययोः सन्निपात्य तस्मिञ्छङ्कु" १६सू० । "एवं पश्चात्"१७सू० । "एवमुत्तरं पक्षं" १८सू० । "तथा पुच्छं वितस्त्या" १९सू० । "इच्छन् पक्षपुच्छाप्ययेषु चतुरङ्गुलचतुरङ्गुलं सङ्कर्षति विकर्षत्यन्ते"२०सू० । "यत्र पक्ष आत्मानमप्येति स पक्षाप्ययः एवं पुच्छाप्ययः । अप्ययेषु पक्षयोः पुच्छस्य च आत्मसम्बन्धिसमीपे चतुरङ्गुलं चत्वारि-चत्वार्यङ्गुलान्युभयोः पार्श्वयोः सङ्कर्षति सङ्कोचयति, तथा अन्ते पक्षपुच्छप्रान्ते उभयोः पार्श्वयोः चतुरङ्गुलं विकर्षति विस्तारयति" कर्क० । "पञ्चारत्निः पुरुषो दशपदो द्वादशाङ्गुलं पदं प्रक्रमस्त्रिपद समविभक्तस्य" २१सू० । "पञ्चारत्नयो यस्य सः पञ्चभिरत्निभिः पुरुषः दशभिः पदैः पुरुषो द्वादशभिरङ्गुलैः पदम् इत्येवमर्थो न भवति इत प्रागरत्न्यादीनां लक्षणस्यानुक्तत्वेनासिद्धत्वात्, अतश्चैवम् पुरुषस्य समविभक्तस्य यः पञ्चमो भागः सोऽरत्निः तस्य दशमो भागः पदम्, पदस्य द्वादशो भागोऽङ्गुलम् त्रिभिः पदैरेकः प्रक्रम इति तु भवति पदस्य सिद्धत्वात्" क० । "परितत्य रज्ज्वा सहितं बहीरज्ज्वेकषष्टे शते परिश्रितो मिनोति" २२ सू० । "रज्ज्वा परितत्य सर्वतोवेष्टयित्वा रज्ज्वावहिर्भागे सहितं रज्जुसङ्गतं यथा भवति तथा एकषष्ट्यधिके द्वे शते परिमिनोति" क० "चतुर्णवतानि वा त्रीणि" २३सू० । चतुर्नवत्यधिकानि त्रीणि शतानि" क० । "ऊर्ध्वा शर्करा खाते" २४सू० । "उत्तरेषु पुरुषीयेष्वेकशतविधात्" २५सू० । "उत्तरेषु अष्टविधादिषु चयनेषु आ एकशतविधात् एकशतविधचयनं यावत् एकाधिकशतपुरुषात्मकपञ्चमचतितमचयनपर्यन्तम् पुरुषीयेण एकैकपुरुषवृद्ध्या अग्निमानं भवति तस्माद् सप्तविधमेव प्रथमं विदधीतेति" (१०,२,२,१८) क० "यथाग्निर्वेदीष्टकाप्रमाणम्"२६सू० । वेदिश्च इष्टकाश्च वेदीष्टकाः तासां प्रमाणं वेदीष्टकाप्रमाणम् तद्यथाग्निं भवति, अग्निमानमनतिक्रम्य यथाग्नि, यथाग्निचितस्य प्रमाणं वर्द्धते तथा वेदिप्रमाणं वर्धते इष्टकाप्रमाणं च वर्द्धते, न हि वेदिवृद्धिं विना तन्मध्ये वर्धितस्याग्नेर्मानं सम्भवति, नापि इष्टका न वर्धिता वर्धितमग्निचेतं पूरयितुं शक्नुवन्ति, अतो युक्तमुभयोर्वृद्धि"क० । "अन्तःपात्यगार्हपत्ययोरिच्छन्" २७सू० । "पूर्वार्धाद्यामस्य त्रीन् प्राच स वेद्यन्तं प्रक्रम प्रक्रमति" (१०,२,३,१) य प्रक्रमत्रयपरिमितो देश सोऽन्तःपात्य उच्यते, तस्मान्न पात्यस्य गार्हपत्यस्य गार्हपत्यचितेश्च इच्छन् इच्छया वृद्धिं कुर्यात् इच्छया न कुर्यात् तदेकउत्तरा" श्रुतेः (१०२,३,६) क० । "उत्तरवेदस्यापरस्याः स्रक्त्यां परिश्रितो मिनोति जङ्घामात्रीं नाभिमात्रीं मुखमात्रीमिति" २८ सू० । "अग्नेरुत्तरपक्षस्यापरस्रक्त्या पश्चिमकोणे एवम्प्रमाणास्तिस्रः परिश्रितो मिनोति" क० । अत्र सर्वत्र चतुरङ्कं शतपथब्राह्मणाध्यायादि बोध्यम् । त्रिभिः कातीयश्रौतसूत्राध्यायादि द्वाभ्यां शुक्लयजुर्वेदाध्यायादि तेन तत्तत्स्थाने अत्रोक्तमतोकयुक्तमन्त्रमूलवाक्यादिकं द्रष्टव्यमिति सङ्केतज्ञापनम् । विस्तरस्तु शतपथब्राह्मणे लिखिताङ्क सूचिताध्यायादौ दृश्य ।

**इष्टकापथ** न० इष्टकायामपि पन्था यस्य अच् समा० इष्टकापथं यस्याधोमुखवायुकरणात् । १वीरणमूले । इष्टकया निर्मितः पन्थाः अच् समा० । इष्टकानिर्मिते ऽपथि पु० ।

**इष्टकाव** त्रि० इष्टका अस्त्यर्थे व । इष्टकायुक्ते ।

**इष्टकावत्** त्रि० इष्टका+चतुरर्थ्यां मध्वादि० मतुप् मस्य व । इष्टकासन्निकृष्टदेशादौ स्त्रियां ङीप् ।

**इष्टगन्ध** पु० कर्मधा० । १सुगन्धौ । इष्टो गन्धोऽस्य । २सुगन्धिद्रव्ये त्रि० ३वालुकायां न० मेदि० ।

**इष्टतम** त्रि० अतिशयेन इष्ट+तमप् । १प्रियतमे २अतिशयाभीष्टे "यद्यदिष्टतमं लोके"गीता । द्वयोर्मध्ये अतिशयेन इष्ट तरप् । इष्टतर द्वयोर्मध्ये अतिशयेन इष्टे त्रि० ।

**इष्टदेव** पु० इज्यते यज-कर्मणि क्त कर्मधा० । १पूज्ये देवे तन्त्राद्युक्तविधानेन यस्य मन्त्र उपासनतया स्वीकृतस्तस्मिन् २देवे च । इष्टदेवतादयोऽप्यत्र स्त्री ।

**इष्टनि** त्रि० यज-तनिक् सम्प्र० इष-तनिक् वा । १यष्टव्ये २एष्टव्ये च । "तुविग्रेभिरग्नस्तीपूर्वराखिष्टनिरार्त्तना सिष्टनि" ऋ० १,१२७,६ । "इष्टनिरेष्टव्योयष्टयो वा"भा० । [व्याकरणोक्तस्वरानुसारेण प्रयोगे ।

**इष्टप्रयोग** पु० इष्टस्य शिष्टप्रयुक्ततया निश्चितस्य प्रयोगः ।

**इष्टवत्** त्रि०यज-इष वा क्तवतु स्त्रियां ङीप् । १यजनकर्त्तरि २इच्छायुक्ते च । "इष्टं वेदाध्ययनादि साध्यतयाऽस्त्यस्य मतुप् मस्य व । ३इष्टकर्म्मकर्त्तरि । वेदे तु पूर्वपददीर्घ दृश्यात् "इष्टावन्तोरातिषाचोदधाना" ऋ० १८,२

२० । "इष्टिभिः पशुबन्धैश्च चातुर्मास्यैस्तथैव च । अग्निष्टोमादिभिर्यज्ञैर्येन चेष्टं स इष्टवान्" व्यासोक्ते ४इष्ट्यादिकारिणि त्रि० । स्त्रियां ङीप् ।

इष्टव्रत त्रि० इष्टं व्रतं यस्य । १व्रतयोग्ये इष्टानि कल्याणानि व्रतानि कर्म्माणि सिध्यन्ति येन । २इष्टकर्म्मसाधने यज्ञादौ "इष इष्टव्रता अकः" ऋ० ३,५९,९ । "इष्टानि कल्याणानि व्रतानि कर्म्माणि याभिः सिध्यन्ति ता इव अन्नानि" भा० ।

इष्टसाधन न० ६त० । अभीष्टसाधने इच्छाशब्दे उदाहृतिः । ततो भावे त्व । इष्टसाधनत्व तद्भावे न० । तल् । इष्टसाधनता तद्भावे स्त्री ।

इष्टा स्त्री इज्यतेऽनया यज–करणे वा० क्त । शमीवृक्षे राजनि० तत्समिधा होज्यते इति तस्या तथात्वम् कर्म्मणि क्त । अभिमतायां स्त्रियाम् ।

इष्टाकृत त्रि० अनिष्टमिष्टं कृतम् इष्ट+च्व्यर्थे डाच् कर्म्मणि क्त । इष्टीकृते "सतामिष्टाकृतं नाम पूर्वापरसङ्कलितम्" रामा० ।

इष्टादि पु० "इष्टादिभ्यश्च" पा० सूत्रेण तत्तद्गमनेनेत्यर्थे विहितेनिप्रत्ययनिमित्तभूतशब्दसमूहे स च गणः । "इष्ट पूर्त्त उपसादित निगदित परिगदित परिवादित निकथित निषादित निपठित सङ्कलित परिकलित संरक्षित परिरक्षित अर्च्चित गणित अवकीर्ण आयुक्त गृहीत आम्नात श्रुत अधीत अवधान आसेवित अवधारित अवकल्पित निराकृत उपकृत उपाकृत अनुयुक्त अनुगणित अनुपठित व्याकुलित" आकृतिगणत्वेन "इठेन पठितो माखिन् सम खेवठ" नैष० ।

इष्टापत्ति स्त्री ६त० कर्म्मधा० वा । १इष्टस्यापत्तौ इष्टावाप्तौ च वादिना दर्शितापत्तेः प्रतिवादिनः इष्टत्वेऽपि सा भवति । "इष्टापत्तौ दोषान्तरमाह" जग० ।

इष्टापूर्त्त न० इष्टं च पूर्त्तं च द्वयोः समाहारः पूर्वपददीर्घः । इष्टशब्दोक्ते अग्निहोत्रादौ "वापीकूपतडागादिदेवतायतनानि च । अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते" इति मनूक्ते पूर्त्ते च । "वितथन्तु वदेयुर्ये धर्मं प्रह्लाद पृच्छते । इष्टापूर्त्तञ्च ते घ्नन्ति सप्त सप्त परावरान्" भा० स० ६६अ० । "इष्टापूर्त्तेन च तथा वक्तव्यमनृतं न तु" भा० आ० प० १९५अ० । "इष्टापूर्त्तफलं न स्यात् शिष्यो न गुरुर्भवेत्" भा० व० २२अ० । क्वचित् इतरेतरद्वन्द्वोऽपि द्वि०व० । "इष्टापूर्त्ते संसृजेथामयञ्च" यजु० १०,५४ ।

इष्टार्थोद्युक्त त्रि० इष्टे अर्थे उद्युक्तः । उत्सुके इष्टार्थं लाभाय तत्परमात्रे कालायहिण्यो ।

इष्टाश्व त्रि० इष्टोऽश्वोयस्य । १प्रियहये २राजभेदे पु० । "किमिष्टाश्व इष्टरश्मिरेत" ऋ० १,१२२,१३ । "इष्टाश्व एतन्नामको राजा" भा० ।

इष्टि स्त्री यज–क्तिन् । १यागभेदे । स च कात्या० श्रौ० सू० दर्शितः "कर्णशब्दो द्रव्यदेवतायुक्तो यजति" । ४,३,१,सू० "क्रियाशब्द आख्यातप्रत्ययान्तो निर्वपत्यादिशब्दो यजति प्रश्रेतव्य यागो वेदय इत्यर्थः न निर्वापावभासादिरूपसंस्कारमात्रविधायकः यजतिशब्दोऽत्र तदर्थयागपरः । एवं यागत्वे सिद्धेऽपि इदं सन्दिह्यते सौर्यं चरुं निर्वपेदग्निषोमीयमजमालभेतेत्यादौ किं यागमात्रं भवति उत धर्मा अपि भवन्तीति यदा च धर्मा भवन्तीति पक्षस्तदापि सन्देहः किं पूर्णाहुतिसम्बन्धिनो धर्मा भवन्ति उताग्निहोत्रसम्बन्धिन, आहोस्विद्दर्शपूर्णमासयोः, अथवा ज्योतिष्टोमस्येति, अथवा दर्शपूर्णमासयोरेवेति, । धर्माणामनाम्नानाद्यथाश्रुतं यागमात्रं कर्त्तव्यमिति प्राप्ते आह" क० "दर्शपूर्णमासधर्मा इष्टिपशुषु सामर्थ्यात्" २सू० । सौर्यादौ धर्मा भवन्ति न यागमात्रम् एवमेतानि विधिवाक्यानि समर्थान्यर्थवन्ति सप्रयोजनानि भवन्ति अन्यथा साकाङ्क्षत्वादर्थप्रतिपादनाभावेन निरर्थकान्येव स्युः । तथा हि सौर्येण यागेन ब्रह्मवर्चसं भावयेदित्यत्राख्यातप्रत्ययवृत्ती भावना विधीयते किम्, केन, कथमिति, किमसौ ब्रह्मवर्चसम्, तत्र केनाय सौर्येणेति, कथमस्तु वाक्यमध्ये नास्ति तेन कथं भावयेदिति वाक्यं कथमपेक्षम् । यत्र सापेक्षं भवति तदध्याहारेणानुषङ्गेण वा पूरयित्वा निराकाङ्क्षं कर्त्तव्यम् । अन्यथा तस्यानर्थक्यापत्तेः न च वेदे मात्रामात्रस्य तदिष्यते तस्मादत्र निराकाङ्क्षीकरणाय सिध्यन्वेतिकर्त्तव्यतापरपर्याय कथम्भावोऽत्र कश्चिदनुषङ्गणीय इति सिद्धे आह "दर्शपूर्णमासधर्मा इष्टिपशुषु सामर्थ्यादिति" सर्वासु इष्टिषु अग्नीषोमीये पशौ च दर्शपूर्णमासयोरेव धर्मा भवन्ति सामर्थ्यात् पूर्वोक्त एव हेतुरत्रापि योज्यः । दर्शपूर्णमासधर्मा एव सौर्यादिविधीनां शेषीभवितुं समर्थाः यथा पुरोडाशादयो ह्यवघातादिभिरेव सिध्यन्ति नाभिमर्शादिभिरिति । इष्टिपशुष्विति इष्टिषु सर्वासु अग्नीषोमीये पशौ च पश्वन्तरेषु अग्नीषोमीयधर्मा भवन्ति" क० । इत्यारभ्य पशुविधाया सूत्रकारेण उक्तास्ता विस्तरभयान्नेह । तथा च दर्शपौर्णमासेतिकर्त्तव्यताको यागभेद इष्टिश-

न्यया ।तत्करणप्रकार आश्वला० श्रौ० सूत्रे दर्शितो “यथा पौर्णमासेनेष्टिसोमा उपदिष्टा ” । २,१,१, प्रथमेऽध्याये दर्शपूर्णमासौ व्याख्यातौ विध्यन्तरसहितौ। उत्तरस्मेष्टय पशवश्च वक्ष्यन्ते विध्यन्तरविहिता । तेषां विध्यन्तरापेक्षास्ति” “अतोऽयमर्थः सूत्रस्य, यस्मिन्शास्त्रे उपदिष्टा इष्टय पशवश्चापि अविशेषिताज्यभागास्ते सर्वे वार्त्रघ्नाज्यभागा इति”। “पौर्णमासेनेत्यस्यायमर्थ , पौर्णमासेन व्याख्याता इति वार्त्रघ्नाज्यभागा इत्यथ । तेन समाम्नातानामिष्टीनां पशुनाञ्च अन्यदेवतागमभावः सिद्धो भवति। तथा चोक्तमिष्ट्ययनप्रकरणे “अनमाम्नातास्तर्हि तन्त्रविकार”नारा० इत्तिः तस्य कालस्तत्रैव दर्शित’ यथा “तैरमावास्याया पौर्णमास्यां वा यजेत” सू०२,१,२,“तैरिष्टिपशुसोमैरमावास्यायां पौर्णमास्या वा याग कर्तव्य इति इष्टिपशूनां प्रकृतिप्राप्त एवायं कालः पुनर्विधीयते द्व्यङ्गकालता निवर्त्य सद्यस्कालताप्राप्त्यर्थम्। किञ्च दर्शप्रकृतेरमावास्या पौर्णमासप्रकृते पौर्णमास्येव नियम निवर्त्य अनियमेन उभयकालताप्राप्त्यर्थम् । प्रकृत्यविरोधात् पर्वसन्धावुपोषणाद्वे विकृतिः कर्तव्या । यदाह्न पूर्वभागे पर्व स्यात् तदा प्रकृति कृत्वा विकृति कार्या । यदा परभागे रात्रौ वा तदा विकृति कृत्वा प्रकृति कार्येति सोमस्यायमप्राप्तः कालो विधीयते । इष्ट्यादिपदसम्बन्धादेव यजेतेत्यपि सिद्धे यजेतेतिवचन सोमस्य याग एवानयो कालयो नाम्यादन्योयो नाम्यत् दीक्षादीति”इत्ति ।“राजन्यस्याग्निहोत्र जुहुयात् ’ ३सू०। “क्षत्रियस्याग्निहोत्रहोम पर्वणोरेव कर्तव्यो नान्यस्मिन् काल इति यमव्याह द्वयोःप्रथमयोरेव कालयोरग्निहोत्र जुहुयात् नान्यस्मिन्नित्यवगम्यते ।तत्र विशेषमाह”इत्ति।“तपस्विने ब्राह्मणायेतर’ कालं भक्तमपकरेत्”४सू०।“तपस्वी कर्मनिरतस्तस्मै ब्राह्मणाय अतपस्विनेऽपि ब्राह्मणायैव दद्यात् न जात्यन्तराय तपस्विनेऽपीति । इतर कालमिति, इतरेषु सर्वेष्वग्निहोत्रकालेष्वित्यर्थः । भक्तमपकरेत्, भक्त पक्वोदन पकाममपकरेत्, दद्यात् । एतदुक्त भवति । राजन्यस्ययो पर्वण्यग्निहोत्रकालद्वयं वर्जयित्वा इतरेषु कालेषु ब्राह्मणायोदनो दातव्योन होम कर्तव्य इति । अग्निधारणन्तु क्रियत एव” इत्ति । ततोऽग्न्याधान प्रसङ्गादुक्त तत्राधानशब्दे पूर्वं दर्शितम् अन्वाधानोत्तर कर्त्तव्यमाह ‘यदि लिष्टवत्स्तद्धु’ २,१,१८, सू० “अस्मीनेवेति वाक्यशेष । यद्यनधिकारत्वादाधानविधेर्विनियोजकस्य प्रकरणस्य अभावा-

सम्भवादाधानाङ्गमिष्टयो न स्युः, इष्टीनास्त्वनधिकारत्वादिष्ट्यङ्गमाधान न स्यात्, तथापि न कश्चिद्दोष , अन्यथ स्तैनैवोभयोरप्यनुष्ठानसिद्धे ” । “अस्मिन्नर्थे सूत्रयोजना । यद्यप्यग्निष्टोमामाधानाङ्गता स्यात् तथापि आहवनीयाद्यग्निसम्बन्धात् तानेवाग्नीनिष्टयस्तनुयु विस्तारयेयु कुर्यु साधयेयुरित्यर्थ । तनुशब्दस्तु साधनादिषु विशेष दर्शयति। आधानेऽग्नीनां साध्यत्वेन सम्बद्धानामेव साध्यत्वम् । इष्टिषु साधनत्वेन सम्बद्धानामपि कल्पनागौरवभयात् साध्यत्वमिति विशेष स्तद्गुणीम एव यद्याधानेनेष्टिभिश्चान्वय एवायत• साध्या इत्यनधिकाराद्या कथमनुष्ठानसिद्धिरिति न्यायविदामेष उपालम्भो नास्माकम् । अस्माक तु साध्यसाधनसम्बन्धेऽवगते तदर्थिना काष्ठत्वेनावगतानां ब्राह्मणादीनां कर्यस्त्वदधिकारकल्पनयानुष्ठानसिद्ध । अथवाऽनधिकारायामनन्यशेषायामपि तत्साधनसाध्यरूपेणोपकारकत्वे न कामं श्रुतिप्रयुक्तयं वविधानामनुष्ठानसिद्धिरित्यलमतिविस्तरेण” नारा०इत्ति । “‘प्रथमायामग्निरग्नि पवमान ” १६ सू०। “प्रथमायामिष्टौ द्वे देवते । अग्नि प्रथम केवल । द्वितीय पवमानगुणकोऽग्निः । केवलस्याग्नेर्नित्ये एव । “अग्न आयूंषि पवसेऽग्ने पवस्व स्वपा ” २०सू०।“एते द्वितीयस्य पवमानगुणकस्य” इ०। ‘स हव्यवाडमर्त्योऽग्निर्होता पुरोहित इति स्विष्टकृत स्याज्ये इत्युक्त सौविष्टकृतौ प्रतीयात्” २१सू० ।“सौविष्टकृत्योर्याज्यानुवाक्ययोर्ष्वोरनेन सयाज्ये इति संज्ञा विधीयते” इ० । “सर्वत्र देवतागमे नित्यानामपाय ” २२ सू० । “सर्वत्रेति प्रकरणान्तरेऽपीति दर्शयति । देवतागम इत्यत्र समासनिर्देशस्य तस्याद्देवताया देवतयोर्देवतानां वा आगम इत्येव भवति । नित्यानां प्राकृतीनामित्यर्थ । अपाय उद्धार इत्यर्थ । एतदुक्त भवति। विकृतौ देवताया एकस्या आगमे द्वयोर्बह्वीनां वा अनागमेऽपि प्राकृतीनां सर्वासामुद्धार इति स्या पुनर्विकृतौ इष्टिनोदना कृत्वा देवता न विदधाति, तत्र नोद्धार प्राकृतीनाम् । तत्रता एव देवता भवन्तीत्यर्थ । यथा गदित सोमेन पशुना इष्ट्वा वा इत्यादौ” इ०।‘या. स्विष्टकृतमन्तराज्यभागौ च तासतृस्थाने ’ २३सू०।“नित्यानामपाय उक्त । तत्र कि सर्वा नित्या उद्धर्तव्या उत काश्चिद्देवतास्तेत स यय निवर्तयति या आज्यभागौ स्विष्टकृत चान्तरा देवता यष्टव्यास्ता उद्धर्तव्या । या पुनर्विकृतौ विहितास्तास्तत्स्थाने उ-

इष्टियाजुकः इष्टियजनशील इष्टिशब्देन काम्या इष्टयः शातपथप्रसिद्धाः ताच्छील्ययोगात्काम्येष्टि यजनप्रधानो न स्यात्” भा० ।

**इष्टीकृत** त्रि० अनिष्टमिष्टं कृतम् इष्ट+च्वि–कृ–कर्मणि क्त । अनिष्टे इष्टे कृते । अनिष्टैरिष्टैः कृता । इष्टिभेदे सत्रे न० । “सत्रमिष्टीकृतं नाम समुपास्ते महातपा” भा०व०२५८अ०

**इष्ट** स्त्री इष–भावे क्तिन् । इच्छायाम् उणादिकोषः ।

**इष्ट्ययन** न० इष्ट्यायनं गमनं यत्र । “योगविशेषाचरणभेदे” इष्ट्ययनञ्च आश्व० श्रौ० २,१४, सूत्रादौ दर्शितं यथा “अत ऊर्द्ध्वमिष्ट्ययनानि” १। “अत ऊर्द्ध्वं यानि वक्ष्यन्तेऽस्मिन् अध्याये तानि इष्ट्ययनसंज्ञानीति विद्यात् । इष्टिभिरयनं गमनं येषु कर्मसु तानीष्ट्ययनानि” नारा०वृ० । “सांवत्सरिकाणि” २सू० । “संवत्सरेण क्रियन्ते स वत्सरं स क्रियन्त इत्युभयथा विग्रहः कर्तव्य, दाक्षायणयज्ञचातुर्मास्यानामनेकसांवत्सरिकत्वसिद्ध्यर्थम् वृ० । “तेषां फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा प्रयोग” ३सू० । “फल्गुनीभिर्युक्ता पौर्णमासी फाल्गुनी, चित्रया युक्ता चैत्री । तेषां सांवत्सरिकाणां आगन्तुकानामस्मिन् काले प्रारम्भः कार्यः । दर्शपूर्णमासगुणविकाररूपाणां दाक्षायणयज्ञादीनामारम्भे कालनियमो नास्तीति तेषामित्युच्यते” नारा०वृ० । “तुरायणम्” ४सू० । “तुरायणनामेष्ट्ययनमुच्यते” वृ० । “अग्निरिन्द्रो विश्वे देवा इति पृथगिष्टयोऽनुसवनमहरहः” ५सू० । “अग्निदेवत्या इन्द्रदेवत्या विश्वदेवदेवत्या चैतास्तिस्र इष्टयः त्रिषु सवनेषु यथाक्रमेण एकैकेष्टि कार्याऽहन्यहनि । अहरहरिति वचनं पौर्णमास्यमावास्ययोर्बाधनार्थम्” वृ० । “एका वा त्रिहविः” ६सू० “एताभिरेव देवताभिर्युक्ता एकैवेष्टिस्त्रिहविष्काऽहन्यहनि प्रातःसवन एव कर्त्तव्या वेत्यर्थः” वृ० । “इडादधोनामेष्ट्ययनं तत्र देवतादि २।१४।१–१०” द्यावापृथिव्योरयनं नामेष्ट्ययनं तत्र देवतादि २,१४,१२,१५” “चातुर्मस्यानि इष्ट्ययनानि तद्देवतादि २,१५,१ सूत्रादौ । एवमन्यान्यपि इष्ट्ययनकर्म्माणि आकरे दृश्यानि

**इष्ट्वा** अव्य० यज–क्त्वा । १यागं कृत्वेत्यर्थे । “अश्वमेधेन चेष्ट्वा” मच्छकटिकम् । इष–क्त्वा । २अभिलष्येत्यर्थे च ।

**इष्म** पु० इष्यति इष्यतेऽनेन वा इष–गतौ इष–इच्छायां मक् वा । १वसन्तकाले २कामे च भावे मक् । ३गतौ । तत अस्त्यर्थे इनि । इष्मिन् गतियुक्ते त्रि० स्त्रियां ङीप् । “ते वायोमनं इष्मिणो अभीरव” ऋ० १,२७,६ । “इष्मिणः गतिमन्त” भा० । इष–इच्छायां कर्म्मणि मक् । ४इष्यमाणे अन्नादौ अस्त्यर्थे इनि अन्नादिमति “हिरण्यया स्वायुधास इष्मिण” ऋ०५,८, ७५ । इष्मिणोऽन्नवन्तः” भा० ।

**इष्य** पु० इष्यते इष–क्यप् । वसन्ते ऋतौ हेम० । तस्य ऋतूनां मध्ये इष्टतमत्वात्तथात्वम् “ऋतूनां कुसुमाकर” गीतायां तस्य भगवद्रूपत्वोक्तेः इष्टत्वम् ।

**इष्व** पु० इष–सर्पणे वन्–गुणाभाव । आचार्य्ये उद्देशार्थम् प्रसृप्यमाणत्वात्तथात्वम् । उज्ज्वलदत्तस्तु ईष दाने इत्यस्यैव रूप दीर्घादि इत्याह । उपदेशदानाच्च तस्य तथात्वम् ।

**इष्वग्र** न०६त० । वाणाग्रे । गहादिपाठात् भवादौ छ । इष्वग्रीय तद्भवादौ त्रि० । [इष्वनीकीय तद्भवादौ त्रि० ।

**इष्वनीक** न० ६त० । वाणावयवे । गहा० भवादौ छ ।

**इष्वसन** पु० इषवोऽस्यन्ते क्षिप्यन्तेऽनेन अस–क्षेपे करणे ल्युट् ६त० । धनुषि । “राममिष्वसनदर्शनोत्सुकम्” रघु ।

**इष्वास** पु० इषवोऽस्यन्तेऽनेन अस–क्षेपे करणे घञ् ६त० । १धनुषि “अत्र शूरा महेष्वासा भीमार्ज्जुनसमा युधि” “काश्यश्च परमेष्वासः शिखण्डी च महारथः” गीता । अर्द्धर्चादिपाठात् क्लीवत्वमपि । इषून् अस्यति अस–अण् उप०स० । २शरक्षेपके त्रि० (तीरन्दाज) मेदि० ।

**इस्** अव्य० इं कामम् स्यति सो–क्विप् नि० आलोप । १सन्तापे २कोपे ३दुःखानुभवे च शब्दर० ।

**इह** अव्य० इदम्+ह इशादेश । अस्मिन् काले देशे दिशि वा १इत्यर्थे “एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन” श्रुतिः “इह जन्मनि जन्मान्तरे वा” वे०स० । “नेह नानास्ति किञ्चन” “नेहाभिक्रमनाशोऽस्ति” गीता । “सर्वमिदमिह भूतं भूतगव्या जगत्या” नैष० । प्रथमार्थे ह । २अनुभूयमाने लोके इहामुत्रार्थफलभोगविरागः वेदा० सा० च इहकाल । इह भवः विदितो वा कथा० ठञ् । ऐहिक इहभवे इहविदिते च त्रि० । “ऐहिकतत्स्मृत्वपते दोषादिनिषेधात्” मु०त०रघु० । [मानकाले ।

**इहकाल** पु० इदम्+प्रथमार्थे ह इह कर्म० । एतत्काले वर्त्त-

**इहतन** त्रि० इहभव ट्युल् तुट् च । इहभवे स्त्रियां ङीप् ।

**इहत्य** त्रि० इह भव इह+त्यप् । इहकालादिजाते । स्वार्थे कन् । इहत्यक तत्रार्थे स्त्रियां नित्यमित्त्वम् । इहत्यिका

**इहद्वितीया** स्त्री मयू०स० । अत्रत्यद्वितीयायाम् ।

**इहपञ्चमी** स्त्री । मयू०स० । अत्रत्यपञ्चम्याम् ।

**इहल** पु० इह भव लाति ला–क । चेदिदेशे त्रिका० तद्वासिनि ब०व० ।

**इहलोक** पु० इदम्–प्रथमार्थे ह कर्म्म० । एतल्लोके अनु-

कृतानां प्राकृतीनां स्थाने भवन्ति" इति वचनात्, तद्धर्मिकाश्च भवन्तीति गम्यते" इ०। "एष समानजातिधर्मः" २४सू०। "योऽयमतिदिष्टो विधिर्देवताभ्योऽन्यत्रापि स समानजातीयेषु भवति । समानजातीय एककार्ये इत्यर्थः" इ०। "द्वितीयस्यां दधन्वान् अग्निं पावकोऽग्निः शुचिः स नः पावकदीदिवोऽग्ने पावकरोचिषाग्ने शुचिव्रततम उदग्ने शुचयस्तव" २५ सू०। "एष पावकगुणकोऽग्निः, अपरः शुचिगुणकः । 'साक्षात् विश्वा अभियुजोऽग्निर्मूर्द्धा पुरोहितमिति संयाज्ये तृतीयस्यां सामिधेन्यावावपते प्रागुत्तमायाः पृथुपाजा अमर्त्य इति द्वे" २६ सू०। "आवपते इति वचनात् अधिके एते सामिधेन्यौ भवतः । प्रथमायां द्वितीयस्यां तृतीयस्यामिति वचनात् यस्यामिष्टौ यत् तन्त्रं विहितं तस्यामेकदेवतायामपि तत् तन्त्रं भवति न यथोक्तनानादेवतायामेवेति" इ०। "धाय्ये इत्युक्ते एते प्रतीयात् वृधन्वन्तावग्निना रयिमश्नवदयस्मानो घमीयच्छेति । अग्नीषोमाविन्द्राग्नी विष्णुरिति वैकल्पिकानि" २७सू०। "त्रयाणामेको गृह्यते" इ०। "अदितिः" २८सू०। "अदितिर्याज्या, अस्या द्वे देवते" इ०। 'उत त्वामदिते सुव्रतामामृतस्य पत्नीमवसे हुवेम तुविक्षत्रामजरन्तीमुरूचीं महि महीमूषु मातरं सुशर्माणमदितिं सुप्रणीतिम्" २९ सू०। "एषा कल्पजा" इ०। "भेदो अग्न इमो अग्न इति संयाज्ये विराजावित्युक्ते एते प्रतीयादिति तिसृ" ३० सू०। "इत्येतास्तिस्र इष्टयोऽनुक्रान्ता इत्यर्थः । उक्तानुकीर्त्तनमुत्तरार्थम् । यदाद्योत्तमे वैव स्यातामाद्या वेति पक्षस्तदापि तिसृणामिष्टीनां यावत्यो देवतास्ताः सर्वा यष्टव्या इत्येवमर्थम् । आद्योत्तमपक्षे मध्यमायां ये देवते ते आद्यायामेव प्रक्षेप्तव्ये । यदा पुनराद्यैव तदा सर्वा देवता आद्यायामेव प्रक्षेप्तव्या इत्येवमर्थम्' इ०। "आद्योत्तमे वैव स्याताम्" ३१ सू०। "इष्टी इति शेषः । "आद्या वा" ३२ सू०। "आद्यैव वेष्टिर्भवतीत्यर्थः' इ०। 'तथा सति तस्यामेव धाय्ये विराजौ" ३३ सू०। "यदाद्यैव भवति तदा द्वितीयतृतीययोरपि देवतास्तत्र भवन्तीत्युक्तम् । अतस्तस्यामेव धाय्ये विराजौ भवतः । धाय्याविराजामनुप्रवेशस्य निमित्तं तृतीयस्या इष्टेर्देवतानुप्रवेश इत्येवमर्थं तथा सतीत्युक्तम्' इ०। "इतिमात्रे विकारे वैराजतन्त्रेति प्रतीयात्' ३४सू०। "पौर्णमासतन्त्रायामिष्टौ धाय्याविराण्मात्रे विकारे सति सेष्टिर्वैराजतन्त्रेति वेदितव्या' इ०।

"आधानात् द्वादशरात्रमजस्रः" ३५सू०। "अत्राधानमिष्टीनामुक्तं आधानात्प्रभृति द्वादशरात्रमजस्र इत्युक्तम् । तस्यायमभिप्रायः, यावता कर्मसमुदायेनाग्नीनां सिद्धिर्भवति तावतः कर्मसमुदायस्याधानशब्दो वाचक इति ज्ञापयितुम् । तेनाग्न्याधेये पुनराधेये चेष्टिकस्याधानस्य पक्षत्वं भवतीति सिद्धम् । आधानेनेष्टिभिश्च सिद्धाग्नयो द्वादशाहोरात्राणि सर्वे समुपेणैव धार्यन्ते । एतदजस्रधारणमग्निष्टोमपूर्व एवाधाने भवति, अग्निष्टोमस्यैवानन्तरमुच्यमानत्वात् । अनुष्ठानक्रमेणैव कर्मणां व्याख्यानमित्युक्तत्वाच्च" इति । एवमिष्टिसामान्यं प्रदर्श्य विशेषेष्टयस्तत्र दर्शिताः तत्रादौ नवशस्येष्टिः आग्रायणशब्दे दर्शिता तत्र राज्ञ एवाधिकारः तदाह्वा वर्णानामविशेषेणेतिकल्पतरौ माम्रे राज्ञो विशेष उच्यते "इष्टिस्तु राज्ञः" "सर्वेषां चैके एके सर्वेषामिष्टिरेवेति मन्यन्ते" २,८,६,७,। "श्यामाकेष्ट्यासौम्यश्चरुः स च वर्षतौ तत्र याज्यादिकं २,८,८,९,१०, सू०उक्तम् । अन्यसस्यभोजने अप्यमन्त्रादिकमुक्तम् १२,१३ । एतानित्या इष्टयः अथ काम्याः इष्टयः २,१०,१२, कलादौ । तत्र आयुष्कामेष्टिस्तत्र अग्निगुणभेदजीवातुमद्देवता २,१०,२,३,४, सू०। स्वस्त्ययनेष्टिः रथितमद्देवताका तत्र याज्यादिकम् ५,६,७, पुत्रकामेष्टिः पुत्रवद्गुणकाग्निदेवताका तत्र याज्यादि ८,९,१०, वैमृधेष्टिः विमृद्गुणकेन्द्रदेवताका तत्र याज्यादिकं १३,१४,१५, सू०। आयेष्टिरायायाच्छदेवताका तत्र याज्यादिकम् १७,१८, सू० । लोकेष्टिः पृथिव्यन्तरिक्षदेवताका तत्र याज्यादिकम् २०,२१,२२, सू० मित्रप्राप्तिकामेष्टिः अग्निसोमवरुणमित्रेन्द्रबृहस्पतिसवितृपूषसरस्वतीदेवताका तत्र याज्यादि ११,२,३,४,५ । इयमिष्टिः महावैराजीनाम्नी । अभिचारकामेष्टिः क्षुमान्वज्रीवनाम्नी शूरगुणकेन्द्रदेवताका तत्र याज्यादि ११,७,८,९ । विमतसम्प्रतिकामेष्टिः संज्ञानी नाम वसुरुद्रादिगुणकाग्निसोमादि चतुष्टयदेवताका तत्र याज्यादि १०,११ । भेदकामेष्टिः । इन्द्रामरुद्देवताका तत्र याज्यादि १२,१४,१५,१६, सू० । सम्पत्तिकामेष्टिः ऐन्द्रामारुती स सानीवत् याज्यादिकम् । १७,सू० । ग्रामभिभवमिच्छत्तिकामेष्टिः; ऐन्द्राबार्हस्पत्या तत्र याज्यादि १८,१९ सू०। पवित्रेष्टिः । अग्न्यादिदेवताका तत्र याज्यादि २,१२,१ । "वैश्वानरीं व्रातपतीं पवित्रेष्टिं तथैव च । ऋतावृतौ प्रयुञ्जानः पुनाति दशपौरुषम्"। वृष्टिकामेष्टिः कारीरी नाम सा च अग्न्यादि-

नानादेवताका अग्निदेवताका वा तत्र याज्यादि २,१२,१,२,४,५,६,७,८,९,सू० । सर्वाश्च एता दर्शपौर्णमासेतिकर्तव्यताकाः । पशुगुणके कर्म्मणि पशोरुभयतोऽन्यतरतो वा पशुकामेष्टिः सा च आग्नेयी आग्नावैष्णवी वा आश्व० श्रौ०सू० २,१,७,२,४ सू०। तस्यामितिकर्त्तव्यतायाज्यादि तदुत्तरसूत्रजातैरुक्तम्। विध्यपराधप्रायश्चित्तीष्टिः २,१०,१,सू० विध्यपराधस्वरूपकारणप्रदर्शनपूर्वक तत्करणप्रकारादि तदुत्तरसूत्रजातैर्दर्शितम् । वारुणीष्टि तत्प्रकारादि २,१२,५, प्रात कालातिपत्तौ मातरिष्टिः तत्र देवतादि २,१२,१२, आर्त्त्यांश्रुपाते च सैवेष्टि २,१२,१५ भिन्नभिन्नभेदैर्थ्य प्रायश्चित्तेष्टौ देवताभेदादि २,१२,१६, अस्य आध्यायात् सूत्रैरुक्तम् । उखासम्भरणीयेष्टि तद्देवतादि ४,१,२१ २६सू०। दीक्षाप्रयोजनेष्टि दीक्षणीया नाम तत्रदेवतादि ४,२,१,१८, सू०पर्य्यन्तेनोक्तम् । प्रायणीयेष्टि तत्र देवतादि ४,३,१सूत्रादौ। आतिथ्येष्टि तत्र देवतादि ४,५,१सूत्रादौ । उदयनीयेष्टिः तद्देवतादि ६,१४,१, सूत्रादौ उदवसनीयेष्टि तद्देवतादि ६,१४,१,२१, सूत्रादौ । अन्याः पुनराधेयेष्टिप्रभृतयोऽपि इष्टय विस्तरभयान्नोक्ताः आकरेषु द्रष्टव्याः ।

शत०ब्रा० १,६,२,१२, इष्टिकरणप्रकारविशेषो दर्शितः यथा। “स यदीष्टिं कुर्व्वीत सप्तदश सामिधेनीरनुब्रूयादुपांशु देवता यजति तद्धीष्टिरूप, मूर्द्धन्वती याज्यानुवाक्ये स्याता वार्त्रघ्नावाज्यभागौ, विराजौ संयाज्ये” “अग्नेरिष्टिमभिधाय अथ पृथक् प्रयोक्तव्याया आग्नेयेष्टेर्वैशेषिकमङ्गजातमाह । यदीष्टिं दर्शपूर्णमासाभ्या पृथगेव कुर्व्वीत प्रधानदेवता उपांशु यजेत तदुपांशुत्वं काम्येष्टिरूप खलु । मूर्द्धन्वत्यौ “अग्निर्मूर्द्धा” “भुवो यज्ञस्य” इत्येते। (यजु०१३,१४ १५,) मूर्द्धन् शब्दवत्यौ प्रधानस्य याज्ये स्विष्टकृद्याज्यापुरोऽनुवाक्ये, विराजौ विराट्छन्दस्कौ “प्रेद्धो अग्ने” “इमो अग्ने” इत्येते (यजु०१७,७६,७७, ) भवतः” भा० दर्शपौर्णमासयाग कृत्वा प्रायश्चित्तेष्टि कार्य्या तत्प्रकार शत०ब्रा० ११,१,२,१,दर्शितो यथा।“पौर्णमासेनेष्ट्वा इन्द्राय विमृधेऽनुनिर्वपति तेन यथेष्ट्यैव यजतेऽथामावास्येनेष्ट्वादित्यै चरुमनुनिर्वपति तेन यथेष्ट्यैव यजते १ । स यत्पौर्णमासेनेष्ट्वा इन्द्राय विमृधेऽनुनिर्वपतीन्द्रो वै यज्ञस्य देवतार्थैतदग्नीषोमीयं पौर्णमासं हविर्भवति तत्र नेन्द्राय स्येति किं चन क्रियते एतेनो हास्यैतत् ऐन्द्रं हविर्भवत्येतेन ऐन्द्रो यज्ञोऽथ यद्विमृधे स्येति सर्वा उ हि मृधो



नाष्ट्रा पौर्णमासेन हन्ति २ । अथ यदामावास्येनेष्ट्वादित्यै चरुमनुनिर्वपत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमा स यत्रैष एता रात्रिं न पुरस्तान्न पश्चाद्ददृशे तेनैतदनन्नेव हविर्भवति तेनाप्रतिष्ठितमियं वै पृथिव्यदितिः सेयमन्ना सेयं प्रतिष्ठिता तेन हास्यैतदन्नवद्धविर्भवत्येतेन प्रतिष्ठितमेतस्तु तद्यस्मादनुनिर्वपत्यथ तस्मादनुनिर्वपेत् ३ । स यत्पौर्णमासेनेष्ट्वा इन्द्राय विमृधेऽनुनिर्वपति ऐन्द्रो मे यज्ञोऽसदिति सर्वो वै यज्ञ इन्द्रस्यैव स यत्सर्वो यज्ञ इन्द्रस्यैवैतेनो हास्यैतत् ऐन्द्रं हविर्भवत्येतेन ऐन्द्रो यज्ञः ४। अथ यदामावास्येनेष्ट्वादित्यै चरुमनुनिर्वपत्यामावास्यं वा अनुनिर्वाप्य पौर्णमासेन वा इन्द्रो वृत्रमहंस्तथा एतद्वृत्रं जघ्नुर्देवा एतद्धविरनुनिरवपन् यदामावास्यं किमनुनिर्वाप्योऽनुनिर्वपेदिति तस्मान्नानुनिर्वपेत् ५ । स यत् पौर्णमासेनेष्ट्वा अथान्यद्धविरनुनिर्वपत्यामावास्येनेष्ट्वाथान्यद्धविरनुनिर्वपति द्विषन्तं ह स भ्रातृव्यं प्रत्युच्छ्रयतेऽथ य पौर्णमासेनैव पौर्णमासीं यजत आमावास्येनामावास्यामसपत्ना हैवास्यानपबाधा श्रीर्भवति ६ । पौर्णमासेन वै देवाः पौर्णमासीं यजमाना आमावास्येनामावास्यां क्षिप्रएव पाप्मानमपाघ्नत क्षिप्रे प्राजायन्त स यो हैवं विद्वान् पौर्णमासेनैव पौर्णमासीं यजत आमावास्येनामावास्यां क्षिप्रएव पाप्मानमपहते क्षिप्रे प्रजायते स यदनुनिर्वपेद्द्याद्दक्षिणा नादक्षिणं हविः स्यादिति ह्याहुर्दर्शपूर्णमासयोर्ह्येषा दक्षिणा यदन्वाहार्य इति न्वनुनिर्वाप्यस्याथाभ्युदितस्य ७” २कण्डिका।“अद्यामावास्येति मन्यमान उपवसति । अथैष पश्चाद्ददृशे स हैष दिव्य श्वा, स यजमानस्य पशूनभ्यवेक्षते तदपशव्यं स्यात्प्रायश्चित्तिकृत एतस्माद् हैतद्भीषावचन्द्रमसादिति १ । छायामुपसर्पन्ति । एतेनो हैतदुपतप्रदाचक्षते स्वल्पचितमित्येतस्य हैवैतदाचक्षते २ । यमचान्द्रमस इति । चन्द्रमा वै सोमो देवानामन्नं त पौर्णमास्यामभिषुण्वन्ति सोऽपरपक्षेऽप ओषधी प्रविशति पशवो वा अप ओषधीरदन्ति तदेनमेतां रात्रिं पशुभ्य उन्नयति ३ । सोऽद्यामावास्येति मन्यमान उपवसति । अथैष पश्चाद्ददृशे तद्यजमानो यज्ञपथादेति तदाहुः कथं कुर्यादित्या यज्ञपथाद्यजेता३ न यजेता३ इति यजेत हैष न ह्यन्यदपक्रमणं भवति न्व -न्व एवैष ज्यायानुदेति स आमावास्यविधेनैवेष्ट्वाथेष्टिमनुनिर्वपति तदुक्थ्यैव श्वो वा ४ । तस्य त्रीणि हवींषि भवन्ति । अग्नये पथिकृतेऽष्टाकपालं पुरोडाशम्, इन्द्राय वृत्रघ्न एकादशकपा-

इष्टियाजुकः इष्टियजनशील इष्टिशब्देन काम्या इष्टयः शातपथप्रसिद्धाः ताच्छील्ययोगात् काम्येष्टि यजनप्रधानो न स्यात्" भा० ।

**इष्टीकृत** त्रि० अनिष्टमिष्टं कृतम् इष्ट+च्वि-कृ-कर्मणि क्त । अनिष्टे इष्टे कृते । अनिष्टिरिष्टिः कृता । इष्टिभेदे सत्रे न० । "सत्रमिष्टीकृतं नाम समुपास्ते महातपाः" भा०व०२५९अ० ।

**इष्टु** स्त्री इष-भावे तुन् । इच्छायाम् उणादिकोषः ।

**इष्ट्ययन** न० इष्ट्यायनं गमनं यत्र । "यागविशेषाचरणभेदे" इष्ट्ययनञ्च कात्या० श्री०२,१४, सूत्रादौ दर्शितं यथा "अत ऊर्द्धमिष्ट्ययनानि" १। "अत ऊर्द्धं यानि वक्ष्यन्तेऽस्मिन् अध्याये तानि इष्ट्ययनसंज्ञानीति विद्यात् । इष्टिभिरयनं गमनं येषु कर्मसु तानीष्ट्ययनानि" नारा०वृ० । "सांवत्सरिकाणि" २सू० । "संवत्सरेण क्रियन्ते संवत्सरेण क्रियन्त इत्युभयथा विग्रहः कर्तव्यः, दाक्षायणयज्ञचातुर्मास्यानामनेकसांवत्सरिकत्वसिद्ध्यर्थम् वृ० । "तेषां फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा प्रयोगः" ३सू० । "फल्गुनीभिर्युक्ता पौर्णमासी फाल्गुनी, चित्रया युक्ता चैत्री । तेषां सांवत्सरिकाणां आगन्तुकानामस्मिन् काले प्रारम्भः कार्यः । दर्शपूर्णमासगुणविकाररूपाणां दाक्षायणयज्ञादीनामारम्भे काल नियमो नास्तीति तेषामित्युच्यते" नारा०वृ० । "तुरायणम्" ४सू० । "तुरायणनामेष्ट्ययनमुच्यते" वृ० । "अग्निरिन्द्रो विश्वेदेवा इति पृथगिष्टयोऽनुसवनमहरहः" ५सू० । "अग्निदेवत्या इन्द्रदेवत्या विश्वदेवदेवत्या चैतास्तिस्र इष्टयः त्रिषु सवनेषु यथासङ्ख्येन एकैकेष्टिः कार्याऽहन्यहनि । अहरहरिति वचनं पौर्णमास्यमावास्ययोर्बाधनार्थम्" वृ० । "एका वा त्रिहविः" ६सू० "एताभिरेव देवताभिर्युक्ता एकैवेष्टिस्त्रिहविष्काऽहन्यहनि प्रातःसवन एव कर्त्तव्या वेत्यर्थः" वृ० । "इडादधोनामेष्ट्ययनं तत्र देवतादि २ १४ १-१०" "द्यावापृथिव्योरयनं नामेष्ट्ययनं तत्र देवतादि २,१४,१२,१५" "चातुर्मास्यानि इष्ट्ययनानि तद्देवतादि २,१५,१ सूत्रादौ । एवमन्यान्यपि इष्ट्ययनकर्माणि ग्रन्थे दृश्यानि

**इष्ट्वा** अव्य० यज-क्त्वा । १याग कृत्वेत्यर्थे । "अश्वमेधेन चेष्ट्वा" मृच्छकटिकम् । इष-क्त्वा । २अभिलष्येत्यर्थे च ।

**इष्म** पु० इष्यति इष्यतेऽनेन वा इष-गतौ इष-इच्छायां मक् वा । १वसन्तकाले २कामे च भावे मक् । ३गतौ । तत अस्त्यर्थे इनि । इष्मिन् गतियुक्ते त्रि० स्त्रियां ङीप् । "ते वायौमन्त इष्मिणो अभीरव" ऋ० १,८७,६। "इष्मिण गतिमन्तः" भा० । इष-इच्छायां कर्मणि मक् । ४इष्यमाणे अन्नादौ अस्त्यर्थे इनि अन्नादिमति "हिरण्यया स्वायुधास इष्मिणः" ऋ०५,८७,५। इष्मिणोऽन्नवन्तः" भा० ।

**इष्य** पु० इष्यते इष-क्यप् । वसन्ते ऋतौ हेम० । तस्य ऋतूनां मध्ये इष्टतमत्वात्तथात्वम् "ऋतूनां कुसुमाकरः" गीतायां तस्य भगवद्रूपत्वोक्तेः इष्टत्वम् ।

**इष्व** पु० इष-सर्पणे वन्-गुणाभावः । आचार्ये उद्देशार्थम् प्रसर्प्यमाणत्वात्तथात्वम् । उज्ज्वलदत्तस्तु इष दाने इत्यस्यैव रूपं दीर्घादि इत्याह । उपदेशदानाच्च तस्य तथात्वम् ।

**इष्वग्र** न०६त० । बाणाग्रे । गहादिपाठात् भवादौ छ । इष्वग्रीय तद्भवादौ त्रि० । [इष्वनीकीय तद्भवादौ त्रि० ।

**इष्वनीक** न० ६त० । बाणावयवे । गहा० भवादौ छ ।

**इष्वसन** पु० इषवोऽस्यन्ते क्षिप्यन्तेऽनेन अस-क्षेपे करणे ल्युट् ६त० । धनुषि । "राममिष्वसनदर्शनोत्सुकम्" रघु ।

**इष्वास** पु० इषवोऽस्यन्तेऽनेन अस-क्षेपे करणे घञ् ६त० । १धनुषि "अत्र शूरा महेष्वासा भीमार्जुनसमा युधि" "काश्यश्च परमेष्वासः शिखण्डी च महारथः गीता । अर्द्धर्चादिपाठात् क्लीबत्वमपि । इषून् अस्यति अस-अण् उप०स० । २शरक्षेपके त्रि० (तीरन्दाज) मेदि० ।

**इस्** अव्य० इ कामम् स्यति सो-क्विप् नि० आल्लोपः । १सन्तापे २कोपे ३दुःखानुभवे च शब्दर० ।

**इह** अव्य० इदम्+ह इशादेशः । अस्मिन् काले देशे दिशि वा १इत्यर्थे "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन" श्रुतिः "इह जन्मनि जन्मान्तरे वा" वे०स० । "नेह नामुत्र किञ्चन" "नेहाभिक्रमनाशोऽस्ति" गीता । "तदखिलमिह भूत भूतगत्या जगत्याः" नैष० । प्रथमार्थे ह । २अनुभूयमाने लोके इहामुत्रार्थफलभोगविरागः वेदा० सा० च इहकाल । इह भवः विदितो वा कथा० ठञ् । ऐहिक इहभवे इहविदिते च त्रि० । "ऐहिकन्तत्रूपपत्ते दोषादिनिवेधात्" मु० त० रघु० । [मानकाले ।

**इहकाल** पु० इदम्+प्रथमार्थे ह इह कर्म० । एतत्काले वर्त्त-

**इहतन** त्रि० इहभवः त्यप् तुट् च । इहभवे स्त्रियां ङीप् ।

**इहत्य** त्रि० इह भव इह+त्यप् । इहकालादिजाते । स्वार्थे कन् । इहत्यक तत्रार्थे स्त्रियां नित्यमित्त्वम् । इहत्यिका

**इहद्वितीया** स्त्री मयू०स० । अत्रत्यद्वितीयायाम् ।

**इहपञ्चमी** स्त्री । मयू०स० । अत्रत्यपञ्चम्याम् ।

**इहल** पु० इह भव लाति ला-क । चेदिदेशे त्रिका० तद्वासिनि ब०व० ।

**इहलोक** पु० इदम्-प्रथमार्थे ह कर्म० । एतल्लोके अनु-

भूयमाने लोके इहलोके भवः ठक् अनुश॰ द्विपदवृद्धिः ऐहलौकिक तद्भवे त्रि॰ ।

इहामुत्र अव्य॰ इह च अमुत्र च द्व॰। एतल्लोके परलोके च "इहामुत्रार्थफलभोगविरागः" वेदा॰सा॰ ।

इति वाचस्पत्ये इकारादिवर्णशब्दार्थनिरूपणम् ।

# ई

ई अव्य॰ ई क्विप् । १ विषादे २ दुःखभावनायाम् ३क्रोधे ४अनुकम्पायाम् ५प्रत्यक्षे ६संनिधौ ७सम्बोधने च । मेदिन्यामस्य धान्ततया पठितः । पृषो॰साधु ।

ई स्त्री अस्य विष्णोः पत्नी ङीप् । लक्ष्म्याम् ।

ई कान्तौ (इच्छायाम्) गतौ व्याप्तौ क्षेपे भोजने सक॰ गर्भग्रहणे अक॰ अदादि अनिट् पर॰ । एति ईत॰ इयन्ति । ऐत् । ऐषीत् । इयाय इयतुः । एता एष्यति ऐष्यत् । "ईत । अस्यात्मनेपदित्वमपि "न हि तरपि-ईदीते" हिकपराधीनवृत्तिः" कविक॰ टी॰दुर्गा॰ ।

ई याचने द्विक॰ आत्मने॰ अदादि अनिट् गिरू॰ । ईते ईयीत ईताम् । ऐत । ऐष्ट । ईये । "आ वो देवास ईमहे वाम प्रत्यध्वरे" यजु॰ ४,५ । "ऊर्जस्य धर्ममीमहे" यजु॰ २६,६ ।

ई गतौ दिवा॰सक॰ अनिट् आत्म॰ । ईयते ऐष्ट । ईतः "पक्षैरन्तीतमधूसुसद्युत" माघ । ईङ्-गतौ मल्लि॰ ।

ईक्ष दर्शने पर्य्यालोचने च भ्वा॰ आत्म॰ सक॰ सेट् । ईक्षते ईक्षेत ईक्षताम् ऐक्षत ऐक्षिष्ट ईक्षाम्-बभूव आस-चक्रे-ईक्षिता ईक्षिषीष्ट ईक्षिष्यते ऐक्षिष्यत । ईक्षितव्य ईक्षणीय ईक्ष्य ईक्षिता ईक्षित ईक्षित्वा वीक्ष्य । ईक्षणम् ईक्षा । ईक्षमाण । कर्म्मणि ईक्ष्यते ईक्ष्यमाण । धातुनिर्देशे इक्षति ईक्षः । "न धर्मवृद्धेषु वयः समीक्ष्यते" न कामवृत्तिर्वचनीयमीक्षते" कुमा॰ । "तदैक्षत बहु स्यां प्रजायेय" श्रुतिः । "स प्रजापतिरीक्षाञ्चक्रे" श्रुतिः "सर्वभूतस्थमात्मानं सर्व्वभूतानि चात्मनि । ईक्षते योगयुक्तात्मा" गीता । "कथमीक्षामहे सर्वे, दुर्य्योधन विचेष्टितम्" भा॰व॰२८८श्लो॰ । "ऐक्षिष्ट पुंभिः प्रचितान् स गोष्ठान्" भट्टिः वेदे पदव्यत्यासोऽपि "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" कठो॰ । शुभाशुभालोचने च तद्योगे शुभाशुभसंबन्धिनि चतुर्थी । "राधीक्ष्योर्यस्य विप्रश्नः" पा॰ । "यदीयः विविधः प्रश्नः क्रियते तस्मिन् चतुर्थी स्यात्" । "कृष्णाय ईक्षते गर्गः" इत्यत्र गर्गः शुभाशुभं पर्य्यालोचयतीत्यर्थः" सि॰कौ॰ । "ईक्षितं शब्दम्" शा॰सू॰ । "कारणे ईक्षितृत्वश्रवणात्" भा॰ ।

अधि+विवेचने अधीक्षते "गुरुकर्त्तितमोहः सत्त्वमाव मधीक्षते" हितो॰ ।

अनु+अनुचिन्तने । "तामन्वीक्षत इव वै वनमीक्षमेयम्" शत॰ब्रा॰ ६,२,२,५ । "अन्वीक्षमाणोरामस्तु विषण्णं भ्रातृवत्सलम्" रामा॰ ।

अप-आकाङ्क्षायामनुरोधे अवधिनियमे च । "अपेक्षते प्रत्ययमुत्तमं त्वाम्" कुमा॰ "अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् । परोपकारनिरता मणिदीपा इवोत्तमाः" उद्भटः । "किमपेक्ष्य फलम् पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः" किरा॰ । "हितादयः पराङ्गाना अपेक्षाबुद्धिजा मताः" "अपेक्षाबुद्धिनाशाच्च नाशस्तेषां प्रकीर्तितः" भाषा॰ "शब्दोऽव्यक्तस्थानेऽर्थान्तरमपेक्षते" सा॰द॰ । "सापेक्षत्वेऽपि गमकत्वात् समासः" पा॰भा॰ "का प्रक्रिया या कर्त्रमित्यपेक्षा" मीमा॰ । "नदीव परिपूर्णाऽपि चन्द्रोदयमपेक्षते" चन्द्रा॰ ।

वि+अप+विशेषेणापेक्षायाम् । "न व्यपैक्षत समुत्सुकाः प्रजाः" रघु॰ । "व्यपेक्षमाणौ सहसीतया गतौ" रामा॰ "समर्थः पदविधिः" पा॰भा॰ व्यपेक्षाऽव्यपेक्षापक्षद्वयमुपन्यस्तम् । तत्र व्यपेक्षापक्षो मतान्तरेण उपन्यस्त इव युक्तिविरुद्धत्वात् कैयटविवरणादौ दूषितः "शाकटपस्य व्यपेक्षाऽपि इत्तावपि न हीयते भर्तृ॰ । सा च पदबोधिपयोगिन्याकाङ्क्षारूपा आकाङ्क्षाशब्दे विवृतिः ।

अव+ आनुपदर्शने । "योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः" गीता । "अवेक्षमाणोमहतीं मुहुर्मुहुः" माघ सम्यक्पर्य्यालोचने च । "प्रदधोषदवेक्ष्य सुन्दरी" किरा॰।

अनु+ अव+पर्य्यालोचने अनुसन्धाने च "सूक्ष्मतां चान्ववेक्षेत योगेन परमात्मनः" मनु ।

अभि+अव+भोजनार्थेक्षणे ।"यजमानस्य पशूनभ्यवेक्षते" शत॰ ब्रा॰११,१,५,१, "अभ्यवेक्षते अभ्यवहर्तुं पश्यति भा॰ ।

परि+अव+समन्तादर्शने । "ततो माधवसंनिर्जज्ञे न मम पर्य्यवेक्षते भा॰ आश्व॰२१अ॰ ।

प्रति+अव+ प्रतीत्य पर्य्यालोचनया दर्शने । "अथेमाः प्रत्यवेक्षमाणो जपति" शत॰ब्रा॰ ५,२,४,२० ।

सम्+अव+सम्यगदर्शने । "अपोपमोऽय समवेक्षते सभाम्" भा०वि०२१८श्लो०।"यदि दृष्टं बल सर्वं वयस्य समवेक्षिता" भा०आ०२५अ०। सम्यक्पर्य्यालोचने च "सर्वं तु समवेक्ष्येद निखिलं ज्ञानचक्षुषा" मनु०।

आ+सम्यगदर्शने ।"अयमिच्छेय मात्राक्षीम्"भा०स०२१८०।

उद्+ऊर्द्ध्वदर्शने । "सहस्ररश्मिना साक्षात् प्रणामसुदीक्षिता" कुमा०। अपेक्षायाञ्च "त्रीणि वर्षाण्युदीक्षेत कुमार्य्यृतुमती सती" मनुः।

उप+हेयत्वज्ञानेन, परित्यागे "उपेक्षया स्वत्वहानि" दाय भा०टी० "ये मां विप्रकृतां क्षुद्रैरुपेक्षध्व विशोकवत्"भा० व०११अ० प्रतिचिकीर्षाभावे"उपेक्षते यः श्लथवल्गिनीर्जटा" कुमा० "नोपेक्षेत क्षणमपि राजा साहसिकं नरम्" मनु अपर्य्यालोचने अनुसन्धानाभावे च"गूढेन चरता तत्त्वमुपेक्षितमिदं मया"रामा०।

सम+उप+सम्यगुपेक्षायाम् । "सतु पक्षं समाधाय योगोद्वात् समुपेक्षते" भा०व०१०६० श्लो०।

निस्+निर्+नि शेषेण दर्शने निश्चयार्थ दर्शने च।"यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान्"गीता।

परि+तत्त्वानुसन्धाने प्रमाणाद्युपन्यासेन वस्तुतत्त्वावधारणे च "परीक्ष्य लोकान् कर्म्मचितान्"श्रुति। न्यायसूत्रवृत्त्यादौ प्रमाणप्रमेयादि परीक्षा बहुशो दर्शिता। सम्यक्विवेचने च।"नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः। सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते" मनु। लक्षणादिमत्त्वेन ज्ञाने च "अश्वविद्याविदश्चैव सूता विमाय तद्विद। निध्यमश्वं परीक्षन्ता तव यज्ञार्थसिद्धये" भा०आश्व०६०२७ श्लो०।"यत्नात् परीक्षितः पुंस्त्वे"या०स्मृ०। "सर्व्वस्य हि परीक्षन्ते स्वभावा नेतरे गुणा" हितो०भक्तिमत्त्वादिना ज्ञाने च।"माया मयोद्भाव्य परीक्षितोऽसि"रघु। विवादे सत्यत्वासत्यत्वादिसंशयनिराशाय स्वपक्षप्रामाण्यव्यवस्थापनाय शपथकरणे तुलापरीक्षादि। परीक्षाशब्दे विवृतिः।

प्र+प्रकर्षेण दर्शने "प्रेक्षन्ते सर्व्वभूतानि बहुधाः पर्व्वसन्धिषु" भा०व०११६५७।"यत् किञ्चिद्दर्शनीयाणि सन्निधौ प्रेक्षते धनी"भा०व०मनु।"उदायुधानापततस्तान् दृप्तान् प्रेक्ष्य राघवः"रघु।"पुनः प्रेक्ष्य च सूलिनम्" कुमा०।

अभि+प्र+आभिमुख्येन दर्शने।"प्राची दिशमभिप्रेक्ष्य महर्षिरिदमब्रवीत्" भा० व०१६३अ०। "दह्यमानमभिप्रेक्ष्य ह्रियसा, सम्प्रदद्रुवुः" भा०व०८८अ०।

उत्+प्र+उत्प्रेक्षायाम् किञ्चिद्धर्म्मसाधर्म्येणान्यस्यान्यरूपता कल्पने उद्भावने च। "उत्प्रेक्षामोऽद्य तावन्नतिमन्न विभीषणम्"रामा०।"तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि गताःस्तास्ता दिन यान्" अमरु०। "भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना"सा०द०।"अलङ्कारशब्दे९८५पृष्ठे विवृतिः।

सम्+प्र+सम्यगदर्शने।"संप्रेक्ष्य नासिकाग्रं स्वम्" गीता "योगक्षेमं च सम्प्रेक्ष्य वणिजोदापयेत् करम्" मनु।

अभि+सम्+प्र+आभिमुख्येन सम्यगदर्शने।"अभिसम्प्रेक्ष्य भर्त्तारं क्रुद्धा वचनमब्रवीत्" भा० आदि० प०३०११।

प्रति+अनुरोधे अपेक्षाया पूजने च।"प्रतीक्ष्य तत् प्रतीक्ष्यार्यं पितृस्वसु प्रतिश्रुतम्" माघः "प्रथमं संस्थिता भार्य्या पतिं प्रेत्य प्रतीक्षते" भा०आ० ३०२२। नाभिनन्देत मरणं नाभिनन्देत जीवितम्। कालमेव प्रतीक्षेत" मनुः।"संवत्सरं प्रतीक्षेत द्विषन्तीं योषितं पतिः" मनु।

सम्+प्रति+सम्यक्प्रतीक्षायाम् "मुहूर्त्तं सम्प्रतीक्षस्व" भा० आ० २९०२। "एकवेणीधरा हि त्वा नगरी संप्रतीक्षते" रामा०।

वि+विशेषेण दर्शने।"वीक्षन्ते त्वा विस्मिताश्चैव सर्वे"गीता। "मीमांसाने त्वया वीक्ष्य नित्य लोके विपर्य्ययम्" मनुः। "जडीकृतस्त्र्यम्बकवीक्षणेन" रघु।

अनु+वि+सन्ततवीक्षणे पश्चाद्वीक्षणे च। "तस्माद्दिशोऽनुवीक्षमाणोऽत्रपति" शत०ब्रा० ५,२,१,२५।

अभि+वि+आभिमुख्येन वीक्षणे।"नचैन भुवि शक्नोति कश्चिद्भिवीक्षितुम्" मनु।

उद्+वि+ऊर्द्ध्ववीक्षणे।"उद्वीक्षमाणा भर्त्तारं सुखेन परिगृह्यता" रामा० "पतिव्रतामिमां साध्वीं तवोद्वीक्षितुमच्युत" भा० अनु० २अ० "उद्वीक्षितं प्रकृतिभिर्भरतानुगाभिः" रघु।

सम्+उद्+वि+समन्तादुद्वीक्षणे "निपेतुर्भूमिपाः सर्वे समुद्वीक्ष्य परस्परम्" रामा०।

प्रति+वि+प्रतिदर्शने यत्कर्त्तृकं स्वदर्शनं तस्य स्वेन दर्शने। "ततः सराजा प्रतिवीक्ष्य ताः स्त्रियः" रामा०।

सम्+वि+सम्यग्वीक्षणे।

सम्+सम्यगदर्शने पर्य्यालोच्य दर्शने।"पुरस्तादेव प्रतीचे समीक्षमाणायानुयात्" शत०ब्रा० ११,५,४,१४। "समीक्ष्य कृतधीः चरेत्" मनु।"अप्रहृत्तसुखश्लोकेन शीकरेण स नागराट्। समैक्षत गुडाकेशम्"भा० आश्व०२२३१श्लो०।"तान् समीक्ष्य स कौन्तेयः सर्वान् बन्धूनवस्थितान्" गीता "उचितमेवैसमीक्ष्यकृतान्त-

रिय" इति। "समीच्य कुलधर्मांश्च स्वधर्मं प्रति
पादयेत्" मनुः।
प्र+सम्+प्रकर्षेण सम्यगीक्षणे। "सह सर्व्वाः समुत्पन्नाः प्रसमीक्ष्यापदोऽव्ययम्" मनु "कुलं ख्यातिञ्च वृत्तं च बुद्ध्या तु प्रसमीक्ष्य च" भा० आ० ४२७४ श्लो०।

ईक्षण न० ईक्ष–भावे ल्युट्। १ दर्शने। करणे ल्युट्। २ नेत्रे। तत्र दर्शने "क्षिप्रं कार्य्येक्षणे नृणाम्" मनु नेत्रे। "अभिमुखे मयि संहृतमीक्षणम्" शकु० "सदा सरञ्जनयनौ सदा चानिमेषणौ" भा० आ० ३३ अ०। "इत्यद्रिशोभा प्रहितेक्षणेन" रघु।

ईक्षणिक त्रि० ईक्षणं हस्तरेखादीक्षणेन शुभाशुभदर्शनं शिल्पमस्य ठन्। शुभाशुभफलकथनोपजीविनि सामुद्रिके। स्त्रियां टाप्। "मङ्गलादेशवृत्त्या च भद्रान्वेक्षणिकैः सह" मनुः"

ईक्षति पु० ईक्ष–धात्वर्थनिर्देशे श्तिप्। ईक्षणे। "ईक्षतेर्नाशब्दम्" शा०सू०।

ईक्षा स्त्री ईक्ष–भावे अ टाप्। ईक्षणे १दर्शने २पर्य्यालोचने च "स ईक्षां चक्रे" श्रुति। "श्रवणादनु ईक्षा अन्वीक्षा"। न्यायसू० वृत्ति। आन्वीक्षिकीशब्दे विवृतिः।

ईक्षेण्य त्रि० ईक्ष–बा० एन्य। ईक्षणीये दृश्ये "ईक्षेण्यासोऽह्योऽन" ऋ०६,७७,३। "ईक्षेण्यास ईक्षणीयाः" भा०।

ईख गतौ इदित् भ्वा०पर०सक०सेट्। ईङ्खति ऐङ्खीत्। ईङ्खाम् बभूव आस चकार। ईङ्खिता ईङ्खिष्यति ऐङ्खिष्यत्। ईङ्खितः "सन्त्रसनितः यज्ञः प्रेङ्खन्न क्षुभिता चिति" भट्टि "भुज्युं समुद्र आ रजसः पार ईङ्खितम्" १०,१४३,५। णिचि ईङ्खयति। "य ईङ्खयन्ति पर्वतान्तिरः समुद्रमर्णवम्" ऋ०१,१९,७। "इङ्खयन्तीरपस्युव इन्द्रं जातमुपासते" ऋ० १०,१५३,१। "इङ्खयन् परिजना पविक्षया रघु।

ईङ्ग गतौ इदित् ङुगिवत्। ईङ्गति ऐङ्गीत् ईङ्गते इत्येके।

ईज गतौ निन्दायाञ्च भ्वा०आत्म०सक०सेट्। ईजते ऐजत ऐजिष्ट ईजाम्–बभूव आस चक्रे। ईजिता ईजिष्यते ऐजिष्यत।

ईञ्ज गतौ निन्दने च इदित् भ्वा०आत्म०सक०सेट्। ईञ्जते ऐञ्जिष्ट। ईञ्जाम्–बभूव आस चक्रे। ईञ्जितम्। अयम् अपाणिनीयः कविकल्पद्रुमे तु पठितः।

ईजान त्रि० यज–ताच्छील्ये कानच् द्वित्वम्। यजमाने यागशीले। "ततोमहद्भिः क्रतुभिरीजानो भरतस्तदा" भा० आ० ९४ अ०। "यः सेतुरीजानानामक्षरं ब्रह्म यत् परम्" कठो०।

ईड स्तुतौ अदा० आत्म० सक० सेट्। ईट्टे ईडिषे ईडिध्वे ऐडिष्ट ईडाम्–बभूव आस चक्रे। ईडिता ईडिष्यते ऐडिष्यत। ईड्य ईडित ईडनम् ईडा। "अग्निमीळे पुरोहितम्" ऋ०१,१,१। डकारं ळकारतया बह्वृचा पठन्ति। "अज्मध्यस्थडकारञ्च ळकारं बह्वृचा जगुः। अज्मध्यस्थढकारञ्च ळ्हकारं तु यथाक्रममिति" ऋ०भा० धाक्योक्तेः। यजुर्वेदसम्प्रदायस्तु तयोः अज्मध्यस्थयोः डढकारतया पाठ इति भेदः। यास्कस्तु "ईडिरध्येषणकर्म्मा पूजाकर्म्मा चेत्याह 'गन्धर्वाः सुरसङ्घाश्च यक्षाश्च महर्षयः। अन्तरीक्ष गतं देवं गीर्भिरग्र्याभिरीडिरे" रामा० "नेडिषे यदि काकुत्स्थम्" भट्टि "ईड़ानो देवा इत्यानाम्" ऋ० १०,६६,१४। "भवन्तमीड्य भवतः पितेव"। "शशीमताममजदीड्यमानः" इति च रघु। "अग्निः पूर्वेभिरृषिभिरीड्योनूतनैरुत" ऋ० १,१,२। णिचि ईडयति ते ऐडिडत् त।

ईडा स्त्री ईड–भावे अ स्त्रीत्वात् टाप्। स्तुतौ।

ईडित त्रि० ईड–क्त। स्तुते यस्य वाच कृतकाचिन्।

ईडेन्य त्रि० ईड–बा०एन्य। १स्तवनीये २पूजनीये च। "ईडेन्यो नमसस्तिरस्तमांसि दर्शत" ऋ० १,१४६,७।

ईणमत् त्रि० ईट् अव्ययस्य मतुप् स्त्रियां ङीप्। समार्थे ईकरवति। ईणन्तमाचष्टे णिच् मतोर्लुक्। ईययति।

ईति पु० ईयते ई–क्तिच्। १डिम्बे, २उत्पाहिते त्रि०३प्रवासे, "अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः। प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः" इत्युक्ते ४कृषेरुपद्रव भेदे च स्त्री। "निरीतिभावं गमितेऽतिवृष्ट्यः" नैष० "निरातङ्कानिरीतयः" रघु "ईतयोव्याधयस्तन्द्रीदोषाः क्रोधादयस्तथा। उपद्रवाश्च वर्त्तन्ते आधयः क्षुद्भयं तथा" भा० व० १४९ अ०।

ईदृक्ष त्रि० अयमिव पश्यति इदम्+दृश–कर्मकर्त्तरि क्स इशादेश दीर्घ। ईदृशे एतद्रूपदर्शने एवंविधे। "ईदृक्षास एतादृक्षास ऊ षु ण सदृक्षास" वाजसने०१७,८१।

ईदृश् त्रि०अयमिव पश्यति इदम्+दृश–कर्मकर्त्तरि–क्विन् इशादेशः दीर्घः। १एतादृशदर्शनवति एवंविधे "ईदृङ् चान्यादृङ् च सदृङ् च प्रति सदृङ्" यजु० १७,८१। "इमं पुरोडाशं नेष्टहोता पश्यतीति ईदृक् वेददी० व्याख्यानात् २तद्दर्शिनि। तस्य भावः त्व ईदृक्त्वं तद्भावे न० तल्। ईदृकता तस्य भावे स्त्री। "विष्णोरिवास्यानवधारणीयमीदृक्तया रूपमियत्तया वा" रघुः।

**ईदृश** त्रि॰अयमिव पश्यति इदम्+दृश–कर्मकर्त्तरि कञ् इत्या-देश॰ दीर्घ । एवंविधदर्शनवति । "ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान्" चन्द्रा॰। "यस्मान्यत् किञ्चिदीदृशम्" । "न हीदृशमनायुष्यं लोके किञ्चन विद्यते" प्रत्येक चेदृशा विभागश्चान्त्यजाद्यादिभिः" मनुः । "मानो-मृडान ईदृशे" ऋ॰१,१७,१ । "ईदृशे एव विधे" भा॰ । स्त्रियां ङीप् "सर्व्वेषामीदृशी रसाभिव्यक्ति" सा॰द॰ । मुग्धबोधकारस्तु अयमिव दृश्यते इति विग्रहं कृत्वादौ चकार तच्च "कर्त्तरि कृदिति" पा॰ अनुशासनविरोधा-दुपेक्ष्यम् ।

**ईप्सा** स्त्री आप्तुमिच्छा आप–सन्–अ । १आप्तुमिच्छायाम् २इच्छायाञ्च । "ईप्सेप्सा पिशुन शुद्धं ममत्वं परिपालनम्"। भा॰ आश्व॰२७अ॰ ।

**ईप्सित** त्रि॰आप–सन् क्त । १आप्तुमिष्टे क्रियाफलेन व्याप्तु-मिष्टे "कर्त्तुरीप्सिततमं कर्म्म" पा॰ । "निर्वर्त्यञ्च विकार्य्यं च प्राप्यञ्चेति त्रिधा मतम् । तच्चेप्सिततमं कर्म्म चतुर्द्धान्यत्तु कल्पितम्" भर्त्तृ॰ 'तमब्ग्रहणं किमीप्सितमात्रे मा भूत्' सि॰कौ॰ । २इच्छाविषये च ।

**ईप्सु** त्रि॰ आप्तुमिच्छुः । आप+सन्—उ । आप्तुमिच्छौ । "मन्दः कवियशःप्रेप्सुरिति" रघुः पाठान्तरं "गौचेप्सुः सर्व्वदाचामेत्" मनु । "धर्म्मेप्सवस्तु धर्म्मज्ञा" मनु । "सौख्यमीप्सुरिव तेषुसमाहृतस्य" रघु ।

**ईम्** अव्य॰ ई–बा मुक् । १अथशब्दार्थे । "एमेनमदृशन्नमृता" यजु॰ ३२,६०। "आ ईम् एतौ निपातौ अथार्थौ वेददी॰ २इदमर्थे च । "चयत ईमर्य्यमो अप्रशस्तान्" ऋ॰१,१६७, ८। "इह ब्रवीतु य ईमङ्ग वेदस्य" ऋ॰१,१६४,७। "सोमेभिरीं पृणता भोजमिन्द्रम्" ऋ॰ २,१४,१० । "ईमिमम्" इति भा॰।

**ईय** त्रि॰ ई–बा॰ क्यप् । व्याप्ये । "आयद्वा ईयचक्षसा" ऋ॰५,६७,६ "ईयचक्षसा व्याप्तदर्शनौ" भा॰ ।

**ईयिवस्** त्रि॰ इण्–क्वसु । "गतवति । क ईयिवान् सदम्" मुग्धबो॰ "प्रतीयुषा पूर्वदृशे जनेन" भट्टि । "उपेयुषो मोक्षपथं मनस्विनः" माघ । 'उपेयिवानित्यादि' पा॰ सू॰उपेत्युपलक्षणात् अन्यत्रापि क्वसु ।

**ईर** गतौ प्रेरणे च चुरा॰ उभ॰ पक्षे भ्वा॰ पर॰सक॰सेट् । ईरयति ते-ईरति ऐरिरत्-त-ऐरीत् । ईरयाम्-ईराम् वा बभूव आस चकार । ईर्य्यात् ।ईरिता ईरयिष्यति-ईरिष्यति । ईरणम् । ईरितः इरयन्-इरन् । ईरः ईरकः माघ । "आपः समुद्रमैरयन्" ऋ॰८,६,१३। "अंशो-रूर्म्मिमीरय" ऋ॰६,७९,१४ । "यदस्य शुष्ममैरयन्" ऋ॰२,१७,२ "ऐरिरच्च महाक्रमम्" भट्टि॰ कथने च । "अथ साचमीरयति" शत॰ब्रा॰ "ब्रह्मा रथन्तरं साम ईरयति प्रशान्तिके भा॰ आनु॰ १४अ॰ । विरोध-वाक्यञ्च यथेर्य्यमाणम्" भा॰व॰ १२२ अ॰ । "दमयन्त्या यथेरितम्" भा॰व॰२७४२। "हित न स्टङ्गानि सुहृद्भि-रीरितम्" रामा॰ "इतीरिता पत्ररथेन तेन" इतीरयित्वा विरचय्य वाङ्मयम्" नैष॰ ।

उद् उत्क्षेपणे । "उदीरयामास सलीलमश्वान्" रघु॰ । उच्चारणे कथने च "यदशोकोऽयमुदीरयिष्यति" रघु॰ । "उदीरयामासुरिवोन्मदानाम्" रघु ।

अभि+उद्+आभिमुख्येनोच्चारिते । 'आलोकस्तिष्ठस्तिष्ठेति वाचस्तिस्रोऽभ्युदीरयन्" भा॰ अ॰ २१०१ ।

सम्+उद्+सम्यगुच्चारे समुत्तोलिते च । पांशवोऽपि कुरु-क्षेत्रे वायुना समुदीरिता" भा॰व॰ ५०७० ।

प्र+प्रेरणे । प्रेरयति । "समीरणः प्रेरयिता भवेति" कुमा॰। "अप प्रेरय सागरस्य बुध्नात्" ऋ॰१०'८९,४। "किन्तुद्दिश्य कामप्रेरितेन मत्सकाशमस्तदय प्रेरिताः स्युः" शकु॰ "या-त्रायै प्रेरयामास तं शक्तेः प्रथमं शरत्" रघु ।

सम्+ सम्यक्प्रेरणे समुच्चारणे सम्यग्गतौ च 'समीरण । "समीरयाञ्चकाराय रावणस्य कपिं गिरम्" भट्टि । "ताभिराभरणैर्मन्दस्वासिताभिः समीरित." भा॰ व॰ १२,८अ॰ ।

**ईर** अदा॰आत्म॰सक॰सेट् । ईर्त्ते ईराते ईरते ऐरत ऐरिष्ट ईराम् बभूव आस–चक्रे ईरिष्यति "इन्द्रा मधुमन्त ईरते" ऋ॰ ५,६२,१४ "इयर्दीर्त्ते पयो गो." ऋ॰६, ६१२ । 'अस्मे राजाय ईरताम्' ऋ॰ ४,८,७ । वायुमच्युतादिषोढदरीर्त्ते" तैत्ति॰ । अथ्मात् भिदाया नेट् । "न हि रागानुदीर्णानाम्" भा॰आ॰ ५१२८ श्लो॰ । "उदीर्ण रागप्रतिरोधकम् जनैः" माघ । अस्यैव पक्षे चुरादित्वं तेन न तस्य ण्यादित्वमित्येके ।

**ईरण** न॰ईर–भावे ल्युट् । १प्रेरणे २गतौ च । युच् । ईरणा तत्रैव स्त्री । नन्द्या॰ल्यु । २प्रेरके त्रि॰"समी-रणः प्रेरयिता भवेति" कुमा॰ ।

**ईरामा** स्त्री ईर्लक्ष्मीस्तया रम्यतेऽत्र रम–आधारे घञ् ईत॰। नदीभेदे । "ईरामाञ्च महानदीम्" भा॰व॰ १८८अ॰ ।

**ईरिण** त्रि॰ ईर–इनन् । ऊषरभूमौ । मेदि॰ "ततस्तदीरिण

नाय भूतानुग्रहद्वारमाह ज्ञानधर्मोपदेशेनेति । ज्ञानञ्च धर्मश्च ज्ञानधर्मौ तयोरुपदेशेन ज्ञानधर्मसमुच्चयाल्लब्धविवेकख्यातिपरिपाकात् । कल्पप्रलये—ब्रह्मणोदिनावसाने यत्र सत्यलोकवर्जं जगद्रसमेति, महाप्रलये सत्यलोकस्य ब्रह्मणोऽपि निधने, संसारिणः स्वकारणगामिनस्तदा मरणादुःखभाजः । कल्पेत्युपलक्षणम् । अन्यदापि स्वार्जितकर्मपाकवशेन जन्ममरणादिभोज पुरुषानुद्धरिष्यामीति कैवल्यं प्राप्य पुरुषा उद्धृता भवन्त्वित्यर्थः । एतञ्च करुणामयुक्तस्य ज्ञानधर्मोपदेशेन कपिलादीनामपि सिद्धमित्याह, “तथा चोक्तं आदिविद्वान् कपिल” इति । आदिविद्वानिति पञ्चशिखाचार्य्यवचनम् आदिसृष्टस्वसन्तानादिगुरुविषय, नत्वनादिमुक्तपरमगुरुविषयम्, आदिमुक्तेषु कदाचिन्मुक्तेषु विद्वत्सु कपिलेषु अस्माकमादिर्विद्वान् मुक्तः स एव च गुरुरिति । कपिलस्यापि जायमानस्य महेश्वरानुग्रहादेव ज्ञानप्राप्तिः । श्रूयते हि कपिलोनाम विष्णोरवतारविशेष प्रसिद्ध स्वयंभूस्तु हिरण्यगर्भ , तस्यापि साङ्ख्ययोगप्राप्तिर्वेदे श्रूयते इति “स एवेश्वर आदिविद्वान् कपिलोविष्णु' स्वयम्भूरिति’ स्वायम्भुवादीनामपीश्वर इति भाव० २५ । “सम्प्रति भगवतो ब्रह्मादिभ्योविशेषमाह, ‘स एष इति प्रातनिका न तु सूत्रम् “पूर्वेषामपि गुरु' कालेनानवच्छेदात्” । व्याचष्टे, पूर्वे हीति । कालस्तु शतवर्षादि, अवच्छेदार्थेन अवच्छेदनप्रयोजनेनोपावर्त्तते, न वर्त्तते प्रकर्षस्य गति प्राप्ति प्रत्येतव्या आगमात् । तदनेन प्रबन्धेन भगवानीश्वरोदर्शित·” २६ वाचस्पतिविवरणम् ।

तस्येश्वरस्य लक्षणम् “जन्माद्यस्य यत ”शा०सूत्रभाष्ययोर्दर्शितम् तस्योपादाननिमित्तकारणोभयकारणपरतया समर्थित तस्यानुपदमुदाहृतम् । तस्य लक्षणानि नवमितानि यथाह ब्रह्मणस्तटस्थलक्षणोदाहरणे वेदा०परि० “प्रकृते च जगज्जन्मादिकारणत्वम् । अत्र जगत्पदेन कार्य्यजातं विवक्षितम् । कारणत्वञ्च कर्त्तृत्वम् अतो ऽविद्यादौ नातिव्याप्ति । कर्त्तृत्वञ्च तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम् । ईश्वरस्य तावदुपादानगोचरापरोक्षज्ञानसद्भावे च “य सर्वज्ञः सर्व्ववित् यस्य ज्ञानमयं तप । तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते”इत्यादि श्रुतिर्मानम् । तादृशचिकीर्षासद्भावे च“सोऽकामयत बहु स्यां प्रजायेयेति-श्रुतिर्मानम् । तादृशकृतौ च “तन्मनोऽकुरुतेत्यादि” वाक्यम् । ज्ञानेच्छाकृतीनामन्यतमगर्भं लक्षणत्रितयं विवक्षितम् अन्यथा व्यर्थविशेषणापत्ते । अतएव जन्मस्थितिध्वंसानामन्यतमस्यैव लक्षणे प्रवेशः । एवञ्च लक्षणानि नव सम्पद्यन्ते । ब्रह्मणोजगज्जन्मादिकारणत्वे च “यतोवा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्तीत्यादि”श्रुतिर्मानम् । यद्वा निखिलजगदुपादानत्वं जगदाकारेण परिणम्यमानमायाधिष्ठानत्वं वा । एतादृशमेवोपादानत्वमभिप्रेत्य“इदं सर्वं यदयमात्मा”“सच्चात्यच्चाभवत्”“बहु स्यां प्रजायेय”इत्यादिश्रुतिषु ब्रह्मप्रपञ्चयोस्तादात्म्यव्यपदेशः । घट· सन् घटोभाति घटइष्ट इत्यादिलौकिकव्यपदेशोऽपि सच्चिदानन्दरूपब्रह्मैक्याध्यासात्’ । अतएव “अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् । आद्यं त्रयं ब्रह्मरूपं मायारूपं ततो द्वय”मित्युक्तम् । श्रीधरस्वामिनाऽपि भाग०१स्क०टीकायाम् “विश्वसर्गविसर्गादिनवलक्षणलक्षितम्” इत्यनेन ब्रह्मण सर्गादित्रयस्य ज्ञानचिकीर्षाकृतिमत्त्वेन नव लक्षणान्युक्तानि । “मायोपाधिरयं जीवोऽविद्योपाधिरीश्वर” इत्युक्तेः तस्याविद्योपाधित्वम् अविद्या च कार्य्यकारणभेदेन द्विविधा तत्र कार्य्यरूपा मायाशब्देन वाच्या कारणरूपा तु अविद्याशब्दवाच्या । तत्र कार्य्यरूपाभिप्रायेणैव “इन्द्रोमायाभिःपुरुरूप ईयते” श्रुतिर्द्रष्टव्या । अविद्याभिप्रायेणैव तु“मायान्तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्” । “अजामेकां लोहितशुक्लकृष्णवर्णामित्यादि”श्रुतिश्च द्रष्टव्या । तस्या एकत्वेऽपि सत्त्वरजस्तमोरूपगुणभेदात् त्रैविध्येन तदुपहितचैतन्यस्यापि त्रैविध्यम् । तदभिप्रायेणैव “स च परमेश्वर एकोऽपि स्वोपाधीभूतमायानिष्ठसत्त्वरजस्तमोगुणभेदेन ब्रह्मविष्णुमहेश्वरादिशब्दवाच्यतां भजते” इति वेदा० परि० । “सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः पर' पुरुष एक इहास्य धत्ते । स्थित्यादये हरिविरिञ्चिहरेतिसंज्ञा ”भागवतम् । मत्स्याद्यवतारप्रभृतयोऽपि ब्रह्मकोटयएव । अत एव सिद्धान्तबिन्दौ “पुमाकारविष्णुप्रभृतीनां स्त्र्याकाराणाञ्च भारतीप्रभृतीनामीश्वररूपत्वमुक्तम् । तस्य नित्यतया निरवयवत्वेऽपि भक्तजीवानुग्रहवशात् तेषामुपासासिद्ध्यर्थं श्रुतिवेदपुराणप्रसिद्धाकारग्रहणम् “चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिण । उपासकानां सिद्ध्यर्थं ब्रह्मणोरूपकल्पने-त्युक्ते “योयो यां यां तनुं भक्तः श्रद्धयार्च्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहमिति” गीतोक्तेश्च । ईश्वरविभूतिशब्दे च दर्शयिष्यमाण

तत्तत्स्थानेषु ईश्वरस्याराध्यता । "यदा यदा हि धर्म्मस्य ग्लानिर्भवति भारत ! । अभ्युत्थानमधर्म्मस्य तदात्मानं सृजाम्यहम्" गीतोक्तेः जीवानां कार्य्यवशात् तस्य विग्रहवत्त्वेनाविर्भावः । किन्तु स्वादृष्टायत्तशरीरपरिग्रहस्यैव संसारित्वेन ईश्वरस्य शरीरपरिग्रहे जीवादृष्टस्यैव हेतुत्वेनेश्वरस्य न संसारित्वमिति भेद इति द्रष्टव्यम् । तत्र परमेश्वरे "यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः" विक्र० "उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः" पुरा० । "जगदाङ्कुरमीश्वरम्" गीता "न कीश्वरव्याहृतयः कदाचित् पुष्णन्ति लोके विपरीतमर्थम्" कुमा० । "क्लेशकर्म्मफलभोगवर्जितं पुंविशेषममुमीश्वरं विदुः" माघ । आढ्ये "ईश्वरोऽहमहं भोगी कोऽन्योऽस्ति सदृशो मम" गीता स्वामिनि । "आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति" कुमा० । शिवे स्वामिनि च "प्रालेयशीतमचलेश्वरमीश्वरोऽपि" कुमा० ऐश्वर्य्यान्वितस्त्रियां टाप् । "अविधेः शयनेऽप्यनीश्वरा सफलीकर्त्तुमहो मनोरथान्" रघु० । दुर्गायां तु ईश्वरपत्नीत्वाविवक्षायां टावेव । "विन्ध्यसमङ्गलमहीध्रधरीश्वरायाः" किरा० ।

ईश्वरविभूति स्त्री ६त० । ईश्वरस्य विभूतौ संसारमध्यस्थानविशेषेषु तदीयांशभेदे । येषु येषु च भावेषु तस्य चिन्तनीयता तत् दर्शितं गीतायाम् । "हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः । प्राधान्यतः कुरुश्रेष्ठ ! नास्त्यन्तो विस्तरस्य मे । अहमात्मा गुडाकेश ! सर्व्वभूताशयस्थितः । अहमादिश्च मध्यञ्च भूतानामन्त एव च । आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् । मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी । वेदानां सामवेदोऽस्मि देवानामस्मि वासवः । इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना । रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् । वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् । पुरोधसाञ्च मुख्यं मां विद्धि पार्थ ! बृहस्पतिम् । सेनानीनामहं स्कन्दः सरसामस्मि सागरः । महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् । यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः । अश्वत्थः सर्व्ववृक्षाणां देवर्षीणाञ्च नारदः । गन्धर्व्वाणां चित्ररथः सिद्धानां कपिलो मुनिः । उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् । ऐरावतं गजेन्द्राणां नराणाञ्च नराधिपम् । आयुधानामहं वज्रं धेनूनामस्मि कामधुक् । प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः । अनन्तश्चास्मि नागानां वरुणो यादसामहम् । पितॄणामर्य्यमा चास्मि यमः संयमतामहम् । प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् । मृगाणाञ्च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् । पवनः पवतामस्मि रामः शस्त्रभृतामहम् । झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी । सर्गाणामादिरन्तश्च मध्यञ्चैवाहमर्जुन ! । अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् । अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च । अहमेवाक्षयः कालो धाताहं विश्वतोमुखः । मृत्युः सर्व्वहरश्चाहमुद्भवश्च भविष्यताम् । कीर्त्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा । बृहत्साम तथा साम्नां गायत्री छन्दसामहम् । मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः । द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् । जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् । वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः । मुनीनामप्यहं व्यासः कवीनामुशना कविः । दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् । मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् । यच्चापि सर्व्वभूतानां बीजं तदहमर्जुन ! । न तदस्ति विना यत् स्यान्मया भूतं चराचरम् । नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ! । एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया । यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्ज्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् । अथ वा बहुनोक्तेन किं ज्ञातेन धनञ्जय ! । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" । १०मे च ।

ईश्वरसाक्षिन् पु० ईश्वर एव साक्षी । वेदान्तिमतसिद्धे मायोपहिते चैतन्ये स च वेदान्तपरिभाषायां दर्शितो यथा "ईश्वरसाक्षी तु मायोपहितं चैतन्यं तच्चैकं तदुपाधिभूतमायाया एकत्वात् "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुतौ मायाभिरिति बहुवचनस्य मायागतशक्तिविशेषाभिप्रायतया मायागतसत्त्वरजस्तमोरूपगुणाभिप्रायतया चोपपत्तिः । "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् । तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते । योगी मायाममेयाय तस्मै विद्यात्मने नमः" । "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इत्यादिश्रुतिषु एकवचनेन लाघवानुगृहीतेन मायाया एकत्वं निश्चीयते । ततश्च तदुपहितं चैतन्यमीश्वरसाक्षी तच्चानादि तदुपाधेर्मायाया अनादित्वात् । मायावच्छिन्नं चैतन्यञ्च परमेश्वरः मायाया विशेषणत्वे ईश्वरत्व उपा-

धित्वे साक्षित्वम् इतीश्वरत्वसाक्षित्वयोर्भेदः न तु धर्म्मिणोरी-श्वरतत्साक्षिणोः । स च परमेश्वर एकोऽपि स्वोपाधी-भूतमायानिष्ठसत्त्वरजस्तमोगुणभेदेन ब्रह्मविष्णुमहेश्वरादि-शब्दवाच्यतां भजते । नन्वीश्वरस्यानादित्वे “तदैक्षत बहु स्यां प्रजायेय, इत्यादौ सृष्टिपूर्व्वसमये परमेश्वरस्यागन्तुकमीक्ष-णमुच्यमानं कथमुपपद्यते ?। उच्यते । यथा विषयेन्द्रिय-सन्निकर्षादिकारणवशेन जीवोपाध्यन्तःकरणस्य वृत्तिभेदा जायन्ते तथा सृज्यमानप्राणिकर्म्मवशेन परमेश्वरोपाधीभू-तमायाया वृत्तिविशेषाः इदमिदानीं स्रष्टव्यमिदमिदानीं पालयितव्यमिदमिदानीं संहर्त्तव्यमित्याकारा वृत्तिभेदा जायन्ते तासाञ्च वृत्तीनां तत्प्रतिबिम्बितन्यस्य च सादित्वमिति”

ईश्वरी स्त्री ईश्वरस्य शिवस्य पत्नी ङीप् । १दुर्गायाम् । “ईश्वरीमीश्वरीं प्रियाम्” दुर्गास्तव । ईश- वनिप् ङीप् रान्तादेशश्च । २लिङ्गिनीलतायां ३वन्ध्याकर्कोट्याम्, ४रुद्र-जटालतायाम्, ५नाकुलीवृक्षे च । ऐश्वर्य्यान्वितायां स्त्रियाम् च । “ईश्वरो सर्वभूतानां त्वामिहोपह्वये-श्रियम्” श्रीसूक्तम् ।

ईष उञ्छे (उञ्छ् तदवचेतनात् कणश आदाने) तु०प०सक० सेट् । ईषति ऐषीत् । ईषाम् बभूव आस चकार । ईषिता ईष्यात् ईषिष्यति ऐषिष्यत् “विश्वप्सादीषतो यज-मानस्य परिधिः” तैत्ति० ।

ईष दाने दर्शने, सर्पणे हिंसने च भ्वादि०आत्म०सक०सेट् । ईषते । ऐषिष्ट ईषाञ्च बभूव आस चक्रे । ईषिता ईषिषीष्ट ईषिष्यते ऐषिष्यत । ईषत् ईषा “न्युरस्येव त्वेष-थादीषतेश्च” ऋ० १,१४१,८ । “यस्मादह तन्यिषा-दीषमाण” ऋ०१,१७१ ४७ ।

ईष पु० ईष—क । उत्तममनो पुत्रभेदे । “औत्तमेयान् महाराज । दश पुत्रान् मनोरिमान् । ईष ऊर्जस्तनूर्ज्जश्च मधुर्माधव एव च । शुचि शुक्र सहश्चैव नभस्यो नभएव च” हरिवं०७अ० ।

ईषत् अव्य०ईष—अति ।१अल्पे, २किञ्चिदर्थे च ।“ईषत्सहा-समल परिपूर्णचन्द्रबिम्बानुकारि” देवीमा० ईषदीषदुन्न-मीतविद्यया तातमात्मसदमाविवर्द्धयन्” कुसुमा०। “ईषद-क्ता”प्रा०समा० । ईषदुष्ण ईषत्पाण्डु । ३सूक्ष्मार्थे च “ईषद्धौतं नवं शुक्लं सदशं यन्न धारितम्”शगिउ । “ईषत् सूक्ष्मतन्तुकमिति रघुनन्दन” एतदुपपदे धातो खल् ईषत्कर ईषद्दमः । दुषादेस्तु युच् वा । ईषद्दर्श ईषद्दर्शन । एतत्पूर्व्वे धाट्ये उपपदे खल् ईष-दाढ्यङ्कर “ईषदाढ्यङ्करोऽप्येष” भट्टि ईषदाढ्यम्भवम् ।

ईषत्कर न० ईषत् कृ-खल् । १लेशे, २अल्पे च । ३अल्प-प्रयाससाध्ये त्रि० । [वर्णे २तद्वति त्रि०

ईषत्पाण्डु पु०“ईषदक्ततेति”पा०स० । १अल्पपाण्डौ धूसर-

ईषदुष्ण पु० “ईषदक्ततेति” पा०स० । अल्पतप्ते १मन्दोष्णे २तद्वति त्रि० [ २तद्वति त्रि०

ईषद्रक्त पु०“ईषदक्ततेति”सा०स०। अल्परक्तवर्णे १अव्यक्तरागे

ईषा स्त्री ईष—क । १शकटस्य दीर्घकाष्ठे “देवानामित्युपस्तम्भ-नस्य पश्चादीषाम्” कात्या० ७,३,१४, “शकटस्य दीर्घ काष्ठमीषा” वेददी०। २रथावयवभेदे च“ईषामन्ये हया-नन्ये सूतमन्ये न्यपातयन्” भा०क०२४०अ० “पाञ्चालस्य रथस्येषामाप्लुत्य सहसाऽपतत्” भा० द्रो० १२८अ० । ३हलयुगयोर्मध्यमकाष्ठे ४लाङ्गलदण्डे च ।

ईषादन्त पु०ईषेव दन्तोऽस्य ।१दीर्घदन्तगजे २उद्यदन्ते त्रि०

ईषिका स्त्री ईषेव “इवे प्रतिकृताविति”पा०कन् । १गजाक्षि गोलके, २तूलिकायाम्, ३अस्त्रविशेषे च ।“सोऽभिमन्त्र्य शरेषीकामीषिकास्त्रेण वीर्य्यवान् काक तमभिसन्धाय ससर्ज पुरुषर्षभ” रामा० । फर्करीकादि०नि० ईषी-कापि । तूलिकायाम् तृणभेदे “सोऽभिमन्त्र्य शरेषीका मीषिकास्त्रेण वीर्य्यवान्”ईषिकेति तालव्यमध्योऽप्यत्रार्थे ।

ईषिर पु० ईष हिंसने किरच् । अग्नौ उज्ज्वलदत्त ।

ईष्म पु०ईष—सर्पणे करणे मक् । १कामदेवे ईष ईषणे कर्म्म णि मक् । २वसन्तर्त्तौ च उज्ज्वल० ।

ईह चेष्टने भ्वादि०आत्म०अक०सेट् । ईहते ऐहिष्ट ऐहिढ्वम् ऐहिध्वम् । ईहाम्-बभूव आस चक्रे ईहिता ईहिषीष्ट ईहिष्यते ऐहिष्यत । ईहनम् ईहा ईहमान ईहित “शक्त्यानीहमानस्य किञ्चिद्वृत्त्वा पृथक् क्रिया” स्मृति । “ऐहिष्ट तं कारयितुं कृतात्मा” भट्टि । प्रियाप्ति वाञ्छन्त्यसुभिः समीहितुम् । “हन्तु क्रोधवशादीहाञ्च-क्राते तौ परस्परम्” इति च किरा० । अस्य इच्छापूर्व्व-कचेष्टापरत्वे सक० “नेहेतार्थान् प्रसङ्गेन”मनु । “नस्या राधनमीहते” गीता ।

ईहा स्त्री ईह—अ । १चेष्टायाम्, २उद्यमे, ३वाञ्छायाञ्च । “ईहादेहार्थमाश स्याज्जन्मर्क्षे उपतापिते । ज्योति० ।

ईहामृग पु० ईहा मृगयते अण् ईहाप्रधानो वा मृगः पशुभेदः । (नेकडावाघ) ।१वृके ईहया ईहासाध्यो मृग । २कल्पितमृगे अलङ्कारशास्त्रलक्षिते ३नाटकभेदे च साहि० ६ परि० । यथा“ईहामृगो मिश्रवृत्तश्चतुरङ्क प्रकीर्त्तित ।

णि अप्रगीतमन्त्रसाध्यानि स्तोत्राणि" भा० "अथ योऽसा-वन्तरक्षिणि पुरुषो दृश्यते सैवर्क्, तत् साम तदुक्थं तद्यजुस्तद्ब्रह्म" छा०उ० । तथा हि स्तोत्रं द्विविधं प्रगीतमन्त्रसाध्यमप्रगीतमन्त्रसाध्यञ्च तत्र प्रगीतमन्त्रसाध्यं शस्त्रम् अप्रगीतमन्त्रसाध्यन्तु स्तोत्रमिति तयोर्भेदः । गवामयने प्रायणीयसप्तकाहे प्रायणप्रचुरदशस्तोत्रात्मके ३चतुर्विंशस्तोमभेदे उपचारात् ३तत्साध्ये उक्थ्ययागे च तद्विधानञ्च" ता०ब्रा०४अ०२ख०उक्तं यथा "१प्राय-णीयमहर्भवति" १ इत्युपक्रम्य "चतुर्विंश भवति"४ क० "इदमहरुक्थसंस्थन्तत्र सर्वेषु स्तोत्रेषु चतुर्विं-शएव स्तोम कार्य्य ४ । तदेतत् प्रशंसति" भा० । "चतुर्विंशत्यक्षरा गायत्री तेजोब्रह्मवर्चसङ्गायत्री तेज एव ब्रह्मवर्चसमारभ्य स्वर्यन्ति" ५ ।"अयञ्च स्तोमश्चतुर्विंशति-सङ्ख्याकः गायत्री च चतुर्विंशत्यक्षरा सा च गायत्री तेजः, प्रजापतिमुखादग्निना सहोत्पन्नत्वात् अस्यास्तेजोरूपं ब्रह्मवर्चसं च तेजोऽवान्तरभेद इति तेजोब्रह्मवर्चसरूपा गायत्री। एवं सति चतुर्विंशतिस्तोमं प्रथमतः प्रयुञ्जाना साक्षादेव प्रत्यक्षमेव संवत्सरं प्रारभन्ते अभिचरन्ति प्रयु-ञ्जाना: सङ्ख्याद्वारेण तेजोब्रह्मवर्चसञ्चारभ्य संवत्सरं स्वर्यन्ति स्वर्गं गच्छन्ति५। पुनरपि विहितं स्तोममनूद्य प्रशंसति" भा०। "चतुर्विंशतिर्भवति चतुर्विंशो वै संवत्स-रः साक्षादेव संवत्सरमारभन्ते"६।"चतुर्विंशत्यर्द्धमासात्मक-त्वात् संवत्सरस्य चतुर्विंशत्वं तथा सति चतुर्विंशस्तोमं प्रथमतः प्रयुञ्जाना साक्षादेव प्रत्यक्षमेव संवत्सरमार-भन्ते ६। अथेमं स्तोमं स्तोत्रीयागतसंख्याद्वारेण प्रश-संति" भा० । "यावत्यश्चतुर्विंशस्योक्थस्य स्तोत्रीयास्तावत्य संवत्सरस्य रात्रय स्तोत्रीयाभिरेव संवत्सरमाप्नु-वन्ति"७। "पञ्चदशस्तोत्रे अस्मिन्नहनि पञ्चदशसु स्तोत्रेषु प्रत्येकं चतुर्विंशस्तोत्रीयायुक्तेषु परिगणनायां मिलित्वा षष्ट्युत्तरत्रिशतस्तोत्रीया भवन्ति । तथा सति चतुर्विंश-स्तोमस्य यावत्यः स्तोत्रीयाः संवत्सरस्यापि तावत्योरात्रय एव प्रयुञ्जाना: सवित्स्तोम चतुर्विंशेन स्तोत्रीयाभिरेव संवत्सरं प्राप्नुवन्ति७ । स्तोत्रसंख्ययापीदमहः प्रशंसति" भा०।"पञ्चदश स्तोत्राणि भवन्ति पञ्चदशार्द्धमासस्य रात्रयो-ऽर्द्धमासश एव तत्संवत्सरमाप्नुवन्ति" ८।"स्पष्टोऽर्थः ८"। अथ स्तोत्रशस्त्राणि समुच्चित्य तत्सङ्ख्ययापीदमहः प्रशंसति" भा० "पञ्चदश स्तोत्राणि पञ्चदश शस्त्राणि समासो मासश एव तत् संवत्सरमाप्नुवन्ति९" स्पष्टोऽर्थ ९भा०। तत्राग्निष्टोम-कर्त्तव्यतारूपं पूर्वपक्षमुपन्यस्योत्तरमनमाह "अथो खल्वा-हुरुक्थमेव कार्य्यमहः समृद्ध्यै"१२। "अथो इति पूर्वपक्ष-व्यावृत्त्यर्थं । उक्थसंस्थमेवेदमहः कार्य्यं किमर्थमहः स-मृद्ध्यै सम्पूर्णतायै इति ब्रह्मवादिन आहुः । अग्नि-ष्टोमे हि पूर्वयो: सवनयो पञ्च पञ्च स्तोत्राणि तृतीये तु द्वे एवेत्यहः समृद्धिर्न भवति, उक्थ्ये तु तृतीयसवने पञ्च स्तोत्राणीत्यहः समृद्धं भवति१२ । उक्थसंस्थाङ्गी-कारे युक्त्यन्तरमाह" भा० । "सर्व्वाणि रूपाणि क्रियन्ते सर्व्वं ह्येतेनाप्यते" १४ "उत्तरेणाऽह्ना सम्बन्धीनि यानि रूपाणि स्तोमपृष्ठविभक्त्यादीनि तान्यस्मिन्नुक्थ्ये क्रियन्ते अतः सर्वं हि यज्ञसम्बन्धिरूपं तेनाह्ना उक्थसंस्थेन आप्यते प्राप्यते तत उक्थसंस्थैव कार्य्येत्यर्थः । सर्वरूप-करणञ्च सर्व्वावाप्तिश्च सम्पादनद्वारेणेति निदानकारे-णोच्यते, "अथो खल्वाहुः सर्व्वाणि रूपाणि क्रियन्त इति" आचार्य्या एतेष्वेव सर्व्वान् स्तोमान् सर्व्वाणि पृष्ठानि सर्वा विभक्तीर्द्व्यरात्ररूपा इति विभक्तिमात्रेण कल्प-यन्त इति संदृष्टोक्ता पुनस्त्रिवृत्पञ्चदशौ चतुर्विंश स-म्पादयत इत्यादिना"१४ भा०। एतान्येव स्तोमपृष्ठादीनि प्रत्येकं क्रमेण विविच्य तत्र प्रदर्शितानि तत्सर्वं तत एवागन्तव्यम् । तत्र च तस्मिन्नहनि यथा स्तोमादिकं विधेयम् तदपि तत्रैव दर्शितं तत एव तदवसेयम् । अत्र उक्थसाध्ययागे अभेदोपचार इति बोध्यम् ।

४होत्रायां स्त्री उक्थायशस्त्रशब्दे उदा० उच्यतेऽनेन करणे थक् । ५उक्थसाधने प्राणे च "यस्य नाथवियोगेन लोकोऽप्रियदर्शन । उक्थेन रहितोह्येष सूतक प्रोच्यते यथा" भाग०१स्क०१५अ० ।

उक्थपत्र पु० उक्थानि अप्रगीतमन्त्रसाध्यानि स्तोत्राणि पत्रं वाहनमिव यस्य ।।यज्ञे, स्तोत्रैरेव हि यज्ञोवाह्यते इति तस्य तथात्वम् । "समिद्धे अग्नावधिमामहान उक्थ-पत्र ईड्योगृभीतः" यजु० १०,५५ । "यजमानोवै साम हान उक्थपत्र इत्युक्थानि ह्येतस्य पत्राणि" शत०ब्रा० ६,२,३,९ इत्युक्ते २ यजमानेऽपि । [चिन्त्यम् ।

उक्थपात्र न० ६त० । यजमाने तस्य उक्थस्तावकत्वा-

उक्थभृत् पु० उक्थं बिभर्त्ति सम्यक्विभजते भृ–क्विप् ६त० । उक्थविभाजके ऋषिभेदे "उक्थभृत सामभृत बिभर्त्ति ग्रीवायम्" अ० ७, २२, १४ । उक्थभृत उक्थानां स्तोत्राणां संभर्त्तारम्" ।

उक्थवर्द्धन पु०उक्थैः स्तोत्रैर्वर्द्धतेऽसौ वृध–णिच् कर्म्मणि

र्त्तितम्” छन्दो० उक्तेस्तथार्थता “अपिधान प्रोक्षिताभ्याम्” कात्या० ६,१०,४,। “तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः” ऋ०१०,९०,७, “प्रोक्षिता स्थ अग्नये त्वा जुष्टं प्रोक्षामि। अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि” यजु० १,१३, “कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामि। वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामि। बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि” यजु०२,१, “रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान्” यजु०५,२५, “संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः” कुसुमा० “इत्युक्ते पुरुषसंस्कार इति नैयायिकाः। मीमांसकमते द्रव्यसंस्कार इति भेद अभ्युक्षणशब्दे विवृतिः। “प्रोक्षितं भक्षयेन्मांसम्” मनु।

सम्+प्र+ सम्यक् प्रोक्षणे। “प्राणानायम्य संप्रोक्षेत् चेमाब्दैवतेन तु” या० स्मृति।

वि+विशेषेण सेचने “ज्ञयो वि रोरुवज्जठरे विश्वमुक्षते” ऋ० १०,९२,५। “व्यवहिताश्चेति” पा० उपसर्गव्यवधानम्। “केशमिश्रेव ह्यास ता व्यौक्षदोप धयेति” शत० ब्रा० २,२,४,५।

अभि+वि+ आभिमुख्येन विशेषेण सेचने। “तत्तस्मादु तथैव सम्राज्याम् यथाग्निं नाभिव्युक्षेत्” शत० ब्रा० १,२,१,१०

सम्+सम्यक् सेचने। “समुक्षितं सुतं सोमम्” ऋ० २,६०,५। “इदं ते अस्मं युज्यं समुक्षितम्” ऋ० ८,४,१२

उक्ष त्रि० उक्ष–अच्। १सेक्तरि “सुमतिभिः मनोहरेभ्य उक्षाय नः” यजु०८,८४, कर्मणि घञ्। २सिक्ते “उक्षान् प्रचक्रुः” भट्टि

उक्षण न० उक्ष–ल्युट्। द्रवद्रव्येण संयोजनव्यापारे “वसिष्ठमन्त्रोक्षणजात् प्रभावात्” रघु०। [मावस्ये वृषे।

उक्षतर पु० अल्पः उक्षा ह्रस्वत्वे तरप्। अप्राप्तवाह-

उक्षन् पु० उक्ष–कनिन्। १वृषे, २ऋषभौषधौ च। “विटपिविट-महाकुलासंहत्या विषाणविघट्टनैः” माघ। “उक्षेव यूथा-परियन्नरावीत्” ऋ० ९,७१,९। “उक्षा मिमाति प्रति यन्ति धेनवः” ऋ० ९,६९,४। “शरद्घनात्मुद्दीधितिमानिवोक्ष्णः” कुमा० “न वराह न चोक्षाणं न मृगान् विविधान् तथा” भा० अ० १२१। “उक्षाणं पक्त्वा सह ओदनेन तस्मात् कपोतात् प्रति ते नयेद्य” भा० व० १९६। “कौल चोक्षाणं मेध्यमभ्यालभेत” भा० आश्व० ११अ०। २सेचनकर्त्तरि। सेचके त्रि०। “उक्षा समुद्रो अरुषः सुपर्णः” ऋ० ५,४७,२, “उक्षा बिभर्त्ति भुवनानि वाजयुः” ऋ० ६,८१,२। आत्मन उक्षाणं वृषमिच्छति उक्षीयति

वेदे तु न नलोपः। उक्षण्यति। “वयं हि वा हवामहे उक्षण्यन्तो व्यश्ववत्” ऋ०, ६,९। तत्र कर्त्तरि उ उक्षण्युः आत्मनोऽपेक्षो “व्यश्वस्त्वा वसुविदमुक्षण्युरप्रीणादृषिः” ऋ० ८,२३,१८। जातवृद्धमहद्भ्यः परस्य अच् समा०। जातोक्षः वृद्धोक्षः महोक्षः “महोक्षं वा महाजं वा श्रोत्रियाय प्रकल्पयेत्” स्मृतिः “त्रिलोक्य वृद्धोक्षमधिष्ठितं त्वया” कुमा०। उक्षणोऽपत्यम् अण् टिलोपः। औक्षण तदपत्ये तस्य टमि त्यणि अनपत्ये तु नलोपः न टिलोपः। औक्ष सि० कौ० उक्षणां समूहः वुञ्। औक्षक वृषसंघे न०। कुरुपूर्व्वंशस्य ४राजभेदे च। तस्य गोत्रापत्ये यञ् न वृद्धिः। उक्षण्य-तद्गोत्रापत्ये पुस्त्री०। तदन्तत्वात् फक् उक्षण्यायन “ऋज्रमुक्षण्यायने रजतं हरयाणे” ऋ० ८,२५,२२। “उक्षनामा कश्चित् ऋषिः पूर्व्वजः तस्य गोत्रापत्ये उक्षन् शब्दात् यञ् तदन्तत्वात् फक्। संज्ञापूर्व्वकविधिरनित्य इति न वृद्धिः अयस्तु छान्दसः लोकेऽस्य न प्रयोगः” भा०।

उक्षवश त्रि० उक्षा वशा यथास्थानीयौ यस्य। वन्ध्याऽलाभे वशात्वेन कल्पितवृषके १यजमानभेदे। तत्र वशा-रूपादिकमभिधाय वृषस्य तत्प्रतिनिधित्वम्” शत० ब्रा० ४,५,१,९, उक्तं यथा “मैत्रावरुणी वशा भवति यत्र वै देवा रेतः सिक्तं प्राजनयंस्तदग्निमारुत” मित्युपक्रम्य पश्वादीनामुत्पत्तिमभिधाय “अथ यदा न कश्चन रसः पर्य्यशिष्यत तत एषा मैत्रावरुणी वशा समभवत् तस्मादेषा न प्रजायते रसाद्धि रेतसः प्रभवस्तद्यदन्ततः समभवत् तस्मादन्ते यज्ञस्यानुवर्त्तते तस्माद्वा एषा न प्रजायते मैत्रावरुणी वशाऽवकृष्टतमा भवति यदि वशा न विन्देदप्युक्षवश एव स्यात्”। २वृषायत्ते त्रि०। “उक्षवेहदपि वेहत्स्थानीयकल्पितवृषे यजमाने शत० ब्रा० उद्विषिक्तम्।

उक्षित त्रि० उक्ष–क्त। सिक्ते उक्षधातौ उदा०।

उख गतौ भ्वादि० पर० सक० सेट्। ओखति औखीत् उवोख ऊखतुः ओखिता ओखात् ओखिष्यति औखिष्यत् उखा।

उखि गतौ इदित् भ्वादि० पर० सक० सेट्। उङ्खति औङ्खीत्। उङ्खाम्—बभूव आस चकार। उङ्खिता उङ्खरात् उङ्खिष्यति औङ्खिष्यत्।

उखर्वल पु० उख–वलच् रुडागमः किच्च। भूरिपत्रे तृणभेदे राजनि० “बल्वजो रुचिकारी च प्रसूना सर्वदा-हित”। अस्य गुणा राजनि० उक्ता।

उखल पु० उख–कलच्। भूरिपत्रे तृणभेदे उखर्वले राजनि०।

उखा स्त्री उख–क। १पाकपात्रे पिठरादौ। (हाँड़ि)।

"यन्नीक्षणं मांस्पचन्या उखाया ये पात्राणि यूष्ण आसेचनानि" ऋ० १,१६२,१३ । छन्दसैतामाश्रित्यैव "मांस्पचन्या उखायाः" इति पा० भाष्यकृतोदाहृतम् । यज्ञियेष्टकासाधने २चुल्लीरूपे पदार्थे तत्करणप्रकारः कात्या० श्रौ० १६,१,१, सूत्रादौ उक्तः तच्च इष्टकाशब्दे ९८१पृष्ठे दर्शितम् । "उखास्रत्" सि०कौ०शत०ब्रा०तु स्थाल्यौपरोखाशब्दस्य निरुक्तिरन्यथैवोक्ता यथा । "अथैनमुखयाद्विभर्त्ति इमे वै लोका उखा इमे वा एत लोका यन्नमर्हन्ति एभिरेव लोक देवा अबिभरुरेभिरेवैनमेतल्लोकैर्बिभर्त्त्येया यदुखा नाम एतद्दे देवता यैतेन कर्मणैतयाहेतेमाँ लोकानुदखनन् यदुखनंस्तस्मादुत्खा उत्खा वैतामुखेत्याचक्षते परोक्षं, परोक्षकामा हि देवा" ६,७,१,२२ २३ । अस्य "न क्रोडादिबह्वचः" पा० क्रोडादिगणपाठात् स्वाङ्गवाचितायामपि तेन ह्रस्वदुखेत्यत्र न ङीष् उखाया संस्कृत यत् । उख्य तत्र संस्कृते त्रि० । भवार्थे दिगा० यत् । उख्य उखाभवे त्रि० । तस्य वर्ग्यादि० कर्मधारयसमासे आद्युदात्तता ।

उख्य त्रि० उखाया संस्कृत यत् । उखासंस्कृते मांसादौ "स्थुल्यमुख्यञ्च होमवान्" भट्टिः उखाया भवः दिगा० यत् । उखाभवे त्रि० । "उख्यान् हस्तेषु बिभ्रत" अथ० ४,१४,२ । उख्यामग्नीत् । "अथ यद्येष उख्योऽग्निरनु गच्छेत्' शत०ब्रा० ६,६,४,१० । "प्रागन लतोख्यस्योत्तरत समिदाधानम्" "अनूख्यभस्मावपन क्रयणीयादौ" कात्या० १६,६,१०,।५,२२ । 'सविता त्वोख्य निरवपति समितमिति" १७,१,१८ । स्त्रियां टाप् तत कलत्रादि० जातादौ ठकञ । चौख्येय उख्याजाते त्रि० ।

उगण त्रि० उद्गूर्णं उद्यायुधं गणो यस्य पृषो० । उद्यायुधगणोपेते "या सेना अभीत्वरीराव्याधिनीरुगणा उत' यजु० ११, ७७, 'उगणाभ्यस्तृंहतीभ्यश्च वो नमो नमः" यजु० १६,१४ ।

उग्र पु० उच–रक् गश्चान्तादेश । १महादेवे, वायुमूर्त्तिधारिणि शिवे क्षत्रियात् जाताया शूद्रायामुत्पन्ने २सङ्कीर्णवर्णे (आगुरी) उग्रगुणत्वात् ३गोभाञ्जनवृक्षे, ४केरलदेशे, क्रूरग्रहके "उग्र' पूर्व मघान्तका" इति ज्योतिषोक्ते ५नक्षत्रपञ्चके च ६वत्सनाभाख्ये विषे न० । ७उत्कटे त्रि० । ८वचायां ९यवान्याः, १०धन्याके, ११उग्रजाते स्त्रियां च स्त्री टाप् । तत्र "शिववाचकोग्रनामनिरुक्ति" र्यथा 'तमब्रवोदुग्रोऽसीति तद्यदस्य तन्नामाकरोत् वायुस्तद्रूपमभवद्वायुर्वा उग्रस्तस्माद्यदा बलवद्वात्युग्रो वातीत्याहुः सोऽब्रवीत् ज्यायान् वा अतोऽस्मि" शत०ब्रा० ६,१,३,१३ । उक्तश्रुत्युक्तेः १२वायौ पु० । उग्ररूपत्वादेव अष्टमूर्त्तिपूजने उग्राय वायुमूर्त्तये नमः इति तिथितत्त्वे उक्तम् । "शूद्रस्य विप्रकन्यायां जात उग्र इति स्मृत" उशनसोक्ते १३चाण्डालरूपवर्णसङ्करे च क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान् । क्षत्रशूद्रवपुर्जन्तुरुग्रनामा ततोऽभवदिति मनूक्तादयं भिन्न " "क्षत्रुग्रपुक्कसानान्तु बिलौकोवधबन्धनमिति" मनु करणेन समा चास्य इत्सिर्भागैवनिर्मिता" स्मृति' अस्योग्रस्य । १४उत्कृष्टे त्रि० । 'उग्र शर्म महि श्रव" यजु० २६,१६ । १५असुरभेदे पु० "विप्रचित्ति शिवि शङ्कु" इत्युपक्रम्यासुरगणनायां 'वेगवान् केतुमांश्च सोऽपव्ययोमहासुर" हरिव० ३६३अ० । तत्र वचायाम् "वत्षाह्वयमियद्रूपायष्पाह्वयरसाङ्कुने" "उग्रा कुष्टम्" तीक्ष्णगन्धा विदङ्गं श्वेत नित्य वाक्ययोः करञ्जम्" । "विडङ्गभल्लातकचित्रकोग्राकटुत्रिकाम्भोदसुराष्ट्रजाश्च" इति च सुश्रु० १६तीक्ष्णवीर्ये त्रि० । १७कालिकावरणभेदे स्त्री । "विप्रचित्ता तथोग्रोग्रप्रभा दीप्ता घनत्विष "कालीकल्पम् । १८उग्रतारायोगिनीभेदे च । "महाकाल्युग्र रुद्राणी उग्रा भीमा तथैव च" कालिकापु० । १६दीर्घे च उग्रनासिक । २०सर्वकार्येषु उद्यते "उग्रासोऽस्य उग्रवाहव इति' ऋ० ८,२०,१२ । उग्रासः उद्गूर्णाः सर्वकार्येषु उद्यता" भा० उच–समवाये इति धातोर्निष्पन्नतया क्रोधतीक्ष्णरसादिना विशेषसम्बन्धात् एषां च सर्वेषाम् उग्रत्वम् । उग्रप्रभोग्रदंष्ट्रादियोगिनीभेदेऽपि उत्कटाद्यर्थता ज्ञेयम्" भा ।

उग्रक त्रि० उग्र+संज्ञायाम् कन् । नागभेदे । नागनामाख्याने "आर्यकश्चोग्रकश्चैव नाग कनकपोतक" भा० आ० ३५ अ० । २शूरे च "उग्रपुत्रशब्दे उदा० ।

उग्रकर्म्मन् त्रि० उग्रं कर्म्मास्य । १हिंस्रे पश्वादौ २मार्षापिचिसके ३क्रूरादौ च । [इक्षुभेदे राजनि० ।

उग्रकाण्ड पु० उग्र काण्डोऽस्य । ( करेला ) कारवेल्ले

उग्रगन्ध पु० उग्र गन्ध पुष्पादौ यस्य । १चम्पके, २कट्फले ३अर्जकवृक्षे ४लशुने च । ५हिङ्गुनि न० । ६उत्कटगन्धादौ त्रि० । ७यवान्याम् ८वचायाम्, ६अजमोदायाञ्च स्त्री टाप् । राजनिघण्टुमेदिनी ।

उग्रचण्डा स्त्री० उग्रा चण्डा कोपना कर्म्म० । १देवीभेदे । तदाविर्भाव कालिका० पु० ५८,६० अ० उक्तः "उग्रचण्डा तु या मूर्त्तिरष्टादशभुजाऽभवत् । सा नवम्या

टलश्यामम, गजजयज्ञोपवीता नीलवर्णा लम्बोदरी खर्वा चतुर्भुजा तत्र उपरि दक्षिणे सरक्तमांसखण्डमण्डितमुष्टिनिविष्टजटाजूटसंलग्नोग्रखड्गविभूषितकरा उपरि वामे रक्तनालकिञ्चिद्विकसन्नीलोत्पलकरा अधस्तात् दक्षिणे बीजपूरितकर्त्तृकालङ्कृतकरा अधस्तात् वामे त्रिजगज्जाड्यखण्डककपालमण्डितकरा भुजचतुष्टये धूम्राभनागकृतकेयूरा कनकाभनागकृतकङ्कणा शवारूढा प्रत्यालीढस्थानाधिष्ठिता निर्भरयन्त्रणाप्रायेण शवहृदयस्थितदक्षिणचरणा शवोरुद्वयस्थितप्रासारितवामपादा कुन्दाभनागकृतकटीसूत्रा पाटलनागकृतनूपुरालङ्कृता सद्यश्छिन्नगलद्रुधिरान्योन्यकेशग्रथितपादपद्मप्रलम्बित–पञ्चाशत्तमनुष्यमुण्डमाला ज्वलदनलचितामध्यस्थिता द्वीपिचर्म्मालङ्कृतकटिवस्त्रा योपिदस्थिवालङ्कारभूषिता मौलावक्षोभ्यरूपनागभूषिता पञ्चसंख्यान्वितकपालमालाभूषितललाटा ललज्जिह्वा दंष्ट्रा इत्येव रूपा। अत्र प्रमाणनाक्ययो शवहृदयस्थले यामदक्षिणपादयोर्विकल्प इत्यतोमूर्त्तिद्वयमित्यन्ये। प्रत्यालीढपदार्प्पितशवहृदित्युक्तेः आलीढ दक्षिण पादं प्रत्यालीढं तु वामकमित्युक्तेः आलीढशब्दे दर्शितवाक्याच्च प्रत्यालीढशब्दस्य आलीढविपर्य्ययरूपत्वात् वामचरणस्यैव शवहृदयस्थितिरिति तु न्याय्यम्।

**उग्रधन्वन्** पु० उग्रं धनुर्यस्य ब०स० अनङ् समा०। १शिवे २प्रबलभिरसह्यधनुष्के त्रि०। “स इषुहस्तैः स निषङ्गिभिर्वशी संसृष्टा सयुध इन्द्रोगणेन। संसृष्टजित् सोमपा बाहुशर्द्ध्युग्रधन्वा प्रतिहिताभिरस्ता” ऋ०१०,१०३,३।

**उग्रनासिक** त्रि० उग्रा दीर्घा नासिका यस्य। दीर्घनासिके।

**उग्रपुत्र** पु०उग्रस्य शूरस्य पुत्र। १शूरवंशजाते। “कार्ष्णो वा वैदेहोवोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा” शत०ब्रा०१४, ६,८। “उग्रपुत्र शूरान्वय”भा०। “उग्रस्य शिवस्य पुत्र। २कार्त्तिकेये। उग्र उद्धूर्ण पुत्रो यस्मिन्। ३ताडृशे गभीरजलाशये “आँ उग्रपुत्रे जिघांसत” ऋ० ८,६७,११। उग्रपुत्रे उग्रा उद्धूर्णा पुत्रा यस्मिन् तस्मिन्नुदके” भा०।

**उग्रम्पश्य** त्रि० उग्रं पश्यति उग्र+दृश–खश् मुम्। पापामयतया क्रूरदृष्टियुक्ते उभजनौ व्याघ्राद्यौ “उग्रम्पश्याकुवेऽरण्ये” भट्टि।

**उग्रव्यग्र** पु० असुरभेदे उग्रशब्दे उदा०।

**उग्रशेखरा** स्त्री उग्रस्य शेखरं यासस्थानत्वेनास्त्यस्या अर्श० अच्। गङ्गायाम् शब्दरत्ना० सा हि तस्य शिरसि स्थिता

**उग्रश्रवस्** पु० उग्रम् उत्कृष्ट श्रुतिधर श्रव कर्णो यस्य। १रोमहर्षणे सौतौ। “लोमहर्षणउग्रश्रवा सौति पौराणिको नैमिषारण्ये” भा० १अ०। २धृतराष्ट्रपुत्रभेदे च। तत्पुत्रनामाख्याने “उग्रश्रवा उग्रसेन क्षेममूर्त्तिस्तथैव च” भा० आ० ६७अ०। “उग्रश्रवा उग्रसेन सेनानीर्दुष्पराजय” भा०आ० ११७अ०।

**उग्रसेन** पु० उग्रा सेना यस्य। १धृतराष्ट्रपुत्रभेदे, उग्रश्रवशब्दे उदा०। २कुरुवंश्ये नृपभेदे। “पुरोस्तु पुत्राश्चत्वार सुधन्वा सुधनुस्तथा। परिक्षिच्च महाबाहु” इत्युपक्रम्य “परिक्षितस्तु दायादो धार्मिको जनमेजय। जनमेजयस्य दायादास्त्रय एव महारथा। श्रुतसेनोग्रसेनौ च भीमसेनश्च नामत” हरि० ३२ अ०। अयञ्च जनमेजय अभिमन्युपौत्रात् भिन्नएव। अतएव “द्वावृचौ तव वंशेऽस्मिन् द्वावेव च परिक्षितौ। भीमसेनास्त्रयोराजन्। द्वौ चापि जनमेजयौ”इति जनमेजय प्रति तत्रोक्तम्। यदुवंश्ये ३नृपभेदे च। “अन्धकश्च महाबाहु वृष्णिश्च यदुनन्दनम्” इत्युपक्रम्य “अन्धकात् काश्यदुहिता चतुरोऽलभतात्मजान्। कुकुर भजमानञ्च शम कम्बलबर्हिषम्। कुकुरस्य सुतोधृष्णुर्धृष्णोस्तु तनयस्तथा। कपोतरोमा तस्याथ तैत्तिरिस्तनयोऽभवत्। जज्ञे पुनर्वसुस्तस्मादभिजिच्च पुनर्वसो। तथा वै पुत्रमिथुन बभूवाभिजित किल। आहुकश्चाहुकी चैव ख्यातौ ख्यातिमता वरौ” इत्याहुकोत्पत्तिमभिधाय “आहुकस्य तु काश्यायां द्वौ पुत्रौ सम्बभूवतु। देवकश्चोग्रसेनश्च देवगर्भसमावुभौ। नवोग्रसेनस्य सुता तेषां कंसस्तु पूर्व्वज” हरि०३८अ०।

**उग्रसेनज** पु० जायते इति जन–ड ६त०। कंसे तस्योग्रसेनक्षेत्रे ऽसुरजातत्वेन तत्पुत्रत्वम्। कंसशब्दे विवृतिः

**उग्रादेव** पु० उग्रेणादीव्यति आ+दिव–अच् ३त०। राजर्षिभेदे “अग्निना तुर्वशं यदु परावत उग्रादेवँ हवामहे” ऋ० १,३६,१८, उग्रादेवनामकञ्च राजर्षिम्” भा०।

**उग्रायुध** पु०उग्राणि आयुधान्यस्य। १पौरवे राजभेदे तस्योत्पत्तिर्भीष्महननकथादि हरिव० २० अ०। “अजमीढस्य दायाद” इत्युपक्रम्य तद्वंशपरम्परा उक्त्वा “तस्य वै सन्नते पुत्र कृतो नाम महाबल” इति कृतोत्पत्तिमुक्त्वा। “कार्त्तिरुग्रायुध सोऽथ वीर पौरवनन्दन। बभूव येन विक्रम्य पृषतस्य पितामह। नीपो नाम महातेजा पञ्चालाधिपतिर्हत। उग्रायुधस्य दायाद क्षेम्यो नाम महायशा। क्षेम्यात् सुवीरो नृपति

परमोच्चता चन्द्रस्य वृषे ३भागे, कुजस्य मकर २८भागे बुधस्य कन्यायां १५भागे, गुरोः कर्कें ५भागे, भृगोः मीन २७भागे शनेस्तुला २०भागे तथात्वम्। "स्वोच्चाच्च सप्तमं नीचं प्राग्वद्भागैर्विनिर्दिशेत्। उच्चान्ते सूच्चयसं स्यात् नीचान्ते तु सुनीचकं" परिपूर्णबलः स्वोच्चे सुनीचे दुर्बलो ग्रहः। स्वोच्चसुनीचयोरन्तर्भागहारात् फलं दिशेत्" ज्योति०त०। ताजकत्वोस्तु "उच्चं न्टयुग्म घटभं त्रिकोणं कन्याटग्रहे शुक्रशनी च मित्रे। सूर्य शशाङ्को धरणीसुतश्च राह्णो रिपुर्विंशतिकः पराशः। सिंहस्त्रिकोणं धनुरुच्चसंज्ञं मीनोऽटग्रहे शुक्रशनी विपक्षौ। सूर्यारचन्द्रा सुहृदः समानौ जीवेन्दुजौ षट्शिखिनः पराशाः" ज्यो०त०। राशिपरत्वेऽस्य पु स्त्व भपरत्वे क्लीवतेति भेदः। भागहारात् ग्रहबलमुक्तं तदानयनप्रकारः नी०ता० सूर्यादेर्मेषादीन्युच्चान्यभिधाय "तत् सप्तमं नीचमनेन हीनो ग्रहोऽधिकश्चेत् रसभाद्विशोध्यः। चक्रात्, तदंशाङ्कलवो बलं स्यात्" २तथा च ताजके स्वोच्चे २०कला बलं तेन षड्भिः राशिभिर्यदि पूर्णबलं तदा इष्टाशैः किमिति १८०,२०,१, लैराशिकेन प्रत्येकाशं १/९ बलमायाति। जातके तु स्वोच्चे ६०कला बलं तेन प्रत्यंशं १/३ बलम्। नी०ताजके "त्रिशवृस्वभे विंशतिरुच्चभे स्वे" इति उक्तम्। जातके तु श्रीपतिः ६० कला बलमाह यथा "नीचोनोद्युचरोऽधिको यदि भवेत् षड्भात् तदाप्रच्युतश्चक्रात् लृप्तकलः खखाष्टखकुभिः (१०८००) र्भक्तोबलं तद्भजम्। पादोनं तु बलं ३/४, त्रिकोणगृहगे स्वर्क्षे १/२ दलं च तयोः ३/८ वस्तु गा ह्यधिमित्रगेऽथ चरणो १/४ मित्रे समर्क्षेऽष्टमः। १/८। शत्रुभे भवति षोडशांशकः ११६ चाधिशत्रुभवने रदांशकः १/३२। अत्र त्रिकोणादौ पादोनादिबलकथनात् स्वोच्चस्थे पूर्णबलमिति प्रतीयते तेन ६०कलास्तत्र बलम्।

उच्चाभिमानिनि ग्रहाणां गतिभेदकारके भगणस्थे २जीवभेदे तेनैवाकर्षणात् ग्रहाणामुच्चादिगतिसम्भवः।

स च द्विविधः शीघ्रोच्चः मन्दोच्चश्च तादृशोच्चतायाः कारणञ्च सू०सि० रङ्गनाथाभ्यां दर्शितं यथा "अदृश्यरूपाः कालस्य मूर्तयो भगणाश्रिताः। शीघ्रमन्दोच्चपाताख्या ग्रहाणां गतिहेतवः" सू०सि०१। "शीघ्रोच्चमन्दोच्चपातसंज्ञकाः पूर्वोक्तपदार्थाः जीवविशेषाः सूर्यादिग्रहाणां गतिकारणभूताः सन्ति। ननु कालेनैव ग्रहचलनं भवतीति कालो गतिहेतुर्नैव इत्यत आह कालस्येति। पूर्वं प्रतिपादितकालस्य स्वरूपाणि तथा चैषां कालमूर्त्तित्वेन ग्रहगतिहेतुत्वं नासम्भवीति भावः। ननु कालस्य घटादिमूर्त्तित्वादेषां तदात्मकत्वाभावात् कथं कालमूर्तित्वमित्यत आह भगणाश्रिता इति। भगोलस्थक्रान्तिवृत्तानुसृतग्रहगोलस्थक्रान्तिवृत्तप्रदेशाश्रिता इत्यर्थः। तथा च ग्रहराश्यादिभोगानां कालवशेनैवोत्पन्नत्वात् तदात्मकानां कालमूर्तित्वमिति भावः। ननु ते दृश्यन्ते कुतो नेत्यत आह अदृश्यरूपा इति। वायवीयशरीरा अव्यक्तरूपत्वादप्रत्यक्षा इति भावः। एव च ग्रहाणामुच्चादिसम्भवात् स्पष्टक्रियोत्पन्नेति तात्पर्य्यम्। अथानयोरुच्चपातयोर्मध्य उच्चयोर्गतिहेतुत्वं प्रतिपादयति" र०ना०१ "तद्वातरश्मिभिर्बद्धास्तैः सव्येतरपाणिभिः। प्राक् पश्चादपकृष्यन्ते यथासन्नं स्वदिङ्मुखम्" २ सू०सि०। "तेषामुच्चशीघ्रजीवानां वायुरूपा ये रश्मयो रज्जवस्ताभिर्बद्धा बिम्बात्मकग्रहास्तैरुच्चशीघ्रकजीवैः सव्यवामहस्तरज्जुबद्धत्वेन हस्तसंज्ञत्वादुबद्धवचनं हस्ताभ्यामित्यर्थः। स्वदिङ्मुखं स्वाभिमुखं यथासन्नं ग्रहबिम्बं भवति तथा प्राक् पश्चात् पूर्वपश्चिमभागाभ्यामित्यर्थः। अपकृष्यन्ते आकृष्यन्ते। अयमभिप्रायः भचक्रगोलस्थक्रान्तिवृत्तानुसृतग्रहाकाशगोलान्तर्गतक्रान्तिवृत्ते कक्षारूपे स्वस्वप्रदेशे ग्रहोच्चपातास्तिष्ठन्ति। तत्र बिम्बव्यासोनकक्षाकारवृत्तं प्रवहवायुतिरिक्तवायुरूपं स्वतोगतिस्थाने कम्प्यमानं ग्रहबिम्बव्यासे पूर्वापरे प्रोतमुच्चजीवहस्तद्वयान्तर्गतमस्ति। अथ ग्रहबिम्बमुच्चस्थानात् स्वगत्या गच्छदपि वामहस्तस्थितरज्ज्वा उच्चस्थानात्, पूर्वरूपेण ग्रहस्थानात् पश्चिमरूपेण दृढतृतावशात्मकेन स्वस्थानाद् पश्चात् स्वाभिमुखमपकृष्यते निरन्तरमुच्चदेशं स्वगत्या यावत् षड्भान्तरं तयोरन्तरं तन्मार्गेणाकर्षणसम्भवात् पूर्वस्मिन् गच्छद्ग्रहबिम्बं, सव्यहस्तस्थितरज्ज्वा उच्चस्थानात् पूर्वस्मिन् स्वाभिमुखमाकृष्यते स्वगत्या निरन्तरं यावदन्तराभावस्तयोरिति" र०ना०। "अथात एवैकरूपा पूर्वाधिकाराद्यगता गतिं त्यक्त्वा कुतः प्रत्यहविलक्षणा गतिं प्राप्ता ग्रहा इत्यत आह। "प्रवहाख्यो मरुत् तांस्तु स्वोच्चाभिमुखमीरयेत्। पूर्वापरापकृष्टास्ते गतिं यान्ति पृथग्विधाम्" सू०सि०२। "प्रवहाख्यः प्रवहसंज्ञको मरुद्वायुः पश्चिमाभिमुखं भ्रमणात् तुकारादुच्चानि स्वोच्चाभिमुखं स्वस्य प्रवहभ्रमणेनोच्चं भावप्रधाननिर्देशादुच्चता यस्यां दिशि तत् स्वोच्चं पूर्वदिक् पूर्वभाग एव ग्रहाणां प्रवहभ्रमे-

णोच्चगमनदर्शनात् तत्सम्मुखं पूर्व्वदिशीति तात्पर्य्यार्थः । ईरयेत् पश्चिमाभिमुखभ्रमणशीलमप्युक्तप्रवहावलम्बनरूपेण चालयतीत्यर्थः । अत कारणात् ते ग्रहाः पूर्व्वपश्चिमदिशोराकृष्टाः पृथग्विधां प्रथमाध्यगतैकरूपभिन्नप्रकारावगमा प्रतिक्षणविलक्षणां गतिं गमनक्रियां यान्ति प्राप्नुवन्ति । अवलम्बनाकर्षणाभ्यां प्रतिदिनं ग्रहाणां गतेरन्यादृशत्वं तदनुसारेण ग्रहचारज्ञानं युक्तमिति ग्रहाणां स्पष्टक्रियोत्पन्नेति भावः । यद्वा ननु वायुरज्जुभिः कथं ग्रहाणामाकर्षणं सम्भवति तद्रज्जूनां विरलतया घनीभूतत्वाभावेनाकर्षणायोग्यत्वादित्यत आह । प्रवहाख्य इति । उच्चदेवताहस्तहृदयस्थितकक्षाकारस्थलवायुः प्रवहवायुसम्बन्धात् प्रवहसंज्ञो न पश्चिमाभिमुखभ्रमत्प्रवहात्मकत्वात् ग्रहान् स्वोच्चाभिमुखं स्वोच्चदेवतास्थानसम्मुखं समीरयेत् प्रेरयति चालयति । तुकारादुच्चस्थानात् पूर्व्वस्मिन् गृहे वायुः पश्चिमगत्या गृहं चालयति पश्चिमस्थे वायुः पूर्व्वगत्या गृहं चालयतीत्यर्थः । तथा च कक्षाकारस्थलं तदा तदा तथा तथा भ्रमतीति दैवतैराकृष्यत इत्युपचारादुच्यत इति भावः । अत एव ग्रहाणां स्पष्टक्रियोपपन्नेत्याह । पूर्व्वापरापकृष्टा इति उच्चदैवतैः पूर्व्वापरदिशयोराकृष्टा ग्रहाः पृथग्विधा मध्यमातिरिक्तप्रकारा गतिं गमनक्रियां यान्ति । अतो न केवलं मध्यक्रियया निर्व्वाहः" २ र०ना० । अथ प्राक्पश्चादपकृष्यन्त इत्युक्तं विशदयति । "ग्रहात् प्राग्भगणार्द्धस्थः प्राङ्मुखं कर्षति ग्रहम् । उच्चसंज्ञोऽपरार्द्धस्थस्तद्वत् पश्चान्मुखं ग्रहम्" ४ सू०सि० । "ग्रहस्थानात् पूर्व्वभागस्थराशिषट्कस्थित उच्चसंज्ञो जीवो ग्रहबिम्बं पूर्व्वदिगभिमुखं स्वाभिमुखं कर्षत्याकर्षति । अपरार्द्धस्थो ग्रहस्थानात् पश्चिमभागस्थराशिषट्कस्थितउच्चसंज्ञो जीव इत्यर्थः । ग्रहबिम्बं पश्चान्मुखं पश्चिमदिगभिमुखं स्वाभिमुखं तद्वदाकर्षतीत्यर्थः" ४ र०ना० । "अथ पूर्व्वोक्तसिद्धं फलितमाह । 'स्वोच्चापकृष्टा भगणैः प्राङ्मुखं यान्ति यद्ग्रहाः । तत् तेषु धनमित्युक्तमृणं पश्चान्मुखेषु तु' सू०सि० ५ । "स्वोच्चनीचाकर्षिता ग्रहाः पूर्व्वाभिमुखं भगणैः राशिभिर्भगोलस्थक्रान्तिवृत्तात्तुल्यतत्साकाशगोलान्तर्गतक्रान्तिवृत्ते द्वादशराश्यङ्किते यद्राशिविभागैरित्यर्थः । यद् यत्संख्यामितं गच्छन्ति तत् तत्संख्यामितं भागादिकं मानरूपं तेषु पूर्व्वाभिमुखगतग्रहराश्यादिभोगेषु धनं योज्यम् । पश्चान्मुखेषु पश्चिमाकर्षितगृहपूर्व्वाभिगतराश्यादिभोगेषु तुकारादुक्तसंख्यामितं फलरूपं पश्चिमतो गच्छन्ति तदित्यर्थः । ऋणं हीनमिति एतत् पूर्व्वैः कथितम्" र०ना० ५ । सि०शि० "स्रष्टा भचक्रं कमलोद्भवेन ग्रहैः सहैतद्भगणादिसंस्थैः । शश्वद्भ्रमे विश्वसृजा नियुक्तं तदन्ततारे च तथा ध्रुवत्वे । ततोऽपरागाभिमुखं भपञ्जरे सखेचरे शीघ्रतरे भ्रमत्यपि । तदल्पगत्येन्द्रदिशं नभश्चराश्चरन्ति नीचोच्चतरात्मवर्त्मसु" । "यदेतद्भचक्रं ग्रहैः सह भ्रमद्दृश्यते तद्विश्वसृजा जगदुत्पादकेन कमलोद्भवेन ब्रह्मणा सृष्ट्यादौ स्रष्टा तत् शश्वद्भ्रमेऽनवरतभ्रमणे नियुक्तम् । एतदुक्तं भवति । भान्यश्विन्यादीन्यन्यानि विशिष्टानि ज्योतींषि तेषां समूहश्चक्रं ग्रहाश्च सूर्य्यादयस्तैः सह सृष्टम् । तानि भानि प्राक्संस्थया समन्तान्निवेशितानि । ग्रहास्तु भगणादावश्विनीमुखे निवेशिताश्च उपर्य्युपरिसंस्थया । तत्रादौ तावच्चन्द्रस्तदुपरि बुधः, ततः शुक्रः, ततो रविस्तस्माद्भौमः, ततो गुरुः ततः शनिः । सर्व्वेषामुपरि दूरे भचक्रम् । एषां कक्षाप्रमाणानि कक्षाध्याये प्रतिपादयिष्यन्ते । अहो यद्यूर्द्ध्वोर्द्ध्वस्था ग्रहास्तदोपरि दूरतो भगणास्तत् कथं भगणादिसंस्थैर्ग्रहैरित्युच्यते ? सत्यम् । अत भूमध्ये सूत्रसंलग्नं बद्धा द्वितीयमग्रं भचक्रेऽश्विनीमुखे किल निबद्धम् । तस्मिन् सूत्रे प्रोता मणय इव चन्द्रादयो ग्रहाः सृष्ट्यादौ ब्रह्मणा निवेशिताः । भचक्रञ्च द्वादशधा विभज्यैव भूमध्यात् सूत्राणि प्रतिभागं नीत्वा किल बद्धानि तैः सूत्रैः सह गृहकक्षाया ये सम्पातास्ते तासु कक्षासु राशयस्ताः । तद्वत्प्रकारा राशय इति संक्षिप्तमिदमुक्तम् । कक्षाध्याये गोले च किञ्चिद्विस्तार्य्य वक्ष्याम० । एवंविधं भचक्रं स्रष्टा ब्रह्मणा गगने निवेशितम् । यत्र निवेशितं तत्र प्रवहो नाम वायुः । स च नित्यं प्रत्यग्गतिः । तेन समाहतं भचक्रं सखेचरं पश्चिमाभिमुखभ्रमे प्रवृत्तम् । यत् तस्य प्रत्यग्भ्रमणं तच्छीघ्रतरम् । यत एकेनाह्ना भगणकस्य परिवर्त्तः । एवं तस्मिन् भपञ्जरे सखेचरे शीघ्रतरे भ्रमत्यपि खेचरा इन्द्रदिशं चरन्ति पूर्व्वाभिमुखं व्रजन्ति नीचोच्चतरात्मवर्त्मसु । अनन्तरकथितेषु स्वस्वमार्गेषु तेषां प्राग्भ्रमणम् । तत् तदल्पगत्या, प्रत्यग्गतेर्बलत्वात् प्रागल्पगत्या व्रजन्तो नोपलक्ष्यन्त इति भावः । तथा तस्य भपञ्जरस्य यो दक्षिणोत्तरावक्षौ तत्र ये तारे ते ध्रुवत्वे

नियुक्ते" प्रमि० । तथा श्रीपतिः । "स्वव्यापारात् प्राग्गति खेचराणामूर्ध्वाधस्ताद्याम्यसौम्यापराणि । गोलाभिज्ञैः पञ्च यातानि यानि तेषामुक्तान्यन्यहेतूनि तानि । प्रत्यग्गतिः प्रवहवायुवशेन तेषां नीचोच्चवृत्तजनितोर्ध्वमधश्च सा स्यात् । याम्योत्तरा स्वपमवृत्तविमण्डलाभ्यां षोढा गतिर्निगदितैवमिह ग्रहाणाम्" उच्चता च महत्त्वव्याप्यगुणभेदः । सा च उपर्युपरिसन्निवेशितावयवतया महत्त्वे भवति तस्य गुणवचनत्वात् तत्र भावेऽर्थे ष्यञ् । औच्च्यम् उच्चतायां न० । त्व । उच्चत्व तत्रार्थे न० तल् । उच्चता स्त्री । "उच्चस्थे गुरुपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ लग्ने कर्कटके पुनर्वसुदिने मेषं गते पूषणि । निर्दग्धुं निखिलाः पलाशसमिधः मेध्याद्योध्यारणेराविर्भूतमभूदपूर्व्वविभवं यत्किञ्चिदेकं महः" तिथित०पु० । "ग्रहैस्ततः पञ्चभिरुच्चसंस्थितैरसूर्यगैः सूचितभाग्यसम्पदम्" रघुः । "सोच्चस्य स्वक्षेत्रेऽपि वा स्वसुहृदां वर्गेऽपि वा" ज्योति०त० ।

**उच्चकैस्** अव्य०उच्चैस्+टेरकच् । १उच्चतायां २तद्विशिष्टे च । "जनितमुदस्यादुच्चकैरुच्छ्रितोरः" "स्थितोदयाद्रेरभिसायमुच्चकैः" माघः । उत्कर्षार्थे तरबादि उच्चैस्तरगल्पत् ।

**उच्चक्षुस्** त्रि० उत्क्षिप्तमुत्पाटितं वा चक्षुर्यस्य प्रा०ब० । १ऊर्ध्वोत्क्षिप्तनेत्रे २उत्पाटितनेत्रे च । ततः च्वि उच्चक्षूकरोति उच्चक्षूभवति उच्चक्षूस्यात् ।

**उच्चटा** स्त्री उद्–चट–अच् । १लशुनभेदे, २गुञ्जायां ३चूडालायाम्, ४भूम्यामलक्याम् ५नागरमुस्तायाञ्च ।

**उच्चण्ड** त्रि० उद्–चडि–अच् । १अत्यन्तोग्रे २अतिकोपने, ३त्वरायुक्ते अविलम्बिते । ४मत्सरसर्पे पु०५तद्वति त्रि० ।

**उच्चतरु** पु०कर्म० । १नारिकेले वृक्षे । २उच्चद्रुममात्रे च ।

**उच्चताल** न०उच्चः तालः हस्ततालो यत्र । १पानगोष्ठ्यां मत्ततया तत्र उच्चैर्हस्ततालदानात्तथात्वम् ।२उच्चततालयुक्ते च

**उच्चदेव** पु०उच्चः श्रेष्ठो देवः । वासुदेवे त्रिका० । तस्य "सर्वदेवमयो हरिः" इत्युक्तेः सर्व्वदेवमयत्वात् सत्त्वप्रधानत्वाच्च उत्कृष्टत्वम् अतएव भागवते "श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युरिति" सत्त्वप्रधानत्वात् तस्य श्रेयःसाधनत्वमुक्तम् ।

**उच्चन्द्र** पु० उच्छिष्टः स्वल्पावशिष्टश्चन्द्रो यत्र प्रादि०ब० । शिष्टचन्द्रलोप । रात्रिशेषे शब्दरत्ना० ।

**उच्चय** पु० उत्+अपः चयः चि–अप् । १पुष्पादेरुत्तोलने । "पुष्पोच्चयं नाटयति" शकु० । "करिष्यामि शरैस्तीक्ष्णैस्तच्छिर कमलोच्चयम्" रघु । "प्रत्युपसदमेकोच्चयेन कपालान्येककपालप्रभृतीनाम्" कात्या० २२,२,२० । उत्तरेषु पुरुषोच्चयेनैवैकशतविधात् १६, ८,२५ । २नारीकट्यंशुकग्रन्थौ "नीवि स्यादुच्चयोऽप्ययम्" मार्त्तण्ड उत्कृष्टचयः । ३वृन्दसमुदाये च अभ्युच्चय । "वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः" सा०द० । स निर्दग्ध्वा स्थूलिं रामोऽधी मन शिलोच्चये" रामा० । "एकतः सरितः सर्व्वा गङ्गाद्याः सलिलोच्चयाः" भा०व० ८८ अ० । "नैकद्रव्योच्चयवतीं समृद्धविपणापणाम्" भा० अनु०३०अ० । "शिलोच्चयोऽपि क्षितिपालमुच्चैः" रघु । कर्म्मणि अच् । ४हस्ताभ्यामुद्धृत्यावचिते नीवारे" हारा० ।

**उच्चल** न० । उद्+चल–अच् । १मनसि हेमच० तस्य "असंशयं महाबाहो । मनोदुर्निग्रहं चलम्" गीतोक्तेश्चञ्चलस्वभावत्वात्तथात्वम् । २चलस्वभावशाले त्रि० ।

**उच्चलित** त्रि० उद्+चल–क्त । गमनोद्यते प्रस्तुते गन्तुमुद्युक्ते

**उच्चललाटा** स्त्री उच्चं ललाटं यस्याः । उच्चललाटरूपदुर्लक्षणायां स्त्रियाम् । स्त्रीणां च दुर्लक्षणम् कन्याशब्दे वक्ष्यते

**उच्चनीच** त्रि० उच्चैश्च नीचैश्च मयू० समा० । उन्नतावनतप्रदेशादौ "कृटारमुच्चनीचानां कर्म्मभिर्देहिनां गतिम्" । भा० आश्व०१६ अ० ।

**उच्चा** अव्य० उद्+ची–डा । १उच्चैः शब्दार्थे । "अमी य ऋक्षा निहिता स उच्चा" ऋ० १,२४,१० । "उच्चा उच्चैः प्रदेशे" भा० । "उच्चा दिवि दक्षिणावन्तो अस्थुः" ऋ० १०,१०७,२ । "अस्माकं द्युम्नमधि पञ्च कृष्टिषूच्चा" २,२,१० । "उच्चा उच्चैः" भा० । "अवतमुच्चाचक्रं परिज्मानम्" ८,७२, १० । "उच्चाचक्रमुपरिस्थितचक्रम्" भा० उच्चा बुध्नं नीचादुच्चाचक्रथुः पातवे वा" ऋ० १,११६,२२ । २उन्नतायां स्त्रियां स्त्री "उच्चारवतपक्षिगणाश्चटीतम्" माघ० ।

**उच्चाटन** न० उद्–चट्–णिच्–ल्युट् । १उत्पाटने स्वस्थानात् २विश्लेषणे "उच्चाटनं स्वदेशादेर्भ्रंशनं परिकीर्त्तितम्" इति शा०ति० उक्ते ३षट्कर्म्मान्तर्गतेऽभिचारभेदे च । उच्चाट्यतेऽनेन करणे ल्युट् । तन्त्रोक्ते ४तत्साधनकर्म्मणि । तन्त्रसारे वगलायाः अभिचारप्रयोगे कुण्डलक्षणमुपक्रम्य "वश्ये तु चतुरस्रं स्यादाकर्षे तु त्रिकोणकम् । तथैवोच्चाटने प्रोक्तं षट्कोणं मारणे स्मृतम् । वश्ये नेत्रासनं प्रोक्तं चैव व्याघ्रचर्म्मणि । शान्तौ मृगासनं प्रोक्तं स्तम्भे गोचर्म्मणि स्मृतः । उद्भासन तथोच्चाटे निर्दिष्टे तुरगा-

रात्रौ सन्ध्ययोश्च यथा दिशः"। उच्चारः पुरीषम्। यत्तु यमवचनं "प्रत्यङ्मुखश्च पूर्व्वाह्णे अपराह्णे च प्राङ्मुखः। उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः" इति तत् उदङ्मुखेन सहेच्छाविकल्पार्थं सूर्य्याभिमुख्यनिरासार्थञ्च न तु नियमार्थं देवलवचनविरोधात्। तथा च "सदैवोदङ्मुखः प्रातः सायाह्ने दक्षिणामुखः। विण्मूत्रे आचरेन्नित्यं सन्ध्यायां परिवर्जयेत्" इति। प्रातःसायाह्नशब्दौ दिवारात्रिपरौ पूर्व्वोक्तमनुवचनैकवाक्यत्वात्। सन्ध्यायां परिवर्जयेदिति तु पीडितेतरपरम्। यमः "कृत्वा यज्ञोपवीतन्तु पृष्ठतः कण्ठलम्बितम्। विण्मूत्रे च गृही कुर्य्यात् यद्वा कर्णे समाहितम्"। पृष्ठतः पृष्ठे कण्ठलम्बितं निवीतम्। अत्र लम्बितं निवीतम्। "संवीतं मानुषे कार्य्ये" इति तैत्तिरीयश्रुतेः। मानुषे सनकादिकार्य्ये। पृष्ठलम्बितं निवीतम्" इति बौधायनवचनाच्च। तथा च हारवत् कृत्वा पृष्ठलम्बितम् स्कन्धे इत्यर्थः। अत्र व्यवस्थामाह शाट्यायनः। "यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा अवगुण्ठितः" इति कर्णे दक्षिणकर्णे। "पवित्रं दक्षिणकर्णे कृत्वा विण्मूत्रमाचरेत्" इति स्मृतौ तथा दर्शनात्। अवगुण्ठितः कृतशिरोऽवगुण्ठनः। मनुः "छायायामन्धकारे वा रात्रावहनि वा द्विजः। यथासुखमुखः कुर्य्यात् प्राणबाधाभयेषु च" महाभारते। "प्रत्यादित्यं प्रतिजलं प्रति गाश्च प्रतिद्विजम्। मेहन्ति ये च पथिषु ते भवन्ति गतायुषः"। प्रति सामुख्ये। मनुः "न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे। न फालकृष्टे न जले न चित्यां न च पर्व्वते। न जीर्णदेवायतने न वल्मीके कदाचन। न ससत्त्वेषु गर्त्तेषु न गच्छन्नापि संस्थितः। न नदीतीरमासाद्य न च पर्व्वतमस्तके। वाय्वग्निविप्रानादित्यमपः पश्यंस्तथैव च। न कदाचन कुर्व्वीत विण्मूत्रस्य विसर्जनम्"। ससत्त्वेषु प्राणिमत्सु संस्थितः उत्थितः पर्व्वतमस्तकनिषेधोऽधिकदोषाय। वशिष्ठः। "आहारनिर्हारविहारयोगाः सुसम्वृता धर्म्मविदा तु कार्य्याः। वाग्बुद्धिकार्य्याणि तपस्तथैव धनायुषी गुप्ततमे तु कार्य्ये"। निर्हारो मूत्रपुरीषोत्सर्गः विहारः स्त्रीसम्भोगः। योगः समाधिः। वाग्गुप्तिरशुभालापत्यागः। बुद्धिगुप्तिरनिष्टचिन्तात्यागः। हारीतः "आहारन्तु रहः कुर्य्यात् निर्हारञ्चैव सर्व्वदा। गुप्ताभ्यां लक्ष्मीयुक्तः स्यात् प्रकाशे हीयते तथा"। विष्णुपुराणम् "सोमाग्न्यर्काम्बुवायूनां पूज्यानाञ्च न सम्मुखे। कुर्य्यात् ष्ठीवनविण्मूत्रसमुत्सर्गञ्च पण्डितः"। आपस्तम्बः "न च सोपानत्को मूत्रपुरीषे कुर्य्यादिति"। बृहन्मनुः "करगृहीतपात्रेण कृत्वा मूत्रपुरीषके। मूत्रतुल्यन्तु पानीयं पीत्वा चान्द्रायणञ्चरेत्"। भरद्वाजः "अथ विकृष्य विण्मूत्रं लोष्ट्रकाष्ठतृणादिना। उदस्तवासा उत्तिष्ठेद् दृढं विधृतमेहनः" उदस्तवासाः कटिदेशादुत्क्षिप्तवस्त्रः" आ॰ त॰ "मूत्रोच्चारौ च कारयेत्"। "यस्योच्चारं विना मूत्रं सम्यग् वायुश्च गच्छति" सुश्रु॰। "दाने तपसि शौर्य्ये च यस्य न प्रथितं मनः। विद्यायामर्थलाभे च मातुरुच्चार एव सः" हितो॰। उच्चस्य चारो गतिः। २ ग्रहादीनां राशिनक्षत्रान्तरसञ्चारे। "सप्ताहेन शतेनार्द्धं यान्ति चित्रशिखण्डिषु। "उच्चारे सहिकाकारः" सि॰ रा॰ त॰।

**उच्चारण** न॰ उद्घातेन कण्ठाद्यभिघातेन चार्य्यते निष्पाद्यते उद्+चर-णिच्-ल्युट्। कण्ठताल्वाद्यभिघातेन शब्दजनके व्यापारे तत्प्रकारस्तु "आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्। सोदीर्णो मूर्द्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णान् जनयते तेषां विभागः पञ्चधा मतः" इति शिक्षोक्तदिशाऽवसेयः। वर्णोत्पत्तिस्थानानि चाष्टौ। "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च" शिक्षोक्तानि। विवृतिर्वर्णशब्दे दृश्या। यथा च कण्ठताल्वाद्यभिघातेनोच्चारणसम्भवस्तथा" ईश्वरशब्दे अनुमा॰ चिन्ता॰ १०२६ पृष्ठे दर्शितम्। "उच्चारणज्ञोऽथ गिरां दधानम्" माघः। "वेदोच्चारणकार्य्यार्थमयुक्तं तत्त्वया कृतम्" भा॰ व॰ २१४ अ॰ "सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं वेदस्यापौरुषेयत्वम्" मीमांसका वेदान्तिनश्च प्रतिपेदिरे।

**उच्चारित** त्रि॰ उच्चार-तारका॰ इतच्। १कृतविडुत्सर्गे। उद्+चर-णिच्-कर्म्मणि क्त। २यस्योच्चारणं कृतं तादृशे वर्णादौ "तत्र शक्तिवैकल्यप्रमादालसतादिभिः। अन्यथोच्चारिताः शब्दा अपशब्दा इतीरिताः" भर्त्तृह॰। उद्+अन्तर्भूतण्यर्थे चर-क्त। उच्चरितोऽप्यत्रार्थे "सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति" तन्त्रार्थ्यन्ये न्यायः।

**उच्चार्य्य** अव्य॰ उद्+चर-णिच्+ल्यप्। १कण्ठाद्यभिघातेन उत्पाद्येत्यर्थे। कर्म्मणि यत्। २उच्चारणीये वर्णादौ त्रि॰।

**उच्चार्य्यमाण** त्रि॰ उद्+चर-णिच्-कर्म्मणि शानच्। यस्योच्चारणं क्रियते तस्मिन् वर्णादौ "कस्मैचित् कार्य्यायोच्चार्य्यमाणो वर्ण इत्संज्ञः, मुग्धबो॰।

वेदार्थस्मृतितापसिद्धिस्तु प्रसिद्धवेदमूलस्मृतिसाहचर्य्यभ्रमात् प्रत्यक्षवेदाबोधितलोभन्यायमूलस्मृताविव तान्त्रिकाणां लिङ्गाभासजन्यवेदमूलकत्वभ्रमात् सम्भवन्मूलान्तराणां वेदमूलत्वं कल्पयति । अथ स्मृतेर्निश्चितवेदमूलकत्वप्रसिद्धिरपि महाजनपरिग्रहीता एवञ्च सा वेदमूलत्वनिबन्धना अविगीतमहाजनपरिगृहीतवेदमूलत्वप्रसिद्धित्वात् प्रत्यक्षवेदमूलस्मृतौ तत्प्रसिद्धिवत् । एवं वेदार्थस्मृतितापसिद्धिरपि अन्यथा महाजनपरिग्रहानादरे वेदस्मृत्योरपि प्रामाण्यं न स्यादिति चेत् न यूपहस्त्यादिस्मृतेस्तत्प्रसिद्धौ व्यभिचारात् क्रूमलोभादित एव तत्सम्भवात् विचारकाणां विप्रतिपत्तेश्च । तत्र तत्प्रसिद्धौ विगानं महाजनानामिति चेत् न स्वत्रापि मूलान्तरसम्भवाद्विप्रतिपत्तेश्च विगानमेव तेषाम्, अतएव स्मृतीनां न्यायमूलत्वे सम्भवति वेदमूलत्वप्रसिद्धावपि न वेदमूलत्वं, न च वेदमूलेयमिति ज्ञात्वा स्मृतेर्महाजनपरिग्रहात्तन्मूलत्वं वेदमूलेयमिति प्रथमं ग्रहीतुमशक्यत्वात् शक्यत्वे वा किमनुमानेन, न च वेदमूलत्वेन प्रकारेण महाजनपरिग्रहः, अपि तु, मन्वादिस्मृतित्वेन पूर्वं महाजनपरिग्रहेणोत्तरेषां परिग्रहादनुष्ठानाद्युपपत्तेः । एवं होलकाचारेऽपि वेदलिङ्गेनैव कर्त्तव्यताज्ञानोपपत्तेः किं वेदेन, तदर्थस्य लिङ्गादेवोपपत्तेः, अविगीताऽलौकिकविषयकशिष्टाचारस्य वेदमूलत्वदर्शनात् वेदानुमाने चाविगीतशिष्टाचारत्वेन भोजनाद्याचारोऽपि वेदमूलः स्यात् वेदं विनापि तत्कर्त्तव्यताधीसम्भवाच्च तदर्थवेदइति इहापि तुल्यम् । आचारकर्त्तव्यतानुमानयोरनादित्वेनाचाराणां कर्त्तव्यताज्ञानमूलकत्वान्नान्धपरम्परा । न च पूर्व्वानुमानसापेक्षमुत्तरानुमानमिति स्वतन्त्रप्रमाणमूलकत्वाभावात् साध्यव्याप्तिपक्षधर्मतासत्त्वेन पूर्वेषां स्वतन्त्रप्रमाणत्वात् । प्रामाण्यतरप्रामाण्याधीनं सर्वस्य प्रामाण्यमिति न निरपेक्षत्वं, प्रत्यक्षादेरपि तथात्वापत्तेः । एतेन विवादपदमाचारो निरपेक्षप्रमाणमूलकः अविगीतमहाजनाचारत्वात् प्रत्यक्षवेदमूलाचारवदिति निरस्तम् अनुमानस्य निरपेक्षप्रमाणत्वात् प्रमाणमूलत्वेनैववृद्धेरुपपत्तेः निरपेक्षत्वस्य गौरवेणाप्रयोजकत्वाच्च । न च सापेक्षत्वेन न प्रमाणता व्याप्त्यादिसत्त्वात् अन्यथा प्रमाणान्तरापेक्षस्य वैयर्थ्यात् । नचाचारे वेदमूलकत्वप्रसिद्धेस्तदनुमानम्, धर्मसङ्गे व्यभिचारादन्यथोपपत्तेश्च । न च वेदमूलत्वेन महाजनपरिग्रहात्तथा । न हि वेदमूलोऽयमिति ज्ञात्वा महाजनानां तत्परिग्रहः वेदमूलत्वस्य प्रथमं ज्ञातुमशक्यत्वात् शक्यत्वे वा किमनुमानेन । न च वेदमूलत्वेन महाजनपरिगृहीतोऽयमाचार इति ज्ञात्वा तत्र महाजनपरिग्रहः, गौरवात् अपि त्वेवं पूर्व्वमहाजनपरिग्रहादेवोत्तरेषां परिग्रहानुष्ठानोपपत्तेः । तादृशस्मृत्याचारयोर्वेदमूलत्वेन व्याप्तेर्वेदमूलत्वसिद्धिरिति चेत् न असम्भवन्मूलान्तरस्योपाधित्वात् अन्यथा लोभन्यायमूलस्मृतेस्तत्प्रसङ्गः । अस्तु स्मृत्याचारयोरनादित्वं न चाचारात् स्मृतिः स्मृत्या चाचार इत्यन्धपरम्परा मूलीभूतप्रमाणाभावादिति वाच्यं स्मृत्याचारयोरुभयोरपि प्रमाणत्वात । अन्यथा न ततो वेदानुमानमिति ।

उच्यते प्रलये पूर्व्वस्मृत्याचारयोरुच्छेदात् सर्गादौ नित्यसर्व्वज्ञेश्वरप्रणीतवेदमूलत्वं स्मृत्याचारयोः, अन्यथा मूलाभावेनान्धपरम्पराप्रसङ्गः । न च मन्वादीनामतीन्द्रियार्थदर्शित्वं तदुपायश्रवणादेस्तदानीमसत्त्वात् पूर्व्वपूर्व्वसर्गसिद्धसर्व्वज्ञा एव त इति चेत् न प्रमाणाभावात् । स्मृत्याचारयोः प्रमाणमूलकत्वमेव तत्कल्पकमिति चेत् न प्रतिसर्गं तेषामन्यान्यकल्पने गौरवमित्येकस्यैव नित्यसर्व्वज्ञस्य कल्पनात् । न च स्मृतय एव तत्प्रणीताः तासां मन्वादिकर्त्तृकत्वेन स्मृतौ बोधात्, स्मृतावेव स्मृतीनां वेदमूलत्वश्रवणाच्च । एवञ्च स्मृत्याचारयोर्महाजनपरिग्रहाद्वेदमूलत्वसाधकमपि भवति प्रमाणम् । अतएव "प्रतिमन्वन्तरं चैषा श्रुतिरन्याऽभिधीयते" इत्यागमोऽपि । एवञ्च पूर्व्वप्रत्यक्षवेदमूलावेव स्मृताचारौ अपि च कालक्रमेणासुरारोप्यसत्त्वश्रद्धापहरणधारणादिप्रतिरहरहरपचीयमानत्वात् तदध्ययनविच्छेदात् शाखोच्छेदात् स्मृत्याचाराभ्यामेव कर्त्तव्यतामधिगत्य प्रवृत्तिः । नन्वेवं स्मृतिरस्तु वेदमूला मङ्गलाद्याचारस्तु ईश्वरादेव भविष्यति भट्टमिश्रादिसम्प्रदायवदिति चेत् न बहुव्यापारघटितस्य तत्तदाचारस्य गुरुत्वेन "मङ्गलमाचरेदित्यादिवाक्यस्यैव लाघवेन कल्पनात्" ।

"निष्टसाधारणीषेषु परपाकोपजीविषु उच्छन्नमविभिन्नेषु भिन्नकालोपभोजिषु" सुश्रुव ।

उच्छल त्रि० उद्–शल अच् । आचारातिक्रमेण सर्व्वत्र प्लुते । शतृ । उच्छलत् तत्रैव "कटोच्छलन्मञ्जुगुञ्जाकुलेन" माघः "स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा" काव्यप्र० । ल्युट् । उच्छलन परितः प्लवने न० ।

उच्छादन न० उद्–छद–णिच्–ल्युट् । १आच्छादने

२गन्धद्रव्यद्वारा देहमार्जने च अमरटी० "स्नापनोच्छादनेन" रामा० ।

**उच्छास्त्र** त्रि० उद्गतं शास्त्रात् प्रा०स० । १अतिक्रान्तशास्त्रे २शास्त्रविरुद्धेऽधर्मकार्ये च । उत्क्रान्तं शास्त्रं यत्र । शास्त्रातिक्रमयुक्ते उच्छास्त्रं यथा तथा वर्त्तते उच्छास्त्र वर्त्तिन् शास्त्रातिक्रमेण यथेष्टचारिणि स्त्रियां ङीप् । "न राज्ञः प्रतिगृह्णीयात् क्रूरस्योच्छास्त्रवर्त्तिनः । या० स्मृ० । "दृप्तस्योच्छास्त्रवर्त्तिनः" भाग० ७स्कन्द०अ० ।

**उच्छासन** त्रि० उत्क्रान्तं शासनम् । शासनातिक्रान्तरि ।

**उच्छिख** त्रि० उद्गता शिखा यस्य प्रा०ब० । १उन्नतापे २उद्दीप्तेऽपि वह्नौ पु० "माद्रस्योर्णांवलयिनि पुर पावकस्योच्छिखस्य" रघु० । ३तक्षकनागकुलजाते नागभेदे पु० "तक्षकस्य कुले जातान् प्रवक्ष्यामि निबोध तान्" इत्युपक्रम्य "उच्छिखः शरभो भङ्गो विल्वतेजा विरोहणः" भा० आ०५७ अ० ।

**उच्छिङ्घन** न० उद्+शिघि आघ्राणे भावे ल्युट् । नासिकावायुनाऽन्तःस्थितकफादिनिःसारणे । "उच्छिङ्घनेन हर्त्तव्योहृदिसंकुलजः कफः" । "नेत्रे विलम्बिनि विधिर्विहितः पुरस्तादुच्छिङ्घनं शिरसि वार्य्यवसेचनञ्च" सुश्रु० ।

**उच्छित्ति** स्त्री उद्+छिद–भावे क्तिन् । समूलोत्पाटने अत्यन्तमर्दने । "यद्वा तद्वा तदुच्छित्तिः पुरुषार्थः" सा०सूत्रम् । "सङ्कर सर्ववर्णानां प्रजानां धर्मकर्मणाम्" । प्रजानामपि चोच्छित्तिर्नृपव्यसनहेतुजा" सुश्रु० "अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा" वृ० उ०२१ ।

**उच्छिन्न** त्रि० उद्+क्त । १समूलनाशिते २विदलिते ।

**उच्छिरस्** त्रि० उन्नतं शिरोऽस्य । १उन्नते २माहात्म्यादिना उन्नतमस्तके महिमान्विते "शैलात्मजापि पितुरुच्छिरसोऽभिलाषम्" कुमा० शौर्य्योदार्य्यादिना हि लोक उन्नतशिरा भवति अपकृष्टकर्मणा तु अवनतशिरा प्रसिद्ध

**उच्छिलीन्ध्र** त्रि० उत्थितं शिलीन्ध्रम् । १छत्राके । २विकसितशिलीन्ध्रयुक्ते त्रि० । "उच्छिलीन्ध्रामवन्ध्यामिति" मेघदू० ।

**उच्छिष्ट** त्रि० उत्+शिष–क्त । १भुक्तावशिष्टे, २त्यक्ते च । अमरा०अच् । ३अकृतशौचे भुक्तान्ते । तस्योच्छिष्टस्याभक्ष्यता सापवादमभक्ष्यशब्दे २७९ पृष्ठे उक्ता तत्राय भेदः वर्णविशेषस्योच्छिष्टभोजने पापतारतम्यात् प्रायश्चित्ततारतम्यं प्रायश्चित्तविवेकादावुक्तं यथा "समुच्छिष्टन्तु यो भुङ्क्ते योभुङ्क्ते त्यक्तभाजने । स वै श्वमत प्राह भुक्त्वा चान्द्रायणं चरेत्" चतुर्थपिण्डकम् । "तच्च ज्ञानाभ्यासविषयमिति" प्रा० वि० । "ब्राह्मणोच्छिष्टभोजने महाव्याहृतिभिरभिमन्त्याप पिबेत्, क्षत्रियोच्छिष्टभोजने ब्राह्मीरसविपक्वेन त्र्यहं क्षीरेण वर्त्तयेत्, वैश्योच्छिष्टभोजने त्रिरात्रोपोषितो ब्रह्मसुवर्चलां पिबेत्, शूद्रोच्छिष्टभोजने सुराभाण्डोदकपाने च षड्रात्रमभोजनं चान्द्रायणं वा अभिमन्त्रित जलं पीत्वोपवसेत्" शङ्खलि० "अतरूपत्वात् एतद्ब्राह्मणस्य ब्राह्मणाद्युच्छिष्टाशनेऽज्ञानतः सकृत् एवं क्षत्रियादेः समाधमवर्णोच्छिष्टाशने समाधमवर्णोक्तमेतदेव यथायथमुन्नेयम् शूद्रोच्छिष्टाशने तु ब्राह्मणस्य ज्ञानतः सकृद्विषयम् षड्रात्राभोजनम्" प्रा० वि० । यथापस्तम्बः । "अज्ञानाद्वयस्तु भुञ्जीत शूद्रोच्छिष्टं द्विजोत्तमः । त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुद्ध्यति" । "एतद्द्विजोत्तमपदग्रहणाद्ब्राह्मणविषयम् । क्षत्रियादिपरत्वे वक्ष्यमाणविष्णुवचनविरोधात् । एतदपि सकृद्विषयं अत्र च त्रिरात्रेऽघमर्षणमपि जपनीयम्" प्रा० वि० । यथा सुमन्तुः । "शूद्रोच्छिष्टभोजने त्रिरात्रमघमर्षणञ्च जपेत्" "चान्द्रायणं नवश्राद्धे ज्ञानाभ्यासे क्षत्रियादीनाञ्च त्रिपादपादहानिकल्पना । क्षत्रियस्य च ब्राह्मणोच्छिष्टाशने ब्राह्मणोक्तप्रायश्चित्तार्द्धं, वैश्यस्य ततोऽप्यर्द्धम् । एवं वैश्यशूद्रयोरपि स्वापेक्षया पूर्ववर्णत्वेनोन्नेयम् उपनोपवने यथाक्रमेण ह्रसितप्रायश्चित्तदर्शनात्" प्रा० वि० । यथा "अज्ञाना भुक्तशेषस्तु भक्षितो यैर्द्विजातिभिः । चान्द्रं कृच्छ्रं तदर्द्धञ्च क्रमात्तेषां विशोधनम्" । तथा विष्णुरपि न्यायप्राप्तमेवार्थमप्याह । "अमन्त्राह्वाशने त्रिरात्रं, वर्त्तेत ब्राह्मणः शूद्रोच्छिष्टाशने वमनं कृत्वा सप्तरात्रं वैश्योच्छिष्टाशने पञ्चरात्रम्, राजन्योच्छिष्टाशने त्रिरात्रम्, राजन्यः शूद्रोच्छिष्टाशने पञ्चरात्रम् वैश्योच्छिष्टाशने । त्रिरात्रं वैश्यः शूद्रोच्छिष्टाशने च" "अत्र वमनं कृत्वा पयसा वर्त्तेतेति सर्वत्रान्वेति" प्रा० वि० । "चण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे । द्विजः शुध्येत् पराकेण शूद्रः कृच्छ्रेण शुद्ध्यति" अङ्गिराः "एतदज्ञानविषयं ज्ञानतो द्विगुणादिकम् प्रा० वि० । मनुनापि सामान्याभोज्यप्रकरणे । "शुक्तं पर्युषितं चैव शूद्रस्योच्छिष्टमेव च "क्रूरस्योच्छिष्टभोजिनः" इति चोक्तम् । शूद्रस्य तु द्विजोच्छिष्टभोजने न दोषः । द्विजोच्छिष्टन्तु भोजनमिति' तस्य मनुना तद्वृत्तितयोक्तेः । एकपङ्क्तिस्थमध्ये

केनचिदग्रे भोजनपात्रत्यागे तत्पङ्क्तिस्थानां तदन्नमुच्छिष्टवत् यथा "अप्येकपङ्क्त्या नाश्नीयात् संयतः स्वजनैरपि । कोहि जानाति किं कस्य प्रच्छन्नं पातकं महत् । भस्मस्तम्भजलद्वारमार्गैः पङ्क्तिश्च भेदयेत्" व्यासः । जलादिना पङ्क्तिभेदाकरणे तु पक्षः "एकपङ्क्त्युपविष्टानां विप्राणां भोजने क्वचित् । यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं विवर्जयेत् । मोहात् भुञ्जीत यः पङ्क्त्यामुच्छिष्टस्य च भोजनम् । प्राजापत्यं चरेद्विप्र अत्र सान्तपनन्तथा" । "विड़ालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत्, अन्यत्र हिरण्योदकस्पर्शात्" देवलः अज्ञानादुच्छिष्टादिभोजने तदुत्तार्य्यमित्याह "अभोज्यमन्नं नात्तव्यमात्मनः शुद्धिमिच्छता । अज्ञानाद्भुक्तमुत्तार्य्यं शोध्यं वाप्याशु शोधनैः" वमनपक्षेऽपि अल्पप्रायश्चित्तं भवत्येव "आमश्राद्धाशने त्रिरात्रं पयसा वर्त्तेत ब्राह्मणः, शूद्रोच्छिष्टाशने वमनं कृत्वा सप्तरात्रमुपवसेत्" विष्णुना वमनोत्तरमपि प्रायश्चित्तविधानात् "अन्त्यानां भुक्तशेषन्तु भक्षयित्वा द्विजातयः । चान्द्रं कृच्छ्रं तदर्द्धं तु ब्रह्मक्षत्रविशां विधिः" मिता० आप० वचनन्तु ब्राह्मणस्य सकृद्भानविषयम् बलात्कारानुसारेऽप्यन्तेतरताम्बूलाद्युच्छिष्टपरमिति" प्रा०त० रघु० । अन्त्यजैः बलात्कारिते उच्छिष्टादेर्भोजनेऽपि दोषएव । "दासीकृतोबलान्म्लेच्छचाण्डालाद्यैश्च दस्युभिः । अशुभं कारितः कर्म गवादेः प्राणहिंसनम् । उच्छिष्टमार्ज्जनञ्चैव तथा तस्यैव भक्षणम्" इत्याद्यभिधाय "मासोषिते द्विजातौ तु प्राजापत्यं विशोधनम् । चान्द्रायणन्त्वाहिताग्ने पराकमथ वा भवेत्" देवलोक्तेः । उच्छिष्टचाण्डालादिस्पर्शेऽपि दोषः" प्रा० त० उक्तं यथा । "आपस्तम्बः 'भुक्तोच्छिष्टस्त्वनाचान्तश्चाण्डालैः श्वपचेन वा । प्रमादात् स्पर्शनं गच्छेत् तत्र कुर्य्याद्विशोधनम् । गायत्र्यष्टसहस्रन्तु द्रुपदां वा शतं जपेत् । त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुद्ध्यति । भुक्तोच्छिष्टोऽन्त्यजैः स्पृष्टः प्राजापत्यं समाचरेत् । अर्द्धोच्छिष्टे कृतः पादः पादः आचामने तथा" । "प्राजापत्य स्नाने अर्द्धोच्छिष्टोयेनाद्यग्रासः आस्ये निक्षिप्तः न तु निगीर्णः" प्रा० त० रघु० । काश्यपः 'श्वसूकरान्त्यचाण्डालमद्यभाण्डरजस्वलाः । यद्युच्छिष्टं स्पृशेत्तत्र कृच्छ्रं सान्तपनं चरेत् । "एतच्चाभ्यासे सान्तपने धेनुद्वयम्" । प्रा० त० ब्रह्मपुराणे "उच्छिष्टेन तु शूद्रेण विप्रः स्पृष्टस्तु तादृशः । उपवासेन शुद्धिः स्यात् शुना स स्पृष्टएव वा । उच्छिष्टेन तु विप्रेण विप्रः स्पृष्टस्तु तादृशः । उभौ स्नानं प्रकुरुत सद्य एव समाहितौ" । "अनुच्छिष्टब्राह्मणस्य नक्तमिति" प्रायश्चित्तविवेकः ।

"सर्वमन्नमेकतोद्धृत्य उच्छिष्टसमीपे दर्भेषु" श्रा०त० गोभिलः । ३दत्तावशिष्टे च । "उच्छिष्टे सतिलान् दर्भान् दक्षिणाग्रान्निधापयेत्" श्रा० त० ब्रह्मपु० । "असंस्कृतप्रमीतानां, योगिनां, कुलयोषिताम् । उच्छिष्टं भागधेयं स्यात् दर्भेषु विकिरश्च यः" श्रा०त० मत्स्यपु० । "प्रेतश्राद्धे यदुच्छिष्टं गृहे पर्य्युषितं च यत् । दम्पत्योर्भुक्तशेषञ्च न भुञ्जीत कदाचन" श्रा०त० स्मृतिः । "उच्छिष्टं पाकपात्रेऽवशिष्टम्, गृहे उपरागे पर्य्युषितं, दम्पत्योराश्रमस्वामिनोर्भोजनानन्तरं पाकस्थाल्यामवशिष्टमिति" श्राद्धचिन्तामणिः । ४मधुनि । मक्षिकोच्छिष्टत्वात्तस्य तथात्वम् । "उच्छिष्टं शिवनिर्माल्यम्—श्राद्धे प्रशस्यते" पु० । उच्छिष्टमोदनः ।

**उच्छिष्टगणेश** पु० तन्त्रोक्ते गणपतिभेदे । तस्य मन्त्रध्यानादिकं तत्रैव दृश्यम् "भुक्तोच्छिष्टोजपेन्नित्यं गणेशस्य सदा प्रियः" "उच्छिष्टस्त्वशुचिर्भूत्वा जपपूजनमाचरेत्" । अनुच्छिष्टो न सिध्येत्तु तस्मादेव समाचरेत्" । "सदोच्छिष्टोगणेशाख्यो यक्षराजेन धीमता" इति च तत्रैव

**उच्छिष्टचाण्डालिनी** स्त्री तन्त्रोक्ते मातङ्गीदेवीमूर्त्तिभेदे । तस्या मन्त्रध्यानादिकं तन्त्रसारे दृश्यम् । "भोजनानन्तरं देवि ! विनैवाचमने कृते" इत्युपक्रम्य "उच्छिष्टेन बलिं दत्त्वा जपेत्सहस्रमानसः । उच्छिष्टेन च कर्त्तव्यो जपोऽस्याः सिद्धिमिच्छता । उच्छिष्टजपमानस्य जायन्ते सर्वसिद्धयः" इति च तत्रैव ।

**उच्छिष्टभोजन** पु० उच्छिष्टं पञ्चयज्ञावशिष्टं भोजनमस्य । १पञ्चयज्ञावशिष्टस्य भक्षके "यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः" मनुना तथा भोजने किल्बिषतारकत्वकीर्त्तनात् तथा भोजनस्य कर्त्तव्यत्वम् । उच्छिष्टं देवनैवेद्यावशिष्टं भोजनमस्य । २देवनैवेद्यभोजके च । "तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः" गीतायां देवानिवेदने दोषश्रवणात् देवाय दत्त्वैव भोज्यता ।

**उच्छिष्टभोजिन्** त्रि० उच्छिष्टं इतरस्य भुक्तावशिष्टं भुङ्क्ते भुज—णिनि । निषिद्धोच्छिष्टभोक्तरि" 'क्रूरश्चोच्छिष्टभोजिनः" मनुः । [वर्द्धते कुट—ल्यु । (मोम) सिक्थके ।

**उच्छिष्टमोदन** न० उच्छिष्टं भ्रमरोच्छिष्टं मधु तेन मोदते

**उच्छिष्य** त्रि० उद्+शिष—वेदे नि० क्यप् । अवशेषणीये

जृम्भितक्षुतहसितकथितरुदितादीनि विशेषानभिहन्त्य शरीरं धारयन्ति “पीडयन्नुरुजोगाढं सोच्छ्वासं शिथिलं स्तनं”। “शीतपादकरोच्छ्वासस्वल्पश्वासश्च यो भवेत्। काकोच्छ्वासश्च यो मर्त्यस्तं धीरः परिवर्ज्जयेत्” सुश्रु०। “सन्ततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः” सुश्रु०। उच्छ्वासश्च दीर्घनिश्वासः स च यावत्कालेन श्वासरूपप्राणक्रिया भवति ततोऽल्पकालेन, दीर्घदेशपर्य्यन्तप्राणवायोर्बहिर्गमने भवति। “उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्त्ती” मेघदू०। “इत्युच्छ्वासोऽस्तृत प्राण आदध” कात्या० ४,८,२९।

उच्छ्वासिन् त्रि० उद्+श्वस–णिनि स्त्रियां ङीप्। १ऊर्द्ध्वश्वासयुक्ते २दीर्घनिश्वासयुक्ते। “समधिकतरोच्छ्वासिना” मेघ०। ४उद्गते च “उच्छ्वासिकालाञ्जनरागमक्ष्णोः” कुमा० “समधिकतरोच्छ्वासिना” मेघ० “५ऊर्द्ध्वश्वासयुक्ते मुमूर्षौ” “यत्रैतदूर्द्ध्वोच्छ्वासी भवति” छा०उ० उत्क्रमणशब्दे दृश्यम्।

उच्छ उञ्छे (कणशआदाने) तुदा० इदित् पर०सक०सेट्। उञ्छति औञ्छीत्। उञ्छाम्–बभूव आस चकार। उञ्छिता उञ्छ्यात् उञ्छिष्यति औञ्छिष्यत्। उञ्छ उञ्छनम् उञ्छितः। प्र+मार्जने प्रोञ्छन (पोछा) प्रोञ्छित।

उच्छ बन्धे समापने च विरामे च। तुदा०पर०सक०सेट्। उच्छति औच्छीत् उच्छाम् बभूव आस-चकार। उच्छिता उच्छ्यात् उच्छिष्यति औच्छिष्यत्। णिच् उच्छयति ते औचिच्छत् औचिच्छत त। सनि उचिच्छिषति उचिच्छिषति। ईदित् तेन निष्ठाया नेट्। उष्टः।

उज्जय(यि)नी स्त्री विक्रमादित्यराजधान्याम् अवन्तीपुर्य्याम् अवन्तीशब्दे विवृतिः। “सौधोत्सङ्गप्रणयविमुखो माख भूरुज्जयिन्याः” मेघदू०। इयञ्च लङ्कावधिमेरुपर्य्यन्तसमरेखास्थपुरीमध्येऽन्यतमा यथाह श्रीपतिः “लङ्का कुमारी नगरी च काञ्ची पानाटमद्रिश्च सितः षडास्यः। श्रीवत्सगुल्मं च पुरी ततश्च माहिष्मती चोज्जयिनी प्रसिद्धा। स्यादाश्रमोऽस्मात्नगरं सुरम्यं ततः पुरं पट्टशिवाभिधानम्। श्रीगर्गराट च सरोहिताख्यं स्थानेश्वरं शीतगिरिः सुमेरुः। इतीव यास्योत्तरगां धराया रेखामिमां गोलविदो वदन्ति। अन्यानि रेखास्थितिभाञ्जि लोके ज्ञेयानि तज्ज्ञैः पुटभेदनानि”। सू०सि०तु सामान्येनोक्तम् यथा “राक्षसालयदेवौकःशैलयोर्मध्यसूत्रगाः। रोहीतकमवन्ती च तथा सन्निहितं सरः”। “राक्षसालयो लङ्का देवानां स्थानरूपः पर्वतो मेरुरनयोर्मध्ये ऋजुसूत्रं तत्र स्थिता देशा रेखाख्याः। लङ्कादक्षिणस्थलस्यास्तु अनुपयुक्तास्तत्र मनुष्यागोचरत्वादिति नोक्ताः। ज्ञानार्थमुदाहरति। रोहीतकमिति। यथा रोहीतक नगरमवन्त्युज्जयिनी सन्निहितं सरः कुरुक्षेत्रम्। चकारस्तथेत्यव्ययपरः। तथान्यानि परस्परं सन्निहिततया ज्ञेयानि” र०ना०। “यथोज्जयिन्या कुचतुर्थभागे प्राच्यां दिशि स्याद्यमकोटिरेव” सू०सि०।

उज्जयन्त न० उद्+जि–झ। रैवतपर्वते हेम०।

उज्जानक पु० उत्तङ्कमुनेराश्रमान्तिके समुद्रसविधे मरुभूमिषु बालुकामयदेशभेदे। यत्र हि मधुपुत्रो धुन्धुरुत्तङ्कप्रार्थितेन कुवलाश्वेन विष्णुतेजसा बृंहितवीर्य्येण निपातितः तत्कथा यथा भा०हरिव०११अ०। “ममाश्रमसमीपे वै समेषु मरुधन्वसु। समुद्रो बालुकापूर्ण उज्जानक इति श्रुतः। देवानामप्यवध्यश्च महाकायो महाबलः। अन्तर्भूमिगतस्तत्र बालुकान्तर्हितो महान्। राक्षसस्य मधोः पुत्रो धुन्धुर्नाम महासुरः। शेते लोकविनाशाय तप आस्थाय दारुणम्”। इत्युपक्रम्य तद्वधोपाख्यानं तत्र कथा धुन्धुमारशब्दे दर्शयिष्यते २उत्तरदेशस्थेऽपि देशभेदे “एतदुद्वारं महाराज! मानसस्य प्रकाशते” इत्युपक्रम्य, “एष उज्जानको नाम पावकिर्यत्र शान्तवान्” भा०व०१३०अ० देशभेद उक्तः।

उज्जासन न० उद्+जस–णिच्–ल्युट्। १मारणे बधे एतद्योगे कर्म्मणः संबन्धत्वविवक्षया षष्ठी प्रतिपदविहिततया च तया षष्ठ्या न समासः “चौरस्योज्जासनम्” सि०कौ०। “प्रतिपदविहिता षष्ठी न समस्यते” वार्त्ति०। “प्रोक्ता प्रतिपदा षष्ठी समासस्य निवृत्तये” भर्तृ० तथैवोक्तम्

उज्जिघ्र त्रि० उद्+घ्रा–श। आघ्राणकर्त्तरि।

उज्जिति स्त्री उद्+जि–क्तिन्। उत्कृष्टजये “अग्नीषोमयोरुज्जितिमनुज्जेषम्” यजु० २,२५। “उज्जितिमनु पश्चाद्विजेन हवि स्वीकरणरूपमुत्कृष्टजयम्” वेददी०। “सोमस्योज्जितिमित्यस्मिन्नवसानस्यति:” कात्या० १०,७,१४। “उज्जितिस्थो योत्तरो माहेन्द्र” कात्या० १४,५,२१। अग्नीषोमयोरुज्जितिमनूज्जेषम्। “अग्नीषोमयोरुज्जितिमनूज्जयति” इन्द्राग्न्योरुज्जितिमनूज्जयति” शत०ब्रा० १,८,२,१,२,२,४। २उज्जयविशिष्टयुक्तमन्त्रकरणकाहुतौ च। “अथोज्जितीः” इत्युपक्रम्य “अग्निरेकाक्षरेण प्राणमुज्जयत्तमुज्जेषम्” इत्यादि शत०ब्रा० २,२,१६,१७ उक्तम्।

उज्जिहान त्रि० उद्–हा–शानच्। उद्गच्छति।

उज्जीविन् त्रि० उद्+जीव-णिनि। नागप्रायतापामुग्रचरं पुनरुज्जीवनवति।

उज्जृम्भ पु० उद्+जृभि-घञ्। १विकाशे २स्फुटने। उद्गता जृम्भा (हाइतोला) यस्मात्" प्रा०ब० गतलोप। ३सुखविकाशनभेदे ३कर्त्तरि अच्। ४प्रकाशान्विते ५उज्जृम्भान्वित त्रि० "उज्जृम्भवदनाम्भोजा भिनत्त्यङ्गानि साङ्गना" माघ

उज्जृम्भण न० उद्+जृभि-भावे ल्युट्। विकाशे मुखविकाशनभेदे व्यापारे (हाइतोला)। "उद्गारकासक्षवथुजृम्भणोज्जृम्भणानि च" सुश्रुतः। उद्+जृभि-अ। उज्जृम्भाऽप्यत्र स्त्री।

उज्जृम्भित त्रि० उद्+जृभि-क्त। विकाशिते। भावे क्त। २चेष्टायाम् (हाइतोला) ३सुखव्यापारभेदे न०।

उज्जेष पु० उदा+जिष-गत्याम् भावे घञ्। १उत्कर्षप्राप्तौ उज्जिति शब्दे उदा०। अच्। २उत्कृष्टे त्रि०।

उज्जेषिन् त्रि० उद्+जिष-गत्या णिनि स्त्रियां ङीप्। उत्कर्षप्राप्ते "क्रोडी च याको चोज्जेषी" यजु०१७, ८५ "उज्जेषी उत्कृष्टजयनशील" वेददी०।

उज्ज्य न० उद्गता ज्या यस्य प्रा० ब० गतलोप। "आरोपितमौर्वीके धनुषि। उज्ज्यधन्वा" कात्या०२२,२,१७। "उज्ज्यधन्वा आरोपितज्यधनुष्का," कर्क०। उत्क्रान्ता अवतारिता ज्या यत प्रा० ५ब० वा क्रान्तलोप। अवतारितमौर्वीके धनुषि "काण्ड्रो वा वैदङ्खोवोपधुल उज्ज्यं धनुरधिज्य कृत्वा" छा०उ०।

उज्ज्वल त्रि० उद्+ज्वल-अच्। १दीप्ते, २विशदे, ३विकाशिनि च। ४शृङ्गाररसे पु०। "स रागिराजीन्नकसा महोज्ज्वल "शृङ्गारभङ्ग्या महाकाव्ये चारुणि नैषधीयचरिते सर्गोनिसर्गोज्ज्वल" नैष०। "स्नातन्त्रत्तमुज्ज्वलमवाप करेणुराज" अविरतमुकुलिमुज्ज्वलां दधाने' माघ। "अकार्क' सखि। मारुती न रुचिरे सं मेयक मोज्ज्वलम्" सा०द० "पिपिनोज्ज्वलवेशा व बलम् पूरमिस्वना" सा० द० "सुमुखा, पल्लवोज्ज्वला" सुश्रु०। अस्य च रसान्तरत्व गोस्वामिप्रभृतिभि स्थितम्। ५स्वर्णे न० रागमि० धातुमध्ये तस्योद्दीप्तोत्वात्तथात्वम्। तस्य भाव ष्यञ् औज्ज्वल्य न। उज्ज्वलत्व तद्भावे न०। तल्। उज्ज्वलता स्त्री तत्रैव।

उज्ज्वलदत्त पु० उणादिवृत्तिकारके विद्वद्भेदे। तस्येदम्। छ। उज्ज्वलदत्तीय तत्कृतग्रन्थे पु० तत्कृतवृत्तौ तु स्त्री।

उज्ज्वलन न० उद्+ज्वल-भावे ल्युट्। १उद्दीप्तौ २वैशद्ये च।

उज्झ त्यागे तुदा० पर० सक० सेट्। उज्झति औज्झीत्' उज्झाम्—बभूव आस चकार। उज्झिता उज्झिष्यति उज्झिष्यति औज्झिष्यत्। उज्झित। समग्र यस्या मतिरुज्झितक्रम" नैष०। "अद्यापि नोज्झति हर किल कालकूटम्" चौरपञ्चाशिका। "मायानीजोरिह खड्गेन छिन्नस्तेनैव मूर्द्धनि' भट्टि। "सपदिविगतमिद्रस्तल्पमुज्झाञ्चकार"। "अविरतोज्झितवारिविपाण्डुभि" "परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु मृगद्वन्द्वेषु" सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम्" "उदग्रे मदगाव्यमुज्झता" इति च रघु। अत "मिथोद्ग्रौ नदे" पा० नि० क्यप् नदे कर्त्तरि अस्य धत्वम्। "उदकमुज्झति उदग्रोनद" सि०कौ०।

प्र+सकर्षेण त्यागे। "स्वस्थिणी प्रेयस्यपि प्रोज्झिता" प्र०बो०। "लिखितमपि ललाटे प्रोज्झितु क समर्थ:" हितो०।

सम्+ सम्यक्त्यागे।

उज्झ त्रि० उज्झति उज्झ-अच्। त्यागिनि। "अर्थोज्झका वेदनिन्दा कौटसाक्ष्य सुहृद्वध'। गर्हितान्नाद्ययोर्जग्धि सुरापाणसमानि षट्" मनु।

उञ्छ पु० उछि-घञ्। "अबाधितस्थानेषु पथि क्षेत्रेषु च अप्रतिहतावकाशेषु यत्र कुत्रौषध्यो विद्यन्ते तत्राङ्गुलीभ्यामेकैक कणं समुच्चिनोतीति" बौधा०सूत्रव्याख्याने कणश आदाने। "शिलोञ्छमप्याददीत विप्रोऽजीवन् यतस्तत" मनु। "एव हास्य न्यपतेरुञ्छेनापि च जीवत' मनु। "तानुञ्छषष्ठाङ्कितसैकतानि" रघु। "निराहारस्तु स मुनिरुञ्छ मार्गयते पुन" "तथामुमुञ्छधर्माणं दुर्वासा मुनिसत्तम 'शिलोञ्छवृत्तिधर्मात्मा मद्गल सयतेन्द्रिय' भा०व० १५९अ०। "प्रतिग्रहात् शिल श्रेयस्ततोऽप्युञ्छ प्रशस्यते" मनु'। "व्यालग्रहात्तुञ्छवृत्तीन्न्याय वनचारिण "मनु। अस्य जीवतोऽपि "उञ्छ भैक्ष्य यदन्यच्च तत्परिपक्वम् कृतम्" निगमोक्तं "प्रतिग्रहात् शिल श्रेयस्ततोऽप्युञ्छ प्रशस्यते" सूत्यन्तरे चोक्तम्। उञ्छ शिलमिति समस्तमपि शब्दान्तर केचिदिच्छन्ति। उञ्छेन प्रकिप्तसूक्ष्मकणेन शिल्यते सञ्चीयते इति तद्व्युत्पत्ते "ऋतमुञ्छशिल ज्ञेयममृत स्यादयाचितम्।मृतन्तु याचित भैक्ष्य प्रमृत कर्षण स्मृतम् मनु।

उञ्छ न० उछि-भावे ल्युट्। आपणक्षेत्रादिपतितस्य क्षेत्रस्वामिपरित्यक्तविक्रीतावशिष्टस्य धान्यादे कणश आदाने

उञ्छशिल न० शिल-अपकारे क इत०। क्षेत्रस्वामिना त्यक्तेतरस्मात् क्षेत्रात्कणश, समुच्चयरूपे आहरणे। अस्य

दन्त्यसकारमध्यतामपि केचित् पृषोदरादि० कल्पयन्ति ।

उट न० उ+टक् नेत्त्वम् । १तृणे, २पर्णे च ।

उटज पुंन० उटेभ्यो जायते जन+ड । पर्णादिनिर्म्मितशालायां मुन्यादिगृहे । "उटजद्वाररोधिभिः" "मृगैर्वर्त्तितरोमन्थमुटजाङ्गनभूमिषु" रघुः "नवोटजाभ्यन्तरसम्भृतानलम्" कुमा०

उठ गतौ भ्वा०पर०सक०सेट् । ओठति औठीत् । उवोठ ऊठतुः ओठिता उठ्यात् ओठिष्यति औठिष्यत् ।

उड सहतौ सौत्र० पर०अक० सेट् । ओडति औडीत् । उवोड ऊडतुः । ओडिता उड्यात् ओडिष्यति औडिष्यत् । उडु

उडु स्त्री न० उड–बा० कु । १नक्षत्रे, २जले च स्त्रीत्वे वा ऊङ् । "इन्दुप्रकाशान्तरितोडुतुल्याः" । "उत्तम्भितोडुभिरतीवतरां शिरोभिः" माघः ।

उडुचक्र न० उडूनां चक्रमिव मण्डलम् । १नक्षत्रमण्डले भचक्रे तस्य च स्थितिश्च" सि०शि० उक्ता उडुशब्दे तत्र दर्शितम् । उडुचक्रस्वरूपादि सू० सि० उक्तम् यथा "ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाभिधीयते । तन्मध्ये भ्रमणं भानामधोऽधः क्रमशस्तथा । मन्दामरेज्यभूपुत्रसूर्य्यशुक्रेन्दुजेन्दवः । परिभ्रमन्त्यधोऽधस्थाः सिद्धविद्याधरा घनाः" । "ब्रह्माण्डान्तः परिधिस्तत्तुल्यमानं यत्र व्योमकक्षा वक्ष्यमाणाकाशकक्षोच्यते । तन्मध्ये ब्रह्माण्डमध्य आकाशे भानां नक्षत्राणां सर्वेषां सर्वतस्तुल्योर्ध्वान्तरितानां भ्रमणं भवति । तथा तुल्योर्ध्वान्तरेणाधोधो नक्षत्रेभ्यः शनिवृहस्पतिभौमार्कशुक्रबुधचन्द्राश्चमस्तात् परिभ्रमन्ति । सिद्धा विद्याधराः घनाश्चाधस्थाश्चन्द्रादधःस्थिता अधोऽधः क्रमेणाकाशे स्थिता । प्रवहवायावव-स्थानाभावाच्चन्द्रवच्च तेषां परिभ्रमः" र०ना० । तस्योत्पत्तिविभागस्तत्रैव । "पुनर्द्वादशधात्मानं व्यभजद्राशिसंज्ञकम् । नक्षत्ररूपिणं भूयः सप्तविंशात्मकं वशी" सू० सि० । "पुनरनन्तरमात्मानं द्वादशधा द्वादशस्थानेषु राशिसंज्ञकं व्यभजत् मनःकल्पितं वृत्तं द्वादशविभागं राशिवृत्तमकरोदित्यर्थः । भूयो द्वितीयवारमात्मानं नक्षत्ररूपिणं सप्तविंशात्मकं व्यभजत् । मनःकल्पितं तदेव वृत्तं सप्तविंशतिविभागं चाकरोदित्यर्थः । ननु न्यूनाधिकविभागाः कथं न कृताः ? उक्तसङ्ख्याया नियामकाभावादित्यत आह वशीति । इच्छाविषये यस्य विद्यते वशेति वशी स्वतन्त्रेच्छस्य नियोगानर्हत्वात् । स्वेच्छया तत्सङ्ख्याका विभागाः कृता इति भावः । सप्तविंशतिविभागव्यञ्जकानि नक्षत्राणि ताराात्मकानि निर्मितानीत्यर्थसिद्धम्" र०ना० । तत्र राशिनक्षत्रनामानि ज्योति०त०उक्तानि यथा "मेषवृषमिथुनकर्कटसिंहा कन्यातुलाधरवृश्चिकभम् । धनुरथ मकरः कुम्भो मीन इति च राशयः कथिताः" । "अश्विन्या सह भरणी कृत्तिकापादः कीर्त्तितो मेषः । वृषभः कृत्तिकाशेषं रौहिण्यर्द्धञ्च मृगशिरसः । मृगशिरसोऽर्द्धं चार्द्रा पुनर्वसोस्त्रिपादं मिथुनम् । पादः पुनर्वसोरन्त्यः पुष्योऽश्लेषा च कर्कटः कथितः । सिंहोऽथ मघा पूर्वफल्गुनीपाद उत्तरायाः । तच्छेषं हस्ता च चित्रार्द्धं कन्यकाख्यं स्यात् । तौलिनि चित्रार्द्धं स्वातिर्विशाखायाश्च पादत्रयम् । अलिनि विशाखापादस्तथानुराधान्विता ज्येष्ठा । मूलं पूर्वाषाढा प्रथमश्चाप्युत्तराषाढको धन्वी । मकरस्तत्परिशेषं श्रवणा-धनिष्ठार्द्धं कनिष्ठायाः । कुम्भोऽथ धनिष्ठार्द्धं शतभिषापौर्व्व-भाद्रपदत्रयम् । भाद्रपदायाः शेषस्तथोत्तरा रेवती मीनः" अश्विन्यादिनक्षत्राणां तारासंख्यातत्सन्निवेशस्वरूपं च श्रीपतिनोक्तम् । "वह्नित्रित्र्यृत्विषुगुणेन्दुकृताग्निभूतबाणाश्विनेत्रशरभूकुयुगाग्निरामाः । रुद्राब्धिरामगुणवेदशतद्वियुग्मदन्ता बुधैर्निगदिताः क्रमशो भताराः । तुरगमुखसदृक्षं योनिरूपं क्षुराभं शकटनिभमथैणस्योत्तमाङ्गेन तुल्यम् । मणिगृहशरचक्राभानि शालोपमं च शयनसदृशमन्यच्चात्र पर्य्यङ्करूपम् । हस्ताकारमजस्रमौक्तिकसमं चान्यत् प्रवालोपमं धिष्ण्यं तोरणवत् स्थितं बलिनिभं स्यात् कुण्डलाभं परम् । क्रुध्यत्केसरिविक्रमेण सदृशं शय्यासमानं परं चान्यद्दन्तिविलासवत् स्थितमतः शृङ्गाटकव्यक्ति च । त्रिविक्रमाभं च मृदङ्गरूपं वृत्तं ततोऽन्यद्यमलद्वयाभम् । पर्य्यङ्कतुल्यं मुरजानुकारमित्येवमश्व्यादिभचक्ररूपम्" ।

भचक्रपरिधिमानम् सि०शि० उक्तम् "खव्योमखत्रयखसागरषट्कनागव्योमाष्टशून्ययमरूपनगाष्टचन्द्राः । ब्रह्माण्डसम्पुटपरिभ्रमणं समन्तादभ्यन्तरा दिनकरस्य करप्रसाराः" (१८७१२०८० ...) — ["अभ्रेभ्विभाङ्गजकुञ्जरगोऽत्तदस्रा" (२५८८८६८५० योजनानि) कक्षा स्मरन्ति गणका भगणस्य चैषाम्" । तस्य भूमध्यादुच्छ्रितियोजनानि तत्रोक्तानि यथा "नागाब्धषड्द्वयरसाग्निकृवेदसङ्ख्यो" (४१३६२६५८) नक्षत्रमण्डलभवः श्रवणो निरुक्तः" । अस्य च द्वादशधा विभक्तस्य प्रवहवायुना भ्राम्यमाणस्य दिने षण्णामुदयः रात्रौ च षण्णामिति भेदः । "स्याद्भ्रमो निजनिजोदयभानुतुल्ये सूर्य्योऽस्तभास्करनभोऽस्तमयश्च भानाम्" सि०शि० उक्ते । २तारासमूहे च "व्योम्न पर्य्यन्तचरोडुचक्र" माघः ।

उडु(डू)प पु० उडुनि जले पाति पा–क । १प्लवे भेलायाम् ।

'उडुपप्लवसन्तारोयत्र नित्यं भविष्यति" भा०व्या० ८८अ० । "वह्नन्तीशारिबकूलं फेनोडुपपरिप्लुतम् । भा०व०१३६ । "तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्" रघु । उडुरूपजलसन्तारहेतुत्वादस्य उडुपत्वम् । चर्मावनद्धयानपात्रे न० सप्लोकव्याख्याने मल्लिनाथेन "उडुपेम चर्मावनद्धयानपात्रेणेत्यभिधाय "चर्मावनद्धमुडुपं प्लवः काष्ठं करण्डवदिति" सज्जनोक्तिरुदाहृता । शब्दा० । उड-पोऽपि सर्वे अमरटी० । उडूनि उडूर्नां नक्षत्राणि पाति पा-क । २चन्द्रे स हि ताराणां पतिरतस्तद्रक्षक । उडूना दिवा हि सूर्यकिरणैरभिभवादप्रकाशत्वेन रात्रौ च प्रकाशवत्त्वेन निशाधीशचन्द्रस्य तत्पतित्वम् । एवम् "नक्षत्राणामनीशत्वमोषधीना तथैव चेति का०ख० प्रजापतिना तदधीशत्वदानमुक्तम्"। गीतायामपि "नक्षत्राणामहं शशी" इत्युक्तेः तन्मध्ये तस्य श्रेष्ठत्वादपि तत्पतिता "सलिलमये शशिनि" इत्यु०स०? तस्य जलमयत्वोक्तेः उडुमयत्वात् जलमयत्वात् तस्य उडुपतित्वं वा बोध्यम् दक्षकन्याश्विन्यादितारापतित्वाद्वा तथात्वम् ।

उडु(डू)पति पु० उडूनां पतिः । १चन्द्रे २जलेशे वरुणे च । "परिलुप्यता वयिणिगणोडुपते" माघ । "रसात्मकस्योडुपतेश्च रश्मय" कुमा० ।

उडुपथ पु० उडूनां पन्थाः । आकाशे । तत्र हि उडूनां प्रत्यहं प्रवहवायुना भ्रमणात् तथात्वम् ।

उ(दु)डुम्बर पु० उ शम्भुं वृणोति वृ उम्बर उत्कृट० उम्बर प्रा०स० शब्दा० दस वा डत्वम् । (यज्ञ डुमुर) १यज्ञाङ्गे वृक्षे २ताम्रे च, महाबलप्रहरणायाम् ३देहल्याम् ४कुष्ठभेदे च न०। "उ(दु)डुम्बुरो यज्ञफलो यज्ञाङ्गो हेमदुग्धक । उदुडुम्बरोऽहितोरुक्षो गुरुपित्तकफास्रजित् । मधुरस्तुवरोव्रणशोधनरोपण " इति भा० प्र० उक्तगुणक । तस्य विकार अण् । औ(दु)डुम्बर तद्विकारे पात्रादौ त्रि०। स्त्रियां ङीप् । "स्पृष्ट्वौदुम्बरं पात्रं जानुभ्यां धरणिं गत" स्मृति । "औडुम्बरीं स्पृष्ट्वा गायेत" श्रुति । [ङीप् । दन्तीवृक्षे शब्दच० ।

उडुम्बरपर्णी स्त्री उडुम्बरस्य पर्णमिव पर्णमस्या गौरा०

उडुराज् पु०उडुषु राजते राज-क्विप् । चन्द्रे । अच्, उडूनां राजा टच् सम०वा । उडुराजोऽप्यत्र "तदोडुराज ककुभ करैर्मुखं प्राच्याविलिम्पन्" भाग०१०, २९अ०।

उडुलोमन् पु० उडुरिव लोमास्य । ऋषिभेदे । तस्यापत्यम् बाह्वा० इञ् । औडुलोमि तदपत्ये पुं स्त्री० । बहुषु च-

कार । उडुलोमाः । [विरुल्लेढ्डयने निराशताम्'' नैष०।

उड्डयन न० उद्+डी-ल्युट् । पक्षिणामूर्द्ध्वगतौ "गतो

उड्डामर त्रि० उत्कृष्टो डामरः प्रा०स० । १उत्कटे २श्रेष्ठे च ३तन्त्रभेदे पु० । [तिभेदे ।

उड्डीन न० उद्+डी-भावे क्त । ऊर्द्ध्वोत्पतनरूपे खगग-

उड्डीयन न०उद्+डी-इवड्ड म इवाचरति क्यङ् उड्डीय-भावे ल्युट् । । उत्पतने । "कथमुड्डीयनेऽशक्तान् पतने च समागतान्'' मा० आ० २३२अ० । उड्डीय-कर्त्तरि ताच्छील्ये वा चानश् । उड्डीयमान उड्डयन कर्त्तरि तच्छीले च त्रि० ।

उड्डीश पु० उद्+डी-क्विप् तस्य ईश । उत्पतन कर्त्तृणामीश्वरे १महादेवे २तन्त्रभेदे च मेदि०। योगिनां हि उत्पतनं योगशास्त्रप्रसिद्धम् महादेवस्य च तदीशत्वात् तथात्वम् । उड्डीशतन्त्रस्य तु उत्पतनसाधनोपायविधायकत्वात् तथात्वम् ।

उ(ओ)ड्र पु०उड-शौ० मा० रक् र वा उ-र-रक् वा डुगागमोवा । कूर्म्मविभागस्थप्राच्यदेशभेदे "सवङ्गाङ्गान् सपौण्ड्रोड्रान् सचोलान् द्रविडान्धकान्'' भा० म० ५६ अ० । ओ(उ)ड्रदेशश्च कूर्म्मविभागे वृ०स० प्राच्यतयोक्तः यथा "प्राच्यामिलुपकस्य मिथिलसमतटोड्राश्ववदनदन्तुरकाः'' इति । स च उत्कलात् भिन्नएव तत्र्यानन्तरम् "पौण्ड्रोत्कलकाशिमेकलाम्बष्ठा इत्युक्तेः । भारते च सहदेवदक्षिणदिग्विजये "पाण्ड्यांश्च द्रविडांश्चैव सहितां-श्चोड्रकेरलैः स०३० अ० उक्तेस्तस्य दक्षिणमनमरीत' दक्षिणत्वात् तथात्वम् कूर्म्म विभागे प्राच्यत्वमिति न विरोध । सर्वत्र उड्रपदश्रवणात् उकारादित्वम् रघुनन्दनेन तु ओड्रादिदेशव्यवस्थितमित्युक्तत्वात् ओकारादित्वमपि । अस्य देशवाचित्वात् तस्य राजा तदस्याभिजन इत्यर्थे च अण् । ओड्र तद्राजे तद्वासिनि च बहुषु तस्य लुक् । उड्र तद्राजेषु तन्निवासिषु च ।

उणक त्रि०ओण-अपसारणे ण्वुल् गौरा०उणक इति पाठात् नि० ह्रस्व । अपसारके । स्त्रियां गौरा०ङीप् । उणकी ।

उणादि पु०उण्प्रत्यय आदिर्येषाम्। शाकटायनोक्ते उण्प्रभृतौ प्रत्ययसमुदाये । "उणादयो बहुलम्" "ताभ्यामन्यत्रोणादय '' पा० । "उणादयोऽव्युत्पन्नानि प्रातिपादिकानीति"पा०भा० । व्युत्पन्ना इति पाठान्तरम् । व्युत्पत्तिपक्षाभिप्रायेणैव "राघवस्य ततः कार्यं कारुर्वानरपुङ्गव '' इति भट्टौ कार्य्यमित्यत्र द्वितीया धात्वुत्पन्नत्वे

सा न स्यादिति बोध्यम् उणादिष्वस्य उज्ज्वलदत्तसंमता प्रसिद्धा ।

उण्डुक पु० "गर्भस्य यकृत्प्लीहानौ शोणितजौ । शोणितफेनजः फुप्फुसः शोणितकिट्टप्रभव उण्डुकः" इति सुश्रुतोक्ते रुधिरकिट्टजाते देहस्थमलाशये कोषभेदे तन्मलविभाजकत्व कलाभेदस्य तत्रोक्तं यथा "यकृत् समन्तात् कोषञ्च तथान्त्राणि समाश्रिता । उण्डुकस्थं विभजते मलं मलधरा कला" सुश्रु० देहप्रत्यङ्गविभागमुक्त्वा सुश्रु० "तस्य पुनः सङ्ख्यानम् त्वचः कला धातवो मला दोषा यकृत्प्लीहानौ फुप्फुस उण्डुको हृदयमाशय" इत्युक्तम् । "स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च । हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते" इति तत्र व्यामाद्यपक्वमूत्राद्याधारउक्तम् । शल्योद्धारे च तत्रैव । "अस्थिशल्यमन्यद्वा तिर्यक् कण्ठासक्तमवेक्ष्य केशोण्डुकं दृढैकसूत्रबद्धम् द्रवभक्तोपहितं पाययेत् ।

उत् अव्य० उ–क्विप् । १प्रश्ने २वितर्के ३संशये ४अत्यर्थे ५ऊर्द्धे च । ६उदिते त्रि० । "तस्य उदितिनाम" छा० उ० । उद् इति वा छेदः ।

उत अव्य० उ–क्त । १विकल्पे, २समुच्चये ३वितर्के, ४प्रश्ने, ५अत्यर्थे च । "यदक्रन्दः प्रथमं जायमान उद्यन् समुद्रादुत वा पुरीषात्" यजु० २९,१२ । "मानाग्निहोत्रमुत मानमौनम्" भा० आ० ३६२अ० । "एतावन्ति च दासानां सहस्राण्युत सन्ति मे" भा० स० २२१अ० । "तत् किमयमातपदोषः स्यादुत यथा मे मनसि वर्त्तते" शकु० । "वीरोरस किमयमित्युत दर्पएष" वीरच० "प्रभुः महस्तु किमुतान्यहिंस्राः" रघु । "भारतीव विरोधी न स्वाभासो भरवानुत" किरा० । "धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत" "ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत" गीता । [प्रोतञ्च" स्मृति

उत त्रि० वेञ्–क्त । स्यूते ग्रथिते अमर "यस्मिन्नोतञ्च ।

उतङ्क पु० आयोदधौम्यशिष्यवेदनामकस्य मुनेः शिष्यभेदे तदुपाख्यानञ्च" भा० आ० ३अ० । वेदमुनि प्रक्रम्य "स कदाचित् याज्यकार्येणाभिप्रस्थित उतङ्कनामानं शिष्यम् नियोजयामास" इत्युपक्रम्य "तत्सौम्य ! गम्यतामनुजाने भवन्तं श्रेयोऽवाप्स्यसीति स उपाध्यायेनानुज्ञातो भगवानुतङ्कः क्रुद्धस्तक्षकं प्रतिचिकीर्षुर्हास्तिनपुरं प्रतस्थे" इत्यन्तेन विस्तरेण तच्चरितमुपवर्णितम् । तस्यायं संक्षेपः । गुरुदक्षिणादानार्थं गुरवे उतङ्केन निवेदिते गुरुणा स्वपत्नीवचनात् पौष्यन्नृपवधूधृतकुण्डलद्वयमेव गुरुदक्षिणात्वेन कल्पितम् तच्च पौष्यन्नृपपत्नीष्टतः कुण्डलद्वयं प्रार्थ्य आनयतस्तस्य प्रमादात्तक्षकेणापहृतम् अथ वज्रिणो लब्धवरप्रसादात् नागलोकं गत्वा धूमप्राचुर्य्येण नागलोकावरणे तद्भयात्तत्कुण्डलद्वयं नागैर्दत्तमानीय गुरुपत्न्यै दत्तमिति

२भार्गवे गौतमस्य शिष्यभेदे च तत्कथा भारते "उतङ्को महता युक्तस्तपसा जनमेजय ! । गुरुभक्तः स तेजस्वी नान्यत् किञ्चिदपूजयत् । सर्वेषामृषिपुत्राणामेष आसीन्मनोरथः । औतङ्कीं गुरुवृत्तिं वै प्राप्नुयामेति भारत ! । गौतमस्य तु शिष्याणां बहूनां जनमेजय ! । उतङ्केऽभ्यधिका प्रीतिः स्नेहश्चैवाभवत्तदा । स तस्य दमशौचाभ्यां विक्रान्तेन च कर्मणा । सम्यक् चैवोपचारेण गौतमः प्रीतिमानभूत् । अथ शिष्यसहस्राणि समनुज्ञातवानृषिः । उतङ्कं परया प्रीत्या नाभ्यनुज्ञातुमैच्छत । तं क्रमेण जरा तात ! प्रतिपेदे महामुनिम् । न चान्वबुध्यत तदा स मुनिर्गुरुवत्सलः । ततः कदाचिद्राजेन्द्र ! काष्ठान्यानयितुं ययौ । उतङ्कः काष्ठभारञ्च महान्तं समुपानयत् । स तद्भाराभिभूतात्मा काष्ठभारमरिन्दम ! । निष्पिपेष क्षितौ राजन् ! परिश्रान्तो बुभुक्षितः । तस्य काष्ठे विलग्नाऽभूज्जटा रूप्यसमप्रभा । ततः काष्ठैः सह तदा पपात धरणीतले । ततः स भारनिष्पिष्टः क्षुधाविष्टश्च भारत ! । दृष्ट्वा तां वयसोऽवस्थां रुरोदार्त्तस्वरस्तदा । ततो गुरुसुता तस्य पद्मपत्रनिभानना । जग्राहाश्रूणि सुश्रोणी करेण पृथुलोचना । पितुर्नियोगाद्धर्मज्ञा शिरसाऽवनता तदा । तस्या निपेततुर्दग्धौ करौ तैरश्रुबिन्दुभिः । न हि तानश्रुपातांस्तु शक्ता धारयितुं मही । गौतमस्त्वब्रवीद्विप्रमुतङ्कं प्रीतमानसः । कस्मात्तात ! तवाद्येह शोकोत्तरमिदं मनः । स स्वैरं ब्रूहि विप्रर्षे ! श्रोतुमिच्छामि तत्त्वतः । उतङ्क उवाच । भवद्गतेन मनसा भवत्प्रियचिकीर्षया । भवद्भक्तिगतेनेह भवद्भावानुगेन च । जरेयं नावबुद्धा मे नाभिज्ञातं सुखञ्च मे । शतवर्षोषितं मां हि न त्वमभ्यनुजानीथाः । भवता ह्यभ्यनुज्ञाताः शिष्याः प्रत्यवरा मम । उपपन्ना द्विजश्रेष्ठ ! शतशोऽथ सहस्रशः । गौतम उवाच । त्वत्प्रीतियुक्तेन मया गुरुशुश्रूषया तव । व्यतिक्रामन्महान् कालो नावबुद्धो द्विजर्षभ ! । किन्त्वद्य यदि ते श्रद्धा गमनं प्रति भार्गव ! । अनुज्ञां प्रतिगृह्य त्वं स्वगृहान् गच्छ मा चिरम् । उतङ्क उवाच । गुर्वर्थं कं प्रयच्छामि ब्रूहि

किरति न दक्षिणस्याम्” शत० ब्रा० २,५,२,५,६ ।

**उत्तरशालङ्कट** पु स्त्री व० ब० उत्तरयश शालङ्कटयश द्वन्द्व० तत गोत्रप्रत्ययस्य लुक् । उत्तरशालङ्कगोत्रोत्पन्ने ।

**उत्तरसक्थ** न० उत्तरः सक्थः एकदे० त० टच्समा० । सक्थ्न उत्तरभागे

**उत्तरसाक्षिन्** त्रि० “साक्षिणामपि य. साक्ष्यं स्वपक्षं परिभाषताम् । अश्रुत्वाच्छावणाद्यापि स साक्ष्युत्तरसंज्ञक” इति नारदोक्ते साक्षिभेदे ।

**उत्तरसाधक** त्रि० उत्तर सन् साधयति सिध–णिच् साधादेश ण्वुल् । सहाये सहकारिणि । स हि इतरसामग्योसत्त्वे तदुत्तरवर्त्ती सन् कार्य्यं साधयति ।

**उत्तरा** अव्य० उत्तर+प्रथमापञ्चमीसप्तम्यर्थे आच् । उत्तरस्या दिशि काले देशे वेत्याद्यर्थे । १प्रययावुत्तराहस्य” भा०स० २८अ० । २उत्तरस्या दिशि ३विराटकन्यायां स्त्री ।“प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु । क्रियन्ते या क्रिया पित्र्या प्रोच्यन्ते उत्तरा हि ताः” इत्युक्तासु सपिण्डीकरणोत्तरासु वार्षिकश्राद्धक्रियायासु च स्त्री ।

**उत्तरात्** अव्य० उत्तर+दिग्देशकालविषये आति । उत्तरस्मादुत्तरस्मिन्नुत्तरश्चित्यर्थे । “पश्चादोत्तरादधरादापुरस्तात्” ऋ० ६,१९,९ । “त्व न पश्चादधरादुत्तरात् पुर” ऋ० ८,६१,१६ ।

**उत्तरात्तात्** अव्य० उत्तरात्+वा० वेदे० नि० तातिल् । उत्तरादित्यर्थे ।“सप्त वीरासोऽधरादुदायन्नष्टोत्तरात्तात् समजग्मिरन्” ऋ० १०,२७,१५ । “पुरस्तात् सवितोत्तरात्तात् सविताऽधरात्तात्” १०,३६,१४ ।

**उत्तराधर** त्रि० कर्म्म० उत्तरश्च अधरश्च । उच्चावचे उत्तराधरा इव भवन्त्योयन्ति” शत० ब्रा० ५,२,४,२१ । उपरितनोष्ठे पु० “पुनर्विशत्सु स्फुरितोत्तराधर” कुमा० ।

**उत्तराधिकारिन्** त्रि० उत्तरं पूर्व्वस्वामिस्वत्वोपरमानन्तरमधिकरोति तद्धने स्वाम्यमाप्नोति अधि+कृ–णिनि । पूर्व्वस्वामिस्वत्वोपरमे तद्धने स्वामित्वप्राप्ते पूर्व्वस्वामिसम्बन्धिपुत्रादौ स्त्रियां ङीप् । तत्र कस्य धने कस्याधिकार । तत्र तावत् मध्यदेशप्रचलितदायभागमतानुसारिक्रमोऽभिधीयते तत्र तद्ग्रा० श्रीलष्णगोस्त्रम् यथा । “अत्राय मृतपुंस्यनाधिकारिक्रम । तत्र प्रथम पुत्र तदभावे पौत्र तदभावे प्रपौत्र, मृतपितृकपौत्र-मृतपितृपितामहकप्रपौत्रयोस्तु पुत्रेण सह युगपदधिकार । प्रपौत्रपर्य्यन्ताभावे पत्नी सा च प्राप्तभर्त्तृदाया भर्त्तृकुलं

तदभावे पितृकुलं वा समाश्रिता सती शरीररक्षार्थं भर्त्तृदायं भुञ्जीत तथा भर्त्तुरुपकारार्थं यथाकथञ्चिद्दानादिकमपि कुर्व्वीत न तु स्त्रीधनवत् स्वच्छन्दं विनियुञ्जीत । तदभावे दुहिता तत्र प्रथमं कुमारी तदभावे वाग्दत्ता, तदभावे ऊढा सा च पुत्रवती सम्भावितपुत्रा च ते द्वे युगपदेवाधिकारिण्यौ, बन्ध्या पुत्रहीना विधवा च नाधिकारिणी । ऊढायाअभावे दौहित्र । तदभावे पिता । तदभावे माता, तदभावे भ्राता, तत्रापि प्रथमं सोदर तदभावे वैमात्रेय, भ्रातृ भ्रातृसङ्घत्वे तु सोदरमात्रविषये प्रथमं संसृष्टसोदर एवाधिकारी तदभावे चासंसृष्टसोदरः, एवं वैमात्रेयमात्रविषये प्रथम संसृष्टवैमात्रेय तदभावे चासंसृष्टवैमात्रेयः, यदा तु संसृष्टोवैमात्रेय सोदरश्चासंसृष्ट तदा तावुभौ तुल्यवदधिकारिण्यौ । भ्रातॄणामभावे भ्रातृपुत्रः, तत्रापि प्रथमं सोदरभ्रातृपुत्र तदभावे वैमात्रेयभ्रातृपुत्रः संसर्गे तु सोदरभ्रातृपुत्रमात्रविषये प्रथमं संसृष्टसोदरभ्रातृपुत्र तदभावे चासंसृष्टसोदरभ्रातृपुत्रः, वैमात्रेयभ्रातृपुत्रमात्रविषये प्रथमं संसृष्टवैमात्रेयभ्रातृपुत्र तदभावे चासंसृष्टवैमात्रेयभ्रातृपुत्रः, यदा तु सोदरभ्रातृपुत्रोऽसंसृष्टो वैमात्रेयभ्रातृपुत्रस्तु संसृष्टः तदा द्वौ भ्रातृवत्तुल्याधिकारिण्यौ । भ्रातृपुत्राभावे भ्रातृपौत्र तत्रापि भ्रातृ सोदरासोदरक्रमः संसर्गासंसर्गक्रमश्च बोध्यः । तदभावे पितृदौहित्र स च सोदरभगिनीपुत्र वैमात्रेयभगिनीपुत्रश्च, तदभावे पितामह , तदभावे पितामही, तदभावे पितृः सहोदरः तदभावे पितृवैमात्रेय । तदभावे पितृसोदरपुत्रपितृवैमात्रेयपुत्रपितृसोदरपौत्रपितृवैमात्रेयपौत्राणा क्रमेणाधिकार । तदभावे पितामहदौहित्र तत्रापि पितृसोदरभगिनीपुत्रः पितृवैमात्रेयभगिनीपुत्रश्च, वक्ष्यमाणप्रपितामहदौहित्राधिकारेऽप्येवम्, तदभावे प्रपितामह तदभावे प्रपितामही तदभावे पितामहसहोदरभ्रातृतद्वैमात्रेयभ्रातृतत्पुत्रपौत्रप्रपितामहदौहित्राः क्रमेणाधिकारिण । एतावत्पर्य्यन्ताना धनिभोग्यपिण्डदातॄणामभावे धनिदेयपिण्डदातॄणां मातामहमातुलादीनामधिकार तत्रापि प्रथमं मातामहस्तदभावे मातुलतत्पुत्रपौत्राणां क्रमेणाधिकार तदभावे चाधस्तनसकुल्याना धनिभोग्यलेपदातॄणा मतिप्रपौत्रप्रभृतिपुरुषत्रयाणां क्रमेणाधिकारः, तदभावे पुनरूर्द्ध्वतनसकुल्यानां धनिदेयलेपभुग्वृद्धप्रपिता-

याज्ञवल्क्योक्तक्रमस्तदन्यधने तु पैठीनस्याद्युक्तक्रम इति रत्नाकरः । बौधायनः "सपिण्डाभावे सकुल्यस्तदभावे आचार्य्योऽन्तेवासी ऋत्विग्वा हरेत् तदभावे राजा" । सगोत्रजाभावे बन्धुः याज्ञवल्क्यवचनात् स च त्रिबन्धुः पितृबन्धुः मातृबन्धुश्च । "आत्मपितुः ष्वसुः पुत्रा आत्ममातुः ष्वसुः सुताः । आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः । पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः । पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः । मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः । मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः" । एतेषां क्रमेणाधिकारः । तदयं संक्षेपः । आदौ पुत्रस्तदभावे पौत्रस्तदभावे प्रपौत्रस्तदभावे साध्वी भार्य्या तदभावे दुहिता तदभावे माता तदभावे पिता तदभावे दौहित्रस्तदभावे भ्राता तदभावे तत्पुत्रस्तदभावे आसन्नसपिण्डस्तदभावे यथाक्रमं व्यवहितसपिण्डस्तदभावे आसन्नसकुल्यस्तदभावे व्यवहितसकुल्यस्तदभावे मातुलपुत्रादिः सर्व्वाभावे ब्राह्मणधनवर्ज्जं राजगामि ब्राह्मणधने तु ब्राह्मणान्तरमेव धनग्रहणाधिकारीति । याज्ञवल्क्यः "वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः । क्रमेणाचार्य्यसच्छिष्यधर्म्मभ्रात्रेकतीर्थिनः" । क्रमेण प्रतिलोमक्रमेण तेन ब्रह्मचारिणो गुरुकुलस्थस्याचार्य्यः, यतेः सच्छिष्यः, वानप्रस्थस्य भ्रातृत्वेनानुमतोऽपरो वानप्रस्थ एव" ।

अधिकारिक्रमे पितृदौहित्रादेरकीर्त्तनात् तस्य नाधिकार इति विशेषः ।

स्त्रीधने विशेषः "तत्र मातृजनन्या संस्थितायान्तु समं सर्व्वे सहोदराः । भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः । यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः । मातामह्या धनात् किञ्चित् प्रदेयं प्रीतिपूर्व्वकम्" । समसंविभागम् सनाभयः सहोदराः, भगिन्यः कुमार्य्य एव समांशाः । तदाह बृहस्पतिः "स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी । अप्रत्ता चेत् समूढा तु लभते मानमात्रकम्" । अपत्यानां पुत्राणां तदंशिनीति विशेषाभिधानात् समत्वलाभः समूढा विवाहिता मानमात्रकं द्रव्यानुसारेण किञ्चित् । गौतमः "स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्च" । "अप्रतिष्ठिता अनपत्या निर्धनभर्त्तृका दुर्भगा चेति रत्नाकरादयः । एता अपुत्रा अपि पुत्रवन्मातृधनभाजः । मनुः "मातुश्च यौतकं यत्स्यात् कुमारीभाग एव सः" । यौतकं विवाहकाले पित्रादितो लब्धम् । प्रथिष

"मातुः पारिणाय्यं स्त्रियो विभजेरन्" । पारिणाय्यं परिच्छदादर्शकङ्कतिकादि । याज्ञवल्क्यः "मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः" । मातृधनं तदृणाच्छेषं ऋणशोधनावशेषं दुहितरो भजेरन्, ताभ्य ऋते दुहितॄणामभावेऽन्वयः दौहित्रीदौहित्रौ मनुवचनानुरोधात् । ब्राह्मादिवैवाहिकपरिच्छदादिकञ्च यन्मातुर्धनं तद्विषयमेतत् । कात्यायनः "दुहितॄणामभावे तु रिक्थं पुत्रेषु तद्भवेत् । बन्धूनामप्यभावे तु भर्त्तृगामि तत् स्मृतम् । भगिन्यो बान्धवैः सार्द्धं विभजेयुः सभर्त्तृकाः । स्त्रीधनस्येति धर्म्मोऽयं विभागस्तु प्रकल्पितः" । दुहितॄणामिति पारिणाय्यं विवाहकाले यौतकञ्च पितृदत्तञ्च यन्मातुर्धनं तत्तस्याः पुत्राभावे पुत्रगामि भवतीत्यर्थः तदतिरिक्तन्तु स्त्रीधनं तस्या अभावे पुत्रीपुत्रोभयगामि इत्युक्तमेव प्राक् । बन्धुदत्तमिति पितृतिरिक्तेन दत्तं यत्तद्भ्रातृभगिन्यौ किन्तु कन्या तत्समाया विवाहिता तु किञ्चिद्भागभागिनीति भगिन्य इत्यादेरर्थः । अभावे पुत्रीपुत्राद्यभावे स्त्रियाधनं पतिगामीत्यर्थः मनुः "ब्राह्मदैवार्षगान्धर्व्वप्राजापत्येषु यद्वसु । अतीतायामप्रजायां भर्त्तुरेव तदिष्यते । यत्त्वस्याः स्याद्धनं किञ्चिद्विवाहेष्वासुरादिषु । अतीतायामप्रजायां मातापित्रोस्तदिष्यते" । अप्रजायामनपत्यायाम् । गौतमः "भगिनीशुल्कं सोदर्य्याणामूर्द्धं मातुः पूर्व्वञ्चेत्येके" । आसुरादिविवाहत्रयलब्धविषयमेतत् । बौधायनः "ऋक्थं मृतायाः कन्याया गृह्णीयुः सोदराः स्वयम् । तदभावे भवेन्मातुस्तदभावे भवेत्पितुः" वि॰ चि॰ । अत्र यस्य भर्त्तृगामित्वमुक्तं तदभावे तत्सपिण्डानामासत्तिक्रमेणाधिकारः । यस्य तु पितृगामितोक्ता तत्र तदभावे तत्प्रत्यासन्नसपिण्डा अधिकारिणः इति बोध्यम् ।

मिताक्षरामते तु जन्माधीनस्वत्वाङ्गीकारेण पैतामहे पित्र्ये च धने पितापुत्रयोः पितामहपौत्रयोश्च तुल्याधिकारः । पितुः पितामहस्य चोपरमे पुत्रस्य, पौत्रादीनाञ्च स्वपितृयोग्येंऽशेऽधिकारः । जीवद्विभागे तु स्वार्ज्जिते पितुर्द्व्यंशहारिता पैतामहे तुल्यांशिता । धनिकृतविभागे तदुपरमे पुत्रादिकृतविभागे च धनिपत्नीनामेकैकांशेऽधिकारः । दुहितॄणान्तु प्रत्येकं स्वजातीयकल्पितभागचतुर्थांशभागिता । सामुदायिकस्वत्वाङ्गीकारेण च भ्रात्रादीनामपुत्रादीनामविभक्तत्वे संसृष्टत्वे च एकस्य मरणे इतरस्य स्वत्वस्थितेः तत्र पत्न्यादीनां न स्वत्वमुत्पद्यते तथा च विभक्तासंसृष्टधन एव पत्न्यादीनामधिकारः । पत्नीदुहितरश्चेत्यादि या॰ वचनात्

तत्र वचनं मिताक्षरायामुद्धृतं ११०० पृष्ठे द्रष्टव्यम् तस्य वचनस्य व्याख्यायाम् मिता० तत्क्रमो दर्शितो यथा "तस्मादपुत्त्रस्य स्वर्यातस्य विभक्तस्यासंसृष्टिनः परिणीता स्त्री संयता सकलमेव धनं गृह्णातीति स्थितम्। तदभावे दुहितरः। दुहितर इति बहुवचनं समानजातीयानामसमानजातीयानाञ्च समविषमांशप्राप्त्यर्थम्। तथा कात्यायनः। "पत्नी भर्त्तुर्धनहरी या स्यादव्यभिचारिणी। तदभावे तु दुहिता यद्यनूढा भवेत्तदेति" बृहस्पतिरपि "भर्त्तुर्धनहरी पत्नी तां विना दुहिता स्मृता" अङ्गादङ्गात् सम्भवति पुत्त्रवद्दुहिता नृणाम्। तस्मात् पितृधनं त्वन्यः कथं गृह्णाति मानवः" इति। तत्र चोढानूढासमवायेऽनूढैव गृह्णाति। "तदभावे तु दुहिता यद्यनूढा भवेत्तदेति" विशेषस्मरणात्। तथा प्रतिष्ठिताऽप्रतिष्ठितासमवायेऽप्रतिष्ठिता तदभावे प्रतिष्ठिता "स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्चेति" गौतमवचनस्य पितृधनेऽपि समानत्वात् सर्वमेतत् पुत्त्रिकाविषयमिति मन्तव्यम्। "तत्समः पुत्त्रिकासुतः" इति पुत्त्रिकायाः तस्य चौरससमत्वेन पुत्त्रप्रकरणेऽभिधानात्। पत्न्या-दुहित्रभावे दौहित्रो धनभाक् यथाह विष्णुः। "अपुत्त्रपौत्त्रसन्ताने दौहित्रा धनमाप्नुयुः। पूर्व्वेषां तु स्वधाकारे पौत्त्रा दौहित्रका समाः" इति मनुरपि। "अकृता वा कृता वापि यं विन्देत् सदृशात् सुतम्। पौत्त्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनमिति"। तदभावे पितरौ मातापितरौ धनभाजौ। यद्यपि युगपदधिकारस्य वचनतायां द्वन्द्वस्मरणात् तदपवादत्वादेकशेषस्य धनग्रहणे पित्रोः क्रमो न प्रतीयते। तथापि विग्रहवाक्ये मातृशब्दस्य पूर्व्वनिपातादेकशेषाभावपक्षे च मातापितराविति मातृशब्दस्य पूर्व्वश्रवणात् पाठक्रमादेवार्थक्रमावगमात् सम्बन्धेऽपि क्रमापेक्षया प्रतीतक्रमानुरोधेनैव प्रथमं माता धनभाक्, तदभावे पितेति गम्यते। किञ्च पिता पुत्त्रान्तरेष्वपि साधारणो माता तु न साधारणीति प्रत्यासत्त्यतिशयात् "अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेदिति" वचनान्मातुरेव प्रथमं धनग्रहणं युक्तं न च सपिण्डेष्वेव प्रत्यासत्तिर्नियामिका अपि तु समानोदकादिष्वपि विशेषेण धनग्रहणे प्राप्ते प्रत्यासत्तिरेव नियामिकेति वचनादवगम्यत इति। मातापित्रोर्मातुरेव प्रत्यासत्त्यतिशयात् धनग्रहणं युक्ततरम्। तदभावे पिता धनभाक्। पित्रभावे भ्रातरो धनभाजः। तथा च मनुः।

"पिता हरेदपुत्त्रस्य रिक्थं भ्रातर एव वेति न्यायदत्तस्य पुत्त्रस्य माता दायमवाप्नुयात्। मातर्य्यपि च वृत्तायां पितुर्म्माता हरेद्धनमिति" मनुवचनाल्लोपस्यापि पितरि भ्रातरि च सत्यां पितुर्माता पितामही धनं हरेत् पिता। यतः पितृगृहीतञ्च विजातीयेष्वपि पुत्त्रेषु गच्छति। पितामहीगृहीतं तु सजातीयेष्वेव गच्छतीति पितामह्येव गृह्णातीति। एतच्चाचार्य्यैर्नानुमन्यते। विजातीयपुत्त्राणामपि धनग्रहणस्योक्तत्वात् "चतुस्त्रिद्व्येकभागिनः स्युरित्यादिनेति। यत्तु "अदायं ब्राह्मणद्रव्यं राजा नित्यमिति स्थितिः" इति मनुस्मरणम् तद्राजाभिप्रायं न पुत्त्राभिप्रायम्। भ्रातृष्वपि सोदराः प्रथमं गृह्णीयुर्भिन्नोदराणां मातृविप्रकर्षात्। "अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेदिति" स्मरणात्। सोदराणामभावे भिन्नोदरा धनभाजः। भ्रातॄणामप्यभावे तत्सुताः पितृक्रमेण धनभाजः। भ्रातृभ्रातृपुत्त्रसमवाये भ्रातृपुत्त्राणामनधिकारः भ्रात्रभावे भ्रातृपुत्त्राणामधिकारवचनात्। यदा त्वपुत्त्रे भ्रातरि स्वर्याते तद्भ्रातॄणामविशेषेण धनसम्बन्धे जाते भ्रातृधनविभागात् प्रागेव यदि कश्चिद्भ्राता म्रियते तदा तत्सुतानां पितृतोऽधिकारे प्राप्ते तेषां भ्रातृणाञ्च विभज्य ग्रहणे पितृतो भागकल्पनेति युक्तम्। भ्रातृपुत्त्राणामप्यभावे गोत्रजा धनभाजः गोत्रजाः पितामही सपिण्डाः समानोदकाश्च तत्र पितामही प्रथमं धनभाक्। "मातर्य्यपि च वृत्तायां पितुर्म्माता धनं हरेदिति" मातुरनन्तरं पितामह्या धनग्रहणे प्राप्ते पित्रादीनां भ्रातृसुतपर्य्यन्तानां बद्धक्रमत्वेन मध्येऽनुप्रवेशाभावात् पितुर्म्माता धनं हरेदित्यस्य धनग्रहणाधिकारमात्रपरत्वादुत्कर्षे तत्सुतानन्तरम् पितामही गृह्णातीत्यविरोधः। पितामह्याश्चाभावे समानगोत्रजाः सपिण्डाः पितामहादयो धनभाजः भिन्नगोत्राणां सपिण्डानां बन्धुशब्देन ग्रहणात्। तत्र च पितृसन्तानाभावे पितामही पितामहः पितृव्यास्तत्सुताश्च क्रमेण धनभाजः पितामहसन्तानाभावे प्रपितामही प्रपितामहस्तत्पुत्त्रास्तत्सुताश्च एवमासप्तमात् समानगोत्राणां सपिण्डानां धनग्रहणं वेदितव्यम् तेषामभावे समानोदकानां धनसम्बन्धः। ते च सपिण्डानामुपरि सप्त वेदितव्या जन्मनामस्मृतेर्वावधिका वा। यथाह बृहन्मनुः। "सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते। समानोदकभावस्तु निवर्त्तेताचतुर्दशात्। जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यत" इति।

गोत्रजाभावे बन्धवो धनभाजः। बन्धवश्च त्रिविधा आत्मबन्धवः पितृबन्धवो मातृबन्धवश्चेति। यथोक्तम्। आत्मपितृष्वसुः पुत्रा इत्यादि चिन्तामणिमते ११०१ पृ० दर्शितम् तत्र चान्तरङ्गत्वात् प्रथममात्मबन्धवो धनभाजस्तदभावे पितृबन्धवस्तदभावे मातृबन्धव इति क्रमो वेदितव्यः। बन्धूनामभावे आचार्य्यस्तदभावे शिष्य "पुत्राभावे य प्रत्यासन्नः सपिण्डस्तदभावे आचार्य्यः आचार्य्याभावेऽन्तेवासी" इत्यापस्तम्बस्मरणात्। शिष्याभावे सब्रह्मचारी धनभाक् येन सहैकस्मादाचार्य्यादुपनयनाध्ययनतदर्थज्ञानप्राप्तिः स सब्रह्मचारी तदभावे ब्राह्मणद्रव्य य कश्चिच्छ्रोत्रियो गृह्णीयात् "श्रोत्रिया ब्राह्मणस्यानपत्यस्य ऋक्थम्भजेरन्निति" गौतमस्मरणात्। तदभावे ब्राह्मणमात्रम् यथाह मनुः "सर्व्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः। त्रैविद्याः शुचयो दान्तास्तथा धर्म्मो न हीयते" इति। न कदाचिदपि ब्राह्मणद्रव्यं राजा गृह्णीयात् "अहार्य्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिरिति" मनुवचनात्। नारदेनाप्युक्तम् "ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्न कश्चन। ब्राह्मणायैव दातव्यमेनस्वी स्यान्नृपोऽन्यथेति"। क्षत्रियादिधनं सब्रह्मचारिपर्य्यन्तानामभावे राजा हरेन्न ब्राह्मणः। यथाह मनुः। "इतरेषान्तु वर्णानां सर्व्वाभावे हरेन्नृप" इति। "पुत्राः पौत्राश्च दायं गृह्णन्ति। तदभावे पत्न्यादय इत्युक्तमिदानीन्तदुभयापवादमाह। "वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः। क्रमेणाचार्य्यसच्छिष्यधर्म्मभ्रात्रेकतीर्थिनः" याज्ञ०। "वानप्रस्थस्य यतेर्ब्रह्मचारिणश्च क्रमेण प्रतिलोमक्रमेणाचार्य्यः सच्छिष्यो धर्म्मभ्रात्रेकतीर्थी च रिक्थस्य धनस्य भागिनः। ब्रह्मचारी नैष्ठिक उपकुर्व्वाणस्य धनं मातादयएव गृह्णन्ति। नैष्ठिकस्य धनन्तदपवादत्वेनाचार्य्यो गृह्णाति इत्युच्यते। यतेस्तु धनं सच्छिष्यो गृह्णाति। सच्छिष्यः पुनरध्यात्मशास्त्रश्रवणधारणतदर्थानुष्ठानक्षमः दुर्वृत्तस्याचार्य्यादेरपि भागानर्हत्वात्। वानप्रस्थधनन्तु धर्म्मभ्रात्रेकतीर्थी गृह्णाति धर्म्मभ्राता एकतीर्थ्यैकाश्रमी धर्म्मभ्राता चासौ एकतीर्थी च धर्म्मभ्रात्रेकतीर्थी। एतेषामाचार्य्यादीनामभावे पुत्रादिषु सत्स्वप्येकतीर्थ्येव गृह्णाति" मिता०। "सोदरस्य च सत्त्वे वैमात्रेयस्य च संसृष्टत्वे तस्याधिकारे। अत्रेदं बोध्यं "अपुत्रपौत्रसन्ताने" इति वदता विष्णुना प्रपौत्रस्याप्यधिकारः सूचितः तस्यापि तत्सन्तानत्वात् सपिण्डत्वाच्च अन्यथा अधिकारिक्रमावसरे उपरितनानामेव कीर्त्तनात् तस्यानधिकारस्यापत्तेः। अतएव ऋणादानप्रकरणे तत्सुतः पौत्रसुत प्रपौत्र ऋणं गृहीतश्चेत् प्रपितामहकृतमृणं न दद्यादिति वदता मिताक्षराकृता प्रपौत्रस्याधिकारः सूचितः। तदधस्तनसन्तानस्य च प्रपितामहपौत्रपर्य्यन्ताभावेऽधिकारः तेषामसपिण्डत्वेऽपि गोत्रजसमानोदकत्वाविशेषात् सपिण्डाधिकारे अधस्तनानामेव प्रथमग्रहणवत् गोत्रजाधिकारेऽपि अधस्तनानामेव ऊर्द्ध्वतनापेक्षया प्रथमं ग्रहणौचित्यादिति एतन्मते च असगोत्रसपिण्डमध्ये, दौहित्रस्यैव ग्रहणात् पितामहदौहित्रादेर्नाधिकारः। बन्धुशब्दस्य असगोत्रसपिण्डपरत्वेऽपि बन्धुशब्दस्य पारिभाषिकपरत्वेन तेषां कीर्त्तनादिति बहवः। वीरमित्रोदये तु विषमशिष्टभिया मातुलादीनामधिकारो व्यवस्थापितः तन्मते तेषां बन्धुपदेन ग्रहणात् इति भेदः। तथा दायलब्धधने पत्न्या यथेष्टदानभोगाद्यधिकार इति मिता० वीर० मते तु स्वामिन उपकाराभावे नटादौ दानेऽनधिकार इति भेदः। "आधिवेदनिकाद्यञ्चेति" याज्ञवल्क्यवचनेन स्त्रिया ऋक्थविभागक्रयादिलब्धधनमात्रस्य स्त्रीधनत्वं व्यवस्थाप्य तद्विभागः मिता० दर्शितो यथा "अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः" या०। तत्पूर्व्वोक्तं स्त्रीधनमप्रजस्यनपत्यायां दुहितृदौहित्रपुत्रपौत्ररहितायां स्त्रियामतीतायां बान्धवा भर्त्रादयो वक्ष्यमाणा गृह्णीयुः। सामान्येन बान्धवाधनग्रहणे अधिकारिणो दर्शिताः। इदानीं विवाहभेदेनाधिकारिभेदमाह। "अप्रजस्त्रीधनं भर्त्तुर्ब्राह्मादिषु चतुर्ष्वपि। दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत्" या०। अप्रजस्त्रिया पूर्व्वोक्ताया ब्राह्मदैवार्षप्राजापत्येषु चतुर्षु विवाहेषु भार्य्यात्वं प्राप्ताया अतीतायाः पूर्व्वोक्तन्धनं प्रथमं भर्त्तुर्भवति। तदभावे तत्प्रत्यासन्नानां सपिण्डानां भवति। शेषेष्वासुरगान्धर्व्वराक्षसपैशाचेषु विवाहेषु तदप्रजस्त्रीधनं पितृगामि। माता च पिता च पितरौ तौ गच्छतीति पितृगामि एकशेषनिर्दिष्टाया अपि मातुः प्रथमं धनग्रहणं पूर्व्वमेवोक्तम्। तदभावे तत्प्रत्यासन्नानां धनग्रहणम्। सर्व्वेष्वेव विवाहेषु प्रसूताऽपत्यवती चेत् दुहितॄणां तद्धनं भवति। अत्र दुहितृशब्देन दुहितृदुहितर उच्यन्ते। साक्षाद्दुहितॄणाम् "मातुर्दुहितरः शेषम्" इत्यत्रोक्तत्वात्। अतश्च मातृधनं मातरि वृत्तायां प्रथमं दुहितरो गृह्णन्ति। तत्र चोढानूढासमवायेऽनूढा गृह्णाति। तदभावे परिणीता तत्रापि प्रतिष्ठिताऽप्रतिष्ठितासमवायेऽप्रतिष्ठिता गृह्णाति तदभावे प्रतिष्ठिता। यथाह गौतमः "स्त्रीधन

दुहितॄणामप्रत्तानामप्रतिष्ठितानां चेति"। तत्र चाप्रत्ताभ्यः प्रतिष्ठितानाञ्च। अप्रतिष्ठिता अनपत्या निर्धना वा। एतच्च शुल्कव्यतिरेकेण। शुल्कन्तु सोदर्य्याणामेव "भगिनीशुल्कं सोदर्य्याणामूर्द्ध्वं मातुरिति" गौतमवचनात्। सर्वासां "दुहितॄणां प्रसूता चेत्" इत्यस्माद्वचनात् तासां भिन्नमातृकाणां समवाये दौहित्रीणां किञ्चिदेव दातव्यम्। यथाह मनुः "यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः। मातामह्या धनात् किञ्चित् प्रदेयं प्रीतिपूर्वकमिति"। दुहितॄणामप्यभावे दौहित्रा धनहारिणः। यथाह नारदः। "मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः" इति तच्छब्देन सन्निहितदुहितृपरामर्शात्। दौहित्राणामभावे पुत्रा गृह्णन्ति। "ताश्च ऋते अन्वयः" इत्युक्तत्वात् मनुरपि दुहितॄणां पुत्राणाञ्च मातृधनसम्बन्धं दर्शयति। "जनन्यां संस्थितायां तु समं सर्वे सहोदराः। भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः," इति मातृकं रिक्थं सर्वे सहोदराः समम्भजेरन् सनाभयोभगिन्यश्च समं भजेरन् इति सम्बन्धः न पुनः सहोदरा भगिन्यश्च संभूय भजेरन् इति इतरेतरयोगस्य द्वन्द्वैकशेषाभावादप्रतीतेर्विभागकर्त्तृत्वान्वयेनापि चशब्दोपपत्तेर्यथा देवदत्त ऋषि कुर्य्याद्यज्ञदत्तश्चेति। समग्रहणमुद्धारविभागनिवृत्त्यर्थम्। सोदरग्रहणं भिन्नोदरनिवृत्त्यर्थम्। अनपत्यहीनजातिस्त्रीधनन्तु भिन्नोदराप्युत्तमजातीयसपत्नीदुहिता गृह्णाति तदभावे तदपत्यं तथा च मनुः "स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथञ्चन। ब्राह्मणी तद्धरेत् कन्या तदपत्यस्य वा भवेदिति"। ब्राह्मणीग्रहणमुत्तमजात्युपलक्षणम्। अतश्चानपत्यवैश्याधनं क्षत्रिया कन्या गृह्णाति। पुत्राणामभावे पौत्राः पितामहीधनहारिणः। "ऋणं भाज्यं प्रतिकुर्य्युरिति" गौतमस्मरणात् "पुत्रपौत्रैर्ऋणं देयमिति" पौत्राणामपि पितामह्यृणापाकरणेऽधिकारात्। पौत्राणामप्यभावे पूर्वोक्ताभर्त्रादयो बान्धवा धनहारिणः"। अत्रापि पुंधनवत् स्त्रीधनेऽपि प्रपौत्राधिकारो वेदितव्यः, अगृहीतवित्तस्य प्रपौत्रस्य ऋणापाकरणनिषेधेन पुंधन इव स्त्रीधनेऽपि तदधिकारस्य सूचितत्वात् इति वाच्यम्।

**उत्तरापथ** पु॰ उत्तरा उत्तरस्यां पन्था अच् समा॰। १उत्तरस्यां दिशि स्थिते पथि २देशभेदे च। "उत्तरपथजन्मानः कीर्त्तयिष्यामि तानपि। कौलकाम्बोजगान्धारा किरातवर्बरैः सह"। मत्स्यपु॰ पुरा॰।

**उत्तरापरा** स्त्री उत्तरस्याः अपरस्यादिशोऽन्तरोला दिक् दिग्नाम स॰। वायुकोणे "उत्तरापराभिमुखोऽन्वष्टमदिशमानयद्दर्शनात्" आ॰त॰साख्या॰स॰। "उत्तरापराभिमुखं वायुकोणाभिमुखं" रघु॰।

**उत्तराभास** पु॰ उत्तरमिवाभासते आ+भास–अच्। दुष्टोत्तरे उत्तरशब्दे १०६० पृष्ठे तल्लक्षणादि।

**उत्तराम्** अव्य॰ उद्+उत्कर्षे तरप् आम्। अतिशयेनोत्कर्षे "उदेनमुत्तरां नयाग्ने घृतेनाहुत" यजु॰१७।५०। "अतिशयेन उत् उत्तराम्" वेददी॰। एवम् तमप् आमु। उत्तमामप्यत्र अव्य॰।

**उत्तरायण** न॰ उत्तरा उत्तरस्यामयनं सूर्य्यादेः "पूर्वपदात् संज्ञायाम्" पा॰णत्वम्। सूर्य्यादेः १उत्तरदिग्गमने अभेदोपचारात् ७स॰ वा। वर्षस्यार्द्धे सूर्य्यस्य दक्षिणत उत्तरदिग्गमनसम्पादके २षण्मासात्मके काले सूर्य्यादेः दक्षिणोत्तरयोरयनञ्च अयनसङ्क्रान्तिशब्दे ३१९ पृ॰उक्तम् तथा च सूर्य्यस्योत्तरायणसङ्क्रमावधि षण्मासाः उत्तरायणकालः। "कर्कटादिस्थिते भानौ दक्षिणायनमुच्यते। उत्तरायणमप्युक्तं मकरस्थे दिवाकरे" म॰त॰ विष्णुपु॰। "एतन्मकरकर्कटादिसङ्क्रमेणायननिरूपणम् श्रौतस्मार्त्तकर्म्मार्थं मन्वादौ सूर्य्यसिद्धान्ताभिहितोदगयनादिनिरूपणन्तु रविगत्यनुसारेण दिनमानादिज्ञानार्थम्, इत्यनयोर्न विरोधः" म॰ त॰ रघु॰। "तत्र मकरस्थिरसङ्क्रान्त्यवधिषण्मासाः स्थूलमुत्तरायणं चरमकरसङ्क्रान्त्यवधि तु सूक्ष्ममिति भेदः। अस्य प्रथमांऽपि "स यत्रोदगावर्त्तते देवेषु तर्हि भवति देवांस्तर्हि गोपायन्ति" शत॰ब्रा॰२,१,३,३। "यदुत्तरायणं तदहर्देवानाम् दक्षिणायनं रात्रिः संवत्सरोऽहोरात्रः" निघ्नु॰ "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्" गीता। यथा चास्य सौरत्वं तथाऽयनशब्दे ३१५ पृ॰कालमाधवीयधृतप्रमाणादिना व्यवस्थापितम्। उपचारात् ३तथागमनारम्भसङ्क्रान्तौ "मृगकर्कटसङ्क्रान्ती द्वे तूदग्दक्षिणायने" सूर्य्य॰सि॰। तत्र पुण्यकालताविषये "यावद्दि यन्ना भुक्ता तत्पुण्यं चोत्तरायणे" "त्रिंशत् भास्करे दृष्टे दिनान्त दक्षिणायने" म॰त॰भवि॰पु॰ "भविष्यत्ययने पुण्यमतीते चोत्तरायणे" इति ति॰त॰ देवीपु॰। राशिसङ्क्रान्त्यभिप्रायमिदं वचनम् इति रघुनन्दनादयः। माधवादयस्तु चरसङ्क्रान्तिपरत्वतया विशेषपुण्यकालत्वं व्याचख्युः। तत्र

अयनसंक्रान्तिशब्दे १२८६दर्शितम् । उत्तरायणकालाभिमानिनि मृतविद्वत्प्रापिणा ब्रह्मादिलोकप्रापणाय अतिवाहनायेश्वरनियुक्ते चेतने ४पुरुषभेदे "आतिवाहिकास्तल्लिङ्गात्" शा० सू० भाष्ययोस्तथा व्यवस्थापितं तच्च आतिवाहिकशब्दे ६५१ पृ० दर्शितम् । तन्मूलमेव अग्निर्ज्योतिरित्यादिगीताव्याख्याने "अग्न्यादयस्तदभिमानिनो देवा" इति श्रीधरोक्तम् ।

**उत्तरार्क** पु० काश्यास्थे उत्तरस्या दिशि अर्ककुण्डसन्निधौ सूर्यमूर्त्तिभेदे । तद्विवृतिर्यथा "इति काशीप्रभावज्ञो जगच्चक्षुस्तमोपहा । कृत्वा द्वादशधात्मानं काशीपुर्यां व्यवस्थितः । लोलार्क उत्तरार्कश्च शाम्बादित्यस्तथैव च । चतुर्थो द्रुपदादित्यो मयूखादित्य एव च । खखोल्कश्चारुणादित्यो वृद्धकेशवसञ्ज्ञकौ । दशमो विमलादित्यो गङ्गादित्यस्तथैव च । द्वादशश्च यमादित्यः काशीपुर्यां घटोद्भव ।। ४६ अ० इति द्वादशसूर्यभेदाभिधाय तत्स्थानानि तत्र क्रमशोऽभिहितानि ।"अथोत्तरस्यामाशायां कुण्डमर्काख्यमुत्तरा । तत्र नाम्नोत्तरार्केण रश्मिमाली व्यवस्थितः" ४७ अ० ।

**उत्तरार्द्ध** न० उत्कृष्टमर्द्धम् उत्तरमर्द्धस्य एक दे०त० वा । देहपूर्व्वार्द्धे । तस्योत्कृष्टत्वात्तथात्वम् "व्यूढा स्थितः किञ्चिदिवोत्तरार्द्धम्" रघुः । कर्म० । २शेषार्द्धे च "अथ मध्ये नैवोत्तरार्द्धेनाभ्यमवेक्षते" शत०ब्रा० १,२,१,१२

**उत्तराशा** स्त्री कर्म० । उत्तरस्या दिशि । उत्तराशाधीशादय उत्तरदिगीशशब्दे पृ०१०८३ दृश्याः ।

**उत्तराश्मन्** पु० कर्म० । उत्तरप्रसिद्धप्रस्तरभेदे तत अश्मा० चतुरर्थ्याम् क । उत्तराश्मक तन्निकटदेशादौ त्रि० ।

**उत्तराषाढा** स्त्री कर्म० । अश्विन्यादिनक्षत्रेषु एकविंशतितमे नक्षत्रे "उग्रः पूर्व्वमघान्तकाभ्रु वगणस्त्वीशस्तु उत्तराणि स्तम्" ज्यो० उक्तेरिय ध्रुवगणः । तस्याः स्वरूपादि उडुचक्रशब्दे १०७१ पृष्ठे उक्तम् इयं विश्वदेवताका अश्लेषाशब्दे ४८७पृ० उक्ता ।

**उत्तरासङ्ग** पु० उत्तरे ऊर्द्धभागे आसज्यते आ+सन्ज-कर्मणि घञ् । उत्तरीयवस्त्रे "शुक्लोत्तरासङ्गभृतो विषक्तान्" भट्टि "स्वगुत्तरासङ्गवतीमधीतिनीम्" कुमा० । "तपनीयोत्तरासङ्गरुचम् विदधशौनपर्यङ्कीम्" माघः । उत्तरस्या दिशि २आसङ्गे च ।"शिशिरसमयसूर्यमिव कृतोत्तरासङ्गम्" काद० । रवेश्च यथा शिशिरसमये माघादौ उत्तरस्यां दिशि गतिस्तथोत्तरायणशब्दे ११०४ पृष्ठे उक्तम् ।

**उत्तरासद्** पु० उत्तरा उत्तरस्यां दिशि सीदति सद-क्विप् । उत्तरदिशि भागार्हेषु १मित्रावरुणप्रधानेषु २मरुत्प्रधानेषु च देवेषु "देवा मित्रावरुणनेत्रा मरुन्नेत्रा वोत्तरासदस्तेभ्य स्वाहा" मित्रावरुणनेत्रेभ्यो मरुन्नेत्रेभ्यो वा देवेभ्य उत्तरासद्भ्यः स्वाहा" यजु० ९,३६,३७ ।

**उत्तराह** पु० उत्तरसमन्तरमहः टच् समा० । अनन्तरदिने

**उत्तराहि** अव्य० उत्तर+प्रथमाद्यर्थे दिग्देशकालविषये आहि । उत्तरस्मिन् उत्तरस्मात् उत्तर इत्यर्थे । "आहि च दूरे" पा० उक्ते दूरत्वाच प्रवृत्तिः । "उदीचीमेव दिशम् प्राजमसुत्वादुत्तराहि वा गृह्यति" शत०ब्रा० ३,२,३,१५ । "अव्ययात्यप्" पा० "क्वचित्तेभ्य एव" इति वार्त्तिके नियमात् अतो भवार्थे यप् । औत्तराहिक तद्भवे त्रि० ।

**उत्तरिका** स्त्रि० उत्तर उल्लङ्घनमस्त्यस्याः ठन् । उत्तरार्थनदादौ १नदीभेदे स्त्री ।"यशुमातव भरतो वाहिनी चमुरक्षिणीः । तत्र शीघ्रतरं गायाड्डत्तीर्योत्तरिकां नदीम्" रामा० ।

**उत्तरीय** न०उत्तरस्मिन् देहभागे भव गहा०छ । ऊर्द्धदेहधार्य्ये वस्त्रे "धौतोत्तरीयप्रतिमच्छवीनि" माघः "स्तनोत्तरीयाणि भवन्ति सङ्गात्" "अथास्य रत्नग्रथितोत्तरीयम्" रघु । प्रतिविधिपर्य्यन्तोत्तरीयधारणावश्यकतोक्ता आ० त० यथा । "विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव च । श्रौतं स्मार्त्तं तथा कर्म्म न नग्नश्चिन्तयेदपि" भृगु०तत्प्रकारप्रकारश्च "यथा यज्ञोपवीतञ्च धार्य्यते च द्विजोत्तमैः । तथा संधार्य्यते यत्नादुत्तराच्छादनं शुभम्" स्मृति । "स्नायाद्द्वे वाससी धौते अच्छिन्ने परिधाय च । अभावे धौतवस्त्राणां शाणक्षौमाविकानि च । कुतपो योगपट्टो वा द्विवासा येन वा भवेत्" या०स्मृ० । "येन वेति उपवीतेन तत्प्रतिनिधीभूतेन कुशरज्ज्वादिना" आ०त० रघु० । "यज्ञोपवीते द्वे धार्य्ये श्रौतस्मार्त्तेषु कर्म्मसु । तृतीयञ्चोत्तरीयार्थे वस्त्राभावेऽतिदिश्यते" स्मृति । मरीच्याह "न स्यूतेन न दग्धेन पारक्येण विशेषतः । मूषिकोत्कीर्णजीर्णेन कर्म्म कुर्य्याद्विचक्षणः" आ० त० भारतम् । "न रक्तमुल्वणं वासो न नीलञ्च प्रशस्यते । मलाक्तं च दशाहीनं वर्जयेदम्बरं बुधः" नरसिं० पु० । "दशाहीनेन वस्त्रेण कुर्य्यात् कर्म्माण्यभावतः" उश० । "वस्त्रं नान्यधृतं धार्य्यं न रक्तं मलिनं तथा । जीर्णं वाऽपदशञ्चैव श्वेतं धार्य्यं प्रयत्नतः" विष्णुध०पु० ।

**उत्तरेण** अव्य० उत्तर+एनप् । आसन्नदिग्देशकालानां प्रथमापञ्चमीसप्तम्यन्तानामर्थेषु "सत्रागारं धनपतिगृहानुत्तरेणास्मदीयम्" मेघ० । एतद्योगे द्वितीया । "किञ्चित् पश्चात् व्रज लघुगतिर्भूय एवोत्तरेण" मेघ० । "हृदयदेशमालभेतोत्तरेण" आश्व०गृ० १,२०८, "एतस्मिन् काले प्रपद्याग्नीध्रमुत्तरेणाग्नीध्रीयम्" आश्व० श्रौ० ५,७,२ ।

**उत्तरेद्युस्** अव्य० उत्तरस्मिन् दिने उत्तर+एद्युस् । अनन्तरदिवसे इत्यर्थे ।

**उत्तरोत्तर** उत्तरस्मादुत्तर । अनन्तरोदितानन्तरे । "पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुतो गोत्रजो बन्धु शिष्य सब्रह्मचारिणः । एषामभावे पूर्वस्य धनभागुत्तरोत्तर" या०स्मृ० । २क्रमेण उत्तरे । "उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते सा०द० ।

**उत्त(रो)रौष्ठ** पु० उत्तर उपरितन ओष्ठ वा वृद्धि । उपरितने ओष्ठे । "अधरो(रौ)ष्ठं दशति उत्तरो(रौ)ष्ठं वा वेढि" "उत्तरौष्ठञ्च योऽविज्ञाद्गुह्यारोष करोति च" सुश्रु० ।

**उत्तर्जन** न० उद्+तर्जनम् प्रा० स० । उच्चैर्भर्त्सने । तच्च क्रोधकार्यं यथाह सा०द० । "निन्दाक्षेपापमानादेरमर्षोऽभिनिविष्टता । नेत्ररागशिरःकम्पभ्रूभङ्गोत्तर्जनादिकृत्"

**उत्तलित** त्रि० उद्+तल-क्त । १उत्क्षिप्ते ।

**उत्तान** त्रि० उद्गतस्तानो विस्तारो यस्य । (चित) भूमिलग्नपृष्ठतया ऊर्द्धभावेन १स्थिते २ऊर्द्धमुखे च । "उत्तानपाणिद्वयसन्निवेशात् प्रफुल्लराजीवमिवाङ्कमध्ये" कुमा० । "उरःस्थोत्तानचरणः सव्ये न्यस्येतरं करम्" उत्तान किञ्चिदुन्नाम्य मुखं विष्टभ्य धोरसा" या० स्मृ० । "पित्र्यात् तदुत्तानं कृत्वा विप्रान् विसर्जयेत् या० स्मृति "प्रत्येत्य प्रस्तरे निष्टुवत उत्तानहस्ता दक्षिणोत्ताना वा" कात्या० ८,२,६ । "उत्तानायै विपश्चात्" सुश्रु०

**उत्तानक** पु०उद्+तन ण्वुल् । उच्चटाख्ये तृणभे० [राजनि०

**उत्तानपत्रक** पु०उत्तानमूर्द्धमुखं पत्रमस्य कप् । रक्तैरण्डे

**उत्तानपाद** पु० स्वायम्भुवमनोः पुत्रे ध्रुवपितरि १नृपभेदे । "वैराजात् पुरुषात् वीर शतरूपा व्यजायत । प्रियव्रतोत्तानपादौ वीरात् काम्या व्यजायत" हरि० २अ० । "स्वायम्भुवस्यापि मनोर्द्वे रेतः शतरूपा... प्रियव्रतोत्तानपादौ शतरूपापते सुतौ । वासुदेवस्य कलया रक्षायां जगतः स्थितौ । जाये उत्तानपादस्य सुनीतिः सुरुचिस्तयोः । सुरुचिः प्रेयसी पत्युर्नेतरा यत्सुतो ध्रुवः" भाग० ४स्क०८अ० इत्युत्तर तच्चरितं तत्र वर्णितम् । उत्तानस्थितः पादोऽस्य । २परमेश्वरे पु० "पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवीति" श्रुतेस्तस्य सर्वोपरिस्थपादत्वात् तथात्वम् । अस्य समासे वा अन्तलोपे उत्तानपादपि तत्रैव "भूर्जज्ञ उत्तानपदोभुव आशा अजायन्त" । "तदुत्तानपदस्परि" ऋ० १०,७२,४, अत्र भत्वे पाद पदादेशः । ४उत्तानपादयुक्ते शिशुप्रभृतौ त्रि० ।

**उत्तानपादज** पु० उत्तानपादात् जाते जन-ड । ध्रुवे तच्चरितं भागवते ४स्क० ८अध्यायादौ वर्णितम् ।

**उत्तानशय** त्रि० उत्तानं ऊर्द्धमुखं यथा तथा शेते शी-अच् । अतिशिशौ तदानीमुत्ताने सामर्थ्याभावादस्य तथात्वम् ।

**उत्तानशीवन्** त्रि० उत्तान सन् शेते शी-क्वनिप् । अतिशिशौ २उत्तानस्थिते च । स्त्रियां ङीप् वनोरच । उत्तानशीवरी "ये पर्वताः सोमपृष्ठा आप उत्तानशीवरी" अथ०३,२१,१० ।

**उत्ताप** पु० उद्+तप-घञ् । १उष्णतायाम्, २सन्तापे च ।

**उत्तार** पु० उद्+तृ-णिच् अच् । १उद्गमने २उल्लङ्घने ३पारनयने च । "संसारसागरोत्तारतरणि" प्रबोध० "स घोरामापदं प्राप्य गोत्तारमधिगच्छति" भा०उ०१२६अ० । उच्चैस्तारः प्रा०स० । ४अत्यन्तोच्चशब्दादौ त्रि० ।

**उत्तारक** त्रि० उद्+तृ-णिच् ण्वुल् । पारप्रापके ।

**उत्तारण** न० उद्+तृ-णिच्-ल्युट् । पारप्रापणे । कर्त्तरि ल्यु । २पारप्रापके त्रि० ३विष्णौ पु० "उत्तारणो दुष्कृतिहा" विष्णुस० "स संसारसागरादुत्तारयतीत्युत्तारणः" भा०

**उत्तार्य्य** त्रि० उद्+तृ-णिच्-कर्मणि यत् । १उद्गमनीये । "वमनमभुक्तं तूत्तार्य्यं योध्यं वाप्यानु शोधनं" मङ्त । स्वम् । २उद्गमन इत्यर्थे अव्य० । उद्+तृ-कर्मणि यत् । ३उल्लङ्घनीये त्रि० ।

**उत्ताल** त्रि० उद्+तुरा० तल-प्रतिष्ठायाम् अच् । प्रतिष्ठिते महति । "उत्तालताडीवनसंप्रवृत्तः" माघ ।

**उत्तिष्ठहोम** पु० उत्तिष्ठतोऽनुपविष्टस्य होमो यत्र । अनुपविष्टकर्त्तृकहोमे यजतिरूपे यागभेदे । तत्र कुत्रोपविश्य कुत्रवा उत्तिष्ठता होम करणीय इति विविविक्तयायां यजतिजुहोत्योर्भेदप्रदर्शनेन तन्निर्णीतं कात्या० १,२,५,६,७, सूत्रेषु "यजतिजुहोतीनां कोविशेषः" सू० "यजतीनां यागानां जुहोतीनां होमानाञ्च को विशेष कोभेद इति प्रश्नः" कर्क । तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोनुवाक्यावन्तो यजतयः" सू० । अध्वर्युरिति शेष । तिष्ठता होम

येषु ते तिष्ठद्धोमाः वषट्कारेण प्रदानं येषु ते वषट्कार प्रदाना तथा याज्यावन्त' पुरोनुवाक्यावन्तश्च ये ते यजतय उच्यन्ते"कर्क'। "उपविष्टहोमा स्वाहाकारप्रदाना जुहोतय "सू०।"उपविष्टेन कर्त्रा होमोयेषु ते उपविष्टहोमा स्वाहाकारेण प्रदानं येषु ते जुहोतय उच्यन्ते' कर्क' तिष्ठत्पदस्य उत्तिष्ठत्परम्

**उत्तिष्ठमान** पु० उद्+स्था–शानच्। वर्द्धमाने "उत्तिष्ठमानस्तु परैर्नोपेक्ष्य पथ्यमिच्छता" माघ। ऊर्द्ध्वचेष्टायां तु शतृ। उत्तिष्ठत् अनुपविष्टे दण्डायमाने त्रि०स्त्रियाम् ङीप नुम्"। उत्तिष्ठन्ती [क्त। २ततोत्तरणे नद्यादौ त्रि०।

**उत्तीर्ण** त्रि०उद्+तॄ–कर्त्तरि क्त।१मुक्ते, २पारङ्गते कर्म्मणि

**उत्तुङ्ग** त्रि० उत्कृष्टं तुङ्गं प्रा०स०। अत्युन्नते। "उत्तुङ्गशैलशिखरस्थितपादपानां काक' क्षयोऽपि फलमालभते सपक्ष। सिंहो बली द्विरदकुम्भविदारणोऽपि सीदत्यहो तरुतले खलु पक्षहीनः" उद्भट' "स्वर्गादुत्तुङ्गममलं विषाणं यत न्यूलिनः" भा०व०८८अ०। "करप्रचेयामुत्तुङ्गा प्रभुशक्तिं पृथीयसीम्" "यच्छालमुत्तुङ्गतया विजेतुम्" 'उत्तुङ्गमातङ्गमिताकपूरलम्" माघ।

**उत्तुष** पु० उद्गत कण्डनाभावेऽपि तुषोऽस्मात्। प्रा०ब० वा गतशब्दलोपः। लाजाख्ये (खइ) भृष्टधान्ये

**उत्तेजना** स्त्री उद्+तिज–णिच् युच्। १प्रेरणायाम्, २व्यग्रताकरणे, ३उद्दीपने, ४तीक्ष्णीकरणे च। "व्याघ्रकृतोत्तेजनया मणीनाम्" माघ' ल्युट्। तत्रैव न०।

**उत्तेजित** त्रि० उद्+तिज–णिच्–क्त। १प्रेरिते, २उद्दीपिते च। भावे क्त। ३प्रेरणायाम् ४उद्दीपने च न० "उत्तेजित मध्यवेग योजनं श्रयवस्या"इत्युक्ते ५अश्वगतिभेदे न०।

**उत्तेरित** न० उद्–ईर् भावे इतच् गुणे नि० रस्वम्। १अश्वगतिभेदे। अर्थं आद्यचि। "उत्तेरितोऽतिवेगाढ्यो न शृणोति न पश्यति" इत्युक्तगतियुक्ते २अश्वे पु०।

**उत्तोरण** त्रि०उन्नत तोरणमत्र प्रा०ब०वा नतलोप। १उच्चपुरद्वारयुक्ते नगरादौ। "उत्तोरणामन्वयराजधानीम्" रघु। "उत्तोरणं राजपथं प्रपेदे' कुमा० उन्नतं तोरणम् प्रा०स०। २उच्चे तोरणे पुंन०।

**उत्तोलन** न० उद्+तुल–उन्माने भावे ल्युट्। ऊर्द्ध्वं नीत्वा तोलने। [क्षततोलने च

**उत्तोलित** त्रि० उद्+चु०तुल–क्त। १उत्क्षिप्ते, २उत्क्षिप्य

**उत्त्यक्त** त्रि० उद्+त्यज–क्त। १ऊर्द्ध्वक्षिप्ते, २परित्यक्ते च।

**उत्त्रास** पु० उद्+त्रस–घञ्। अतिभये।

**उत्थ** त्रि० उद्–स्था–क। १उद्गते २समुद्भूते च। 'रेणवोऽपि समरोत्थानि तच्छोणितनदीष्विव" रघु'। "भवतृषम्भासमोत्थाय परितोषाय मूर्च्छते" कुमा०। "निद्रालस्यप्रमादोत्थ तत् तामसमुदाहृतम्"गीता"तपन मियविच्छेदे यारावेशोत्थचेष्टितम्" सा०द०।

**उत्थान** न०उद्+स्था ल्युट्।१ऊर्द्ध्वपतने, २उद्यमे, ३ऊर्द्ध्वभवनचेष्टायाम्,४उद्गमे च। करणे ल्युट्। ५उत्साहे,६पौरुषे, ७हर्षे च। अधिकरणे ल्युट्। ८ रणे,९राज्यचिन्तनरूपे १०तन्त्रे,११प्राङ्गणे,१२चैत्ये च।"इन्दु नवोत्थानमिवेन्दुमत्यै" रघु "भ्रातॄणामविभक्तानां यद्युत्थानं भवेत् सह"मनु। "मम धर्म्मार्थमुत्थानं न कामक्रोधसंश्रितम्" रामा०"उत्थानमभिजानन्ति सर्वभूतानि भारत।। प्रत्यक्ष फलमश्नन्ति कर्म्मणा लोकसाक्षिकम्" भा०व० ३२अ०। मेदच्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः" शकु० "पञ्च वा सप्त चाष्टौ च यैरुत्थानं न गच्छति" सुश्रु०।१३प्रबोधे च "मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने" ति०त०पु०।

**उत्थानैकादशी** स्त्री उत्थानस्य हरे निद्रात प्रबोधनस्य काल एकादशी। चान्द्रकार्त्तिकशुक्लैकादश्याम्। तत् काल व्यवस्था–ति०त० रघुनन्दनेन दर्शिता यथा मात्स्ये "शेते विष्णु सदाषाढे भाद्रे च परिवर्त्तते। कार्त्तिके परिबुध्येत शुक्लपक्षे हरेर्दिने" भविष्यनारदीययो "मैत्राद्यपादे स्वपितीह विष्णुर्वैष्णव्यमध्ये परिवर्त्तते च। पौष्णावसाने च सुरारिहन्ता प्रबुध्यते मासचतुष्टयेन" भविष्ये "निशि स्वापोदिवोत्थान सन्ध्यायां परिवर्त्तनम्। अन्यत्र पादयोगेऽपि द्वादश्यामेव कारयेत्"। अन्यत्र स्वापादिविहितरात्र्यादीतरकाले दशमीप्रतिपदोश्च।"किन्तन्मैत्राद्यपादेन ? दशम्यंशेन यो दिवा। पौष्णशेषेण किन्तेन ? प्रतिपद्यथ यो निशि"। दशम्यंशेन दशम्याश्रयोयत्र पादे तेन। स प्रतिपदि वा प्राप्तस्तेन वा किम्?। अत्र दशमीप्रतिपदोर्वर्जनात् तदितरैकादश्यादिपञ्चतिथिषु मैत्रादिनक्षत्रपादविशेषलाभे द्वादशीं विनापि शयनादिरिति प्रतीयते। वचनान्तरम् "रेवत्यन्तो यदा रात्रौ द्वादश्या च समायुत। तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम्" दिनान्ते त्रिधाविभक्तदिन तृतीयभागे दिवोत्थानमित्यनुरोधात्। विष्णुधर्म्मोत्तरे "विष्णुर्दिवा न स्वपिति न च रात्रौ प्रबुध्यते। द्वादश्यास्तु सयोगे पादयोगो न कारणम्। अप्राप्ते द्वादशीऋक्षे उत्थानशयने हरे। पादयोगेन कर्त्तव्ये नाहोरात्रं

विचिन्तयेत्" वराहपुराणम् । "द्वादश्याः सन्धिसमये नक्षत्राणामसम्भवे । आभाकासितपक्षेषु शयनावर्त्तनादिकम्" आभाकानाम् आषाढभाद्रकार्त्तिकानाम् । ततश्च द्वादश्या निशादौ नक्षत्रमात्रयोगात् द्वादश्यास्तदभावे तिथ्यन्तरे निशाद्यनादरेण पादविशेषयोगात् तदभावे द्वादश्याः सन्ध्यायामेव शयनादिकं बोधनन्तु द्वादश्या रात्रौ रेवत्यन्तपादयोगे दिनतृतीयभाग इति विशेषः" ।

**उत्थापन** न० उद्+स्था–णिच्–ल्युट् । १उत्तोलने उन्नतीकरणे २चालने ३प्रबोधने ४उद्गमने च । "एव यन्त्रोपायान् न्याय शिरोत्थापनहेतवः बुद्ध्यावेक्ष्य" सुश्रु० ।

**उत्थाप्य** त्रि० उद्+स्था–णिच् कर्म्मणि यत् । १उत्तोलनीये २चालनीये । ल्यप् । ३उत्तोल्येत्यर्थे ४मिश्रीकृत्येत्यर्थे "आहृत्य प्रणवेनैव उत्थाप्य प्रणवेन च" उत्थाप्य मिश्रीकृत्य प्रा०त० रघु० । ५उत्ताप्येत्यर्थे च अव्य० ।

**उत्थित** त्रि० उद्+स्था–क्त । १वृद्धियुक्ते, २उत्थानयुते, अनुप्रविष्टे । "अर्द्धाचिता सत्वरमुत्थितायाः" कुमा० रघुश्च "न यावदेतावुदपश्यदुत्थितौ" "भित्त्वोत्थितं भूमिमिवोरगाणाम्" माघ । ३उत्पन्ने ४उद्युक्ते च ।

**उत्थिताङ्गुलि** पु० उत्थिता उद्युक्ता अङ्गुलयो यत्र । (चापड़) विस्तृताङ्गुलिके करतले चपेटे शब्दच० ।

**उत्पचनिपचा** स्त्री उत्पच निपचेत्युच्यते यस्यां क्रियायाम् मयू० । उत्कृष्ट पाकादिनिर्देशार्थक्रियायाम् ।

**उत्पचिष्णु** त्रि० उद्+पच–इष्णुच् । १उत्कृष्ट पचनशीले । पच विक्लित्तिरूपपाकपरत्वे । उद्गत. पाकशीले २तपस्यादौ ।

**उत्पट** पु० उत्पटति उद्+पट–गतौ अच् । वृक्षादीनां त्वचमुद्भिद्य उद्गते निर्यासे । "त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः" शत० १४,६,९,२१, "उत्पटः वृक्षनिर्यासः" भा० । [त्रिका० २उत्पतनकर्त्तृमात्रे त्रि० ।

**उत्पत** पु० उत्पतति ऊर्द्ध्वं गच्छति उद्+पत–अच् । १पक्षिणि

**उत्पतन** न० उद्+पत–ल्युट् । १ऊर्द्ध्वगमने, २उत्क्षेपणे च । उत्क्षेपणशब्दे उदा० ।

**उत्पतनिपता** स्त्री उत्पत निपत इत्युच्यते यस्यां क्रियायाम् मयू० । उत्पतनादिनिर्देशार्थक्रियायाम् ।

**उत्पताक** त्रि० उत्तोलिता पताका यत्र प्रा० ब० वा तोलितशब्दलोपः । उत्तोलितपताके पुरादौ । "पुरन्दरश्रीः पुरमुत्पताकम्" रघु

**उत्पतित** त्रि० उद्+पत–क्त । ऊर्द्ध्वगते ।

**उत्पतिष्णु** उद्+पत–इष्णुच् । उत्पतनशीले । "समकुररघुणानामिच्छामाशुत्पतिष्णव" रघु "उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ" भट्टि ।

**उत्पत्ति** स्त्री उद्+पत+क्तिन् । १ऊर्द्ध्वपतने ऊर्द्ध्वगतौ । उत्पद्यते प्रथमतो ज्ञायतेऽनेन उद्+पद–करणे क्तिन् । प्राथमिकप्रतीतिविषयप्रवृत्तिसाधनेष्टसाधनताबोधके कर्मस्वरूपज्ञापके २विधिवाक्ये यथा "स्वर्गकामोऽश्वमेधेन यजेतेत्यादि" वाक्यम् प्रथमं यागादौ इष्टसाधनत्वं बोधयत् तत् प्रवर्त्तयतीति तस्य तथात्वम् विधिशब्दे विवृतिः । "योगसिद्धिर्वा अर्थस्योत्पत्त्ययोगित्वात्" जैमि०सू० । उद्+पद०क्तिन् । आद्यक्षणसम्बन्धरूपे ३उद्भवे । उत्पत्तौ वादिविप्रत्तयः सन्ति तथाहि असतः सदुत्पद्यते इति बौद्धाः । प्रागुत्पत्तेरसत्कारणव्यापारादुत्पद्यते इति नैयायिकादयः । प्रागुत्पत्तेः सदपि कारणव्यापारादभिव्यज्यते इति साङ्ख्याः वेदान्तिनश्च प्रतिपेदिरे तयोरवान्तरभेदः सतो विवर्त्त इति वेदान्तिनः परिणाम इति साङ्ख्याः । तदेतत् साङ्ख्य०कौ० । प्रदर्शितं यथा केचिदाहुरसतः "सज्जायत इति, एकस्य सतो विवर्त्तः कार्य्यजातं न वस्तु सदित्यपरे । अन्ये तु सतोऽसज्जायत इति । सतः सज्जायते इति वृद्धाः । तत्र पूर्व्वस्मिन् कल्पत्रये प्रधानं न सिध्यति । सुखदुःखमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकत्वं हि जगत्कारणस्य प्रधानत्वं सत्त्वरजस्तमःस्वभावत्वम् । यदि पुनरसतः सज्जायेत असन्निरूपाख्यं कारणं कथं सुखादिरूपशब्दाद्यात्मकं स्यात् सदसतोस्तादात्म्यानुपपत्तेः । अथैकस्य सतो विवर्त्तः शब्दादिप्रपञ्चस्तथापि सतः सज्जायत इति न स्यात् । नचाद्वयस्य प्रपञ्चात्मकत्वमपि त्वप्रपञ्चस्य प्रपञ्चात्मकतया प्रतीतिर्भ्रम एव । येषामपि कणभक्षाक्षचरणादीनां सत एव कारणादसतो जन्म तेषामपि सदसतोरैकत्वानुपपत्तेर्न कार्य्यात्मकं कारणमिति न प्रधानसिद्धिः । अतः प्रधानसिद्ध्यर्थं प्रथमं तावत्सत्कार्य्यं प्रतिजानीते" कौ० । "असदकरणादुपादानग्रहणात्सर्व्वसम्भवाभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्य्यम्" का० "सत्कार्य्यं कारणव्यापारात् प्रागपीति शेषः । तथा च न सिद्धसाधनं नैयायिकनयैरुद्भावनीयम् । यद्यपि बीजमृत्पिण्डादिप्रध्वंसानन्तरमङ्कुरघटाद्युत्पत्तिरुपलभ्यते तथापि न प्रध्वंसस्य कारणत्वमपि तु भावस्यैव बीजाद्यवयवस्य । अभावात्तु भावोत्पत्तौ तस्य सर्व्वत्र सुलभत्वात्सर्व्वत्र सर्व्वकार्य्योत्पाद

प्रसङ्ग इत्यादि न्यायवार्त्तिकतात्पर्य्यटीकायामभिहितमस्माभिः। प्रपञ्चप्रत्ययश्चासति बाधके न शक्यो मिथ्येति वक्तुमिति कणभक्षाक्षचरणमतमवशिष्यते। तत्रेदं प्रतिज्ञातं सत्कार्य्यमिति। अत्र हेतुमाह असदकरणात्। असच्चेत्कारणव्यापारात् पूर्वं कार्य्यं नास्य सत्त्वं केनापि कर्तुं शक्यं न हि नीलं शिल्पिसहस्रेणापि शक्यं पीतं कर्तुम्। सदसत्त्वे घटस्य धर्माविति चेत् तथाप्यसति धर्मिणि न तस्य धर्म इति सत्त्वं तदवस्थमेव तथा च नासत्त्वम् असम्बद्धेनातदात्मना वाऽसत्त्वेन कथमसन् घटः। तस्मात्कारणव्यापारादूर्द्ध्वमिव ततः प्रागपि सदेव कार्य्यमिति। कारणाच्चास्य सतोऽभिव्यक्तिरेवावशिष्यते। सतश्चाभिव्यक्तिरुपपन्ना। यथा पीडनेन तिलेषु तैलस्य, अवघातेन धान्येषु तण्डुलानां, दोहनेन सौरभेयीषु पयसः। असतः करणे तु न निदर्शनं किञ्चिदस्ति। न खल्वभिव्यज्यमानं चोत्पद्यमानं वा क्वचिदसद्दृष्टम्। इतश्च कारणव्यापारात् प्राक् सदेव कार्य्यमित्याह उपादानग्रहणात् उपादानानि कारणानि तेषां ग्रहणं कार्य्येण सम्बन्धः उपादानैः कार्य्यस्य सम्बन्धादिति यावत्। एतदुक्तं भवति कार्य्येण सम्बद्धं कारणं कार्य्यस्य जनकं सम्बन्धश्च कार्य्यस्यासतो न सम्भवति तस्मात् सदिति। स्यादेतत् असम्बद्धमेव कारणैः कस्मात् कार्य्यं न जन्यते? तथा चासदेवोत्पत्स्यतेऽत आह सर्वसम्भवाभावात्। असम्बद्धस्य जन्यत्वे असम्बद्धत्वाविशेषेण सर्वं कार्य्यजातं सर्वस्माद्भवेत् न चैतदस्ति तस्मान्नासम्बद्धमसम्बद्धेन जन्यते अपि तु सम्बद्धं सम्बद्धेन जन्यते इति। यथाहुः साङ्ख्यवृद्धाः "असत्त्वे नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः। असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिरिति। स्यादेतत् असम्बद्धमपि तदेव तत् करोति यत्र यत्कारणं शक्तं शक्तिश्च कार्य्यदर्शनादवगम्यते अतो नाव्यवस्थेति अत आह शक्तस्य शक्यकरणात्। सा शक्तिः शक्तकारणाश्रया सर्वत्र वा स्याच्छक्ये वा। सर्वत्र चेत्तदवस्थैवाव्यवस्था शक्ये चेत् कथमसति शक्ये तदिति वक्तव्यम्। शक्तिभेद एव स तादृशो यत किञ्चिदेव कार्य्यं जनयेन्न सर्वमिति चेत् हन्त भोः शक्तिविशेषः कार्य्यसम्बद्धो वा स्यादसम्बद्धो वा, सम्बद्धत्वे नासता सम्बन्ध इति सत् कार्य्यम्। असम्बद्धत्वे सैवाव्यवस्थेति सूक्तं शक्तस्य शक्यकरणादिति। इतश्च सत्कार्य्यमित्याह कारणभावाच्च कार्य्यस्य कारणात्मकत्वात् न हि कारणाद्भिन्नं कार्य्यं कारणञ्च सदिति कथं तदभिन्नं कार्य्यमसद्भवेत्" सा० कौ०। उत्पत्तेश्च यथाविर्भावरूपता तथाविर्भाव शब्दे ८३० उक्तम्।

व्याख्यातञ्चैतदस्माभिस्तट्टीकायां यथा असतः—सत्त्वेन वक्तुमशक्यात् निरुपाख्यात् अभावात् सत् भावरूपं वस्तु, जायते जाततया व्यवह्रियते तथा हि अङ्कुरादिकं बीजनाशानन्तरमेव, दध्यादि दुग्धनाशानन्तरमेव, उत्पद्यमानं दृश्यते अतोऽनुमीयते कार्य्यभावा अभावकारणकाः कार्य्यत्वात् बीजनाशोत्तरजाताङ्कुरादिवत्। यत्रापि च तन्त्वादिषु पटकारणेषु स्वरूपेण नाशो न दृश्यते तत्राप्यनुमानेनैव तज्ज्ञानं जननीयम्। युक्तं चैतत् उत्पन्ने पटे यदि तन्तवो न नष्टास्तदा तन्तव इमे इति व्यवहारविषयतामापद्येरन् न च तथा, अतस्तत्र तन्तुव्यवहाराभावात् पटरूपेण व्यवहाराच्च तन्तवो नष्टा इत्यनुमातव्यम्। न च कारणनाशे दग्धतन्तुषु पटदाहवत् पटनाशापत्तिरित्याशङ्क्यम्, तन्तूनां पटकारणत्वस्याद्यापि असिद्धत्वात्, ये हि भावकारणका इति वदेयुस्तान् प्रत्येवैतद्दूषणमवतरेत् नाभावकारणतावादिनं प्रतीति सुस्थितमभावकारणवादिबौद्धादिमतम्। सतः त्रैकालिकबाधरहितात् कूटस्थवदपरिणामिनः विवर्त्तः स्वाज्ञानकल्पितः स्वज्ञाननिवर्त्त्यः परिणामविलक्षणः अन्यथाभावापत्तिः उपचारात् तथा उत्पद्यमानं कार्य्यजातमपि विवर्त्तः न वस्तु सदिति वस्तुतः पारमार्थिकेन सत्त्वेन नान्वितं किन्तु व्यवहारयोग्यसत्तयान्वितम्। तथा हि शुक्तिकादौ रजतादिज्ञानं सर्वानुभवसिद्धं तच्च प्रत्यक्षमेव रजतं साक्षात्करोमीत्याद्यनुभवात् प्रत्यक्षे च विषयेन्द्रियसन्निकर्षस्य कारणत्वात् देशान्तरस्थितरजतस्य च चक्षुरसन्निकृष्टतया न प्रत्यक्षविषयता। न च पूर्वज्ञातस्य रजतस्य ज्ञानेन उपनीतस्य शुक्तिकायां भ्रम इति वाच्यम् ज्ञानोपनीतस्य ज्ञानस्वीकारे साक्षात्कारानुभवापलापापत्तेः। अतएव न पूर्वानुभूतरजतस्मरणमात्रमनुभवविरोधात्। अतोऽगत्या तत्र शुक्तिकायामसद्रजतमुत्पद्यते इत्येव कल्पनीयम्। तदुत्पत्तौ च शुक्तिकादिविषयकमज्ञानं कारणं रजतविषयसंस्कारश्च सहकारितया कल्पनीयः। तदेव अध्यासपदम् यदुत्पन्नस्य तस्यासतो रजतस्य शुक्तिकातादात्म्येन तत्प्रत्यक्षविषयता। तत्रोत्पन्नेऽपि रजते शुक्तिकाया प्रमाणमपि व्यावहारिकसत्त्वस्य व्याघातो न भवतीति यथा, एवं कूटस्थे अपरिणामिनि आत्मनि स्वाज्ञानेनाहते वियदादिकप्रपञ्च-

नुपपद्यते तस्य च तदभावं चेत् सत्त्वं कारणं सहकारीति तथा च विवादाध्यासिता घटादयः सति अध्यस्ता ज्ञानमात्रत्वे सति सत्तादात्म्येन प्रतीयमानत्वात् शुक्तिकादात्म्येन प्रतीयमानशुक्तिरजतवदित्यनुमानात् अध्यस्तत्वं घटादीनां सिद्धम्। अध्यस्तत्वं च साक्षात्कारिप्रत्यक्षविषयत्वं प्रागुक्तं तच्च तथात्वतोऽप्यनुपपत्तौ प्रत्यक्षविषयता न स्यादिति अध्यस्तत्वकारणार्थं तन्निरस्तुमुपलिप्स्युद्धो-कार्या। ज्ञानमात्रस्य च तेषां मिथ्यात्वात् शुक्तिरजतमात्रासद्रजतवदित्यनुमानव्यभिचारो निरस्त इति वेदान्तिमतम्। असतो भावात् विद्यमानादेवेत्यर्थः। असत् उत्पत्तेः कारणव्यापाराद्वा पूर्वमविद्यमानं, कारणव्यापारादनन्तरं जायते उत्पद्यत इति काणादनैयायिकादयः। सत सत्त्वान्वयात् भावादेव सत्, कारणव्यापारात् प्रागपि, कारणावस्थारूपस्वरूपेण विद्यमानं जायते कारणव्यापारात् अभिव्यज्यते व्यवहारयोग्यतामापाद्यते इति यावदिति वृद्धाः सांख्यादयः। एवमुत्पत्तिविषये चतुर्षु पक्षेषु स्थितेषु आद्यपक्षत्रये अनुमित्सितकार्यात्मककारणरूपप्रधानासिद्धिं क्रमशः प्रदर्शयितुं क्रमप्राप्तं बौद्धपक्षमाह यदि पुनरित्यादि। निरुपाख्यमनिर्वचनीयमिदन्तया वक्तुमशक्यमिति यावत् सति हि लक्षणे वस्तु तल्लक्षणवत्त्वेन वक्तुं शक्यम् अभावस्य च लक्षणाभावात् कथङ्कारं वक्तव्यता। यद्यपि भावभिन्नत्वं, सत्त्वेन प्रतीत्यनर्हत्वम्, असत्त्वेन प्रतीत्यर्हत्वं वा तल्लक्षणं कैश्चिदुच्यते तानि च सर्वाण्यपि अभावज्ञानसापेक्षतया दुर्ज्ञेयत्वादन्योन्याश्रयदोषग्रस्तत्वान्नाभावलक्षणान्येव। तुच्छ अमोहात्मककार्यदर्शनात् कारणस्यापि तथाभूतात्मकत्वमनुमित्सितं तच्च भावस्यैव कारणतापक्षे सेत्स्यति नाभावस्य भावाभावयोस्तादात्म्यानुपपत्तेरिति भावः। विवर्त्तवादे च कार्यजातस्याध्यासेन तादात्म्यभानेऽपि वस्तुतोऽसत्त्वेन सदसतोस्तादात्म्यानुपपत्त्या पूर्ववदनुमित्सितप्रधानासिद्धिरित्याह अपरेऽप्येकस्येत्यादि। असतोऽसज्जायते इति पक्षेऽपि सदसतोस्तादात्म्यानुपपत्त्यैव न प्रधानसिद्धिरित्याह सदसतोरैकत्वे-इत्यादि। एवमाद्यपक्षत्रिके प्रधानासिद्धिमुद्भाव्य सत्कार्यपक्षे तत् साधयितुं सत्कार्यपक्षसमर्थनाय कारिकामवतारयति सत्कार्यं प्रतिजानीते इत्यादि। कार्यं सत् कारणव्यापारात् प्रागपि विद्यमानमित्यर्थः तेन कारणव्यापारोत्तरं सत्त्वस्य नैयायिकादिवादिषु सिद्धत्वेन न सिद्धसाधनमिति दर्शयितुं विशिनष्टि कारणव्यापारादित्यादि।

असदुत्पत्त्यादिविप्रतिपत्तिषु दर्शितासु असत्कार्यपक्षनिराकरणेऽपि इतरयोः पक्षयोरनिराकरणात् तत्पक्षयोः प्रधानासिद्धिरित्याशङ्क्य मूले तन्निराकरणाभावेऽपि अयुक्तत्वादेव तयोः पक्षयोर्न प्राप्तेति कथयितुमादौ बौद्धपक्षं दूषयितुमुत्थापयति यद्यपीत्यादि। दूषयति तथापीत्यादि। अयमाशयः असत्त्व सम्बन्धिनमेव जनयतीति नियमेन कार्यकारणयोः सम्बन्धोऽपेक्षित बीजप्रागङ्कुरयोश्च केनापि सम्बन्धेन न सम्बन्धिता घटते येन तयोः कार्यकारणभावः स्यात्। असम्बद्धस्य कार्यजनकत्वे सर्वस्मात् सर्वकार्योत्पत्तिरित्यव्यवस्था स्यात्। न च बीजध्वंसाङ्कुरप्रागभावं न तन्तुपिण्डस्य अभाव एव कारणं तथा च अङ्कुरप्रागभाव एव नियामको भविष्यतीति वाच्यम् प्रागभावस्य ध्वंसाभावस्यातिरिक्तत्वे अङ्कुरतत्प्रागभावयोश्च विभिन्नकालिकतया केनापि सम्बन्धेन सम्बन्धित्वाभावेन नियामकत्वाभावात् असम्बद्धस्य नियामकत्वे पूर्वदोषतादवस्थ्यात्। न च प्रतियोगितासम्बन्धेन तयोः सम्बन्धितेति वाच्यम् अभावसम्बन्धिताया एव प्रतियोगितापदार्थतया तस्या असत्पक्षेऽसिद्धत्वात् न च बीजस्य नाशात् कथं तस्य अङ्कुरकारणत्वमिति, तस्य नाशेऽपि तदवयवसामान्यात् तथैव कारणत्वं वाच्यमिति सर्वं सुस्थम्। शिवसंवादे च यद्यपि तदनन्यत्वमारम्भणशब्दादिभ्य इति शा० २, १, १४ सूत्रे च कार्यकारणयोरभिन्नत्वमेव स्वीकृतं तथापि घटपटादिज्ञानानामध्यस्तविषयकतया विवक्षायां मिथ्यात्वमुररीक्रियते तथा हि विवादाध्यासितानि घटादिज्ञानानि अध्यस्तविषयकाणि सत्यविषयकज्ञानत्वात् शुक्तिकायां रजतज्ञानवदित्यनुमानेन घटादिज्ञानानामध्यस्तविषयकत्वे सिद्धे अध्यस्तस्य च ज्ञानमात्रतया मिथ्यात्वमित्यवसेयमेव तथा च सदसदोस्तादात्म्यानुपपत्तिदोषेण नैतत्पक्षाश्रयणम्। किञ्च मिथ्यात्वं ज्ञाननिवर्त्त्यत्वं तच्च नेदं रजतमिति बाधबुद्ध्या यथा रजतस्य मिथ्यात्वं प्रसिद्धमेवं घटादेर्मिथ्यात्वसाधकस्य बाधस्यादर्शनाच्च तस्य मिथ्यात्वमेवञ्चेत्तासिद्धे कथं घटादिज्ञानादावध्यस्तविषयकत्वसिद्धिः। एतदर्थमेव अस्ति बाधक इत्युक्तम्। तथा च शुक्तिरजतस्य बाधकादर्शन बाधकाभावाच्च तस्य मिथ्यात्वम्। न चाद्वैतश्रुतिरेव बाधिका, तस्या अन्यार्थपरतया द्वैताभावनिषेधपरत्वाभावात् अतएव “नाद्वैतश्रुतिविरोधो जातिपरत्वात्” इत्यनेन सांख्यसूत्रेण श्रुतेः समानजातीयबहुजीवपरत्वं समर्थितम्। एष पक्षद्वय-

**उत्पत्य** अव्य० उद्+पत–ल्यप्। ऊर्द्ध्वं पतित्वेत्यर्थे उत्पत्यपाकला सयू०। जन्मप्रभृत्युन्मत्ते

**उत्पथ** पु० उत्क्रान्तः पन्थानम् अत्या० समा० अच्। १सत्पथातिक्रान्ते २न्याय्यरीत्यतिक्रान्ते च। भिन्नपर्य्यायतया अपकृष्टः पन्थाः उद्भावे प्रा०स० अच् समा० कदर्य्ये पथि "गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः। उत्पथप्रतिपन्नस्य न्याय्यं भवति शासनम्" भा० आ० १३०अ०। "प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम्" मनुः। "क्षिप्रावरोधाङ्गनमुत्पथेन गाम्" माघ

**उत्पन्न** त्रि० उद्+पद–क्त। उद्भूते। "औरसे पुनरुत्पन्ने तृतीयांशहरा सुताः" स्मृ०। "उत्पन्नस्य पुनरुत्पादः" न्यायम०। उत्पन्नेन हरति उत्सङ्गा० ठञ्। औत्पन्निक तेन हारके त्रि०।

**उत्पल** न० उद्+पल–अच्। १नीलपद्मे, २कुष्ठादौ, ३कुष्ठौषधौ च। उत्क्रान्तं पलं मांसम् अत्या० समा०। ४मांसशून्ये त्रि०। "गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानाम्" मेघ०। "यत्रोत्पलदलक्लैव्यमस्त्राण्यापुः सुरद्विषाम्" "स्ववृत्तकर्णोत्पलता प्रपेदे" "नवावतारं कमलादिवोत्पलम्" रघु०। "अन्योन्यमुत्पीडयदुत्पलाक्ष्याः" कुमा०। तच्च त्रिविधं नीलं रक्तं श्वेतञ्च "ध्रुवं स नीलोत्पलपत्रधारया" शकु०।

**उत्पलगन्धिक** न० उत्पलस्य गन्ध इव गन्धोऽस्य इत् समा० संज्ञायां कन्। गोशीर्षाख्ये चन्दने।

**उत्पलपत्र** न० उत्पलस्य पत्रमिव। १तिलकभेदे स्त्रीणां स्तनादौ २नखक्षते च। हेम०। इन्दीवरस्य दले।

**उत्पलपत्रक** न० उत्पलपत्रमिव कन्। उत्पलपत्राकारे सुश्रुतोक्ते शस्त्रभेदे। अर्द्धधारशब्दे २७५ पृष्ठे तल्लक्षणादि दर्शितम्। "वृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्द्धधाराणि छेदने भेदने च" सुश्रु०।

**उत्पलभेद्यक** पु० सुश्रुतोक्ते कर्णबन्धाकृतिभेदे। स च पञ्चदशविधः। तद्विभागलक्षणादि सुश्रु० दर्शितं यथा। "तत्र समासेन पञ्चदशकर्णबन्धाकृतयः। तद्यथा नेमिसन्धानक उत्पलभेद्यको, वल्लूरक आसङ्गिमो गण्डकर्ण आहार्य्यो निर्वेधिमो व्यायोजिमः कपाटसन्धिकोऽर्द्धकपाटसन्धिकः संक्षिप्तो हीनकर्णो वल्लीकर्णो यष्टिकर्णः काकौष्ठक इति। तेषु पृथुलायतसमोभयपालिर्नेमिसन्धानकः। वृत्तायतसमोभयपालिरुत्पलभेद्यकः। ह्रस्ववृत्तसमोभयपालिर्वल्लूरकः। अभ्यन्तरदीर्घैकपालिरासङ्गिमः। बाह्यदीर्घैकपालिर्गण्डकर्णः। अपालिरुभयतोऽप्याहार्य्यः। पीठोपमपालिरुभयतः, क्षीणपुत्रिकाश्रितो निर्वेधिमः। स्थूलाणुसमविषमपालिर्व्यायोजिमः। अभ्यन्तरदीर्घैकपालिरितराल्पपालिः कपाटसन्धिकः। बाह्यदीर्घैकपालिरितराल्पपालिरर्द्धकपाटसन्धिकः। तत्र दशैते कर्णबन्धविकल्पाः साध्यास्तेषां स्वनामभिरेवाकृतयः प्रायेण व्याख्याताः। सङ्क्षिप्तादयः पञ्चासाध्यास्तत्र शुष्कशष्कुलिरुत्सन्नपालिरितराल्पपालिः सङ्क्षिप्तः। अनधिष्ठानपालिः पर्य्यन्तयोः क्षीणमांसो हीनकर्णः। तनुविषमाल्पपालिर्वल्लीकर्णः। ग्रथितमांसस्तब्धशिरायतसूक्ष्मपालिर्यष्टिकर्णः। निर्मांससङ्क्षिप्ताग्राल्पशोणितपालिः काकौष्ठकपालिरिति"। "बद्धेष्वपि तु शोफदाहरागपाकपिडकास्रावयुक्ता न सिद्धिमुपयान्ति"।

**उत्पलशा(सा)रिवा** स्त्री० उत्पलं तदाकारपुष्पमस्त्यस्याः अर्श० अच् कर्म०। अनन्तमूलायां श्यामालतायाम्। "इष्वादमी पयस्या च लता चोत्पलशा(सा)रिवा" सुश्रु०।

**उत्पलषट्क** न० ज्वरातीसारचिकित्साङ्गे चक्र० उक्ते औषधभेदे। यथा "ज्वरातीसारे पेयादिक्रम स्याल्लङ्घिते हितः। ज्वरातिसारी पेयां वा पिबेत् साम्लां शृतां नरः। पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः"।

**उत्पलावती** स्त्री उत्पलमुत्पलाकारं नेत्रमस्त्यस्याः मतुप् मस्य वः संज्ञायां दीर्घः। अप्सरोभेदे "काशीख० ९अ० अप्सरोवर्णने। ""निर्मथ्यमानात् क्षीरोदात् पूर्व्वमप्सरसस्त्विमाः। निःसृता त्रिजगच्चित्तमोहनास्त्रं मनोभुवः। "उर्व्वशी मेनका रम्भा चन्द्ररेखा तिलोत्तमा। वपुष्मती कान्तिमती लीलावत्युत्पलावती। अलम्बुषा गुणवती स्थूलकेशी कलावती। कलानिधिर्गुणनिधिः कर्पूरतिलकोर्व्वरा। अनङ्गलतिका चापि तथा मदनमोहिनी। चकोराक्षी चन्द्रकला तथा मुनिमनोहरा। ग्रावद्रावा तपोद्वेष्ट्री चारुनासा सुकर्णिका। दारुसञ्जीवनी सुश्री क्रतुशुल्का शुभानना। तपःशुल्का तीर्थशुल्का दानशुल्का हिमावती। पञ्चाश्वमेधिका चैव राजसूयार्थिनी तथा। अष्टाग्निहोत्रिका तद्वद्वाजपेयशतोद्भवा। कार्य्यन्निवारयित्री च हविर्द्रावा सुकल्पिनी। इत्याद्यप्सरसां श्रेष्ठ सहस्रं षष्टियुतम्। एतस्मिन्नप्सरो लोके वसन्त्यन्या अपि स्त्रियः"।

**उत्पलिनी** स्त्री उत्पलानि सन्त्यस्मिन् देशे तेषां समूहो वा इनि। १उत्पलयुक्तलतायां, २कुमुदसमुदाये च। "बद्धे

सङ्कुलकलुषा प्रतीपगाश्चापि । परचक्रस्यागमनं मद्यं कथयन्ति षण्मासात् । ज्वालाधूमक्काथा रुदितोत्क्रुष्टानि चैव कूपानाम् । गीतप्रजल्पितानि च जनमरकाय प्रदिष्टानि । तोयोत्पत्तिरखाते गन्धरसविपर्यये च तोयानाम् । सलिलाशयविकृतौ वा महद्भयं तत्र शान्तिरियम् । सलिलविकारे कुर्य्यात् पूजां वरुणस्य वारुणैर्मन्त्रैः । तैरेव च जपहोमं शुभमेवं पापमुपयाति" । इति जलवैकृतम् । "प्रसवविकारे स्त्रीणां द्वित्रिचतुःप्रभृतिसम्प्रसूतौ वा । हीनातिरिक्तकाले च देशकुलसङ्क्षयो भवति । वडवोष्ट्रमहिषगोहस्तिनीषु यमलोद्भवे मरणमेषाम् । षण्मासात्सूतिफलं शान्तौ श्लोकौ च गर्गोक्तौ । नार्यं परस्य विषये त्यक्तव्यास्ता हितार्थिना । तर्पयेच्च द्विजान् कामैः शान्तिं चैवात्र कारयेत् । चतुष्पदाः स्वयूथेभ्यस्त्यक्तव्याः परभूमिषु । नगरं स्वामिनं यूथमन्यथा हि विनाशयेत्" । इति प्रसववैकृतम् । "परयोनावभिगमनं भवति तिरश्चामसाधु धेनूनाम् । उक्षाणो वान्योऽन्यं पिबति श्वा वा सुरभिपुत्रम् । मासत्रयेण विन्द्यात् तस्मिंश्चिह्नं समय परागमनम् । तत्प्रतिघातायैतौ श्लोकौ गर्गेण निर्दिष्टौ । त्यागो विवासनं दानं तत्तस्याशु शुभं भवेत् । तर्पयेद्ब्राह्मणांश्चात्र जपहोमांश्च कारयेत् । स्थालीपाकेन धातारं पशुना च पुरोहितः । प्राजापत्येन मन्त्रेण यजेद्बहुसदक्षिणम्" । इति चतुष्पादवैकृतम् । "यानं वाहवियुक्तं यदि गच्छेन्न व्रजेच्च वाहयुतम् । राष्ट्रभयं भवति तदा चक्राणां सादभङ्गे च । अनभिहततूर्य्यनादः शब्दो वा तेषां ताडितेषु यदि नायात् । ...तुपत्तौ वा परागमो नृपतिमरणं वा । गीतरवस्तूर्य्यनादा नभसि यदा वा चरस्थिरान्यत्वम् । मृत्युस्तदा गदा वा विस्वरतूर्य्ये पराभिभवः । गोलाङ्गलयोर्दर्वीशूर्पाद्युपस्करविकारे । क्रोष्टुकनादे च तथा भयं मुनिश्चरश्चेदम् । वायव्येष्वेषु नृपतिर्वायुं समर्च्चयेत् । आ वायोरिति पञ्चर्चो जप्याश्च प्रयतैः । ब्राह्मणान् परमान्नेन दक्षिणाभिश्च तर्पयेत् । ...क्षिणा होमाः कर्त्तव्याश्च प्रयत्नतः" । इति वायव्यम् । "पुरपक्षिणो वनचरा वन्या वा निर्भया विशन्ति नक्तं वा दिवसचराः क्षपाचरा वा चरन्त्यहनि । ...पि मण्डलमाश्रयन्तो मृगा विहङ्गा वा । दीप्तायां दिशि क्रोशन्तः संहता भयदाः । श्वानः प्ररुद्य द्वारे वाश्यन्ति जम्बुका दीप्ताः । प्रविशेन्नरेन्द्रभवने कपोतकः कौशिको यदि वा । कुक्कुटरुतं प्रदोषे हेमन्तादौ च कोकिलालापाः । प्रतिलोममण्डलचराः श्येनाद्याश्चाम्बरे भयदाः । गृहचैत्यतोरणेषु द्वारेषु च पक्षिसङ्घसम्पाताः । मधुवल्मीकाम्भोरुहसमुद्भवाश्चापि नाशाय । श्वभिरस्थिशवावयवप्रवेशनं मन्दिरेषु मरकाय । पशुशस्त्रव्याहारे नृपमृत्युर्मुनिवचश्चेदम् । मृगपक्षिविकारेषु कुर्य्याद्धोमान् सदक्षिणान् । देवाः कपोत इति च जप्तव्याः पञ्चभिर्द्विजैः । सुदेवा इति चैकेन देया गावश्च दक्षिणाः । जपेच्छाकुनसूक्तं वा मनो वेदशिरांसि च" । इति मृगपक्ष्यादिवैकृतम् । "शक्रध्वजेन्द्रकीलस्तम्भद्वारप्रपातभङ्गेषु । तद्वत्कपाटतोरणकेतूनां नरपतेर्मरणम् । सन्ध्याद्वयस्य दीप्तिर्धूमोत्पत्तिश्च कानने ऽनग्नौ । छिद्राभावे भूमेर्दरणं कम्पश्च भयकारी । पाषण्डानां नास्तिकानां च भक्तः साध्वाचारप्रोज्झितः क्रोधशीलः । ईर्ष्युः क्रूरो विग्रहासक्तचेता यस्मिन् राजा तस्य देशस्य नाशः । प्रहर हर छिन्धि भिन्धीत्यायुधकाष्ठाश्मपाणयो बालाः । निगदन्तः प्रहरन्ते तत्रापि भयं भवत्याशु । अङ्गारगैरिकाद्यैर्विकृतप्रेताभिलेखनं यस्मिन् । नायकचित्रितमथ वा क्षये क्षयं याति न चिरेण । लूतापटाङ्गमबलं न सन्ध्ययोः पूजितं कलहयुक्तम् । नित्योच्छिष्टस्त्रीकं च यद्गृहं तत् क्षयं याति । दृष्टेषु यातुधानेषु निर्दिशेन्मरकमाशु सम्प्राप्तम् । प्रतिघातायैतेषां गर्गः शान्तिं चकारेमाम् । महाशान्त्योऽथ बलयो भोज्यानि सुमहान्ति च । कारयेत महेन्द्रं च माहेन्द्रीभिः समर्चयेत्" । इति शक्रध्वजेन्द्रकीलादिवैकृतम् । "नरपतिदेशविनाशे केतोरुदयेऽथ वा ग्रहेऽर्केन्द्वोः । उत्पातानां प्रभवः स्वर्त्तुभवश्चाप्यदोषाय । ये च न दोषान् जनयन्त्युत्पातास्तानृतुस्वभावकृतान् । ऋषिपुत्रकृतैः श्लोकैर्विद्यादेतैः समासोक्तैः । वज्राशनिमहीकम्पसन्ध्यानिर्घातनिःस्वनाः । परिवेषरजोधूमरक्तार्कास्तमनोदयाः । द्रुमेभ्योऽन्नरसस्नेहबहुपुष्पफलोद्गमाः । गोपक्षिमदवृद्धिश्च शिवाय मधुमाधवे । तारोल्कापातकलुषं कपिलार्केन्दुमण्डलम् । अनग्निज्वलनस्फोटधूमरेणुनिलाहतम् । रक्तपद्मारुणं सान्ध्यं नभः क्षुब्धार्णवोपमम् । सरितां चाम्बुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत् । शक्रायुधपरीवेषविद्युच्छुष्कविरोहणम् । कम्पोद्वर्त्तनवैकृत्यं रसनं दरणं क्षितेः । सरोनद्युदपानानां वृद्ध्यूर्द्ध्वतरणप्लवाः । सरणं चाद्रिगेहानां वर्षासु न भयावहम् । दिव्यस्त्रीभूतगन्धर्वविमानाद्भुतदर्शनम् । ग्रहनक्षत्रताराणां दर्शनं

**उत्पत्य** अव्य० उत्+पत–ल्यप्। ऊर्द्ध्वं पतित्वेत्यर्थे उत्पत्यपाकला मयू०। जन्मप्रभृत्युत्पाते

**उत्पथ** पु० उत्क्रान्तः पन्थानम् अत्या० समा० अच्। गम्यपथातिक्रान्ते २न्याय्यरीत्यतिक्रान्ते च। भिन्नपर्य्यायतया अपकृष्टः पन्थाः उद्भावे प्रा०स० अच् समा० कदर्थे पथि “गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः। उत्पथप्रतिपन्नस्य न्याय्यं भवति शासनम्” भा० आ० १४०अ०। “प्रमदाह्युत्पथं नेतुं कामक्रोधवशानुगम्” मनुः। “क्षिप्रावरोधाङ्गमयमुत्पथेन गाम्” माघ

**उत्पन्न** त्रि० उद्+पद–क्त। उद्भूते। “औरसे पुनरुत्पन्ने तृतीयांशहरा सुताः” स्मृ० “उत्पन्नस्य पुनरुत्पादः” न्यायम० उत्पन्नेन हरति उत्पन्ना० ठञ्। औत्पन्निक तेन हारके त्रि०।

**उत्पल** न० उद्+पल–अच्। १नीलपद्मे, २कुष्ठादौ, ३कुष्ठौषधौ च। उत्क्रान्तः पलं मांसम् अत्या० समा०। ४मांसशून्ये त्रि०। “गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानाम्” मेघ०। “यत्रोत्पलदलक्लैब्यमस्त्राण्यापुः सुरद्विषाम्” “सचूर्णकर्णोत्पलता प्रमेदे” “नवावतारं कमलादिवोत्पलम्” रघुः “अन्योन्यमुत्पीडयदुत्पलाक्ष्याः” कुमा०। तच्च त्रिविधं नीलं रक्तं श्वेतञ्च “मुग्धं स नीलोत्पलपत्रधारया” शकु०।

**उत्पलगन्धिक** न० उत्पलस्य गन्ध इव गन्धोऽस्य इत् समा० संज्ञायां कन्। गोशीर्षाख्ये चन्दने।

**उत्पलपत्र** न० उत्पलस्य पत्रमिव। १तिलकभेदे स्त्रीणां स्तनादौ २नखक्षते च। हेम०। इन्दीवरस्य दले।

**उत्पलपत्रक** न० उत्पलपत्रमिव कन्। उत्पलपत्राकारे सुश्रुतोक्ते शस्त्रभेदे। अर्द्धधारशब्दे २७५ पृष्ठे तद्वाक्यादि दर्शितम्। “वृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्द्धधाराणि छेदने भेदने च” सुश्रु०।

**उत्पलभेद्यक** पु० सुश्रुतोक्ते कर्णबन्धाकृतिभेदे। स च पञ्चदशविध। तद्विभागलक्षणादि सुश्रु० दर्शितं यथा।
“तत्र समासेन पञ्चदशकर्णबन्धनाकृतयः। तद्यथा नेमिसन्धानक उत्पलभेद्यको, वल्लूरक आसङ्गिमो गण्डकर्ण आहार्य्यो निर्व्वेधिमो व्यायोजिमः कपाटसन्धिकोऽर्द्धकपाटसन्धिकः संक्षिप्तो हीनकर्णो वल्लीकर्णो यष्टिकर्णः काकौष्ठक इति। तेषु पृथुलायतसमोभयपालिर्नेमिसन्धानकः। वृत्तायतसमोभयपालिरुत्पलभेद्यकः। ह्रस्वसमोभयपालिर्वल्लूरकः। अभ्यन्तरदीर्घैकपालिरासङ्गिमः। बाह्यदीर्घैकपालिर्गण्डकर्णः। अपालिरुभयतोऽप्याहार्य्यः। पीठोपमपालिरुभयतः क्षीणपुत्रिकाश्रितो निर्वेधिमः। स्थूलाणुसमविषमपालिर्व्यायोजिमः। अभ्यन्तरदीर्घैकपालिरितराल्पपालिः कपाटसन्धिकः। बाह्यदीर्घैकपालिरितराल्पपालिरर्द्धकपाटसन्धिकः। तत्र दशैते कर्णबन्धविकल्पाः साध्यास्तेषां स्वनामभिरेवाकृतयः प्रायेण व्याख्याताः। संक्षिप्तादयः पञ्चासाध्यास्तत्र शुष्कशष्कुलिरुत्सन्नपालिरितराल्पपालिः संक्षिप्तः। अनधिष्ठानपालिः पर्य्यन्तयोः क्षीणमांसो हीनकर्णः। तनुविषमाल्पपालिर्वल्लीकर्णः। ग्रथितमांसस्तब्धसिराततसूक्ष्मपालिर्यष्टिकर्णः। निर्मांससंक्षिप्ताग्राल्पशोणितपालिः काकौष्ठकः इति”। “बद्धेष्वपि तु शोफदाहरागपाकपिडकास्रावयुक्ता न सिद्धिमुपयान्ति”।

**उत्पलशा(सा)रिवा** स्त्री० उत्पलं तदाकारपुष्पमस्त्यस्याः अर्श० अच् कर्म०। अनन्तमूलायां श्यामालतायाम्। “दुग्धादनी पयस्या च लता चोत्पलशा(सा)रिवा” सुश्रु०।

**उत्पलषट्क** न० ज्वरातीसारचिकित्साङ्गे चक्र० उक्ते औषधभेदे। यथा “ज्वरातीसारे पेयादिक्रम साधिते हितः। ज्वरातिसारी पेयां वा पिबेत् साम्लां शृतां नरः। पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः”।

**उत्पलावती** स्त्री उत्पलमुत्पलाकारं नेत्रमस्त्यस्याः मतुप् मस्य वः संज्ञायां दीर्घः। अप्सरोभेदे” काशीख० ९अ० अप्सरोबोलवर्णने। “निर्मथ्यमानात् क्षीरोदात् पूर्व्वमप्सरसस्त्वभूः। मि सृता त्रिजगन्मोहिमास्त्र मनोभुवः। “उर्वशी मेनका रम्भा चन्द्ररेखा तिलोत्तमा। वपुष्मती कान्तिमती लीलावत्युत्पलावती। अलम्बुषा गुणवती स्थूलकेशी कलावती। कलानिधिर्गुणनिधि कर्पूरतिलकोर्व्वरा। अनङ्गलतिका चापि तथा मदनमोहिनी। चकोराक्षी चन्द्रकला तथा मुनिमनोहरा। ग्रावद्रावा तपोद्वेष्ट्री चारुनासा सुकर्णिका। दारुसञ्जीवनी सुश्री क्रतुशुल्का शुभानना। तपःशुल्का तीर्थशुल्का दानशुल्का हिमावती। पञ्चाश्वमेधिका चैव राजसूयार्थिनी तथा। अष्टाग्निहोत्रिका तद्वद्वाजपेयशतोद्भवा। कार्ष्णित्रिकार्षिनी च हरिद्राषा सुकान्तिनी। इत्याद्यप्सरसां श्रेष्ठं सहस्रं षष्टियुतम्। एतास्वप्सरसो लोके सन्त्यन्या अपि स्त्रियः”।

**उत्पलिनी** स्त्री उत्पलानि सन्त्यस्मिन् देशे तेषां समूहो वा इनि। १उत्पलयुक्तलतायां, २कुवलयसमुदाये च। “वहते

सप्तपदनाग मतेरुक्ता रुधिरनिभा या । यद्विस्तरेण कथित मुनिभिस्तदिहान् सर्वं मया निगदितं पुनरुक्तवर्जम् । श्रुत्वापि कोकिलरुतं बलिभुग्विरौति यत्तत्स्वभावकृतमस्य विभुर्न जेतुम्'' ४७अ० । एवमन्येऽप्युत्पाताः सन्ति विस्तरभयान्नोक्ता आकरे द्रष्टव्याः उत्पात विशेषे मङ्गलकर्मवर्ज्जनकालव्यवस्था रघुनन्दनेन दर्शिता यथा ''गर्गः । दाहे दिशाञ्चैव धराप्रकम्पे वज्रप्रपातेऽथ विदारणे वा । धूमे तथा पांशुरजःप्रपाते न कारयेन्माङ्गलिकादि कार्य्यम् । उल्कापाते च निर्घाते तथैवाकालवर्षणे । छिद्रे सूर्ये विनिर्दिष्टे न कुर्य्यान्मङ्गलक्रियाम् । धूमकेतौ समुत्पन्ने ग्रहणे चन्द्रसूर्य्ययोः । ग्रहाणां सङ्गरे चैव न कुर्यान्मङ्गलक्रियाम् । द्विसूर्यं वा त्रिसूर्यं वा दृष्ट्वा गगनमण्डले । रात्रौ शक्रधनुश्चैव मङ्गलानि विवर्जयेत् । दिग्दाहे दिनमेकञ्च ग्रहे सप्त दिनानि च । भूमिकम्पे च सम्भूते त्र्यहाणि परिवर्जयेत् । उल्कापाते च त्रितयं धूमे पञ्च दिनानि च । वज्रपाते दिनमेकं वर्जयेत् सर्वकर्मसु'' । भोजराजः ''ग्रहे रवीन्द्वोरवनिप्रकम्पे केतूद्गमोल्कापतनादिदोषे । व्रते दशाहानि वदन्ति तज्ज्ञास्त्रयोदशाहानि वदन्ति केचित्'' । ''ग्रहणकाले भूकम्पोल्कापातवज्रपातादिदोषसमाहारे त्रयोदशाह मशुभम् । किञ्चिन्न्यूनतत्समाहारेऽपि दशाहम् । ग्रहणाद्येकैकदोषे त्र्यहमिति'' वाचस्पतिमिश्राः । अत्र स्मृतिसागर धृतसारसंग्रहे । ''राज्यादिमहाशिल्पौ यज्ञदानतपःसु च । होमस्वाध्याययोश्चैव वर्जयेद्दशरात्रकम् । लक्षहोमे महादाने वर्जयेत् सोमके मखे । तपःस्वाध्याययोश्चैव विवाहे त्रयोदश'' इति व्यवस्था अन्यत्र । ''उल्कापाते भुवः कम्पे अकालवर्षगर्जिते । वज्रकेतूद्गमोत्पाते ग्रहणे चन्द्रसूर्य्ययोः । प्रयाणन्तु त्यजेत् तत्र सप्तरात्र मतः परम् । ब्राह्मणः क्षत्रियो वैश्यस्त्यजेत् कर्म त्रिरात्रकम् । शूद्रस्त्वेकं चैकरात्रं सर्वं कर्म समाचरेत्'' । पराशरः । ''प्रयाणे सप्तरात्रं स्यात् त्रिरात्रं व्रतबन्धने । एकरात्रं परित्यज्य कुर्यात् पाणिग्रहं ग्रहे'' । भृगुः । ''राजन्यानां तु सप्ताहं ब्राह्मणानां त्र्यहन्तथा । शूद्रस्यार्द्धदिनं प्रोक्तं सर्वकार्य्येषु वै भृगुः'' । ''शूद्रस्यापदिषयम् । कम्प इत्युपलक्षणम् । ग्रहणादावप्येवमेवान्यत्र कम्प पठितत्वात्'' मल०त० । पीयूषधारायां तु विशेष उक्तः । नारदः ''अनिष्टे त्रिविधोत्पाते त्रिदिनं सुदर्शने । सप्तरात्रं न कुर्वीत यात्रोद्वाहादि मङ्गलम्'' वसिष्ठः सर्वग्रासे दिनान्यष्टौ सर्व्वकार्य्येषु वर्जयेत् । षट् दिनानि त्रिभागोने अर्द्धग्रासे चतुर्दिनम् । चतुर्थांशे त्रिरात्रं स्यात् ग्रहणे चन्द्रसूर्य्ययोः'' नारदः ''उत्पातग्रहणादूर्द्धं सप्ताहं निखिलं त्यजेत्'' । अङ्गिराः ''सर्व्वग्रासे तु सप्ताहमर्द्धग्रासे दिनत्रयम् । त्रिद्व्यङ्गुलतोग्रासे दिनमेकं तु वर्जयेत्'' ''अनयोर्विषयव्यवस्था देशभेदेनाचारभेदेन चावगन्तव्या'' पी०धा० । अत्यावश्यककार्य्ये परिहारस्तत्रोक्तः ज्योतिर्निबन्धे ''दिनानि पञ्च वसिष्ठस्त्रिदिनं गर्गस्तु कौशिकस्त्वेकम् । यवनाचार्य्यस्य मते पञ्च मुहूर्त्तांश्च दूषयति'' । माण्डव्यराह प्रदर्शित शुभोत्पातेषु एकमेव दिनं वर्ज्यम् । ''शुभदोत्पातैश्च दुष्टं दिनम्'' मुहू०चि० उक्तेः । एवञ्च स्मार्त्तादिव्यवस्थापित विवाहे ग्रहणे एकदिनवर्ज्जनम् अल्पग्रास विषयमापद्विषयं वा उक्तवचनजातसामञ्जस्यात् । अस्तादिविषये विशेषः ग्रहणशब्दे वक्ष्यते ''एकताल इवोत्पातपवन प्रेरितो गिरिः'' रघुः । ''आशामासैः मत्सरोत्पातवातः'' माघः । ''उत्पातेन ज्ञापिते च'' पा० । ''उत्पातग्रहदुष्टञ्च'' ज्यो० ।

**उत्पातक** त्रि० उत्पातयति उत्पातं जनयति उद्+पत-णिच् ण्वुल् १उत्पातजनके उद्+पत-ण्वुल् । २ऊर्द्ध्वपतनशीले च । ''दर्शोत्पातकमङ्कुरुकमशिकामशका-वृतम्'' । भा० स्वर्गा० २अ० ।

**उत्पाद** पु० उत्+पद—भावे घञ् । १उत्पत्तौ ''दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा'' या० उत्पत्तिशब्दे विवृतिः उत्क्षिप्तःपादोऽनेन । ''उत्क्षिप्तपादे त्रि० ।

**उत्पादक** पु० ऊर्द्धंस्थिता पादा अस्य कप् । अष्टपदे शरभाख्ये गजाराती १पशुभेदे तस्य पृष्ठस्थचतुश्चरणत्वादूर्द्ध्वपादत्वम् । उत्-पद-णिच्—ण्वुल् ।२पितरि पु० । ३उत्पादनकर्त्तरि त्रि० । ''उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मद पिता'' ''आङ्करमुत्पादकं केचिदपरे क्षेत्रिण विदुः'' ''नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि'' मनुः । स्त्रियां टापि अत इत्त्वम् । उत्पादिका ४उत्पादकस्त्रियां ५हिङ्गमोचिकायां शब्दचि० ६पूतिकायां भरतः ७देहिकानामकीटे च स्त्री त्रिका० ।

**उत्पादन** न० उद्+पद-णिच्-ल्युट् । जनने उत्पत्तिकरणे ''उत्पादनमपत्यस्य जातस्य पालनम् तथा'' मनुः

**उत्पादशय** पु०उत्पादः ऊर्द्धक्षिप्तपादं सन् शेते शी-अच् । (टिटिर) १टिट्टिभपक्षिणि हेमच० । २शिशौ च । तयोः

दर्शनं च दिवाम्बरे। गीतवादित्रनिर्घोषा वनपर्वतसानुषु। सस्यवृद्धिरपां हानिरपापा शरदि स्मृता। शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम्। रक्षोयक्षादिसत्त्वानां दर्शनं वागमानुषी। दिशो धूमान्धकाराश्च सनभोवनपर्वताः। उच्चैः सूर्योदयास्तौ च हेमन्ते शोभना स्मृताः। हिमपातानिलोत्पाता विरूपाद्भुतदर्शनम्। कृष्णाञ्जनाभमाकाशं तारोल्कापातपिञ्जरम्। चित्रगर्भोद्भवाः स्त्रीषु गोऽजाश्वमृगपक्षिषु। पत्राङ्कुरलतानां च विकाराः शिशिरे शुभाः। ऋतुस्वभावजा ह्येते दृष्टाः स्वर्तौ शुभप्रदाः। ऋतोरन्यत्र चोत्पाता दृष्टास्ते भयदारुणाः। उन्मत्तानां च या गाथाः शिशूनां भाषितं च यत्। स्त्रियो यच्च प्रभाषन्ते तस्य नास्ति व्यतिक्रमः। पूर्वं चरति देवेषु पश्चाद्गच्छति मानुषान्। नाचोदिता वाग्वदति सत्या ह्येषा सरस्वती। उत्पातान् गणितविवर्जितोऽपि बुद्ध्वा विख्यातो भवति नरेन्द्रवल्लभश्च। एतन्मुनिवचनं रहस्यमुक्तं यज्ज्ञात्वा भवति नरस्त्रिकालदर्शी" ४६ अ०। "दिव्यान्तरिक्षाश्रयमुक्तमादौ मया फलं शस्तमशोभनं च। प्रायेण चारेषु समागमेषु युद्धेषु मार्गादिषु विस्तरेण। भूयो वराहमिहिरस्य न युक्तमेतत् कर्त्तुं समासकृदसाविति तस्य दोषः। तज्ज्ञैर्न वाच्यमिदमेव कथानुगीतिर्बर्हिश्चित्रकमिति प्रथितं वराङ्गम्। स्वरूपमेव तस्य तत् प्रकीर्त्तितानुकीर्त्तनम्। ब्रवीम्यहं न चेदिदं तथापि मेऽत्र वाच्यता। उत्तरवीथिगता द्युतिमन्तः क्षेमसुभिक्षशिवाय समस्ताः। दक्षिणमार्गगता द्युतिहीनाः क्षुद्भयतस्करमृत्युकरास्ते। कोष्ठागारगते भृगुपुत्रे पुष्यस्थे च गिराम्प्रभविष्णौ। निर्वैराः क्षितिपाः सुखभाजः संहृष्टाश्च जना गतरोगाः। पीडयन्ति यदि कृत्तिका मघा रोहिणीं श्रवणमैन्द्रमेव वा। भोजभृत् सूर्यमपरे यदा तदा पश्चिमा दिगनेन पीड्यते। प्राच्यां चेद्भुजगद्वयस्थिता दिनान्ते प्राच्यानां भवति हि विपत्तिर्नृपाणाम्। मध्ये चेद्व्रजति हि मध्यदेशपीडा रूक्षैस्तैर्न तु रुचिरैर्मयूखवद्भिः। दक्षिणाककुभमाश्रितैस्तु तैर्दक्षिणापथपयोमुचां क्षयः। क्षततनुभिश्च विपत्तिः स्थूलदेहकिरणान्वितैः शुभम्। उत्तरमार्गे स्पष्टमयूखाः शान्तिकरास्ते तन्नृपतीनाम्। कुसुमशरीरा भस्मसवर्णा दोषकराः स्युर्देशपानाम्। नष्टाभा तारका सप्रहाणा धूमज्वालाविस्फुलिङ्गान्विताश्चेत्। आलोकं वा निर्निमित्तं न यान्ति याति ध्वंसं सर्वलोकः सभूपः। दिवि भाति यदा तुहिनांशुयुगं द्विजवृद्धिरतीव तदाशु शुभा। तदनन्तरवर्णरणोऽर्कयुगे जगतः प्रलयस्त्रिचतुःप्रभृति। समीनमभिजितं श्रवं मघवतश्च भं संस्पृशन् शिखी धनविनाशकृत् कुशलकर्महा शोककृत्। भुजङ्गभमथ स्पृशेद्भवति वृष्टिनाशो ध्रुवं क्षयं व्रजति विद्रुतो जनपदश्च बालाकुलः। भागद्वारेषु चरन् रविपुत्रो मध्यमेषु करोति च वक्रम्। दुर्भिक्षं कुरुते भयमुग्रं मित्राणां च विरोधमवृष्टिम्। रोहिणीशकटमर्कनन्दनो यदि भिनत्ति रुधिरोऽथवा शिखी। किं वदामि यदनिष्टसागरे जगदशेषमुपयाति सङ्क्षयम्। उदयति सततं यदा शिखी चरति भचक्रमशेषमेव वा। अनुभवति पुराकृतं तदा फलमशुभं सचराचरं जगत्। धनुःस्थायी रूक्षो रुधिरसदृशः क्षुद्भयकरो बलोद्योगं चेन्दुः कथयति जयं ज्यास्य च यतः। अवाक्शृङ्गो गोघ्नो निधनमपि सस्यस्य कुरुते ज्वलन् धूमायन् वा नृपतिमरणायैव भवति। स्निग्धः स्थूलः समशृङ्गो विशालस्तुङ्गश्चोदग्विचरन्नागवीथ्याम्। दृष्टः सौम्यैरशुभैर्विप्रमुक्तो लोकानन्दं कुरुतेऽतीव चन्द्रः। पित्र्यमैत्रपुरुहूतविशाखात्वाष्ट्रमेत्य च युनक्ति शशाङ्कः। दक्षिणेन न शुभो हितकृत् स्यादुदक् चरति मध्यगतो वा। परिघ इति मेघरेखा या तिर्यग्भास्करोदयेऽस्ते वा। परिधिस्तु प्रतिसूर्यो दण्डस्त्वृजुरिन्द्रचापनिभः। उदयेऽस्ते वा भानोर्ये दीर्घा रश्मयस्तमोघास्ते। सुरचापखण्डमृजु यद्रोहितमैरावतं दीर्घम्। अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका यावत्। तेजःपरिहानिमुखाद् भानोरर्द्धोदयं यावत्। तस्मिन् सन्ध्याकाले चिह्नैरेतैः शुभाशुभं वाच्यम्। सर्वैरेतैः स्निग्धैः सद्यो वर्षं भयं रूक्षैः। अव्युच्छिन्नः परिघो वियच्च विमलं श्यामा मयूखा रवेः स्निग्धा दीधितयः सितं सुरधनुर्विद्युच्च पूर्वोत्तरा। स्निग्धो मेघतरुर्दिवाकरकरैरालिङ्गितो वा यदा वृष्टिः स्याद्यदि वार्कमस्तसमये मेघो महांश्छादयेत्। सखण्डो यक्षतनुर्ह्रस्वः काकाद्यैर्वा चिह्नैर्विद्धः। यस्मिन्देशे हृतशाकस्वभावः प्रायो राष्ट्रं। वाहिन्यौ समुपयाति दृष्टतो मांसभुक्खगगणो युयुत्सतः। यस्य तस्य बलविद्रवो महान् अपगैस्तु विजयो विपक्षमैः। भानोरुदये यदि वास्तसमये गन्धर्वपुरप्रतिमा ध्वजिनी। बिम्बं निरुणद्धि तदा नृपतेः प्राशः समरः सभयः प्रवदेत्। यस्मा शान्त द्विजमृगरुष्टा सन्ध्या स्निग्धा मृदुपवना च। पांशुध्वस्ता

जनपदनाश यत्नेच्छ्या रुधिरनिभा वा। यद्विस्तरेण कथितं मुनिभिस्तदस्मिन् सर्व्वं मया निगदितं पुनरुक्तवर्ज्जम्। श्रुत्वापि कोकिलरुतं बलिभुग्विरौति यत्तत्स्वभावकृतमस्य पिक न जेतुम्” ४७अ०। एवमन्येऽप्युत्पाताः सन्ति विस्तरभयान्नोक्ता आकरे द्रष्टव्याः। उत्पातविशेषे मङ्गलकर्म्मवर्ज्जनकालव्यवस्था रघुनन्दनेन दर्शिता यथा “गर्गः। दाहे दिशाञ्चैव धराप्रकम्पे वज्रप्रपातेऽथ विदारणे वा। धूमे तथा पांशुकरप्रपाते न कारयेन्माङ्गलिकादि कार्य्यम्। उल्कापाते च निर्घाते तथैवाकालवर्षणे। छिद्रे सूर्य्ये विनिर्दिष्टे न कुर्य्यान्मङ्गलक्रियाम्। धूमकेतौ समुत्पन्ने ग्रहणे चन्द्रसूर्य्ययोः। ग्रहाणां सङ्गरे चैव न कुर्य्यान्मङ्गलक्रियाम्। द्विसूर्य्यं वा त्रिसूर्य्यं वा दृष्ट्वा गगनमण्डले। रात्रौ शक्रधनुश्चैव मङ्गलानि विवर्जयेत्। दिग्दाहे दिनमेकञ्च षष्टे सप्त दिनानि च। भूमिकम्पे च सम्भूते त्र्यहाणि परिवर्जयेत्। उल्कापाते च त्रितयं धूमे पञ्च दिनानि च। वज्रपाते दिनमेकं वर्जयेत् सर्व्वकर्म्मसु”। भोजराजः “ग्रहे रवीन्द्वोरवनिप्रकम्पे केतूद्गमोल्कापतनादिदोषे। व्रते दशाहानि वदन्ति तज्ज्ञास्त्रयोदशाहानि वदन्ति केचित्”। “ग्रहणकाले भूकम्पोल्कापातवज्रपातादिदोषसमाहारे त्रयोदशाहमशुभम्। किञ्चिदूनतत्समाहारेऽपि दशाहम्। ग्रहणाद्येकदोषे त्र्यहमिति” वाचस्पतिमिश्राः। अत्र स्मृतिसागरधृतसारसंग्रहे। “राज्यादिमहासिद्धौ यज्ञदानतपःसु च। होमस्वाध्याययोश्चैव वर्जयेद्दशरात्रकम्। लक्षहोमे महादाने वर्जयेत् सोमके मखे। तपःस्वाध्याययोश्चैव चिरारम्भे त्रयोदश” इति व्यवस्था अन्यत्र। “उल्कापाते भुवः कम्पे अकालवर्षगर्जिते। धूम्रकेतूद्गमोत्पाते ग्रहणे चन्द्रसूर्य्ययोः। प्रयाणन्तु त्यजेत् तत्र सप्तरात्रमतः परम्। ब्राह्मणः क्षत्रियो वैश्यस्त्यजेत् कर्म त्रिरात्रकम्। शूद्रस्त्यक्त्वा चैकरात्रं सर्व्वं कर्म्म समाचरेत्”। पराशरः। “प्रयाणे सप्तरात्रं स्यात् त्रिरात्रं व्रतबन्धने। एकरात्रं परित्यज्य कुर्य्यात् पाणिग्रहं ग्रहे”। भृगुः। “राजन्यानां तु सप्ताहं ब्राह्मणानां त्र्यहन्तथा। शूद्रस्यार्द्धदिनं प्रोक्तं सर्व्वकार्य्येषु वै भृगुः”। शूद्रस्यापि विषयम्। कम्प इत्युपलक्षणम्। ग्रहणादावप्येवमेवान्यत्रैकत्र पठितत्वात्” मल०त०। पीयूषधारायां तु विशेष उक्तः। नारदः “अनिष्टे त्रिविधोत्पाते सिंहिकासुतदर्शने। सप्तरात्रं न कुर्वीत यात्रोद्वाहादि मङ्गलम्” वशिष्ठः सर्व्वग्रासे दिनान्यष्टौ सर्व्वकार्य्येषु वर्जयेत्। षट्दिनानि त्रिभागोने अर्द्धग्रासे चतुर्द्दिनम्। चतुर्थांशे त्रिरात्रं स्यात् ग्रहणे चन्द्रसूर्य्ययोः” नारदः “उत्पातग्रहणादूर्द्ध्वं सप्ताहं निखिलं त्यजेत्”। अङ्गिराः “सर्व्वग्रासे तु सप्ताहमर्द्धग्रासे दिनत्रयम्। त्रिद्व्येकाङ्गुलतोग्रासे दिनमेकं तु वर्जयेत्” “अनयोर्विषयव्यवस्था देशभेदेनाचारभेदेन चावगन्तव्या” पी०धा०। अत्यावश्यककार्य्ये परिहारस्तत्रोक्तः ज्योतिर्निबन्धे “दिनानि पञ्च वशिष्ठस्त्रिदिनं गर्गस्तु कौशिकस्त्वेकम्। यवना चार्य्यस्य मते पञ्च मुहूर्त्तांश्च दूषयति”। माण्डव्यराह प्रदर्शित शुभोत्पातेषु एकमेव दिनं वर्ज्यम्। “शुभदोत्पातेश्च दुष्टं दिनम्” मुहू०चि० उक्तेः। एवञ्च स्मार्त्तादिव्यवस्थापित त्रिरात्रे ग्रहणे एकदिनवर्ज्जनम् अल्पग्रासविषयमापद्विषयं वा उक्तवचनजातसामञ्जस्यात्। ग्रस्तादिविषये विशेष ग्रहणशब्दे वक्ष्यते “एकतालद्रुमोत्पातपवनप्रेषितो गिरिः” रघुः। “कोपाभासे मत्सरोत्पातवात” माघः। “उत्पातेन ज्ञापिते च” पा०। “उत्पातग्रहदुष्टञ्च” ज्यो०।

**उत्पातक** त्रि० उत्पातयति उत्पातं जनयति उद्+पत-णिच् ण्वुल् १उत्पातजनके उद्+पत-ण्वुल्। २ऊर्द्ध्वपतनशीले च। “दंशोत्पातकमत्कुणमक्षिकामशकाद्यतम्”। भा० स्वर्गा० २अ०।

**उत्पाद** पु० उत्+पद-भावे घञ्। १उत्पत्तौ “दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा” या०। उत्पत्तिशब्दे विवृतिः उत्क्षिप्तः पादोऽनेन। “उत्क्षिप्तपादे त्रि०।

**उत्पादक** पु० ऊर्द्ध्वस्थिताः पादा अस्य कप्। अष्टपदे शरभाख्ये गजारातौ १पशुभेदे तस्य पृष्ठस्थचतुश्चरणत्वादूर्द्ध्वपादत्वम्। उत्-पद-णिच्-ण्वुल्। २पितरि पु०। ३उत्पादनकर्त्तरि त्रि०। “उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता” “आङ्कुरमुत्पादकं केचिदपरे क्षेत्रिणं विदुः” “मोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि” मनुः। स्त्रियां टापि अत इत्त्वम्। उत्पादिका ४उत्पादकस्त्रियां ५क्रिलसोषिकायां शब्दचि० ६पूतिकायां भरतः ७देहिकानामकीटे च स्त्री त्रिका०।

**उत्पादन** न० उद्+पद-णिच्-ल्युट्। जनने उत्पत्तिकरणे “उत्पादनमपत्यस्य जातस्य पालनम् तथा” मनुः

**उत्पादशय** पु० उत्पादः ऊर्द्ध्वक्षिप्तपादः सन् शेते शी-अच्। (टिटिर) १टिट्टिभपक्षिणि हेमच०। २शिशौ च। तयोः

णम्। ततो होमशेषं समाप्यापोऽवगाहन्त इत्यर्थः नारा० “एता एव तद्देवतास्तर्पयन्ति” २१ सू०। “स्नात्वा सावित्राद्या सव एनिमीड् इत्याद्याय विधतिं सर्पयन्तीत्यर्थ। प्राग्देवता ब्यादिश्य तर्पयेयुः। द्वितीयान्तं कृत्वा तर्पयामीत्येकाधानिमहाक्यानि कृत्वा तावत्क्तृत्वस्तर्पयेयु” ना०ह०।“आचार्यान् ऋषीन् पितृँश्च” २२सू०। यश्च मध्यमयाञ्च तर्पणयुक्त तद्देतदन्तेनैदामोमपि कार्यमित्यर्थः। चयज्ञो देवतातर्पण समुच्चयार्थं। तेन प्रजापत्याद्या अपि तर्प्याः। देवतास्तर्पयन्तीत्यत्र देवताग्रहणमत्रापि समुच्चयार्थम् क्रमश्च तन्त्रोक्त एव” ना० ह०। “एतदुत्सर्जनम्” २३सू०। “अस्येयं सत्त्वा। तत पण्मासान् षडङ्गान्यधीयीत। षण्मासानधीयीतेत्यारभ्य एवमन्ता धर्मा ग्रहणाध्ययन एवेत्याहुरेके। अन्ये त्वविशेषेणेत्याहु” ना० ह०। उत्सर्गशब्दे दर्शितेन कालेनास्य विकल्प शाखिभेदेन व्यवस्थाप्यं “पौषे तु छन्दसा कुर्याद्बहिरुत्सर्जन बुधः” मनुः। [हुने च

**उत्सर्पण** न०उद्+सृप्-ल्युट्। १उत्क्रम्य पुरतोगतौ, २उल्ल-

**उत्सर्पिन्** त्रि० उत्सर्पति णिनि। उत्पतिष्णौ “पयोधरोत्सर्पिषु शीर्य्यमाणः” रघु०। “उत्सर्पिभि प्रांशु शिवांशुजालैः” किरा० २अतिशयिते स्त्रियां ङीप्। “उत्सर्पिणी खलु महता प्रार्थना” शकु०। सा च हेम चन्द्रोक्ते कालचक्रान्तर्गते ३कालगतिभेदे “सागर कोटिकोटीनां विंशत्या स समाप्यते। अवसर्पिण्या सहैरा उत्सर्पिण्या तएव विपरीता। एवं द्वादशभिररैर्विवर्त्तते कालचक्रमिदम्”हेम०। [प्रचारो गवि जटा०

**उत्सर्य्या** स्त्री उत्+सृ-यत्। १ऋतुमत्यां गर्भयोग्यावस्था

**उत्सव** पु०उद्+सू-अप्। आनन्दजनकव्यापारे विवाहादौ। “ऋद्धिमन्तमधिकर्द्धिरुत्सव, पूर्व्वमुत्सवमपोहदुत्तर” “स कृत्वा विरतोत्सवान्” रघु। “धर्मसेतुसमाकीर्णा यशोत्सववतीं शुभाम्” “हृष्टपुष्टजनाकीर्णा नित्योत्सवसमाकुलाम्” भा० व०२०६ अ०

**उत्सवसङ्केत** पु०उत्सव आनन्दजनक सङ्केत स्त्रीपुंसयोरत्यर्थमनुरागादाह्वानम् यस्य। अस्येव स्त्रोत्येव दाम्पत्यनियमशून्ये स्त्रीपुंसयोरनुरागमात्रेणैकत्रैरविहारशालिनि पार्वतीये जातिभेदे। भा०स० अर्ज्जुनसोत्तरदिग्विजये “पौरवं युधि निर्जित्य दस्यून् पर्व्वतवासिनः। गणानुत्सवसङ्केता नजयत् सप्त पाण्डव, २६अ० अत्र नीलक०दर्शितरीत्यैव व्याख्या। तद्धर्मके प्रतीचीस्थेऽपि जातिभेदे “गणानुत्सवसङ्केतान् व्यजयत् पुरुषर्षभः” नकुलस्य प्रतीचीविजये ३२अ० “शरैरुत्सवसङ्केतान् स कृत्वा विरतोत्सवान्” रघु।

**उत्सादन** उद्+सद्-णिच्-ल्युट्।१उत्सारणे,२उद्वर्त्तने कषाय द्रव्येण स्नेहाद्यपसारणे ३उच्छेदकरणे “उत्सादनार्थं लोकानां रात्रौ घ्नन्ति कर्मीभिः” भा० व० १०२ अ०।“उत्सादनार्थं लोकानां धुन्धुर्नाम महासुरः” भा० व०१००अ०।“न हि द्वैतवने किञ्चित् विद्यतेऽन्यत् प्रयोजनम्। उत्सादनमृते तेषां वनस्थानां महाद्युते।” भा० व०२३७ अ०। स्थानान्तरनयने “क्रयणवेद्यारम्भण प्रवर्ग्योत्सादनेत्या०” कात्या०१४,१,१२, “उपसदन्ते प्रवर्ग्योत्सादनम्”कात्या०१८,२,१०। उत्साद्यतेऽत्र उद्+सद्-णिच् आधारे ल्युट्। महावीरादिपरित्यागदेशे। “उत्सादनदेशं गच्छन्ति सामगानामन्तरम्” कात्या० २६,७,१०,उत्सादनदेशं प्रति आगच्छन्ति उत्सादनं महावीराणां परित्याग स यत्र देशे विहितः श्रुतौ” कर्क०

**उत्सादनीय** त्रि०उद्+सद्-णिच् कर्मणि अनीयर १उच्छेद्ये २उन्मूलनीये उद्वर्त्तनीये कषायादिद्रव्ये। “कुर्य्यादनुत्सादनीयानि सर्पीष्या लेपनानि” च सुश्रु०।

**उत्सादि** पु०प्रवाद्यर्थे “उत्सादिभ्योऽञ्” पा० अञ् प्रत्ययप्रकृतिशब्दगणे। स च उत्स उदपान विकर विनद महानद महानस महाप्राण तरुण तलुन (वष्कयाऽसे) पृथिवी धेनु पङ्क्ति जगती त्रिष्टुप् अनुष्टुप् जनपद भरत उशीनर ग्रीष्म पीलुकुण(उद स्थानदेशे) पृषद ग भल्लकीय रथन्तर माध्यन्दिन वृहत् महत् सत्वत् कुरु पञ्चाल इन्द्रावसान उष्णिह् ककुभ् सुवर्ण देव (ग्रीष्माद्छन्दसि) औत्स तद्भवे त्रि०।

**उत्सादित** त्रि०उद्+सद्-णिच्-क्त। उन्मूलिते उद्वर्त्तिते च “भद्रासनेऽपविष्ट परिधायाम्बर लघुः। सग्धी चन्दनसंयुक्तै, पानीयैरभिमन्त्रितैः। उत्सादित कषायेश्च मलवद्भिः सुगन्धिभिः” भा०द्रो०८२अ०।

**उत्सारक** पु०उद्+सृ-णिच्-ण्वुल्। द्वारपाले हेमच० तेन हि प्रभुद्वारतो जना दूरीक्रियन्ते इति तस्य तथा अपसारके त्रि०। [२चालने, ३स्थानान्तरकरणे च।

**उत्सारण** न० उद्+सृ-णिच् ल्युट्। १दूरीकरणे,

**उत्सारित** त्रि०उद्+सृ-णिच् क्त। दूरीकृते चालिते “ग्रयान्त्यमङ्गं गुणकेन हन्यादुत्सारितैमेवमुपान्त्यमादीन्” लीला०

**उत्साह** पु०उद्+सह-घञ्। १उद्यमे,२अध्यवसाये, कर्त्तव्य

कार्य्येषु १स्थिरतरे प्रयत्ने "उत्साहो मन्त्रमूलं स्यादिति नीतिविदां मतम् । प्रभुशक्तिर्मन्त्रमूला तस्मादुत्साहवान् भवेत्" इत्युक्ते राज्ञां ४गुणविशेषे, "चारेणोत्साहयोगेन क्रियया च कर्म्मणाम्" मनुः । "नीताविशेषोत्साहगुणेन सम्पद्" कुमा०।।.कल्याणे,शब्दरत्नावली ईस्थले, मेदिनी "कार्य्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते" सा०द० उक्तलक्षणके वीररसस्य ७स्थायिभावे । स च वीररसस्य स्थायी भाव "रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा । जुगुप्सा विस्मयश्चेत्यमष्टौ प्रोक्ताः शमस्तथा" स्थायिनो विभज्योक्त "उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः" तत्रोक्तं । तत्र उद्यममात्रे "मन्दोत्साह कृतोऽसि मृगयापवादिना माधव्येन" शकु० "मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः" गीता "महोत्साह स्थूललक्ष्यः कृतज्ञो वृद्धसेवकः" या०स्मृ० अस्त्यर्थे वला० मतुप् इनि वा उत्साहिन् उत्साहवत् तद्विशिष्टे त्रि० स्त्रियां ङीप् ।

**उत्साहक** त्रि०उद्+सह-ण्वुल् । उत्साहान्विते "तृजकाभ्यामिति" पा० षष्ठीनिषेधेऽपि याजका० षष्ठी समास । कार्य्योत्साहक ।

**उत्साहन** न० उद्+सह-णिच्-ल्युट् । उत्साहजनने

**उत्साहवर्द्धन** पु०उत्साहं वर्द्धयति वृध-णिच्-ल्यु । वीररसे । वृध-ल्युट् ६त०। उत्साहस्य वृद्धौ न०।

**उत्साहशक्ति** स्त्री उत्साहरूपशक्तिर्बलम् । राज्ञां विक्रमहेतौ बले । "षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः" अमरः । "कर्त्तव्येषु कार्य्येषु स्थेयान् प्रयत्न उत्साह" मल्लि० ।

**उत्सिक्त** त्रि० उद्+सिच-क्त । १उद्रिक्ते अतिशयिते २दृप्तियुक्ते ३उद्धते गर्विते च । "नानोत्पादस्थिरा वाचमुत्सिक्तमनसां तथा" मनु० ।

**उत्सुक** त्रि० उत्सुवति षु प्रेरणे मितद्र्वादि० डु कतृ । १इष्टार्थप्रवृत्ते कालक्षेपासहिष्णौ २इष्टार्थोद्युक्ते च "दिनावसानोत्सुकबालवत्सा" "स्मृत्वा रामं पियोदलमेने तत्परमोत्सुक" "वत्सोत्सुकापि स्तिमिता सपर्य्याम्" "व्यापद्ग्रोत्सुकशारङ्गा चित्रकूटस्थली जहौ" रघु । उत्सुकस्य भाव ष्यञ् । औत्सुक्य तद्भावे न०। "इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता । चित्ततापत्वरास्वेदद्दीर्घनिश्वसितादिकृत्" सा० द० । "औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्तमाना ह्रिया" रत्ना० । अमा०

अभूतत्वज्ञापार्थे क्यङ् । उत्सुकायते उत्सुकायमाना "यस्योत्सुकायमाना त्वं न मत्तोपायसेऽन्तिके" भट्टि ।

**उत्सूत्र** त्रि० उत्क्रान्त सूत्रम् अत्या० स०। विधानसूत्रातीते "अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना" माघ ।

**उत्सूर** पु० उत्क्रान्त अतिक्रान्तः सूरः सूर्यम् अत्या० स० । दिनात्यये हेमच०उत्सूर्य्यादयोऽप्यत्र । "व्योत्सूर्य्यमन्यानुत्थापयाव्युषम्"। अथ०४,५,७, "उत्सूर्य्यशायिनशाखन् सर्व्वं वाक्तन् प्रगे निशा भा०शा०२२८अ० ।

**उत्सृज्य** अ० उद्+सृज-ल्यप् । १त्यक्त्वेत्यर्थे "क्रतुपत्यात् कर्म्मणि क्यप् । २त्यक्तव्ये त्रि०

**उत्सृष्ट** त्रि०उद्+सृज-क्त । १त्यक्ते २दत्ते च । "ब्राह्मणानाह यत्किञ्चित् मयोत्सृष्टं तु निर्ज्जने । तत्कश्चिदन्यो न नयेत् विभाज्यत्वं यथाक्रमम् । न वाह्य न च तत्क्षीरं पातव्यं केनचित् क्वचित्" । ब्रह्म पु० । "महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः" या०स्मृ० ।

**उत्सेक** पु० उद्+सिच-घञ् । १गर्व्वे, "उपदा विविशुः सम्यक् नोत्सेकाः कोशलेश्वरम्" रघु । "नोत्सेकमगनच्छेदं कदाचिदिह न कुलम्" भा० आ० ११०अ० । २उद्रेके "पातव्य श्वासकासघ्नं स्नेमोत्सेके गलग्रहे सुश्रु० । ३उद्धत्य वहिः सेचने च ।

**उत्सेकिन्** त्रि० उत्सेक+अस्त्यर्थे इनि । १अतिगर्विते २गर्वयुक्ते च स्त्रियां ङीप् ।"भाग्येष्वनुत्सेकिनी" शकु० ।

**उत्सेचन** न०उत्क्रम्य आधारमतिक्रम्य सेचनम् । आधारातिक्रमेण प्लवने उपचार)

**उत्सेध** पु० उत्सेधति कारणमतिक्रम्य वर्द्धते उद्+सिध-गत्याम् अच । १देहे तस्य शुक्रशोणितरूपस्वल्पकारणातिक्रमेण वर्द्धनाशयात्वम् । भावे घञ् । २उन्नतौ तस्य तदभिहितभावत्वात् "पुत्रवित्तार्ज्जनात् पितेत्यादौ पुत्रार्जितवित्त इव उन्नत्याश्रयेऽपि इति तथात्वेऽपि विशेषणसमासे ब्राह्मणश्रमणादिवत् परनिपात हिमनिष्यन्दपाण्डर इत्यादिवदिति भेद । यथा "पयोधरोत्सेधनिपातचूर्णिता इति कुमा० "तस्य प्रमाणमार्द्र माहिषचर्मोत्सेधसंपदर्शयन्ति" सुश्रु०। "उत्सेधनिर्ज्जितमहीधर" माघ "तच्छायापमसा दीर्घा मादेशायतरञ्जुला । तथैवोत्सेधतोऽप्यायतरश्मासु इत्यपि" छन्दोगप० "पयोधरोत्सेधविशीर्णस इति" कुमा०। कर्त्तरि अच् । ३उच्चे त्रि०। "वायव्य श्वेतं पुच्छे उत्सेधमेव त कुरुते तस्मादुत्सेधं प्रजाभयेऽभि स अ-

उदकीय पु० नामधातु आत्मन उदकमिच्छति उदक+क्यच्। उदकीयति अतिसर्पयान्तु उदन्यति।

उदकीर्य(र्य्य) पु० उदकेन कीर्य(र्य्य) मध्यायाम् उदादेश.। महाकरञ्जे राजनिर्घ० यौग रत्नमा०।

उदकेचर पु० उदके जले चरति अच् वा सप्तम्या अलुक्। जलचरे मत्स्यादौ। अध्वर्य्युर्मत्स्य सामदोराजेत्याह तस्योदकेचरा विशस्त इव आसत इति मत्स्याश्च" शत०ब्रा० १३,४ ३,१२ जलचरे शिंशुमारकूर्मादौ च ते च सुश्रुते विभाजिता ते च आनूपशब्दे ७३१ पृष्ठे दर्शिता। सप्तम्यालुकि उदकचरोऽप्यत्र, णिनि, उदकचारिन् अप्यत्र स्त्रियां ङीप्।

उदकोदर न० सुश्रुतोक्ते उदरवृद्धिकारकरोगे। उदरशब्दे विवृति "उदकोदरिणस्तु वातहरतैलाभ्यामित्यादि" सुश्रु०

उदक्त त्रि० उद्+अन्च–क्त। कूपादित उत्तोलिते। "उदक्तमुदकं कूपात्" सि०कौ०।

उदक्प्रवण त्रि० उदक् उत्तरा प्रवण निम्नम्। क्रमशोदक्षिणत उत्तरनिम्ने। "अपर उदक्प्रवणे समे वा" कात्या० २,३,४। २उत्तरमार्गगतिहेतौ च "एष वा उदक्प्रवणोयद्यो यत्रैवं विद् ब्रह्मा भवति" छा०उ०। "उदक्प्रवण उत्तरमार्गं प्रति हेतुरित्यर्थः" भा०। 'प्राची हि देवाना दिगथो उदक्प्रवणोदीची हि मनुष्य णा, दिग्दक्षिणत पुरीष प्रत्युदूहत्येषा वै दिक् पितॄणा सा यद् दक्षिणा प्रवणा स्यात्" शत०ब्रा०। १,२,५,१७।

उदक्य त्रि०उदकमर्हति दण्डा०यत्। १जलार्हे व्रीह्यादौ। २तत्स्नानार्हेऽशुचौ ३रजस्वलायां स्त्री। तस्याश्च स्नानदिवसपर्यन्तमशुद्धे तत शुद्ध्यर्थमुदकार्हत्वात् तथात्वम्। "उदक्या सूतिका वापि अन्त्यज सस्पृशेद्यदि। त्रिरात्रेणैव शुध्येत इति शातातपोऽब्रवीत्" शु०त० अङ्गिरा०। 'उदक्यया च सभाषा न कुर्य्यात कदाचन" भा०अ०प० १०४ अ०। "उदक्यायासते ये च द्विजा केचिदमन्त्र " भा० शान्ति०१६५ अ०। अथ प्रसङ्गात् प्रथमरजोदर्शनतिथ्यादिफलतदीयधर्मभेदा उच्यन्ते ते च विधानपारिजाते दर्शिता यथा। "प्रथमर्त्तौ द्वितीये वा शुभाशुभनिरीक्षणम्। कर्त्तव्य नातिभि सम्यग् धर्मशास्त्रविधानत"। तत्र वस्त्रफलम्। वराहसंहितायाम् "सुभगा श्वेतवस्त्राढ्या रोगिणी रक्तवाससा। नीलाम्बरधरा नारी विधवा जायते ध्रुवम्। भोगिनी पीतवस्त्रा स्याच्चित्रवस्त्रा पतिव्रता। दुर्भगा शोणवस्त्रा च सुभगा क्षौमवस्त्रिणी"। रजोवर्णफलम्।

"व्यालोहिते भवेद्वन्ध्या श्वेतवर्णे च पुत्रिणी। कृष्णे च विधवा नारी रजस्येतत्तु लक्षणम्" विवाहोत्तरकालभेदफलम् "ऊढाना वत्सरार्धेन मासे मध्ये तथा खलु। रजसो दर्शन स्त्रीणा सर्वदैवाशुभावहम्"। अथ तिथिफलम् "आद्यर्त्तौ विधवा नारी प्रतिपद्याद्यताऽऽस्त्रजा। वैधव्यदा प्रतिपदा द्वितीया पुत्रवर्द्धिनी। सौभाग्यदा तृतीया च चतुर्थी सुखनाशिनी। पञ्चमी सुभगा चैव षष्ठी सर्वार्त्तिनाशिनी। सप्तमी धननाशाय, पुत्रदा सौख्यदाष्टमी। नवमी क्लेशदा स्त्रीणा दशमी च सुखप्रदा। एकादशी दुःखनाशाय द्वादशी रतिवर्द्धिनी। त्रयोदशी शुभाख्येया दुर्भगा च चतुर्दशी। पौर्णमासी त्वमावास्या तु व्रतरोगविवर्द्धिनी"। अथ मासफलम् तत्रैव "चैत्रे मासि विशेषेण वैधव्य लभते ध्रुवम्। वैशाखे बहुपुत्राढ्या ज्यैष्ठे रोगाद्यता भवेत्। आषाढे स्यात्सुट प्रोक्ता श्रावणे धनदा भवेत्। भाद्रे तु दुर्भगा स्त्रीणा आश्विने च तपस्विनी। कार्त्तिके निर्धना बाला मार्गशीर्षे बहुप्रजा। पौषे स्यात् पुंश्चली नारी माघे पुत्रसुखान्विता। फाल्गुने सर्वसम्पन्ना प्रथमर्त्तौ फल स्मृतम्"। अथ वारफलम्। "आदित्ये विधवा नारी सोमे दैन्यमवाप्नुयात्। मङ्गले ज्ञात्मघाताय बुधे च धनिनी भवेत्। गुरौ च भर्त्तृसुखदा कन्यापुत्रपरम्भोगी। पौंश्चल्यकारिणी मन्दे म्रियते भर्त्तुरन्तत"। अन्यत्रान्यथापि "रागया पतिव्रता दुःखपुत्रिणी भोगभागिनी। पतिव्रता क्लेशभोगा सूर्य्यवारादिषु क्रमात्" अथ वेलाफलम्। "प्रात काले रज स्त्रीणा प्रथम शोकदर्शनम्। सङ्गवे सुखसन्तानं मध्याह्ने धनसन्तति। अपराह्ने धनाय प्रि' सायाह्ने मध्यम फलम्। पूर्वरात्रे सुखायास मध्यरात्रे धनक्षय। परराबेऽर्थनाशाय प्रथमर्त्तु फल स्मृतम्"। अथ स्थानफलम्। "गृहमध्ये सुखायाग्निर्द्वारे वियोगिनी। शय्याया सुखदा भूषावनेऽपत्यसन्तति"। दृष्टफलम्। "पुरन्ध्या दृश्यते यत्तु रज स्त्रीया सुखाय तत्। विश्वस्तया तु यद्दृष्ट रजो वैधव्यद स्मृतम्। रज पश्यति चेत्कन्या कुमार्य्या तत्सुख भवेत्। स्वय दृष्ट तथा स्त्रीणा मात्मघाताय कल्पते"। अथावासफलम्। "पितृगृहे रजो दैन्य विदधाति पितृ कुले। देवस्थाने पितृस्थाने धर्मस्थानेऽन्यवेश्मनि। मार्गे भर्त्तृवियोगे च परगृहागतेष्ट्र मृतप्रजा"। अथ नक्षत्र फलम्। 'अश्विनी सुखदा स्त्रीणा भरणी कामवर्द्धिनी। कृत्तिका दैन्यदा ज्ञेया रोहिणी

सुखदा भवेत् । मृगस्तु कामभोगाय सुखदं रुद्रदैवतम् । आदित्यं च सुखं दद्यात् पुष्यं सुखवर्द्धनम् । अश्लेषा शुभभागाय योषायाय मघा मता । वैधव्यं फल्गुनी हस्ते हस्ते पुत्रविवर्द्धनम् । चित्रा चित्रतनुं नारीं कुरुते नात्र संशयः । स्वाती शुभाय नारीणां विशाखा सुखभागिनी । अनुराधार्थभोगाय ज्येष्ठा भर्तृवियोगदा । शुभदाप्यशुभं मूलं पूर्व्वषाढार्थभागिनी । सुखदा चोत्तराषाढा श्रवणं सुखवर्द्धनम् । धनिष्ठापञ्चकं स्त्रीणां प्रथमर्त्तौ सुखप्रदम् । तिथिरेकगुणा प्रोक्ता नक्षत्रं च चतुर्गुणम् । वारः षड्गुणो ज्ञेयो मासश्चाष्टगुणः स्मृतः । वस्त्रं दशगुणं विद्यात् गर्भं च ततोऽधिकम् । अशुभं चेद्रजः स्त्रीणां प्रथमर्त्तौ हि दृश्यते । विधानं तत्र कर्त्तव्यमरिष्टघ्नं विशेषतः" इति । अथ योगादिफलम् । "परिघस्य तु पूर्व्वार्द्धे व्यतीपाते च वैधृतौ । व्याघातशूलयोर्विष्ट्यामशुभं प्रथमार्त्तवम्" । विष्टिर्विष्टि भद्रेत्यर्थः । अन्यत्रापि । "अमा सङ्क्रान्तिविष्ट्यादौ व्यतीपाते च वैधृतौ । परिघस्य तु पूर्व्वार्द्धे षट् च गण्डातिगण्डयोः । व्याघाते नव, शूले तु नाद्याः पञ्चदशैव तु । वैधव्यमर्थहानिश्च सुतनाशं महद्भयम् । वैधव्यं शत्रुवृद्धिश्च दारिद्र्यं क्षीणजीवनम् । तेजोहानिं समायाति एषु पुष्पवती क्रमात् । अथ राशिफलम् । "मेषे सव्यभिचारा स्याद्वृषभे परभोगिनी । मिथुने धनभोगाढ्या कर्कटे व्यभिचारिणी । पुष्पाढ्या सिंहराशौ तु कन्यायां श्रीमती तथा । विलक्षणा तु तुलायां तु वृश्चिके तु पतिव्रता । दुश्चारिणी धनुःपूर्व्वे स्वपरे च पतिव्रता । मकरे मानहीना च कुम्भे निर्द्धनबन्ध्यता । मीने विलक्षणा लग्ने मङ्गलस्य विवाहवत्' । अथ लग्नफलम् नारचिन्द्रीये । "लग्नस्य सप्तमस्थाने सूर्य्यो वैधव्यकारकः । पुत्रहानिकरस्तारो बुधः सत्पुत्रदो भवेत् । हस्तमित्रमायुष्यं शुक्रः सापत्न्यकारकः । शनैश्चरे च बन्ध्या स्याद्राहौ तु मरणं ध्रुवम्' । अथ गुरुशुक्रोदयफलम् । "आयुः श्रीः सौभाग्योऽभ्युदिते गुरुभार्गवे । मन्दोदये विरोधः स्यात् क्लेशः स्यात्तामसोदये । तामसो राहुः । अन्यच्च । "समार्ज्जनोक्षतृणाग्निपानु हस्ते दधाना कुलटा तदा स्यात् । तत्वोपयोगे तमसि स्थिता चेद्दृष्टं रजो भाग्यवती तदा स्यात्' इत्यादि सर्व्वं ज्योतिःशास्त्रतोऽवगन्तव्यम् ।

अथ ऋतुस्वरूपम् । "नाभिमूले स्थितं पुष्पमुदरं समन्वितम् । तस्मिन् सर्व्वाश्च दृश्यते गर्भसम्भवकारणम् । अधोमुखं स्थितं स्त्रीणां नद्धं तु सुसाक्षति । मास्यात् परयय प्राप्तौ सकलं विकसद्भवेत् । उत्फुल्लं कुसुमं स्त्रीणां स्वभावात् प्रस्रवेद्रजः । तदा प्रभृति सर्व्वासां मासि मासिमृतुर्भवेदिति" । अथ प्रथमर्त्तौ मङ्गलाचारप्रयोगः पारिजाते स्मृतिचन्द्रिकायाम् । "प्रथमर्त्तौ तु पुष्पिण्या पतिपुत्रवती स्त्रियः । अभ्यङ्गेराशनं कुर्यात्तस्मिं स्नापयेत् । हरिद्रागन्धपुष्पादीन् दद्यात्तास्वलङ्कृतः । आशिषोऽवाचयेयुस्ता पतिपुत्रवती भव । दापनीराजनं कुर्यात्तद्दीपं वाहयेद्गृहे । ता सर्व्वाः पूजयेत्तत्र गन्धपुष्पाक्षतादिभिः । लवणापूपमुद्गादि दद्यात्ताभ्यः स्वशक्तितः' । अन्यच्चाह दक्षः । "आर्त्तवाभिप्लुता नारी नैका वेश्मनि संविशेत् । न सवर्गं व्रजेदह्नि स्नात्वा पापात् प्रमुच्यते । अञ्जनाभ्यञ्जने स्नानं प्रवासं दन्तधावनम् । न कुर्य्यात्सार्त्तवा नारी ग्रहाणामीक्षणं तथा । नखानां कर्त्तनं रज्जुतालपत्रादिबन्धनम्' । नेत्यनुवृत्तौ सएव "दग्धे शरावे भुञ्जीत पेयं चाञ्जलिना पिबेत्' । अथ रजस्वलास्पर्शशुद्धिविधानम् स्मृतिरत्नावल्यां दक्षः "उदक्ये द्वे सगोत्रे वा सवर्णे वाऽन्यथा पुनः । तयोः स्नानं मिथः स्पर्शे पञ्चगव्यं ततः पिबेत् । सवर्णे योनिसम्बन्धे सगोत्रे च रजस्वले । मिथः संस्पृशतोऽमत्या स्नानमात्रेण शुध्यतः । मत्यैकरात्रं नाश्नीत पञ्चगव्यं पिबेत्ततः । उदक्ययोर्यदान्योन्यमसम्बन्धः सवर्णयोः । स्पृशेदमत्या स्नात्वा च तथाद्यात् शुचिर्भवेत्' । तस्मिन् स्पर्शदिने । "मत्या तु नाऽऽद्यादाशुद्धेर्भुक्ता चेत् प्रतिवासरम् । उपोषणं तदा केचिदाहुस्तद्दिनसंख्यया । उपवासेत्यशक्ता चेत्तत्समं दानमाचरेत् । सम्भाषेतां स्पृशेतां वा ब्राह्मण्यौ च रजस्वले । आस्नानकालान्नाश्नीतोऽशुभे गत्या मिथः क्वचित् । स्नात्वोपवासं कुर्य्यातां पञ्चगव्येन शुध्यतः । एवमभ्यसतश्चाऽन्यप्रायश्चित्तं समाचरेत् । मत्या रजस्वलाऽन्योन्यं वृषली ब्राह्मणी स्पृशेत् । आस्नानकालान्नाश्नीयादतिकृच्छ्रं समाचरेत् । चाण्डालं सार्त्तवा नारी संस्पृशेद् भोजनान्तरे । वाग्यता बक्षिर.धोनाऽऽस्नानकालादुपोषणम् । प्राजापत्यञ्चरेत् पश्चात् पञ्चगव्यं ततः पिबेत् । विप्रान् द्वादशसंख्याकान् भोजयित्वा विशुध्यति । पुष्पिणी संस्पृशेच्चेत् शूद्रं वा नरं स्वयम् । स्नानादर्व्वाङ् न भुञ्जीत भुक्त्वा कृच्छ्रं समाचरेत् । स्पृष्टोदक्या पञ्चनखान् द्विशफैकशफान् पशून् । श्वपचजानि च सर्व्वाणि नाद्यादा स्नानवासरात्" । परा-

परः । “रजस्वला यदा दृष्टा शुना जम्बूकरासभैः । पञ्चरात्रं निराहारा पञ्चगव्येन शुद्ध्यति । ऊर्द्ध्वं तु द्विगुणं नाभे र्वक्ते तु त्रिगुणं तथा । चतुर्गुणं स्मृतं मूर्द्ध्नि दंशेऽन्यत्राव्रता भवेदिति” ।

तस्याः नैमित्तिकस्नानशुद्धिस्नानप्रकारस्तत्रैव दर्शित यथा । तत्र नैमित्तिकस्नानप्रकारस्तु स्मृत्यर्थसारे । “स्नाने नैमित्तिके प्राप्ते रजोदर्शने पात्रान्तरिततोयेन स्नात्वाद्भिः सिक्तगात्रा साङ्गोपाङ्गं वस्त्रं संनिष्पीड्यान्यवस्त्रधारणं कृत्वा व्रतञ्चरेदिति’ । अथ शुद्धिस्नानं स्मृत्यर्थसारएव । “रजस्वला पञ्चभिस्त्रिकाभिः शौचं कृत्वा मलं प्रक्षाल्य दन्तधावनपूर्व्वकं सगवे स्नायात्” इति । अथ स्नानानन्तरमपि रजःस्रावे विशेषोऽभिधीयते । कात्यायनेन ‘रजस्वला यदा नारी त्रिरात्रमशुचिर्भवेत् । प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी । तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुद्ध्यति । भर्त्तुः शुद्धा चतुर्थेऽह्नि स्नाता नारी रजस्वला । दैवे कर्म्मणि पित्रे च पञ्चमेऽहनि शुद्ध्यती”त्युक्त्वाभिहितम् । “रागजं रोगजञ्चैव द्रव्यजं कालजं तथा । यद्रागरोगद्रव्योत्थं तद्रक्तं प्राह भार्गवः । कालजं तु रजः सत्यं तस्मात् तत्रैव साऽशुचि”। एषां लक्षणानि । “अर्व्वाक् प्रसूतेरुत्पन्नं मेदोबध्याङ्गनासु यत् । तद्रागजमिति प्रोक्तं मनोद्रेकसमुद्भवम् । रोगेण यद्रजः स्त्रीणामन्वहं सम्प्रवर्त्तते । नाऽशुचिः स्त्री ततस्तेन यतो वैकारिकं मलम् । अन्नादिदोषवैषम्यादसकृत्तु प्रवर्त्तते । रोगजं तत्समुद्दिष्टमथ द्रव्यजमुच्यते । द्रव्यजं धातुवैषम्यहेतुद्रव्योपभोगजमिति” । “आरभ्य चार्त्तवदिनादेकविंशतिवासरे । मासादूर्द्ध्वं रजोयत् स्यात्तत्कालजमुदाहृतम् । रजस्वला यदा नारी पुनरेव रजस्वला । सा विंशतिदिनादूर्द्ध्वं त्रिरात्रमशुचिर्भवेत्” । ततः पूर्वं तु “रजस्वला यदि स्नाता पुनरेव रजस्वला । अष्टादशदिनादर्व्वागशुचित्वं न विद्यते । एकोनविंशतेरर्व्वागेकाहं स्यात् ततोऽध्यहम् । विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेदिति’ । काश्यपस्तु । ‘रजस्वला सती नारी पुनरेव रजस्वला । अष्टादशाहात् प्राक्चापि अशुचिः स्यात्त्रिरात्रकम् । त्रयोदशदिनादूर्द्ध्वं रजसा युज्यते यदा । अष्टादशाहात् प्राक्चापि त्रिरात्रमिति निश्चयः । एकादशेऽह्नि रात्रं त्रिरात्रं द्वादशेऽहनि । ऊर्द्ध्वं त्रिरात्रं विज्ञेयमिति कुण्डलिप्रोदितमित्यादि” परस्परविरुद्धवचनम् ‘जातिगुणवयोऽवस्थादेशभेदेन व्यवस्थापनीयम्”। स्नानकालोत्तरानुत्तरत्वेन व्यवस्थेति रघु० । रजःकालस्नाने प्रजापतिराह “अविस्नाते मृते सा च मलवद्वसना यदि । कृत्वा शेषेषु जुष्टं स्नात्वा त्रिरात्रम् । रजः प्राप्तकालसन्देहेऽपि सएवाह । “निःसन्देहे परिस्नाने आर्त्तवे शुद्धिकारणम् । सन्देहमात्रे स्नानं स्यादित्युवाच प्रजापतिरिति” । अथ रात्रौ रजोदर्शने विशेष । “अर्द्धरात्रपर्य्यन्तं पूर्व्वदिनमित्यपरे परदिनगणना वा त्रिभागात्मा रात्रेर्भागद्वयं पूर्व्वदिनान्तर्गतमित्यन्ये । सूर्योदयावधिपूर्वदिनमित्यपरे । तदाह काश्यपः । “उदिते तु यदा सूर्य्ये नारीणां दृश्यते रजः । जननं वा विपत्तिर्वा यस्याहस्तस्य शर्व्वरी । अर्द्धरात्रावधिः कालः सूतकादौ विधीयते । रात्रिं कुर्य्यात्त्रिभागां तु द्वौ भागौ पूर्वगामिनौ । उत्तमोऽंश प्रभातेन युज्यते मृतसूतके । रात्रावेव समुत्पन्ने मृते रजसि सूतके । पूर्व्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविरिति” । अत्रापि देशाचारादिना व्यवस्था द्रष्टव्या । अथ रजस्वलाया ज्वरादिरोगसम्भवे शुद्धिविधानं स्मृत्यर्थसारे । “रजस्वला ज्वरिता चतुर्थेऽहनि सचेलमवगाह्याचम्य दशकृत्वोद्वादश कृत्वो वान्या तां स्पृष्टाचमेदिति” । उशनापि “ज्वराभिभूता या नारी रजसापि परिप्लुता । कथं तस्या भवेच्छौचं शुद्धिः स्यात् केन कर्म्मणा ? । चतुर्थेऽहनि सम्प्राप्ते स्पृशेदन्या तु तां स्त्रियम् । सा सचेलावगाह्याप स्नात्वा स्नात्वा पुनः स्पृशेत् । दशद्वादशकृत्वो वा आचामेच्च पुनः पुनः । अन्ते च वाससां त्यागस्ततः शुद्धा भवेत्तु सा । दद्याच्छक्त्या ततोदानं पुण्याहेन विशुध्यति । आतुराणां तु सर्व्वेषामेव शुद्धिर्विधीयत” इति । अथोदक्यास्पृष्टानां चेतनानां सचेलं स्नानम् अचेतनपीठादीनां प्रक्षालनम्, तत्रोदक्यादिस्पृष्टचेतनस्पर्शे आचमनम् “उदक्याऽशुचिभिः स्नायात् स्पृष्टस्तैरुपस्पृशेदिति” याज्ञवल्क्यस्मरणात् उदक्यादिस्पृष्टचेतनस्पर्शे तु द्वितीयस्यापि स्नानमेव यथाह मनुः “दिवाकीर्त्तिमुदक्यां च पतितं सूतिकां तथा । शवन्तत्स्पर्शिनं चैव स्पृष्ट्वा स्नानेन शुद्ध्यति” तृतीयस्य त्वाचमनं यथाह संवर्त्तः “तत्स्पर्शिनं स्पृशेद्यस्तु स्नानं तस्य विधीयते । ऊर्द्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा” एतदमतिविषयं बुद्धिपूर्व्वस्पर्शे तु तृतीयस्यापि स्नानमेव “पतितचण्डालसूतिकोदक्याशवस्पर्शितत्स्पृष्टुपस्पर्शने सचेलमुपस्पर्शनाच्छुद्धिरिति” गौतमस्मरणात् । चतुर्थस्याचमनं यथाह देवलः “उप-

स्वध्यायुविसृष्टं तृतीयं चापि मानवः । एकौ पादौ च तोयेन प्रक्षाल्याचम्य शुध्यति" चमुचक्षोदक्यादिस्पर्शे तु देवल "चमुचान् स्वयमप्येतानमुचस्तु यदि स्पृशेत् । स शुध्यत्युपवासेन तथा कृच्छ्रेण वा पुन । श्वादिस्पर्शे तूपवास कृच्छ्रस्तु श्वपचादिके"इति । चमुचिमार्त्तपशब्दे ८०८पृष्ठे उक्तम् । [स्थल ।

**उदगद्रि** उदगुत्तरस्यामद्रि । हिमालये । उदकपर्वतोदयो-

**उदगयन** न०उदक् उदीच्यामयनम् । उत्तरायणे । ज्य०। माघादिके मासषट्के "उदगयन आपूर्य्यमाणे पक्षे कल्याणे नक्षत्रे चौलकर्म्मोपनयनगोदानविवाहाः" आश्व० गृ०१,४,१, "अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम्" मनु । उत्तरायणशब्दे ११०४पृ० विवृतिः ।

**उदग्दश** न० उदक् उत्तरा दशा यस्य । उत्तराग्रे वस्त्रे "उत्तीर्य्यान्यानि वासांसि परिधाय समदेनान्यापीयोदग्दशानि विद्ध्यासत आगमवदर्शनात्" आ०श्रौ० ४,४,१०, "उदग्दशानि उदगग्राणि" नारा०वृ०।"अथ वासो द्विगुणं वा चतुर्गुणं वा प्रागदश मोदग्दश वोपस्तृणाति" शत०ब्रा० ३,३,२,९, [लट्भूमिके देशे जटा०

**उदग्भूम** त्रि० उदक् उन्नता भूमिर्य्यत्र अच् समा०। उत्-

**उदग्र** त्रि०उन्नतमग्रं यस्य ।१उच्चे उन्नते २वृद्धे "हरिन्मणिश्यामसुदग्रविग्रह" किरा० "मयन् मधुलिह" स्तसुदग्रदशनांशुभि" "आक्रम्य सुस्थितमुदग्रविशालस्कन्धम्" माघ "अवन्तिनाथोऽयमुदग्रबाहु" "संदधे दृशमुदग्रतारकाम्" "क्षतात् किल त्रायत इत्युदग्र" रघु । "शौर्य्योदग्रे राजशब्दे मृगे च" "धनञ्जलोदग्रतरप्रभाम""आविष्कृतोदग्रतरप्रभावम्"रघु.। ३उन्नते च । "मदोदग्रा ककुद्मन्त "रघु । [उन्नतदन्ते

**उदग्रदत्** त्रि० उदग्रा दन्ता यस्य दत्रादेशः स्त्रियां ङीप् ।

**उदग्राभ** पु० उदक गृह्णाति ग्रह-अण् उप० स० संज्ञायां गृटादेश वेदे हस्य भ । १मेघे "एवा यवस्य मंदिरो मदायोदग्राभस्य नमयन् वधर्स्नैः" ऋ०८,६७,१५, "उदग्राभमुदकपाहिणं मेघम्" भा० लोके तु उदग्राह इत्येव । उदग्रा उन्नता आभा यस्य । २महाप्रभे त्रि०।

**उदङ्क** पु०उदच्यते उद्भ्रियतेऽत्र उद्+अन्च-घञ् ।"उदङ्कोऽनुदके"पा०नि०कु; १धर्मस्मये घृतादिपात्रे (कुपो) तैलोदङ्क घृतोदङ्क । उदच्यते आकृष्यतेऽनेन करणे घञ् । आकर्षणसाधने २संदंशे "हृदयोदङ्कशस्त्राण क्षतान्तामासम्मितम्"भट्टिः । ३ऋषिभेदे पु० "अनवीम उदङ्कः

गौल्मायन " शत० ब्रा० १४,६,१०,४, अस्य हन्द्वे अङ्गन्तो च उपका०बहुत्वे गोत्रप्रत्ययस्य वा लुक । औदङ्कायनाः उदङ्काः ।

**उदङ्मुख** त्रि० उदक् उत्तरा दुखमस्य । उत्तरमुखे"मण्डपं कारयेत्तत्र प्राङ्मुखवाप्युदङ्मुखम् "वह्न्याचलकल्पे पुरा० "प्रत भुङ्क्ते ह्युदङ्मुख "।"यथाशास्त्रमुदङ्मुख "।"कूलो भ्रारसमुत्सर्गं दिशा कुर्य्यादुदङ्मुख "मनु । "उदङ्मुखान् प्राङ्मुखान् वा पूर्वाह्णे वै शुचि शुचीन्" मनु' ।"उदङ्मुख सोऽस्त्रविदस्त्रमन्त्रम्"रघु ।"स्थानादस्मात् सरसनिचुलादुत्पतोदङ्मुख खम्" मेघ० ।

**उदचमस** पु० उदकस्य उदकधारणार्थंचमस संज्ञायां उदादेश । उदकस्यायमनार्हे चमसरूपे पात्रभेदे "अथान्तरेणोदचमस निनयति"शत०ब्रा०७,२,१,१७ । "चतसृषु चतसृषु स्रोतस्वीनुदचमसाद्भिनयति" कात्या० १७,२,४

**उदच्** त्रि० उद्+अन्च-क्विप् । १ऊर्द्ध्वं गते उत्तरे २देशे ३अनन्तरे ४काले उत्तरदिग्देशकालवृत्तौ च । ५उत्तरदिशि स्त्री ङीप् अचोऽल्लोपे उद्यादेशे दीर्घ उदीची "तेनोदीचीं दिशमनु रवे " मेघ० । तत्र अस्ताति तस्य लुक् । प्रथमापञ्चमीसप्तम्यन्तार्थे वर्त्तमाने दिग्देशकाले अव्य० "अयने द्वे गतिरुदग् दक्षिणार्कस्य वत्सर " अमर "उपवीणयितु ययौ रवेरुदगावृत्तिपथेन नारद " रघु "सपूर्वतोऽस्मादुदगपाभ्याम् पवित्राभ्याम्" "उदगग्रे रुत्सृष्य कुर्वन्नं कारयन्ति" स०त०गोभि०। "प्रागग्रमुदग्र वा धौत वस्त्र प्रसारयेत्"वि०पा०ख०।"आचम्योदक्पराष्टत्य" मनु ।"चारचिन्त्योदक्स्यम्" सि०शि०।

**उदज** पु० उद्+अज-अच् प्रभाव । पशुप्रेरणे ।

**उदजिन** पु० उत्क्रान्तमजिनम् अत्या० स० । अर्म्मातीते भिरुदकादि० अन्तान्तोदात्तता ।

**उदज्ञ** पु० उदकं जानाति ज्ञा-क संज्ञायाम् उदादेश । ऋषिभेदे तस्यापत्यम् तिका० फिञ् । औदज्ञायनि तदपत्ये पुंस्त्री०

**उदञ्च्** त्रि० उद+अन्च-क्विप् । उदक्शब्दार्थे । भत्त्वे उदञ्च उदञ्चा इति भेद । तत्र प्रथमान्ताद्यर्थे अस्ताति तस्य लुक् । उदक् प्रथमान्ताद्यर्थे दिग्देशादौ अव्य०"यान् षडुदङ्ङेति तान् मासान्"छा०उ०। उदङ् उत्तरस्याम् ।

**उदञ्चन** न०उद्+अन्च-णिच् करणे ल्युट् । १पिधानार्थे पात्रे (ढाकना) । "प्रतिप्रस्थाता सक्तावामयन्तु चेता चमसेन योदञ्चनेन वा" शत०ब्रा०४, ६,५, २१,

"प्रतिप्रस्थाता च सप्तदशाग्रयणीयाद्वसतीवरीभिरेव चमसेन घा"कात्या०१०,५,१। भावे ल्युट्। २ऊर्द्धक्षेपणे। कर्त्तरि ल्यु। ३उत्क्षेपके त्रि० । "सतृपतिर्विश्वासामूधः स धियामुदञ्चन ऋ०५,४४,१२। "उदञ्चन ऊर्द्ध-मुद्गमयिता" भा०।

**उदञ्चित** त्रि० उद्–अन्च–पूजाया क्त।१पूजिते। णिच्–क्त। २ऊर्द्धगमिते ३उत्क्षिप्ते। हेम० "उदञ्चिताच्चोऽञ्चि तदङ्घिपीठः" भट्टि०।

**उदञ्चु** लि० उद्+अन्च–उन। उदग्निर्गते। वाह्वा० अपत्ये इञ्। औदञ्चवि तदपत्ये पुंस्त्री०।

**उदण्डपाल** पु० उद्गिन्नमण्डं पलति गच्छति कारणतया पल-गतौ अण् उप०स०। १मत्स्ये २सर्पे च मेदि० तयोर-ण्डोद्भेदेन जातत्वात्तथात्वम्। [यचि०।

**उदन्या** स्त्री उद्+अद–बा० यत्। तैलपिपीलिकायां शब्दा-

**उदधान** पु० उदकं धीयतेऽत्र आधारे ल्युट्। उदादेशः। १कुम्भे २मेघे च।

**उदधि** पु० उदकानि धीयन्तेऽस्मिन् धा-आधारे कि उदा-देश। १समुद्रे,२घटे च। "उदधेरिव निम्नगायतैः" "चन्द्रोदय इवोदधेः"रघु०। "यं लब्ध्वा सर्व्वभक्तोनिरमेयस्य महोदधिः" मनु। समुद्रसामान्यस्यैव सता तत्तत्-पदसमभिव्याहारे तु विशेषस्य बोधः। यथा क्षारोदधिः क्षीरोदधि सुरोदधि। ३मेघे च। "हृदय मधुमुखो दक्षोदधि मित्त" यजु० १८,५४। ४उदकधानकर्त्तृ सूर्य्ये च"संसर्प्य दिव्यातद्दुदधिर्निधि" यजु०१८,२२ सूर्य्यस्य च जलपूर्णाह्नताभिर्नाडीभिर्जलाकर्षणेन तद्वारणात्तधात्वं यथा च तस्याह्नताधायकत्वम्" तथा-ऽस्मद्ग्रन्थे २२३ पृष्ठे उक्तम्।

**उदधिक्रा** त्रि० उदधिं क्रामति क्रम–वि ङीप्। समुद्र-क्रामके।

**उदधिमल** पु० उदधेर्मल इव। समुद्रफेने राजनि०।

**उदधिमेखला** स्त्री उदधिर्मेखलेव यस्याः। मध्यस्थाने समु-द्रवेष्टितायां पृथिव्याम्। भूगोले "भूमेरर्द्धं क्षारसिन्धो-रुदक्स्थं जम्बूद्वीपं प्राहुराचार्य्यवर्य्याः। अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः"सि०शि० उक्तेः। याम्यार्द्धे एवाम्बुधीनां निवेशात् तेषां पृथिव्यो मध्यवेष्टकतया मेखलात्वम्।

**उदधिसुता** स्त्री ६त०। १लक्ष्म्याम् तस्या उदधिजातत्वात् तथात्वम्। उदधितनयादयोऽप्यत्र २चन्द्रे पु०।

**उदन्** न० उन्द्+कनिन्। उदके। "उदकशब्दादेशोऽयमि-त्यन्ये अन्यएवायं शब्द इत्यपरे। "धारावरैर्मेरोदभि र्भुन्दन्ति भूम" ऋ०१,८५,५ "अत्र त्मना भरते केतम्-दन्" ऋ०१,१०४,२,। उदन् उदनीत्यर्थ परमे व्योमन् इति वत् सप्तम्या लुक् नलोपाभावश्च

**उदन्त** पु० उदगतोऽन्तोनिर्णयो यस्मात्।१वार्त्तायाम् वृत्तान्ते कुशलादिकथने,। "श्रुत्वा रामः प्रियोदन्तम्" रघु "कान्तोदन्तः सुहृदुपनतः सङ्गमात् किञ्चिदून" मेघ० "एवंप्रायेण चासोदन्तेन"काद०। २साधौ,मे स्वार्थे कन्। तत्रैव उद्गतोऽन्तोऽस्य पाकस्यात् प्रा०ब०गतलोपः। ३पाकस्यात् प्राप्तान्ते त्रि० "यतमसदिति तदाग्नयेऽस्य-दन्तं तर्हि जुहुयादिति तद्वैनोदन्तं कुर्य्यादुप ह दृहे-द्यादुदन्तं कुर्य्यादन्तमपि स्वं दैत उपदग्धं तस्मान्नोदन्तं कुर्य्यात्" शत०ब्रा०२,२,१,१४, "अभिमन्त्र पाद्यमदन्तं पौष्णम्" कात्या० २५,२,१.

**उदन्तिका** स्त्री उदन्तमुद्गतान्तं करोति उदन्त+णिच्+ ण्वुल् टाप् अत इत्। तृप्तौ हारा०।

**उदन्य** नामधातु अतिगार्द्ध्येनोदकमिच्छति क्यच् निपा०उद-न्यति औदन्यीत् उदन्याम्–बभूव आस चकार। उदनिता-उदन्यिता उदन्या।

**उदन्या** स्त्री अतिगार्द्ध्येन उदकमिच्छति क्यजन्तात् अ। १पिपासायाम्।"व्यसृजदुदन्या शिशिरैः पयोभिः" भट्टि वेदे० बा०नयनार्थेऽपि क्यच्। २उदकनयने च "अथ-यत्रैतत्पुरुषः पिपासतिनाम तेज एव तस्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति" छा०उ० यथा च पुरुषस्य पिपासा भवति तद्भाष्ये समर्थितं यथा

"अथ यस्मिन् काल एतन्नाम पिपासति पातुमिच्छतीति पुरुषो भवति। अशिशिषतीतिवदिदमपि गौणमेव नाम भवति। द्रवीकृतस्याशितस्यान्नस्य नेतारः आपोऽन्नशुङ्ग देह क्लेदयन्त्यःशिथिलीकुर्य्युरब्बाहुल्याद्यदि तेजसा न शोष्यन्ते। नितराञ्च तेजसा शोष्यमाणास्वप्सु देह-भावेन परिणममानासु पातुमिच्छा पुरुषस्य जायते तदा पुरुषः पिपासति नाम तदेतदाह। तेजएव तत्तदा पीतमबादि शोषयेद्देहगतलोहितप्राणभावेन नयते परि-णामयति। तद्यथा गोनाय इत्यादि समानमेव। तत्तेज आचष्ट लोक। उदन्येति उदकं नयतीत्युदन्या उद न्येतीति छान्दसम्"। पिपासा च प्राणस्य धर्म्मः यथाह

शा०ति० "बुभुक्षा च पिपासा च प्राणस्य, मनसः स्मृतौ। शोकमोहौ, शरीरस्य जरामृत्यू, षडूर्मय"। उद्नः ध्ययम् उदन्य उदकसम्बन्धिनि त्रि० "विश्वा उदन्यया वर्षाधारा उदन्या इव" ऋ०२,७,३, "उदन्या उदकसम्बन्धिनी"भा०

**उदन्यु** त्रि० उदन्य–नामधातो उन्। पिपासौ "तृष्णजे न दिव उत्सा उदन्यवे" ५,५७,१, "हरि नवं ते ऽव ता उदन्युव" ऋ०६,८६,२७ उदन्युव उदके च्छावन' भा० छान्दस ।

**उदन्वत्** पु०उदकानि सन्त्यस्मिन् मतुप् उदन्भाव मस्य व। १समुद्रे "उदन्वदम्भ परिवीतमूर्त्ति" माघ। "नवैरुदन्वानिव चन्द्रपादै" कुमा० "आपकाम किलोदन्वान्" ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुष" रघु०। मेघे नि०। २उदकयुक्तमात्रे त्रि०" स्त्रियां ङीप्। "उहदन्वता परिदीया रथेन" ऋ०५,८३,७,"उदन्वता उदकयुक्तेन रथेन" भा० "उदन्वतीरनुदकाश्च या."ऋ०७,५०,४, [औदापीत्।

**उदप** याचाते भौवा पर० सक० सेट्। उदपति। औदपीत्

**उदपात्र** न० उदकपूर्णं पात्रम् उदादेश'। जलपूर्णे पात्रे "भिक्षामप्युदपात्रं वा सत्कृत्य विधिपूर्वकम्" मनुः।

**उदपान** पु०न० उदक पीयतेऽस्मिन् पा ल्युट् उदादेश'। कूपसमीपस्थे खाते क्षुद्रजलाधारे। "तड़ागा उदपानानि वाप्य प्रस्रवणानि च" निर्जलेषु च देशेषु खानयामास उत्तमान्। उदपानान्' रामा०। "सत्यवर्षप्रस्रवणोदपानोदकप्राय" सुश्रु०। ७त० उदपानमण्डूकः पात्रेसमितादि० ७स०युक्तारोह्या०। आद्युदात्तता।

**उदमान** पु० "कुल्या स्यादष्टभिर्द्रोणैर्द्रोणपादेन चाढक'। अस्याष्टशतिकोभाग उदमान इदाहृतः"इत्युक्ते मानभेदे।

**उदय** पु०उद्+इ–अच्। ज्योतिषोक्ते राशेरुदयरूपे १लग्ने। आधारे अच्। "येषेत्र दृश्यते भास्वान् स तेषामुदय स्मृत "इत्युक्तलक्षणे रवेर्दृश्योग्यस्थाने २उदयाचले पूर्व्व पर्व्वते। "उदयाचलव्यपाश्रितेन्दवपु" माघ "उदयगिरिवनालीबालमन्दारपुष्पम्" उद्भट। भावे अच्। ३प्रथमदर्शनयोग्यभवने, ४वृद्धौ, ६उन्नये ७उद्गमे "आक्रमोदय परग्लानि" माघ "प्रभातसमयमिव पूर्व्वदिग्भाग रागानुमेयमित्रोदयम्" काद०। "मघोदय माघमिवौषधीनाम्" "निवातस्तिमिता वेला चन्द्रोदय इवोदधे" "उदयमस्तमयञ्च रघूद्वहात्" रघुः। "अपमेघोदय वर्षमदृष्टकुसुम फलम्"। "यौ तु स्नमापत्रोषौ तौ भूतानां प्रलयोदयौ"। कुमा० "उदये मदवाच्यमुज्झता"। "आगमै सदृशारम्भ आरम्भसदृशोदय"। "प्रस्तुताभ्युदयापवर्गयो" रघु। "शैलाङ्कुरः प्रागुदयादिवाम्भ" कुमा०८उत्कर्षे। "विजितजगत्त्रयोदयम्" माघ। ग्रहाणामुदयश्च स्वाधिष्ठितराशीनामुदयात् "निजनिजोदयलग्नसमुद्गमे ससदयोऽपि भवेद्गनभःसदाम्" सि० शि०। राशीनां देशभेदेनोदयकालविशेषः सि० शि०। तत्रादौ निरक्षदेशलङ्कादौ तन्मानसाधन' यथा "एकस्य राशेर्बृहती च्युक्ता या द्वयोस्त्रिभस्यापि हतीस्तवानाम्। स्वस्वापमज्याकृतिवर्जितानां मूलानि तासां त्रिगुणा २४३८ हतानि। स्वस्वद्युमौर्व्या विभजेत् फलानां चापान्यधोऽध परिशोधितानि। क्रमोत्क्रमस्थानि निरक्षदेशे मेषादिकानामुदयासव स्यु" शि०। "एकस्य राशेर्बृहती ज्येत्यष्टमी ज्या। द्वयोरिति षोड़शी ज्या। त्रिभस्येति त्रिज्या। आसां वर्गितानां स्वकीयस्वकीयक्रान्तिज्यावर्गैर्वर्जितानां मूलानि त्रिज्यागुणितानि स्वस्वद्युज्यया विभजेत्। फलानां चापान्यधोऽध परिशोधितानीति तृतीयात् द्वितीयं द्वितीयात् प्रथमं शोध्यम्। प्रथम तथाविधमेव। एव लङ्कोदयासव स्युः। अत्रोपपत्ति। अत्रोदय क्रान्तिवृत्तस्य तिर्यक्स्थितत्वात् त्रयस्त्रिंश वेलाप्युदयन्ते। तद्यथा। मेषान्तस्य ज्या क्रान्तिवृत्ते कर्ण। तत्क्रान्तिज्या तद्याम्योत्तरे भुज। तद्वर्गान्तरपदं मेषान्तेऽहोरात्रवृत्ते कोटि। एवं राशिद्वयस्य ज्या कर्ण। तत्क्रान्तिज्या भुज। तद्वर्गान्तरपदं वृषभान्तेऽहोरात्रवृत्ते कोटि। एवं त्रिराशिज्या कर्ण परमाक्रान्तिज्या भुज। परमाल्पद्युज्या कोटि। एता कोटयश्चापकरणार्थं त्रिज्यावृत्ते परिणामिता त्रिज्यागुणा स्वस्वद्युज्ययाभक्तास्तासां चापानि। प्रथम मेषोदयस्य काल। द्वितीयं राशिद्वयस्य। तृतीय राशित्रयस्य। अतो विश्लेषितानीत्युपपन्नम्। इदानीं प्रकारान्तरेणाह" प्रमि०। "कोटादिराश्यन्तजकोटिजीवास्त्रिज्या २४३८ गुणा स्वस्वदिनव्ययाप्ता'। चापीकृता' प्राग्वदधो वियुक्ताः कोटादिकानामुदयासवो वा" शि०। "कोटादिराश्यन्तजकोटिजीवास्ता एकद्वित्रिराशिज्या भवन्ति ।७१६।२९७७ ।२४३८। एतास्त्रिज्यया गुणया स्वस्वदिनज्यया भक्ता इति। यैव वृषभान्ते द्युज्या सैव कीटान्तेऽपि ३२१८। यैव मेषान्ते द्युज्या सैव सिंहान्तेऽपि ३३६६। कन्यान्ते द्युज्या त्रि-

काशादसकृत् कालं । चेत् सावना ग्रहैरभीष्टमाड्यस्त दैव तात्कालिकस्तिग्मरश्मे ॥ आचार्य्यो यदेष्टघटिका विलग्नं कालश्च तत्रौदयिकात् सकृत्'शि०। 'अर्कस्य भागभुक्तभोग्यकालं साध्यं । लग्नस्य सायनांशस्य भुक्तकालः साध्य तयोरैक्यमर्कादग्रतो लग्नपर्य्यन्तं ये मध्ये राशयस्तेषामुदयाश्च क्षेप्यास्तत्रैव । एवं लग्नात् कालो भवति । अत्र यद्येकराशौ लग्नार्कौ भवतस्तदा तयोरन्तरांशैः स्वोदयं सङ्गुण्य त्रिंशता भजेत् फलमिष्टकालं स्यात् । परं यद्यर्कल्लग्नमधिकम् । यद्यल्पं तदा स कालोऽहोरात्राच्छोध्यः । शेषमिष्टकालं स्यात् । अत्रेष्टकालसाधनेऽर्कस्य भोग्यमौदयिकादेव क्रियते । यतः कालज्ञानात् तात्कालिकत्वमर्कस्य कार्य्यम् । अतः स्थूलः कालः आयाति । अनेन कालेन तात्कालिकमर्कं कृत्वा मुहुः कालं साधयितुमुच्यते । परं यदि ग्रहैः सावनघटिका दृष्टा । एतदुक्तं भवति । उदयानन्तरमेतावतीष्वर्कसावनघटिकासु कीदृग् लग्नं भवतीत्येतदभीष्टं तदैव तात्कालिकार्काल्लग्नं साध्यते तदैव च लग्नादसकृत् कालं । यदा पुनरिष्टघटिका आचार्य्यस्तदौदयिकादेवार्काल्लग्नं लग्नात् कालं सकृत् । अत्रोपपत्तिः सुगमा । तात्कालिकीकरणकारणता गोले कथिता व्याख्याता च । इदानीं विलोमेन लग्नसाधनमाह' प्रमि० । "भुक्तांशशुद्धे विपरीतलग्नं भुक्तांशगेहाप्रलवोनितोऽर्कः" शि० "यदोदयात् पूर्वघटीषु लग्नमिष्टं तदा शेषासुभ्यो विशोध्य तात्कालिकमर्कं कृत्वा तस्य भुक्तासवः साध्यास्तानिष्टासुभ्यो यावन्त उदया विशुध्यन्ति तावतो विलोमेन विशोधयेत् । शेषात् खरामगुणितादविशुद्धोदयभक्ताद् ये लब्धा अंशास्तैरर्कभुक्तांशैश्च तथा विशुद्धोदयतुल्यै राशिभिश्चोनीकृतो रविर्लग्नं भवति" प्रमि० । होराद्रेष्काणोदयसाधनमपि तत्रैव यथा "स्वेतरा स्थूलत्वात् स्थूला उदया भवन्ति राशीनाम् । सूक्ष्मार्थी होराणां कुर्य्याद्द्रेष्काणकानां वा" शि० "यथा राश्युदयाः साधितास्तथा होरोदया अपि साध्याः । तद्यथा पञ्चदशत्रिंशद्दशभागोत्तरभागानां ज्या होराज्या पृथक् भवन्ति । ताभिर्मिथुनान्तद्युज्या ३१४१ पृथक् पृथग्गुणया स्वस्वद्युज्यया भाज्या। फलानां धनूंष्यधोऽधः शुद्धानि । पश्चात् पञ्चम पञ्चमाष्टतुर्थमित्यादि । शेषाणि होरोदयासवो भवन्ति । एवं दशादिदशोत्तरभागैर्द्रेष्काणोदया भवन्ति । ते च नव । तथा होराणामाह षट् चराणि । यान्यधोऽधः शुद्धानि तानि तेषां चरखण्डानि तैः क्रमोत्क्रमस्थैः क्रमोत्क्रमस्था ऊनयुताः सन्तः स्वदेशे होरोदया भवन्ति। मेषादीनां द्वादश, ते च व्यस्तास्तुलादीनाम् । एवं चतुर्विंशतिः २४। एवमेव द्रेष्काणोदयाः षट्त्रिंशत् । तथा चार्कस्य सायनांशस्य भागाः पञ्चदश १५ हृता गता होराः स्युः । शेषांशास्ते भुक्तास्ते पञ्चदशभ्यः शुद्धा भोग्यांशाः स्युः । भोग्यांशघ्नं स्वदेशहोरोदयं पञ्चदशहृतं फलं भोग्यासवः स्युस्तानिष्टासुभ्यो विशोध्य तदग्रतो होरोदयांश्च शोधयेत् ॥ शेषं पञ्चदशगुणमशुद्धहोरोदयेन भजेत् फलं लवाः । अशुद्धपूर्वाणां होरोदयानां सङ्ख्यया गुणितैः पञ्चदशभिर्युताः सन्तो लग्नस्यांशा भवन्ति । एवं लग्नात् कालसाधनेऽपि । एवमेव द्रेष्काणोदयैरपि लग्नसाधनम् । तत्र पञ्चदशस्थाने दश १० गुणने भजने च कल्प्या । एवं होरोदयैर्द्रेष्काणोदयैर्वा साधितं लग्नादिकमुदयान्तराख्यं कर्म च सूक्ष्मं भवति अन्यथा स्थूलम्" प्रमि० ।

ग्रहाणामुदयान्तरकर्म तत्रोक्तम् "भानोः फलं गुणितमर्कयुतस्य राशेर्व्यक्षोदयेन खखनागमहीं १८०० विभक्तम् । गत्या ग्रहस्य गुणितं द्युनिशासुभक्तं स्वर्णं ग्रहेऽर्कवदिदं तु भुजान्तराख्यम्" शि०। "अर्कस्य यद्भुजफलं यस्मिन् राशौ रविर्वर्त्तते तस्य राशेः सम्बन्धी यो निरक्षोदयस्तेन तद्गुणितराशिकलाभिः १८०० भक्तं पुनर्ग्रहगत्या गुणितमहोरात्रासुभिः २१६५८ भक्तं यत् फलं तद्ग्रहेऽर्कवत् धनर्णं कार्य्यम् । यद्यर्कस्य भुजफलम् धनं, तदा सूर्य्यस्यान्येषां च धनम् । यदि ऋणं तदा ऋणमित्यर्थः । अत्रोपपत्तिः । ये मध्यमार्कोदयिकास्ते स्फुटार्कोदयिकाः क्रियन्ते । तत्रार्कफलस्यासुकरणायानुपातः । यदि राशिकलाः १८०० निरक्षोदयासुभिर्लभ्यन्ते तदा फलकलाः कतिभिरिति । लब्धा भास्वत्फलोत्था असवो भवन्ति । अथान्योऽनुपातः । यदि द्युनिशासुभिर्गतिकला लभ्यन्ते तदैभिः किमिति । ता कला ऋणं धनं च यतो मध्यमार्कोदयात् प्राक् स्फुटार्कोदयः स्यादृणे तत्फले स्वं यतोऽनन्तरमित्युपपन्नम् । इदानीमुदयान्तरमाह" प्रमि० । "युक्तायनांशस्य तु मध्यमस्य भुक्तासवोऽर्कस्य निरक्षदेशे । मेषादिभुक्तोदययुता ये ग्रहायनांशान्वितमध्यभांशाः । लिप्तागणस्तद्विवरेण निघ्नी गतिर्ग्रहस्य द्युनिशासुभक्ता । स्वर्णं ग्रहे चेदसवोऽधिकोनाः इदं ग्रहाणामुदयान्तराख्यम्" शि० "मध्यमार्कस्य सायनांशस्य ये राशेर्भुक्तभागास्तैस्तदुदय

निरक्षदेशीयं संगुणन् त्रिंशता विभजेत् फलं तस्य राशेर्भुक्तासवः । अथ मेषाद्या येऽर्केण भुक्ता राशयस्तेषां च निरक्षोदयासवस्तान् योजयेत् मेषादिभुक्तोदयासवः । अथ मध्यमार्कस्य सायनांशस्य कलाः कार्याः । तासां कलानां तेषामसूनां च यदन्तरं तेन चक्रगतिगुणया द्युनिशासुभिर्भाज्या लब्धाः कला रवौ धनं कार्या यदि कलाभ्योऽसवोऽधिकाः स्युः, यदि न्यूनास्तदा ऋणम् । अत्रोपपत्तिः । इह द. पूर्वमहर्गणे कृत समध्यमसायनमानेन स्फुटसायनस्य चलनात् । रविमध्यगतिकलासत्त्वासुभिः सहिता नाक्षत्रा षष्टिघटिकाः ६०,५९,८ । इह मध्यममर्कसावनम् । ता गतिकला यैरसुभिरुदयन्ति तद्युता षष्टिघटिका स्फुटसावनम् । तदुक्तम् । प्रत्यहं गत्यन्तरात् प्रतिमासं राश्युदयान्तराच्च । तात्पर्योऽहर्गणे कर्तुं नायातीति मध्यमं कृतं । तेन मध्यमार्कोदये स्पष्टा न भवन्ति कदाचिदर्कोदयात् प्राक् कदाचिदनन्तरम् । अत एव भागुक्तम् । "दशशिर उपरि मध्यमभास्करे क्षितिजसन्निधिगे सति मध्यम" शि० इति । अथ स्फुटमध्याहर्गणयोरन्तरानयनम् । मेषादेरारभ्य येऽर्कभुक्ता राशयस्ते यैरसुभिरुदयन्ति त एकोनता । तावत्यसात्मके काले अदिनान्तादूर्द्ध्वमहर्गणेन भवितव्यम् । अथ च मेषादिभुक्तकलातुल्येऽन्तरे कृत । अतोऽसूनां कलानां च यदन्तरं तावद्भिरसुभिरहर्गणोऽन्तरित । यदहोरात्रासुभिर्गतिर्लभ्यते तदैभिरन्तरासुभिः किमिति । फलं चक्रेषु स्वं यद्यसवोऽधिकाः । अन्यथा ऋणमित्येतदुक्तमुक्तमेव" । इदानीं येऽस्वोदयान्तरस्य वासना न बुध्यन्ति तेषां प्रतीत्यर्थमन्यदप्याह" प्रमि० । "चेत् स्वोदयैः स्फुटरवेरसवः कृताश्चे विश्लेषिताश्च यदि मध्यरवेः कलाभिः । बाहून्तराख्यमुदयान्तरकं चराख्यं कर्मत्रयं विहितमौदयिके तदा स्यात्" शि० । "यदि स्फुटरवेः स्वोदयेन भुक्तासवः कृता मेषादिस्वोदयैश्च युतास्तेषामसूनां मध्यमार्ककलानां च यदन्तरं तेन भुक्तिर्गुणिता द्युनिशासुभिर्भक्ता यद्यसवोऽधिकास्तदा फलं रवौ स्वम् । अन्यथा ऋणम् । एवं कृते सति भुजान्तरमुदयान्तरं चराख्यं च कर्मत्रयमपि कृतं स्यादौदयिके रवौ । इदानीं प्रकारान्तरेणौदयिककर्माह" प्रमि० । "मध्याद्रवेरयनभागयुताद्द्विनिघ्नाद्दोर्ज्या खगुर्गतिगुणा खनगाश्वि २७० भक्ता । स्वर्णं रवौ युगयुजोः पदयोर्विलिप्तास्वेवं स्फुटं खलु भवेदुदयान्तरं वा" शि० । "मध्यमार्कस्य सायनांशस्य द्विगुणितस्य या चतुःखरसार्कदोर्ज्या तया गुणिता चक्रगतिः, खनगाश्व २७० हृता फलं विकलादि रवौ धनम् । एवं युग्मपदस्थितेऽर्के । अयुग्मपदस्थिते ऋणम् । अत्रोपपत्तिः । क्रान्तिवृत्तस्य चत्वार्यपि पदानि पृथक् पृथक् पञ्चदशभिः पञ्चदशभिर्घटिकाभिरुदयन्ति । परमेकैको राशिः पञ्चभिरत उदयान्तरकर्म पदमध्यं यावदुपचीयते ततोऽपचीयते । अत एव पदान्तरेषु तस्याभावः । पदमध्येषु परमता । यदत्र निरक्षोदयैः कर्म दर्शितं तद्बालावबोधार्थम् । तत् स्थूलम् उदयानां स्थूलत्वात् । अत एवाचार्यैः सुखार्थं स्थूलोदयाः पठिताः"। इदमुदयान्तरं कर्म यथा सम्भवति तथोच्यते । मध्यमार्कस्य सायनांशस्य दोर्ज्या द्युज्या च कृत्वा तया द्युज्यया सा दोर्ज्या भाज्या त्रिद्युमान्त्यद्युज्यया गुणनीया । तस्या धनुषो दोःशेषे मध्यमार्कस्य सायनांशस्य भुजकला ऊना सत्य स्फुटा अन्तरासवो भवन्ति । तैरुदयोऽन्तरित इत्यर्थः । एवं पदमध्ये षड्विंशति पलानि किञ्चिदधिकानि भवन्ति । तानि ज्याप्रकारेण साधयितुमर्कौ द्विगुणितः । द्विगुणितस्यार्कस्य यावद्भुजं क्रियते तावत् पदमध्ये राशित्रयं भवति । तद्दोर्ज्यया त्रिज्यातुल्यया षड्विंशत्या चानुपातः । यदि त्रिज्यामितया दोर्ज्यया षड्विंशतिर्लभ्यते तदाभीष्टया किमिति । अत्र षड्विंशत्या त्रिज्या अपवर्त्तिता गुणकस्थाने रूपम् १ । हरस्थाने सार्धाश्चत्वारः । फलं पानीयपलानि । पुनरन्योऽनुपातः । यदि पानीयपलषष्ट्या गतिकलातुल्या विकला लभ्यन्ते तदैभिः किमिति । पूर्वं लब्धौ दोर्ज्या गुणः सार्धाश्चत्वारो हरः । इदानीं षष्टिर्हरः अतो चक्रगतदोर्ज्या गुणः । हरयोर्घातो हरः खनगाश्विन २७० इत्युपपन्नम् । ओजपदेऽसवः कलाभ्य ऊना एव भवन्त्यतस्तत्र ऋणम् । युग्मपदे त्वधिका अतस्तत्र धनम्" प्रमि०

चन्द्रस्य दृश्यादृश्ययोः चन्द्रे विशेषस्य च निरूपणं तत्रैव "निशीष्टलग्नादुदयास्तलग्ने न्यूनाधिके यस्य खगः स दृश्यः । दिनेऽपि चन्द्रो रविसन्निधानाभावाच्च गतश्चेत् सति दर्शने भा" शि० । "दिनकरेऽस्तंगते यदिष्टकाले लग्नं तदिष्टलग्नम् । तस्माद्ग्रहस्योदयाख्यलग्नं न्यूनमस्ताख्यं चाधिकं यदि भवति तदा ग्रहो दृश्यः इतोऽन्यथा चेददृश्यः । एवं लक्षणे सति चन्द्रो दिवसेऽपि दृश्यः । यदि ग्रहो दृश्यस्तदा ग्रहस्य छाया साध्या" प्रमि० ।

ताराग्रहाणामुदयास्तमययोर्विशेषः यथा सू० सि० रङ्गना०। "अथोदयास्तमययोः परिज्ञानं प्रकीर्त्यते । दिवा

करकराक्रान्तमूर्त्तीनामल्पतेजसाम्'' सू० । ''अथ नक्षत्रग्रहयुत्यधिकारानन्तरम् । सूर्य्यकिरणाभिभूता मूर्त्तिर्बिम्बं येषां तेषां चन्द्रादिषड्ग्रहाणां नक्षत्राणाञ्च । अतएवाल्पतेजसां न्यूनप्रभावतामुदयास्तमययोः अस्मिन्काले सूर्य्यादधिकासन्निहितसन्निहितत्वसम्भावनया क्रमेणोदयास्तयोः सूर्य्यात् च्युतस्य यस्मिन् काले यदन्तरेण प्रथमदर्शनं सम्भावितं स उदयः । सूर्य्याद्दूरस्थितस्य यस्मिन् काले यदन्तरेण प्रथमादर्शनं सम्भावितं सोऽस्तः । अनेन नित्योदयास्तव्यवच्छेदस्तयोरित्यर्थः । परिज्ञानं सूक्ष्मज्ञानप्रकारः प्रकीर्त्यते अतिसूक्ष्मत्वेन मयोच्यत इत्यर्थः । तथा च ग्रह इत्युद्देशेऽस्तमनमुद्दिष्टमपि तस्य पूर्वमेव सूर्यासन्नत्व एव सम्भवात् तद्विलक्षणतया ग्रहयुतिप्रसङ्गे नोक्तम् । नक्षत्रग्रहयुतिस्तु ग्रहयुतिवदिति तदनन्तरमुक्ता । अतः प्रतिबन्धकजिज्ञासापगमेऽवश्यवक्तव्यत्वादवसरसङ्गतित्वात् तत्सङ्गत्या नक्षत्रग्रहयुत्यधिकारानन्तरं प्रागुद्दिष्टमस्तमनं तत्प्रसङ्गादुदयश्च प्रतिपाद्यत इति भावः । तत्र प्रथमं पञ्चताराणां पश्चिमास्तपूर्वोदयावाह'' र०ना०। ''सूर्य्यादभ्यधिकाः पश्चादस्तं जीवकुजार्कजाः । ऊनाः प्रागुदयं यान्ति शुक्रज्ञौ वक्रिणौ तथा'' सू० ''वक्रगतौ शुक्रबुधौ तथा सूर्य्यादधिकौ पश्चिमास्तं गच्छतः । सूर्य्यादूनौ पूर्वोदयं प्राप्नुतः । शेषं स्पष्टम् । अथ चन्द्रबुधशुक्राणां पूर्वास्तपश्चिमोदयावाह र०ना० । ''ऊना विवस्वतः प्राच्यामस्तं चन्द्रज्ञभार्गवाः । व्रजन्त्यभ्यधिकाः पश्चादुदयं शीघ्रयायिनः'' सू०। ''शीघ्रयायिनः सूर्य्यगत्यधिकगतय इत्यर्थः । एतेन बुधशुक्रावर्कगत्यल्पगती सूर्य्यादूनौ पूर्वास्तमधिकौ च पश्चिमोदयं न प्राप्नुत इत्युक्तम् । शेषं स्पष्टम् । अत्रोपपत्तिः । रविगतितोऽल्पगतिर्ग्रहोऽर्कादूनश्चेत् प्राच्यां दर्शनयोग्यो भवितुमर्हति । यतः सूर्य्यस्याधिकगत्येन बहुगतित्वात्तोत्तरोत्तरमधिकविप्रकर्षात् प्रवहवशेन न्यूनस्य पूर्वमुदयादधिकस्यानन्तरमुदयनियमात् । ग्रहस्य क्रान्तिजसलग्नताकालानन्तरं यावत् सूर्य्यस्य तादृशकालस्तावत्पर्य्यन्तं विप्रकर्षे दर्शनसम्भवात् । एवं यदाल्पगतिः सूर्य्यादधिकस्तदा प्रवहवशेनार्कस्य पूर्वमुदयादनन्तरमुदितग्रहस्य दर्शनासम्भवात् प्रवहवशेनादौ न्यूनार्कस्यास्तसम्भवादनन्तरमधिकग्रहस्यास्तसम्भवात् सूर्य्यास्तानन्तरं पश्चिमभागे ग्रहदर्शनसम्भवेऽप्यधिकगतिसूर्य्यस्य पृष्ठस्थितत्वेनोत्तरोत्तरमधिकसन्निकर्षात् पश्चिमायामदर्शनं सम्भवत्येव । ते तु भौमगुरुशनयः । वक्रत्वे न्यूनगतित्वाद्बुधशुक्रौ चेति । अथार्कगतितोऽधिकगतिर्ग्रहः । सूर्य्यादूनस्तदोक्तरीत्योत्तरोत्तरमधिकसन्निकर्षात् पूर्वस्मिन्नदर्शनं याति । यदा सूर्य्यादधिकस्तदोक्तरीत्योत्तरोत्तरमधिकविप्रकर्षात् पश्चिमायामुदयः । ते तु शीघ्राश्चन्द्रबुधशुक्रा इत्युपपन्नमुक्तम् । अथाभीष्टदिने आसन्ने सूर्य्योदयास्तकालिकौ सूर्य्यदृग्ग्रहौ तत्कालज्ञानार्थं कार्य्यावित्याह'' र०ना०। ''सूर्य्यास्तकालिकौ पश्चात् प्राच्यामुदयकालिकौ । दिवाकरग्रहौ कुर्य्याद्दृक्कर्माथ ग्रहस्य तु'' सू०। ''पश्चात् पश्चिमास्तोदयसाधनेऽभीष्टदिने आसन्ने सूर्य्यग्रहौ सूर्य्यास्तकालिकौ कुर्य्याद्गणकः । पूर्वास्तोदयसाधने सूर्य्योदयकालिकौ कुर्य्यात् दिनेऽभीष्टकाले कुर्य्यात् । चकारो विकल्पार्थकः । अनन्तरं ग्रहस्य दृक्कर्म आयनमाक्षदृक्कर्मद्वयं कुर्य्यात् । तुकारः आक्षदृक्कर्मस्यैव पूर्वोद्दिष्टमिति विशेषार्थकः । अत्रोपपत्तिः । पश्चादस्तोदयसाधने पश्चिमायां तद्दर्शनमिति सूर्य्यास्तकालिकौ सूर्य्यग्रहाववशिष्टकालाद्यसाधनार्थं सूक्ष्मौ । पूर्वोदयास्तसाधने पूर्वदिशि तद्दर्शनमिति सूर्य्योदयकालिकौ सूर्य्यग्रहाववशिष्टकालाद्यसाधनार्थं सूक्ष्मावन्यकाले तु किञ्चित्स्थूलावपि कृतौ दृक्कर्मसंस्कृतग्रहस्य सूर्य्यवत् क्षितिजसंलग्नतायोग्यत्वाद्दृक्कर्मसंस्कृतो ग्रहः कार्य इति । अथेष्टकालानयनमाह'' र०ना०।''ततो लग्नान्तरप्राणाः कालांशाः षष्टिभाजिताः । प्रतीच्यां षड्भयुतयोस्तद्वल्लग्नान्तरासवः'' सू०। ''ततस्ताभ्यां सूर्य्यदृग्ग्रहाभ्यां लग्नान्तरप्राणाः ''भोग्यासूनूनकस्याथ'' इत्युक्तप्रकारेणान्तरकालासवः षष्टिभक्ता इष्टाः कालांशा भवन्ति । प्रागुदयास्तसाधने प्रतीच्यां, पश्चिमोदयास्तसाधने षड्भयुतयोः षड्राशियुक्तयोः सूर्य्यदृग्ग्रहयोर्लग्नान्तरासवः । असन्तरासवस्तद्वत् षष्टिभक्ता इष्टकालांशा भवन्तीत्यर्थः । अत्रोपपत्तिः । दृग्ग्रहसूर्य्याभ्यामन्तरकालो ग्रहस्य सूर्य्योदयकाले दिनगतः पूर्वोदयास्तनिमित्तसुपयुक्तम् । एवं पश्चिमोदयास्तनिमित्तं सूर्य्यदिग्ग्रहाभ्यामस्तकालासुभिरन्तरकालः सूर्य्यास्तकाले ग्रहस्य दिनशेषकाल उपयुक्तः तत्रास्तकालानामनुक्तेरुदयासुभिः साधनार्थं सषड्भौ सूर्य्यदृग्ग्रहौ कृतौ स कालोऽस्तात्मकः । यदि अहोरात्रासुभिश्चक्रकलातुल्यं यैरंशा लभ्यन्ते तदेष्टासुभिः क इत्यनुपाते प्रमाणफलयोः फलापवर्त्तनेन हरस्थाने षष्टिः । अतोऽस्तात्मकान्तरकालः षष्टिभक्त इष्टकालांशा इत्युपपन्नमुक्तम् । अत्रेदमवधेयम् । सूर्य्योदयकालि-

काभ्यामर्कदृग्ग्रहाभ्यामानीतेन दिनगतेन पूर्वं चास्तो-दृग्ग्रहः । सूर्यास्तकालिकाभ्यां सषड्भाभ्यामर्कदृग्ग्रहा-भ्यामानीतेन दिनशेषेणाग्रे चास्य सषड्भो दृग्ग्रहः । क्रमेण पश्चोदयास्तकाले प्राक्पश्चिमदृग्ग्रहौ भवतः । ताभ्यां सूर्यषड्भसूर्याभ्यां च क्रमेण पूर्वोत्पन्नान्तर-कालो ग्रहस्य सूर्योदयास्तकाले क्रमेण दिनगतशेषौ मानतो पश्चिमप्राक् कालांशाविष्टौ यतो । अथेष्टकालि-काभ्यामानीतकालेन पूर्वोक्ताभ्यां प्राक्पश्चिमदृग्-ग्रहाभ्यां सूर्यषड्भयुताभ्यां चानीतकालो नाशतोऽपि सूक्ष्मश्च । सूर्योदयास्तसम्बन्धाभावात् तदुत्पन्ना का-लांशा अपि तथा । अथ सूर्योदयास्तकालिकाभ्यामानी-तेष्टकालात् कालांशा स्थूला इष्टकालिकाभ्यामा-नीतेष्टकालात् कालांशा अतिसूक्ष्मा उभयत्र कालस्य साधनत्वात् । न हि सायनपश्चिमदृग्ग्रहकपरिपूर्त्तिर्येन सूक्ष्मा सिद्ध्यन्तीति । अथ यैः कालांशैरुदयोऽस्तो वा भवति तान् विवक्षुः प्रथमं गुरुशनिभौमानां कालांशानाह र० ना० । "एकादशामरेज्यस्य तिथिसङ्ख्यार्कजस्य च । अस्तांशा भूमिपुत्रस्य दशसप्ताधिकास्ततः" सू० । "तत इष्टकालांशायगमानन्तरमस्तांशाः । अस्तो यैरंशैर्भवति तेऽंशा अ-स्तोपलक्षणादुदयांशा ज्ञेयाः । अमरेज्यस्य गुरोरेकादश कालांशाः । शनेः पञ्चदश सङ्ख्या कालांशानाम् । च सम-च्चये । भौमस्य सप्ताधिका दश सप्तदश कालांशा इत्यर्थः । अथ शुक्रस्याह र० ना० । "पश्चादस्तमयोऽष्टाभिरुदयः प्राङ्-महत्तया । प्रागस्तमुदयः पश्चादल्पत्वाद्दशभिर्भृगोः" सू० "शुक्रस्य महत्तया वक्रत्वेन नीचासन्नत्वात् स्थूलबिम्बतया पश्चिमायामस्तोऽष्टाभिः कालांशैः प्राच्यामुदयश्च तै-र्नाधिकैः । प्राच्यां शुक्रस्याल्पत्वादणुबिम्बत्वाद्दशभिः कालांशैरस्तं गच्छेत्, कुर्यात् नाल्पैः । पश्चिमायामु-दयस्तस्याणुबिम्बस्य दशभिः कालांशैरेव ज्ञेयः । अथ बुध-स्याह र० ना० "एवं बुधो द्वादशभिश्चतुर्दशभिरंशकैः । वक्री शीघ्रगतिश्चार्कात् करोत्यस्तमयोदयौ" सू० । "वक्री शीघ्रगतिः" । च समुच्चये । बुधः सूर्याद्द्वादशभिश्चतुर्दशभिश्च कालांशै-रस्तोदयौ एवं शुक्रवत् करोति । पश्चादस्तं प्रागुदयं च द्वादशभिः कालांशैर्महाबिम्बतया बुधः करोति । प्रागस्तं पश्चादुदयं च चतुर्दशभिः कालां-शैरणुबिम्बत्वाद्बुधः करोतीत्यर्थः । अथ प्रोक्ते-ष्टकालांशाभ्यामस्तोदययोः का गतैष्यता इत्याह" र० ना० । "एभ्योऽधिकैः कालभागैर्दृश्या न्यूनैरदर्शनाः । भवन्ति लोके खचरा भानुभाग्रस्तमूर्त्तयः" सू० । "एभ्य एकादशामरेज्यस्येति श्लोकद्वयोक्तेभ्योऽधिकैरिष्टकालांशै-र्ग्रहा दर्शनयोग्याः अभीष्टकाले ग्रहा भवन्ति । तथा चास्तसाधने इष्टस्य अस्त एष्यः । उदयसाधने इष्टस्य उदयो गत इति भावः । अल्पैरिष्टकालांशैर्ग्रहाः लोके भूलोके अदर्शनाः न विद्यते दर्शनं दृष्टिगोचरता येषां ते अदृश्या अभीष्टकाले भवन्ति । ननु दृश्याः, कुतो भवन्तीत्यत आह । भानुभाग्रस्तमूर्त्तय इति सूर्यासन्न-त्वेन सूर्यकिरणदीप्त्या ग्रस्ता अभिभूता सूर्यकिरणप्रति-हतलोकनयनविषयो मूर्त्तिर्बिम्बस्वरूपं येषां ते इत्यर्थः । तथा चास्तसाधने अदृश्यत्वेऽस्तो गतः । उदयसाधनेऽदृ-श्यत्वे उदय एष्य इति भावः । अत एव । "उक्तेभ्य ऊना-भ्यधिका यदोष्टा स्तेष्टोदयो गम्यगतस्तदा स्यात् । अतोऽन्यथा चास्तमयोऽवगम्यः," इति भास्कराचार्योक्तं स-ङ्गच्छते । अत्रोपपत्तिः उक्तकालांशतुल्येष्टकालांशे यत्काले ग्रहो साधितो तत्काले एव ग्रहस्योदयोऽस्तो वा केवल । उक्तकालांशानां सूर्यसान्निध्यजनिताद्यन्तग्रहादर्शने हेतु-त्वप्रतिपादनात् । तथा चेष्टकालांशा उक्तेभ्योऽल्पास्तदा ग्रहस्यास्तङ्गतत्वमेवेत्युदयसाधने इष्टकालांशा उक्तेभ्योऽल्पा-स्तदेष्टकालादग्रे ग्रहस्योदयः । यदीष्टकालांशा उक्तेभ्यो-ऽधिकास्तदेष्टकालाद् ग्रहस्योदयः पूर्वं जातः । एवमस्तसा-धने इष्टकालांशा अधिकास्तदेष्टकालादग्रे ग्रहास्तः । यदीष्टकालांशा न्यूनास्तदेष्टकालात् पूर्वं ग्रहास्तो जात इत्युपपन्नमुक्तम् । अथोदयास्तयोर्गतैष्यदिनाद्यानयनमाह" र० ना० । "तत्कालांशान्तरकला भुक्त्यन्तरविभाजिताः । दि-नादि तत्फलं लब्धं भुक्तियोगेन वक्रिणः," सू० । "उक्तेष्ट-कालांशयोरन्तरस्य कलाः सूर्यग्रहयोर्गत्योः कलात्मकान्तरेण भक्ताः । दिनादिकमुदयास्तयोः फलमुदयास्तयोर्गतैष्यदिनाद्यं भवतीत्यर्थः । वक्रगतिग्रहस्य विशेषमाह । लब्धमिति । वक्रिणो वक्रग्रहस्य भुक्तियोगेन सूर्यग्रहयोः कलात्मक-गतियोगेन भक्तां फलं गतैष्यदिनाद्यं ज्ञेयम् । अत्रो-पपत्तिः । यदा सूर्यग्रहयोर्गत्यन्तरकलाभिरेकं दिनं तदे-ष्टप्रोक्तकालांशयोरन्तरकलाभिः किमित्यनुपातेनोदयास्तयो-रभीष्टकालाद्गतैष्यदिनाद्यवगमः । वक्रग्रहे तु सूर्यग्रहयोर्ग-तियोगेन सत्यहमन्तरस्य गतियोगादनुपात उपपन्न इत्यु-पपन्नमुक्तम् । अथ ग्रहगतिकलयोः क्रान्तिवृत्तस्थत्वात् कालांशान्तरस्याहोरात्रवृत्तस्थत्वाच्चानुपातः प्रमाणेच्छयो-र्वैजात्येनायुक्त इति मनसि धृत्वा तयोरेकजातित्वसम्पा-

टनार्थं गृहगत्योरिच्छाजातीयस्य वद्रसदन्तरेणानुपातस्तु युक्त एवेत्याह' र० ना० । 'तल्लग्नासुहृते भुक्ती षष्टाद्ययतोद्धृते । स्याता कालगती ताभ्यां दिनादि गतगम्ययो'' स्र० । 'भुक्ती रविगृहयोर्गती कलात्मिके तल्लग्नासुहृते कालसाधनार्थं गृहस्य यो राश्युदयो ष्टष्टीतस्तेनाखात्मकोदयेन गुणिते षष्टाद्ययतेन भक्ते फले सूर्यग्रहयोः कालात्मके कालगती स्याताम् । ताभ्यां गतिभ्यां गतगम्ययोरुदयास्तयोर्दिनादि पूर्वोक्तप्रकारेण साध्यम् । न तु पूर्वोक्तप्रकारेण, यथास्थित गतिभ्यां स्थूलत्वापत्ते । अत्रोपपत्ति । यदि एकराशिकलाभीराश्युदयासवस्तदा गतिकलाभि क इत्यनुपातेनाहोरात्रवृत्ते गत्यसव कलासमा इत्युपपन्नमुक्तम् । अथ नक्षत्राणां सूर्यसान्निध्यवशादस्तोदयज्ञानार्थं कालांशान् विवक्षु प्रथममेषामाह' र०ना० । "स्वात्यगस्त्यमृगव्याधचित्राज्येष्ठा पुनर्वसु । अभिजिद्ब्रह्महृदयं त्रयोदशभिरर्कैः'' सू० । "मृगव्याधो लुब्धक । त्रयोदशभि कालांशैरस्ताद्दृश्यानि नक्षत्राणि भवन्ति । शेष स्पष्टम् । अथान्येषामाह''र०ना०।"हस्तश्रवणफाल्गुन्य अश्विन्यो रोहिणी मघा । चतुर्दशांशकैर्दृश्या विशाखाश्विनदैवतम्''सू०। फाल्गुन्य पूर्वोत्तराफाल्गुनीद्वयम्। आश्विनदैवतमश्विनीकुमारौ दैवत स्वामी यस्येत्यश्विनीनक्षत्रम् । दृश्या उपलक्षणादस्ता अपि लिङ्गपरिणामश्च यथायोग्य बोध्य । शेष स्पष्टम् । अथान्येषामाह''र०ना०। 'कृत्तिकामैत्रमूलानि सार्पं रौद्रर्क्षमेव च । दृश्यन्ते पञ्चदशभिराषाढाद्वितयं तथा''सू० । "कृत्तिकानुराधामूलनक्षत्राणि पञ्चदशभि कालांशैर्दृश्यन्ते । उपलक्षणाच्च दृश्यन्तेऽपि । एवकारो न्यूनाधिकत्वव्यवच्छेदार्थ । रौद्रमार्द्रा । च'समुच्चये । आषाढाद्वितयं पूर्वोत्तराषाढाद्वय तथा पञ्चदशकालांशैर्दृश्यन्त इत्यर्थ । अथान्येषामवशिष्टानामाह''र०ना०। "भरणीतिष्यसौम्यानि सौक्ष्म्यात् त्रि सप्तकांशकैः । शेषाणि सप्तदशभिर्दृश्यादृश्यानि भानि तु''सू०।"तिष्य पुष्य सोमदैवतं मृगशिरो नक्षत्रमेतानि नक्षत्राणि सौक्ष्म्यादणुबिम्बत्वात् त्रि सप्तकांशकैरेकविंशतिकालांशैर्दृश्यादृश्यानि । उदितान्यस्तङ्गतानि च भवन्तीत्यर्थ । शेषाणि पूर्वाधिकारोक्तनक्षत्रेभ्य उक्तातिरिक्तानि शततारापूर्वोत्तराभाद्रपदारेवतीधनिष्ठानि ब्रह्मापावत्सापसज्ञानि च सप्तदशभि कालांशैर्दृश्यादृश्यानि भवन्ति । तुकारो दृश्यादृश्यानीत्यत्र समुच्चयार्थक । अथ दिनाद्यानयनार्थमिष्टकाला एव प्रमाणजातीयत्वकरणमाह'' र० ना० । "अष्टादशशताभ्यस्ता दृश्यांशा स्वोदयासुभि । विभज्य लब्धा क्षेत्रांशास्तैर्दृश्यादृश्यताथ वा''सू० । 'दृश्यांशाः कालांशा अष्टादशशतगुणितास्तान् स्वोदयासुभिर्गृहराश्युदयासुभिर्भक्त्वा लब्धा क्षेत्रांशा क्रान्तिवृत्तस्थांशास्तैरर्कैर्दृश्यादृश्यता उदयास्तौ प्रकारान्तरेणोक्तरीत्या ज्ञेयौ । कालांशाभ्या क्षेत्र शानानीय तदन्तरकला यथास्थितगत्योरन्तरेण योगेन वा भक्ता फलमुदयास्तयोर्गतैष्यदिनाद्यं पूर्वागतमेव स्यादित्यर्थ । अत्रोपपत्ति । यदि राश्युदयासुभिरेकराशिकलास्तदा कालांशकलात्मकासुभिः का इति क्रान्तिवृत्ते कलास्ताः षष्टिभक्ता अंशा इति पूर्वमेवेष्टस्थाने कालांशा एव कृता लाघवात् । इत्युक्तमुपपन्नम् । ग्रहाणामस्तकदिश्यस्तोऽस्तकदिश्युदय इत्युक्तम् । तथा नक्षत्राणां नोक्तम् गत्यभावाद्वियोगयोगासम्भवेन गतैष्यदिनाद्यानयनासम्भवश्चेत्यत आह''र०ना०। "प्रागेषामुदय पश्चादस्तो दृक्कर्म पूर्ववत् । गतैष्यदिवसप्राप्तिर्भानुभुक्त्या सदैव हि''सू०। "एषां नक्षत्राणां प्राच्यामुदय प्रतीच्यामस्तो गत्यभावादल्पगतिग्रहवत् । एषां नक्षत्राणां दृक्कर्माक्षदृक्कर्म पूर्ववत् पूर्वप्रकारेण कार्यम् । परन्तु स्लोकप्रत्यर्थोक्तमिति ध्येयम् । सदा नित्यम् । एवकारात् कदाचिदप्यन्यथा नेत्यर्थ । हि निश्चयेन । रविगत्या गतैष्यदिवसान । लब्धि स्यात् । नक्षत्रगत्यभावात् योगे गृहगतिवत् । अथ कतिपयानां नक्षत्राणां सूर्यसान्निध्यवशादस्तो नास्तीत्याह । "अभिजिद्ब्रह्महृदयं स्वातीवैष्णववासवा । अहिर्बुध्न्यमुदक्स्थत्वान्न लुप्यन्तेऽर्करश्मिभि''सू०। अभिजित् । ब्रह्महृदयम् । अनेनैकदेशस्य ब्रह्मणोऽपि ग्रहणम् । स्वातीश्रवणधनिष्ठा । अहिर्बुध्न्यमुत्तराभाद्रपदा एतानि नक्षत्राण्युत्तरदिक्स्थत्वादुत्तरविक्षेपाधिक्यादित्यर्थ । सूर्यकिरणैर्न लुप्यन्ते अस्तं न यान्तीत्यर्थः । अत्रोपपत्ति "यस्योदयास्ताधिकोऽस्तभात्तु प्रजायते सौम्यशरातिदैर्घ्यात् । तिग्मांशुसान्निध्यवशेन नास्ति धिष्ण्यस्य तस्यास्तमय कथञ्चित्''। इति भास्कराचार्योक्ता । परमिदमुक्तमदाक्षभायाम् । अन्यथा पूर्वाभाद्रपदाया अपि तथात्वापत्तेरिति दिक्''र०ना०। "यथा भौमादीनां सूर्यसान्निध्योदयास्तासत्त्वे दीप्त्या सकलबिम्बदर्शन तथा चन्द्रस्य स्वोदयास्तकाले सकलबिम्बदर्शनं शुक्लत्वेन न भवति । किन्तु बिम्बैकदेश एव शुक्लत्वेन दृश्यत इति भौमादिविसदृशत्वं चन्द्रस्य कुत इत्याशङ्का-

या: पूर्व्वाधिकारे समुपस्थितेस्तदुत्तरभूतचन्द्रोद्गमनाधिकारोऽप्यसमुपस्थित व्यारब्धो व्याख्यायते । तत्र चन्द्रोद्गते उदयकालात् पूर्वकालेऽस्तकालानन्तरकाले चाल्पकतिपयदिवसेषु दर्शनात् पूर्वाधिकारे चन्द्रस्य कालांशानुरूपा तदुदयास्तावलोकेऽपि प्रथमसमुपस्थितचन्द्रोदयास्तयोः साधनमतिदिशति' र० ना० । "उदयास्तविधिः प्राग्वत् कर्त्तव्यः शीतगोरपि । भार्गवांशैरधिकैः पश्चादृश्य प्राग्यात्यदृश्यताम्" सू० । "चन्द्रस्य यथाप्युक्तं पूर्वाधिकारोक्तं ग्रहणमत्र' समुच्चयार्थकः । उदयास्तविधिरुदयास्तयो साधनप्रकारः प्राग्वत् पूर्वाधिकारोक्तरीत्या गणकेन कार्यं । ननु कालांशाः पूर्वमनुक्ताः कथं तत्सिद्धिरत आह । भार्गवैरिति । द्वादशभिरंशैश्चन्द्रः पश्चिमायां दृश्य उदितो भवति । प्राच्यामदृश्यतामस्तं प्राप्नोति । अत्र पश्चात् प्रागिति पुनरुक्तमपि पूर्वं बुधशुक्रयो साहचर्येण चन्द्रोदयास्तदिगुक्ता तत्साहचर्येण चन्द्रस्य पश्चिमास्तपूर्वोदयौ वर्त्तेते इति कस्यचिन्मन्दबुद्धेर्भ्रमस्य वारणायेति ध्येयम्"।

सूर्योदये विशेष ग्र० त० स्क० पु० । "रेखामात्र च दृश्येत रश्मिभिश्च समन्वितम् । उदयं तं विजानीयात् होमं कुर्यात् विचक्षण" "उदयादोदयाद्भानोर्भौमसप्तम वासर" स्मृ० सि० । "सावन स्यादहोरात्रमुदयादोदयाद्रवे" काल० मा० ब्रह्म० सि० । गुरुशुक्रोदये च सर्व्व मङ्गलकार्य्याणि कर्त्तव्यानि । अगस्त्योदय अगस्त्यशब्दे उक्त । "प्रसादोदयादम्भ कुम्भयोने र्महौजसः" रघु ।

**उदयगामिनी** स्त्री उदयं सूर्योदयं गच्छति मुहूर्त्तादिना व्याप्नोति गम-णिनि ङीप् । "सूर्य्योदयमभिमुहूर्त्तादिकालव्यापिन्या तिथौ । कर्मानुष्ठाने उदयकाले कियन्मानस्य व्याप्तता तन्निर्णीतम्' का० मा० । "व्रतोपवासनियमे घटिकैका यदा भवेत् । उदये सा तिथि र्ग्राह्या विपरीता तु पैतृके" म० पु० । "व्रतोपवासस्नानादौ घटिकैका यदा भवेत् । उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनी" विष्णु० ध० पु० । "आदित्योदयवेलाया याऽल्पापि च तिथिर्भवेत् । पूर्णा इत्येव सा ज्ञेया प्रभूता नोदयं विना" देवल: । "या तिथिं समनुप्राप्य उदयं याति भास्करः । सा तिथि सकला ज्ञेया स्नानदानजपादिषु" देवल । "उदयन्नेव सविता या तिथिं प्रतिपद्यते । सा तिथि सकला ज्ञेया दानाध्ययनकर्मसु" व्यास. । "पक्षद्वयेऽपि तिथयस्तिथिं पूर्व्वां तथोत्तराम् । त्रिभिर्मुहूर्तैर्विध्यन्ति सामान्योऽयं विधि स्मृत" मठी० । "उदिते दैवत भानौ पैत्रं चास्तमिते रवौ । द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययो" बौधा० । "भानावुदिते तत्युत्तरकालेऽह्नोमुहूर्त्तद्वयं दैवत्यम् । तस्मिन्नास्तमिते तत पूर्वकालीनमह्नोमुहूर्त्तत्रय पित्र्यंदैवत्यमतस्तावत्कालव्यापिनी या तिथिर्भवति सैव क्रमेण हव्यकव्ययोर्ग्राह्या" व्यासवाक्यपूर्व्वक माधवेन समाहितम् । मन्वन्तरेष्व तत्तद्दिवसाभ्यनुज्ञातथाप्युत्तरविद्धयास्तिथेर्ग्रहणे कियत्परिमाणमुदयेऽपेक्षणीयमिति विवेचनीयम् । तत्र बौधायनेन स्वल्पापीत्यभिधानात् निमेषमात्रं प्रतिभाति, व्यासेन उदयन्नेवेत्यभिधानात् तथैव प्रतिभाति । भविष्यत्पुराणे तु घटिकामात्रं बौधायनवचनान्तरे द्विमुहूर्त्तमित्येव विरोधमाशङ्क्य "अत्रोच्यते "पौर्वाह्णिकास्तु तिथयस्त्रिमुहूर्त्ता फलप्रदा " स० या० वचनेन दैवे पूर्वाह्णव्याप्त्यायास्त्रिमुहूर्त्तमितायास्तिथेर्ग्रहणम् । त्रिमुहूर्त्तन्यूनायास्तिथे पूर्वाह्णव्याप्त्यभावात् पूर्वाह्णस्य च पञ्चधा विभक्तस्य मुख्यत्वात् उदिते भानौ त्रिमुहूर्त्तातिथिर्ग्राह्या । यत्तु "त्रिमुहूर्त्ता न कर्त्तव्या या तिथ्युदयगामिनी"ति 'न तत् त्रिमुहूर्त्तव्याप्तेर्बाधक प्रत्युतोहोक्तमेव । तथा हि प्रतिषेध सर्वत्र प्रसक्तिपूर्व्वक ,प्रसक्तिश्चात्र यथोक्तरीत्या पौर्वाह्णिकवाक्यात् त्रिमुहूर्त्तवेधविधायिपैठीनसिवाक्याद्वा भवति तस्य प्रसक्तत्रिमुहूर्त्तस्य समतिथौ बाधकाभावात्तथैव तिथिक्षये त्वधिकव्याप्तिविधित्सया प्रतिषिध्यते अतश्च तत्र चतुर्थमुहूर्त्तस्पर्शिनी तिथिर्ग्राह्या तिथिसाम्यात् । तिथिवृद्धावपि मुहूर्त्तत्रयमेव मुख्यं मुहूर्त्तद्वय त्वनुकल्प । एतदेव स्मर्यते द्विमुहूर्त्तापीत्यत्र अपिशब्दः पठ्यते"। तत्र प्रासङ्गिकमन्यत् समाधाय उपसंहृतम् यथा "प्रकृते तु सूर्योदये मुहूर्त्तत्रयव्यापिनी प्रतिपत्तानप्रतयोर्ग्रहीतव्या एवं सत्युदयमात्रव्याप्तिपक्षं घटिकामात्रव्याप्तिपक्षस्त्र च वैश्वानराधिकरणन्यायेनावयुत्यानुवादरूपतया त्रिमुहूर्त्तव्याप्तिप्रशंसति । अथवा यदा पूर्वेद्युरुदयकालं परित्यज्योपरि सर्वत्र व्याप्नोति परेद्युरुदयकालमात्रं व्याप्नोति तदानीमुदयानन्तरभाविन्यामुख्यायास्त्रिमुहूर्त्तव्याप्तेर्दिनद्वयेऽप्यभावेन द्वयोरपि दिनयोर्गौणकालत्वे सति किं ग्राह्यमिति शङ्कायां पूर्व्वदिने गौणकर्मकालव्याप्तेर्भूयस्त्वात्तस्यैव ग्रहणे न्यायत प्राप्ते केनापि निमित्तेन तत्प्रत्यूहे सति परेद्युः कर्मकालव्याप्तिसम्पादनाय पूर्वोक्तमभिधायोदयविहीनस्य

व्याप्तिमाङ्गल्यस्य च्छेयस्त्वोक्तिव्याजेन तदेव प्रशस्यते । "आदित्योदयवेलायां यास्वापि च तिथिर्भवेत् । पूर्णा इत्येव मन्तव्या प्रभूता नोदयं विनेति" । यदा पूर्वेद्युः सङ्गवमारभ्य परेद्युरुदयात्प्रागेव तिथिक्षयवशात्प्रतिपत्समाप्ता तदा यद्यपि दिनद्वये सोदयमुहूर्त्तत्रयस्पर्शो नास्ति तथापि पूर्वेद्युरेवानुष्ठेयम् । "सा तिथिः सकला ज्ञेया यस्यामस्तमितो रविः इतिवचनेन समाप्तायाः सोदयत्रिमुहूर्त्ताया व्याप्तेर्विद्यमानत्वात् । यदा न परेद्युरुदयमुहूर्त्तव्याप्तिरस्ति तदा पूर्वेद्युरेवानुष्ठानम् । अस्तमयव्याप्तेरधिकत्वात् । अतएव पद्मपुराणेऽभिहितम् । "व्रते स्नाने तथा नक्ते पितृकार्य्ये विशेषतः । यस्यामस्तङ्गतो भानुः सा तिथिः पुण्यभाग्भवेदिति" । तत्रैव द्वितीयाप्रकरणे च दैवं षड्विधम् उपवासैकभक्तनक्तायाचितदानव्रतभेदेन, तीर्थस्नानजपहोमादयस्तु व्रतशब्देनैव सङ्गृहीताः । पित्र्यं द्विविधम् एकोद्दिष्टं पार्वणं चेति । तत्र सर्व्वत्र कर्म्मकालव्याप्तिर्मुख्या । अपरिष्टा गौणी । तिथिव्याप्तिश्च द्विविधा स्वाभाविकतिथिव्याप्तिः साकल्यापादिततिथिव्याप्तिश्चेति । तद्यथा यदा सङ्गवपर्य्यन्तामावास्या तदानीमुपरितनो मध्याह्नो मुख्ययैव प्रतिपदा व्याप्तो भवति । यदा मध्याह्नादिमारभ्य तिथिक्षयवशात् परेद्युः सङ्गवान्ता प्रतिपद्भवति तदा पूर्व्वेद्युर्गौणकालव्याप्तिमुपजीव्यैकभक्तानुष्ठानाय तत्स्वीकारे सति मध्याह्नेऽवश्यानुष्ठेयत्वात् तत्र च स्वाभाविकप्रतिपद्व्याप्त्यभावेऽपि साकल्यवचनापादितप्रतिपद्व्याप्तिः स्वीकृता एवञ्च सति कर्म्मकालव्याप्तौ सर्व्वस्मृतीनामत्यन्तनिर्बन्धदर्शनात् कर्म्मकालव्याप्तिशास्त्रमितरेभ्यः प्रबलमिति निर्णीयते । तदनुसारेण द्वितीयाद्यास्वपि तिथय उपवासादौ दैवे, एकोद्दिष्टादौ पित्र्ये च कर्म्मकालव्याप्तियुक्ताः स्वीकर्त्तव्याः । उपवासस्तु सर्व्वतिथिषु नारदीये दर्शितः । "शुक्ला वा यदि वा कृष्णा प्रतिपत्प्रभृतीन् तिथीन् । उपोष्यैव बलिं दत्त्वा विधिना त्वपरे दिने । ब्राह्मणान् भोजयित्वा तु सर्व्वपापैः प्रमुच्यते" इति । उपवासस्याहोरात्रं कर्म्मकालः । तस्मात्तद्व्यापिनी तिथिर्ग्राह्या तदसम्भवे खण्डतिथिरपि । तत्र का ग्राह्येति निरूप्यते । तत्र सूर्य्योदये त्रिमुहूर्त्ता ततोऽधिका वा प्रतिपद्भवति उत्तरदिने वास्तमयादर्वाक् त्रिमुहूर्त्ता ततोऽधिका वा तृतीया भवति सेयमुभयविद्धा द्वितीया । तत्र वेधकतिथेरुदयेऽस्तमये वा त्रिमुहूर्त्तत्वं वेधप्रयोजकं न तु ततो न्यूनत्वं । तदेव पैठीनसिवाक्येन पूर्व्वमुदाहृतम् । वेध्यतिथेश्च त्रिमुहूर्त्तसद्भावोऽपेक्षित इति "द्विमुहूर्त्तं त्रिरह्नश्च" इत्यनेन सुमन्तुवचनेन दर्शितम् । "उदयास्तमययोरेव वेध" इत्यस्यायमर्थः "उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके" इत्यादिभिः कात्यायनवचनैरवगन्तव्यः । एवं सति उदाहृतविषये द्वितीया उभयवेधेऽपि उत्तरविद्धैवोपास्या युग्मादिवाक्येनान्वयव्यतिरेकाभ्यामुत्तरवेधस्य प्राशस्त्याभिधानात्" इति । प्राग्न्तूपवासरूपदैवविषयं तदप्युक्तं तेनैव । "यद्यप्युपोष्यत्वं साक्षान्नाभिहितं तथापि कर्म्मान्तरविशेषानुपादानादुपवासविषयत्वं परिशिष्यते तथा हि न तावत् पित्र्यविषयत्वं सम्भवति "द्वितीयादिकयुग्मानां पूज्यता नियमादिषु । एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिदेशनेति" व्यासेन युग्मादिशास्त्रस्य खर्व्वादिशास्त्रस्य च दैवपित्र्यविषयकत्वेन व्यवस्थापनात् इति" । एवञ्चोपवासेतरदैवकर्म्मणि उदयगामिन्या ग्राह्यता तदपवादकं युग्मशास्त्रम् । तत्र च पैठीनसिवचनेन त्रिमुहूर्त्ततिथेरेव वेधप्रयोजकताऽभिधानेन ततो न्यूनकालिकतिथ्या वेधाभावात् गौडदेशीया यत् स्पर्शमात्रेण वेधं कल्पयन्ति तत्साहसमात्रम् रघुनन्दनेन कुत्रापि तथा वेधानुक्तेः कालमा० हेमाद्रिप्रभृतिषु द्विमुहूर्त्तादिव्याप्त्यैव वेधकत्वव्यवस्थापनात्, युग्मशास्त्रस्य सामान्यशास्त्रतया वेधसामान्यप्रतिपादनेऽपि पैठीनसिना तस्य विशेषाभिधानात्तस्यैव ग्रहणस्य युक्तत्वमित्यनुपश्याम । युगादिशास्त्रस्य बाधकन्तु "युगाद्या वर्षवृद्धिश्च सप्तमी पार्वती प्रिया । रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता" ति० त० देवी० पु० "भगवत्याः प्रवेशादिविसर्गान्ताश्च याः क्रियाः । तिथावुदयगामिन्यां सर्वास्ताः कारयेद्बुधः" दुर्गो० त० नन्दि० पु० "शरत्काले महापूजा क्रियते या च वार्षिकी । सा कार्य्योदयगामिन्यां न तत्र तिथियुग्मता" तत्रैव पुरा० "पूर्व्वाह्णे तु सदा कार्य्याः शुक्ला मनुयुगादयः । दैवे कर्म्मणि पित्र्ये च कृष्णा चैवापराह्णिके । हेमा० नारदीयम् "युगादिमन्वादिश्राद्धादिषु शुक्लपक्षे उदयव्यापिनी तिथिर्ग्राह्या कृष्णपक्षे ऽपराह्णव्यापिनी चाश्रा सत्यर्थसारश्च दिनद्वये तु तथा लाभे परैवेति हेमाद्रिः । विधानपारिजातादयोऽप्येवम् । निर्ण० सि० "मन्व-तिथ्यतीपाता युगमन्वादयस्तथा । सम्मुखा उपवासेषु दानादावन्तिमा स्मृता" अनन्तभट्टधृत आदिपादात् आहसम्पत्त इत्याह । इदन्त्ववधेयम् । "कल्पो-

यस्य यः कालस्तत्कालव्यापिनी तिथिः । तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्” कर्मणोऽभिहितकालव्यापिन्या एव ग्राह्यत्वाभिधानेन यत्र तिथिद्वयवशात् उभयदिने स्नानक्रियाविशिष्टादिनतृतीयांशरूपपूर्वाह्णव्याप्तिसत्त्वे प्रतियोगिवैयधिकरण्यघटितव्याप्तेः प्रवेशनेन मुहूर्त्तकालव्याप्तावपि पूर्वाह्णव्यापकतया ग्राह्यमित्येव रघुनन्दनस्याशय । तथा च “आरभ्य तस्यां दशमी च यावत्” इत्यादौ यथा पूजायान्तथैव प्रतियोगिवैयधिकरण्यघटितव्यापकताप्रवेश एवमत्रापि मुहूर्त्तव्यापकत्वानान्तोन्यूनदण्डादिव्यापने ग्राह्यता । भवति च त्रिमुहूर्त्तव्यापिन्या अपि मुहूर्त्तव्यापितेति सर्व्वं सुस्थम् । तेन मुहूर्त्तन्यूनतायां न ग्राह्यता त्रिमुहूर्त्तादिव्याप्तिस्तु मुख्येति । एवञ्च युग्मादिवाक्यविषये कृष्णप्रतिपदादौ उभयदिने पूर्वाह्णमुहूर्त्तव्यापित्वेऽपि त्रिमुहूर्त्ताया एव ग्राह्यतेति विवेकः । एवमस्तगामिन्यामपि अस्तादर्व्वाक् त्रिमुहूर्त्तायास्तिथेः पित्र्ये ग्राह्यतेत्यपि बोध्यम् ।

**उदयगिरि** पुं० उदय उदयस्थानं गिरिरिव । सूर्य्यादेरुदयस्थाने पर्व्वतप्रदाच्छादके भूवृत्तपादे “उदयगिरिवनालीबालमन्दारपुष्पम्” उद्भट “उदयगिरिशिखरसंस्थिते प्रतप्तकनकनिकरपीतलोहिते सवितरि” सुश्रु० उदयाचलादयोऽप्यत्र । “श्रितोदयाद्रेरभिसायमुच्चकैः” माघ । भूगोलपादस्यैव यथा सूर्य्याद्याच्छादकत्वम् तथा सिद्धान्तग्रन्थे स्थितम् । यद्यपि सूर्य्योदयस्य देशविशेषे विशेषस्थाने एव सम्भव तथापि निरक्षदेशानधिकृत्य देशे मुख्यत्वम् “लङ्कापुरेऽर्कस्य यदोदय स्यात् तदा दिनार्द्धं यमकोटिपुर्य्याम् । अधस्तदा सिद्धपुरेऽस्तकाल स्याद्रोमके रात्रिदलं तदैव । यत्रोदितोऽर्कः किल तत्र पूर्वा तत्रापरा यत्र गत प्रतिष्ठाम् तद्यास्यतोऽन्ये च ततोऽखिलानामुदक्स्थितो मेरुरिति प्रसिद्धम्” सिद्धान्तशिरोमणौ तथैव व्यवस्थापितम् ।

तथा च लङ्कादिपुरीचतुष्टयस्य भूवृत्तपादान्तरस्थितत्वेन द्वितीयपुर्य्युपरिस्थे सूर्य्यादौ प्रथमं दृश्यता तत्पूर्व्वादिस्थदेशे तु तत पूर्व्वम् । पश्चात् स्थितदेशेषु च ततः पश्चात् दृश्यता एवञ्च भूवृत्तपादेनाच्छादने तदतिक्रमे दर्शनयोग्यत्वादुदय । ततश्च यत्र देशे यदा दर्शनं तत्र तदा तद्देशापेक्षया सूर्य्यादेर्भूविम्बपादोपरिस्थितत्वेन तत्स्थानस्य उदयगिरित्वम् यत्र चादर्शनं तद्देशाभिमानकस्तगिरित्व शास्त्रेषु कल्पितम् । एवञ्च निरक्षदेशावधि भूवृत्तपादान्तरेषु स्थितलङ्कापुर्य्यादिना यमकोटिरेवोदयस्थानमेवमन्यत्र कल्प्यम् । लिङ्गपुराणे तु अन्याः पुरीरुक्त्वा तत्रोदयादिव्यवस्थामाह “मानसोपरि माहेन्द्री प्राच्यां मेरोः स्थिता पुरी । दक्षिणे भानुपुत्रस्य वरुणस्य तु वारुणे । सौम्ये सोमस्य विपुला तासु दिग्देवता स्थिता । अमरावती संयमिनी सुखा चैव विभा क्रमात् । लोकपालोपरिष्टात्तु सर्व्वतो दक्षिणायने । काष्ठागतस्य सूर्य्यस्य गतिर्या तां निबोधत । दक्षिणा प्रक्रमे सूर्य्यः क्षिप्तेषुरिव धावति । पुरान्तगो यदा भानुः शक्रस्य भवति प्रभुः । सर्व्वैः सांयमनैः सौरो ह्युदयो दृश्यते द्विजाः ॥ स एव सुखवत्यान्तु निशान्तस्थः प्रदृश्यते । अस्तमेति तदा सूर्य्यो विभायां विश्वदृग्विभुः । यथा प्रोक्तोऽमरावत्यां यथाऽसौ याति भास्कर । तथा संयमिनीं प्राप्य सुखाञ्चैव विभां खग । यदा पराह्णस्त्वाग्नेय्यां पूर्वाह्णो नैरृते द्विजाः ॥ तदा त्वपररात्रस्तु वायुभागे सुदारुण । ऐशान्यां पूर्वरात्रस्तु गतिरेषास्य सर्व्वत” इति । व्याख्यातञ्च छा० उ० आनन्दगिरिणा “तथा चोपरिष्टादमरावत्यास्तिष्ठन्मध्याह्नं तत्र गकोणस्थानां तृतीययाममाग्नेयकोणस्थानामाद्ययाम उदय संयमिन्यामुदयं च करोति सविता । एवं यदा याम्ये मध्याह्ने तिष्ठति तदैन्द्रे अस्तमय, आग्नेये तृतीययाम, नैरृतिकोणे प्रथमो याम, वारुणे उदय । यदा च वारुणे मध्याह्नस्तदा याम्येऽस्तमय, नैरृतिकोणे तृतीयो याम, वायव्ये प्रथमयाम, सौम्ये उदय । यदा च सौम्ये मध्याह्नस्तदा वारुणेऽस्तमय, वायव्ये तृतीययाम, ईशानकोणे प्रथमो याम, ऐन्द्रे उदयः । तथाग्नेयकोणे वर्त्तमानस्तत्स्थानां मध्यं दिनम्, यमेन्द्रपुर्य्योरास्ततृतीययामौ, नैरृतेशानकोणयोरुदयास्तमयौ च करोति” एतच्च मानसामेश्वर्य्येणोदयास्तमयकीर्त्तनाच्च पूर्व्वोक्तेन विरुद्धम् “अथ यदादित्य पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेताऽस्तमेता” इत्यादि छा० उ० भाष्ये “पश्चादुत्तरत ऊर्द्ध्वमुदेता विपर्य्ययेणास्तमेता । पूर्व्वस्मात्पूर्व्वस्माद्द्विगुणोत्तरोत्तरेण कालेनेत्यपौराणं दर्शनम् । सवितृमन्दिरयमेन्द्रयमवरुणसोमपुरीषूदयास्तमयकालस्य तुल्यत्वं हि पौराणिकैरुक्तम् । मानसोत्तरस्य मूर्द्धनि मेरोः प्रदक्षिणावृत्तेस्तुल्यत्वादिति” इत्याशङ्क्य आलोकः परिहार आचार्य्यैरमरावत्यादीनां पुरीणां द्विगुणोत्तरोत्तरेण कालेनोदयाद स्यात् । उदयश्च नाम सवितुस्तन्निवासिनां प्राणिनां चक्षुर्गोचरमापत्तिस्तदत्ययश्चास्तमय न परमार्थत उदयास्तमये स्तः । तन्निवासिनाञ्च प्राणिनामभावे तान् प्रति तेनैव

नाम्ना भवान् भविष्यतीति उपाध्यायेनानुगृहीत"। "उद्दालकोऽश्रुणि श्वेतकेतु पुत्रमुवाच' छा०उ० "उद्दालकाद्युद्दालकोऽरुणाटरुण" इति ए०उ०।

**उद्दालकपुष्पभञ्जिका** स्त्री उद्दालकानां पुष्पाणि भज्यन्ते यत्र क्रीड़ायाम् ण्वुल्। क्रीडाविशेषे यत्र उद्दालकपुष्प भञ्जनं क्रियते तस्यां क्रीडायाम्।

**उद्दालकव्रत** न० उद्दालक पापनाशक व्रतम्। पतितसावित्रीकस्य कार्ये वशिष्ठोक्ते व्रतभेदे "पतितसावित्रीक उद्दालकव्रत चरेत्। द्वौ मासौ यावकेन वर्त्तयेन्मास मामिक्षेणाष्टरात्र घृतेन षड्रात्रमयाचित त्रिरात्रमम्भक्षोऽहोरात्रमुपवसेत् इति वशिष्ठः। मिता०प्रा०वि० उद्दालव्रतमित्येव पाठ श्रहिताभन्थे उद्दालकेति पाठ प्रामादिक।

**उद्दालकायन** पु० उद्दालकस्य गोत्रापत्य फक्। ऋषिभेदे श्वेतकेतौ। तस्य तत्पुत्रत्वमुद्दालकशब्दे उक्तम्।

**उद्दालवत्** पु० उद्दालो भूकेदारभेद प्रकाशस्थानतया विद्यतेऽस्य मतुप्। उद्दालके ऋषौ। "यवमान् तपिरुद्दालवान् धानान्तर्वान्" शत०ब्रा० ११,२२,८।

**उद्दास** पु० उद्+दास-घञ्। उत्पीडने तत बला०व्यस्त्यर्थे मतुप् इनिर्वा। उद्दासवत् उद्दासिन् तद्वति त्रि० स्त्रियां ङीप्।

**उद्दित** त्रि० उद्+दो-क्त। बद्धे भरत

**उद्दिष्ट** त्रि० उद्+दिश-क्त। १उपदिष्टे, २अभिलषिते "तत् समुद्दिष्टं कर्म" सचिप्रशार छन्दःशास्त्रोक्ते निर्द्धारितगुर्व्वादिस्थितिकभेदस्य प्रस्तारे कतमसख्यकत्वज्ञानार्थे ३उपायभेदे न०। तत्प्रकारो यथा "उद्दिष्टं द्विगुणानाद्याद्उपर्यङ्कान् समालिखेत्। लघुस्था ये तु तत्राङ्कास्तैः सैकैर्मिश्रितैर्भवेत्" वृत्तर०। आद्यात् आद्यवर्णमारभ्य उपरि यथोत्तर द्विगुणान् द्विगुणान् अङ्कान् समालिखेत् तत्र लघुवर्णोपरिस्थाङ्कैर्मिलितैः एकेन युक्तै उद्दिष्ट स्यात्। यथा त्र्यक्षरप्रस्तारे मध्यगुरुको भेदः प्रस्तारे कियत्सख्यक इति प्रश्ने यथोत्तरं द्विगुणान् द्विगुणान् अक्षरसख्यया अङ्कान् दद्यात् तत्र आद्यलघूपरिस्थैकाङ्केन तृतीय लघूपरिस्थचतुरङ्केण योगे पञ्चाङ्कः एकेन युक्त षडङ्कः सम्पद्यते एवञ्च षष्ठोऽयं भेद इत्युत्तरम्। एवमन्यत्र कल्प्यम्। सर्वगुरुकभेदे तु लघुवर्णाभावात् योजकाङ्काभावेन एकमात्रेण योज्याङ्केन प्रथमोभेद इत्यूह्यम्। मात्रावृत्ते उद्दिष्ट विस्तरभयान्नोक्तमाकरे दृश्यम्।

**उद्दीपक** त्रि० उद्+दीप-णिच्-ण्वुल्। उद्भासके प्रकाशके।

**उद्दीपन** न० उद्+दीप-णिच्-ल्युट्। १प्रकाशने, २उत्तेजने च। ल्यु। अलङ्कारोक्ते रसाद्युद्दीपके "उद्दीपन विभावास्ते रसमुद्दीपयन्ति ये" "रत्याद्युद्बोधकालोके विभावा काव्यनाट्ययो। आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ" आलम्बनस्य चेष्टाद्या देशकालाद यस्तथा" सा०द० उक्ते आलम्बनस्य १चेष्टादौ विभाव यथा शृङ्गारे रसे "चन्द्रचन्दनरोलम्बरुताद्युद्दीपन मतम्" हासे "विकृताकारवाक्चेष्टं यदालोक्य हसेज्जन। तदत्रालम्बन प्राहुस्तच्चेष्टोद्दीपन मतम्"। करुणे "शोकोऽत्र स्थायिभाव स्याच्छोच्यमालम्बनं मतम्। तस्य दाहादिकावस्था भवेदुद्दीपन पुनः"। वीरे "आलम्बनविभावास्तु विजेतव्यादयोमताः। विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः"। भयानके "यस्मादुत्पद्यते भीतिस्तदत्रालम्बन मतम्। चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः। जुगुप्सायाम् "दुर्गन्धमांसपिशितमेदांस्यालम्बनं मतम्। तत्रैव क्रमिपाताद्यमुद्दीपनमुदाहृतम्"। अद्भुते "मीत वर्णो, वस्तु लोकातिगमालम्बनं मतम्। गुणानां तस्य महिमा भवेदुद्दीपनं पुनः"। शान्ते "परमात्मस्वरूप वा तस्यालम्बनमिष्यते। पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादय। महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः" सा०द०।

**उद्दीप्त** त्रि० उद्+दीप-क्त। प्रकाशान्विते।

**उद्दीप्र** पु० उद्+दीप् रन्। १गुग्गुलौ शब्द २उद्दीप्ते त्रि०।

**उद्दृप्त** त्रि० उद्+दृप-क्त। उद्धते गर्व्वान्विते

**उद्देश** पु० उद्+दिश+घञ्। १अनुसन्धाने,२अन्वेषणे, ३अभिलाषे ४उपदेशे च। आधारे घञ्। ५उपदेशदेशे "यथोद्देशं सञ्ज्ञापरिभाषम्" व्या०परिभाषा। व्याख्यातं च नागेशेन "उद्देशमनतिक्रम्य यथोद्देशम्। उद्देश उपदेशदेश। अधिकरणसाधनश्चायम्। यत्र देशे उपदिश्यते तद्देश एव वाक्यार्थबोधेन गृहीतसञ्ज्ञया गृहीतपरिभाषार्थेन च सर्वत्र शास्त्रे व्यवहार। देशयोच्चारणकाल एवात्र शास्त्रे व्यवह्रियते। तत्तद्वाक्यार्थबोधे जाते भविष्यति किञ्चिदनेन प्रयोजनमिति ज्ञानसात्त्वेण सन्तुष्यन्ति यथाश्रयमात्मप्रतिपत्त्यपेक्षोऽयम्" इति "इदितृ"पा०१,१,११ स्थले कैयट। केचित्तु परिभाषाविषये "तस्मिन्"पा०१,१,६६ इत्यादिवाक्यार्थबोधे सप्तमीनिर्देशादिके ति पर्यालोचनायां सकलतद्विध्युपस्थितौ सकलतत्र स्थाप्य गुणभेद परिकल्प्य कार्यकालतयैव नियम। कार्यकालपक्षे तु त्रिपाद्यामप्युपस्थितिरिति विशेष। एतदेवाभिप्रेत्य "अधिकारो नाम त्रिप्रकारः कश्चिदेकदेशस्थ सर्वशास्त्रमभिज्वलयति यथा प्र-

दीप सुप्रज्वलित सर्वं वेश्माभिज्वलयतीति" "षष्ठी स्थाने" [१,१,४९ इति पा० सूत्रे भाष्य उक्तम् । अधिकारशब्देन पारार्थ्यात् परिभाषाप्युच्यते । "कचित्परिभाषारूप" इति कैयट । दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशक एवमेत-त्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम् । एतच्च पक्षद्वयसाधारण भाष्यं, पक्षद्वयेऽपि प्रदेशैकवाक्य ताया इत प्रतीते । तत्रैतावान्विशेष । यथोद्देशे परिभाषादेशे सर्वविधिस्थलमुपस्थाप्य भेद परिकल्प्य तैरेक-वाक्यतापरिभाषणम् । तदुक्त "क्ङिति च" १,१,५ पा० इति सूत्रे कैयटेन । "यथोद्देशे प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जत इति" । कार्यकाले तु तत्तद्विधिप्रदेशे परिभाषावुद्धैकतेति । अत्र कदेशस्य इत्य-नेन तत्र तत्र तत्तद्वुद्धावपि तत्तद्देशस्थत्व धारयति यथा व्यवहर्तृणां कार्यार्थमनेकदेशगमनेऽपि न तत्तद्देशीयत्वव्यव-हार किं स्वाभिजनदेशीयत्वव्यवहार एव तद्वत्" ।

६संक्षेपे "एष तूद्देशत प्रोक्तो विभूतेर्विस्तरो मया" गीता 'समासकथनमुद्देश इति मधुसूदनोक्ते ७तन्त्राधिकरणभेदे । उत्कृष्टोदेश प्रा०स० । ७उत्कृष्टदेशे च "नवने नन्दनो-द्देशे न चैत्ररथसन्नये" रामा० । "अस्ति कश्चिद्वनोद्देशे" हितो० भूरिप्रयोग ततस्तसिल् । उद्देशादित्याद्यर्थे अव्य० ।

उद्देशक पु० उद्+दिश–ण्वुल् । १उपदेशके २उदाहरण-वाक्ये च । "अत्रोद्देशक इति" लीला० भूरिप्रयोग । ३प्रश्नके "उद्देशकालापवदिष्टराशि" लीला० इष्टकर्म शब्दे ९९१पृ० दृश्यम् । "उद्देशेन पूजाभिसन्धिना रोपित कन् । पूजाद्यभिसन्धिना रोपिते वृक्षादौ "चैत्यभायतने वृक्षविप्रोद्देशकयोयो:" मिता० इति केचित् उद्देशशब्देन बहुव्रीहौ कप् इति तु न्याय्यम् ।

उद्देश्य त्रि० उद्+दिश–ण्यत् । १अभिसन्धेये यमुद्दिश्य विधेय-प्रवृत्तिस्तस्मिन् २अनुवाद्ये । उद्देश्यविधेयभावस्थले "अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्" इति नियमात् उ-द्देश्यवाचकस्य प्राक् प्रयोग यथा पर्वतो वह्निमान् । वह्नि पर्वते इत्यादौ तु वह्नेरेवोद्देश्यत्व पर्वतवृत्तित्व तत्र विधेयम् । अतएव "न्यक्कारोह्ययमेव मे यदरय:" इत्या-दौ अयपदस्य उद्देश्यवाचितयादौ प्रयोगौचित्येन परत प्रयोगात् वाक्यगतविधेयाविमर्शदोष इति समर्थितमा-लङ्कारिकै । "वृद्धिरादैच् इति" पा० सूत्रेऽपि तथैव भाष्यकृताङ्गीकृत्य मङ्गलार्थमेव तथाप्रयोग इत्युक्तम् यथा "एतदेकमाचार्यस्य मङ्गलार्थं मृष्यताम् । माङ्गलिक आचार्योमहत शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादित प्रयुङ्क्ते । मङ्गलादीनि च शास्त्राणि प्रथन्ते वीरपुरुष काणि भवन्त्यायुष्मत्पुरुषाणि च अध्येतारश्च वृद्धियुक्ता यथा स्युरिति । सर्वत्रैव हि व्याकरणे पूर्वोच्चरित सञ्ज्ञी परोच्चरित सञ्ज्ञेति "अदेङ् गुण" इति यथेत्यन्तेन । उद्देश्यविधेयभावेनान्वयस्थले विवक्षया उभयलिङ्ग वचनानुसारेण प्रयोग यथा वेदा: प्रमाण भवति भवन्ति वा । "अमानि तत्तेन निजायशोयुग द्विफालबद्धा-श्चिकुरा शिर स्थिता" "मृणालगोष्ठमरोपि मनोभुवा तदुपमा कुसुमान्यखिला शरा:" इति नैषधे उभयथैव प्रयोग । व्युत्पत्तिवादे तु गदाधरेण उद्देश्यवचनानु-सारेणैव वचनादिप्रयोग इति महतायासेन व्यवस्थापित तत्र तत एवावसेयम् । "उद्देश्यप्रतिनिर्देश्यव्यतिरिक्त विषयत्वात्" सा०द० । उद्देश्यमेव प्रतिनिर्देश्यम् प्राग् विधेयस्योद्देश्यतया पुनर्निर्देशकर्म इत्यर्थ यथा "उदेति सविता ताम्रस्ताम्र एवास्तमेति च" इत्युदाहृतौ प्राक् विधेयस्य ताम्रस्य अस्ततागुणविधानार्थं पुन प्रतिनिर्दे-शात् कथितपदत्व न दोषायेति तदाशय: । तदन्यत्रैव तस्य दोष इति बोध्यम् ।

अनुवाद्यता च प्रमाणान्तरसिद्धस्य विशिष्टकर्मविधानार्थम् पुनरुपन्यास्यता यथा पर्वतोवह्निमान् इत्यादौ पर्वत-रूपोद्देश्यस्य सिद्धत्वेऽपि वह्निमत्त्वरूपधर्मविधानार्थ-मभ्यास । ततो भावे तल् । उद्देश्यता स्त्री त्व । उद्देश्यत्व न० । विषयताविशेषे सा च अनुमितौ शाब्दबोधे च विधेयताद्रूपा प्रवृत्तौ तु स्वजनके-च्छाविषयत्वरूपा "स्वर्गकामो यजेतेत्यादि" वाक्यजनि-तेष्टसाधनताज्ञानत स्वर्गफलोद्देशेनैव यागे प्रवृत्ते इति स्वर्गस्य तत्रोद्देश्यता एवमन्यत्राप्यूह्यम् । इच्छा-विषयत्वे च "अवच्छेदावच्छेदेन साध्यसिद्धेरुद्देश्यत्व" गदा० ।

[ नितिदोषभेदे

उद्देश्यासिद्धि स्त्री ६त० । अनुमितुरिष्टसिद्धिरूपे अनु-

उद्देहिका स्त्री उन्नतो देहोऽस्य कप् अत इत्त्वम् । कीटभेदे हारा० ।

उ(द्यो)द्योत पु० उद्+द्युत–घञ् वा दलोप । विशिष्टप्रकाशे "विभिन्नैर्व लतोद्योत विभि सूर्य्यांशवोदितै" भा० अनु० १४ अ० । "निरवद्यविद्योद्द्योतेन द्योतितस-मस्तोऽसमर्थ" दायभा० उद्+द्युत–णिच्–अच् । २किरणावलोप्रकाशे ३नागेशकृते काव्यप्रदीपव्याख्याने

घृतिरूपे काव्यभेदे उद्घट्टकोऽपि काव्यभेदे पु॰ ।

उद्धस्त त्रि॰ उत्क्षिप्तो हस्तो येन ब॰ व॰ । उत्क्षिप्तहस्ते प्राणी "उद्धस्त लपपद्मविरमद्धायो दुर्गस्थो मृगमयुथिकदारतिलोम" । महामो विजमरिणाम् रात्रिंशेषो व्यापेटन् भ्रमति रुदन् पिशाचजुष्टः" शाकु॰ ।

उद्धान न॰ उद्धीयतेऽस्मिन्नग्नि धाञ् आधारे ल्युट् । चुल्ल्याम् । कर्मणि ल्युट् । १वमिते, २उद्गते च । [१वमिते हेमा॰

उद्धान्त पु॰ उद्+धा था॰ क्त । मदस्राव्ये १गजेन्द्रे अमर॰

उद्धार पु॰ उद्ध्रियते उद्+हृ भावे-घञ् । १ऋणे, २ऋणशुद्धौ ३उद्धारणे । कर्मणि घञ् । ४धनादुद्धृत्य ज्येष्ठादिभ्यो देये ४ऽशभेदे यथा चोद्धारकल्पना मनुना दर्शिता यथा "ज्येष्ठस्य विंश उद्धार सर्वद्रव्याच्च यद्वरम् । ततोऽर्द्धं मध्यमस्य स्यात् तुरीयन्तु यवीयसः ।" "ज्येष्ठश्चैव कनिष्ठश्च संहरेतां यथोदितम् । येऽन्ये ज्येष्ठकनिष्ठाभ्यां तेषां स्यान्मध्यमन्धनम् । सर्वेषान्धनजातानामाददीताग्य्रमग्रज" । यच्च सातिशय किञ्चिद्दशतश्चाप्नुयाद्वरम् । उद्धारो न दशस्वस्ति सम्पन्नानां स्वकर्मसु । यत्किञ्चिदेव देयन्तु ज्यायसे मानवर्द्धनम् । एवं समुद्धृतोद्धारे समानंशान् प्रकल्पयेत् । उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना ।" धन्योऽपि विशेष स्मृत्यन्तरे उक्त किन्तु "तयोदारविभागस्तु मैव सम्प्रति वर्त्तते" मिता॰ स्मृत्युक्तेः इदानीमुद्धारो नास्तीति मन्तव्यम् । ५वाक्यमध्यतस्य निरन्वयस्य त्यागे यथा "स्वान्वययोग्यपदान्तराक्षेपेण श्रुतपदस्य परित्यागे यथा गां बधान कृष्णामानयेत्यादौ ध्यायामोद्धाराभ्यां गोशब्दस्य साक्षादिमात्र" मा॰ ट॰ । व्यन्वयव्यतिरेकाभ्यां भावोपोद्धारावपि तु तत्पदम् । "जगन्नाथस्याय सुरधुनि । समुद्धारसमयः" गङ्गालहरी । ६वर्जने च "षष्ठं सहस्रतोद्धारं विक्रेय वित्तवर्द्धनम्" मनुः "उद्धृतोद्धारमित्यस्य "वर्जनीयवर्जितम्" कुल्लू॰ व्याख्या । ७उत्कर्षे च । "सगुणानामेव कर्मणामुद्धार उपजने" आश्व॰ श्रौ॰ १२,४,१४ "यस्मात् प्रधानकर्मणामुद्धारे उपजने उत्कर्षे च सगुणानामेव सर्वतोद्धरणम्" ना॰ वृ॰

उद्धारण न॰ उद्+हृ+णिच्-ल्युट् । १उत्थापने "कष्टोद्धारणोद्धुरः" भा॰ व॰ १४०अ॰ । हृ-णिच् ल्युट् । २उद्धारसम्पादने ।

उद्धि पु॰ उद्+धा-कि । ऊर्द्ध धारके । "पुरोडाशा शफा अन्तरिक्षमुद्धिः" अथ॰ ८,९,२२, "उद्धारकौ दशरात्र उद्धि पृष्ठ्याभिप्लवौ पक्षौ" शत॰ ब्रा॰ १२,२,२,२ ।

उद्धुर त्रि॰ उद्गता धरस्मात् प्रा॰ ब॰ वा प्र समा॰ । १निरङ्के २भारशून्ये ३दृढे । "ममकामकषमस्फुरोद्धुरोरः" माघ । "प्रथमममद्भ्योद्धुरम्" मालतीमा॰ । "यत्रपायमपि तु श्रीणामार्द्रमोहारणोद्धुर" भा॰ व॰ १४० अ॰ । ४ उच्चे च "पयाद्रुमहभुज दिनकरोद्धुरध्वनिमद्धालमानुयातमामीय" दश॰ ।

उद्धूत त्रि॰ उद्+धू-क्त । उत्कम्पिते "उद्धूतहर्षैर्धं जिनीभिरशुभिः" माघ । "पुमामं पवनोद्धूतं" रघु । [२उत्कलने च ।

उद्धूनन न॰ उद्+धू-णिच्-नुक् भावे ल्युट् । १उत्क्षेपणे

उद्धूपन न॰ उद्+धूप-धायामामपये भावे ल्युट् । १द्रव्यविशेषेण कर्णुसन्तापनरूपे व्यापारे ( भावरादेखोया ) "स्थौल्यनृकपुरीषाणि केशा हर्मितमथायतम् । रुगमस्य च रोमाणि योऽद्वाभ्युद्धूपनेऽपि च" सुश्रु॰ । (करणे ल्युट् ) २तत्साधने द्रव्ये । "सर्पपा सर्पनिर्मोको वचाकाकादनीधृतम् । उष्ट्राजाविगवाञ्चैव रोमाण्युद्धूपन शिशो । स्थौल्यनृकपुरीषाणि यथा यवफलो घृतम् । सर्व्ययोरुभयो कार्य्यमेतदुद्धूपन शिशो" सुश्रु॰ ।

उद्धूलन न॰ धूलितदुन्मर्दयति उद्+धूलि-णिच् । उद्धूलयति तत भावे ल्युट् । १धूलिवनृमर्द्दने २माकार्थोपकरणभेदे च । (मगालापूर्ण) "चूर्णस्योद्धूलनं देय भोज्ये घोरेषुसगमे । व्यञ्जनेषु च सर्वेषु शाकेष्वन्नजेषु च । मांसमत्स्यभवेष्वेव मवेष्टतलमादिषु । आटायेव मचेत् स्नेहे ततोऽङ्कूदक चिपेत् । वेसवारं सलवण क्षिप्त्वा तत् पिषित मचेत् । पर्द्धसिद्धे क्षिपेत्तक्रमथ वा दाडिमोरसम् । सिद्धे माके च दातव्य चूर्णमुद्धूलनस्य तत" पाकशास्त्रम् ।

उद्धूषण न॰ उद्+धूष-ल्युट् । रोमाञ्चे हला॰

उद्धृत त्रि॰ उद्+हृ-क्त । १उत्क्षिप्ते, २भुक्तोज्झिते, ३उत्तोलिते ४पृथक्कृते, ५उच्छेदिते च । "हृतीव माद्रेभिजवेग दर्पितैः पयोधिरोधक्षमसुद्धृत रज" नैष॰ "उद्धृतासि पिनाकिना" छुरिकाशोमन्त्र । "पयोऽनुद्धृतसारञ्च" "कूपेऽप्युद्धृतसज्जले" श्रा॰त॰पु॰ "उद्धर्तुमैच्छत् प्रसभोद्धृतारि" रघु ।

उद्धृतपाणि त्रि॰ उत्तरीयात् उद्धृत बहिष्कृत पाणिर्येन । उत्तरीयबहिष्कृतहस्ते । स्वाध्याये भोजने चैव दक्षिण पाणिमुद्धरेत्" समूलकर्मायचैव तथा भवनम् ।

उद्धृति स्त्री उद्+हृ-क्तिन् । १उत्क्षेपणे २उत्तोलने च । "मत्स्योद्धृतिमधमान कूतसमभिदर्शनम्" सुश्रु॰ ।

**उद्ध्मान** न० उद्धमति वह्निरत्र उद्+ध्मा–ल्युट् । १ चुल्ल्याम्

**उद्ध्य** पु० उज्झ–क्यप् "भिद्योद्ध्यौ नदे" पा०नि० । नदभेदे "कूलं भिद्योद्ध्यसन्निभौ" भट्टि "तोयदागमइवोद्ध्यभिद्ययोः" रघु ।

**उद्बन्धक** पु० । (धोपा)वर्णसङ्करभेदे । "आयोगवेन विप्रायां जातास्ताम्रोपजीविनः । तस्यैव नृपकन्यायां जातः सूनिक उच्यते । सूनिकस्य नृपायान्तु जाता उद्बन्धकाः स्मृताः । निर्णेजयेयुर्वस्त्राणि अस्पृश्याश्च भवन्त्यतः" उशना ।

**उद्बन्धन** न० उद्+बन्ध–भावे ल्युट् । ऊर्द्धं पाशादिना गलादिबन्धने । "उद्बन्धनमृता ये च गतिर्येषां न विद्यते । तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्" वायु पु० गयामाहात्म्ये "विषमुद्बन्धनं चैव शस्त्रमग्निप्रवेशनम् । करिष्ये न हि तान्यत्र पुनरद्य मिहोत्सहे" भा०व० ७अ० । "अनाथान्युद्बन्धनभ्रष्टा प्रव्रज्यानशनच्युताः । विषप्रपतनप्रायाद्दात्मघातच्युताश्च ये । सर्व्वे ते प्रत्यवसिताः सर्व्वधर्म्मबहिष्कृताः । चान्द्रायणेन शुद्ध्यन्ति तप्तकृच्छ्रद्वयेन वा" प्रा०वि०यमः । भावे घञ् उद्बन्धोऽप्यत्र पु० ।

**उद्बा(द्वा)हु** त्रि० उत्तोलितो(ता)बाहुर्येन प्रा०ब० । उत्तोलितबाहौ "प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः" रघु ।

**उद्बुद्ध** त्रि० उद्+बुध–क्त । १विकसिते न्यायादिमते ज्ञातवस्तुनः सदृशदर्शनादिना २कृतोद्बोधने संस्कारे च । यथा हस्तिदर्शनात् अनुभूतहस्तिपकसंस्कारस्य उद्बोधरूपे उद्बोधने कृते हस्तिपकः स्मर्य्यते इति । ३प्रबुद्धे ४जागरिते च "उद्बुद्धां च जगद्धात्रीं पूजयेद्दीपमालया" ति०त०पु० येन येन वस्तुना संस्कार उद्बुध्यते तथा उद्बोधकशब्दे वक्ष्यते । "उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयेत्" सा०द० ।

**उद्बोध** पु० उद्+बुध घञ् । १किञ्चिद्बोधे न्यायादिमते स्मृतिजननाय २संस्कारोद्दीपने च । "उत्साहादिसमुद्बोधः साधारण्याभिमानतः" "ननु कथं रामादिरत्याद्युद्बोधकारणैः सीतादिभिः सामाजिकानां रत्युद्बोधः" इति "रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः इति" च सा०द० ।

**उद्बोधक** त्रि० उद्बोधयति उद्+बुध–णिच्–ण्वुल् । १उद्दीपके २उद्बोधकारके ३सूर्य्ये पु० उदयेन सर्वेषां प्रबोधकत्वात्तस्य तथात्वम् । उद्बोधकानि च न्यायसूत्रवृत्त्योर्दर्शितानि यथा "प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्य्यवियोगैककार्य्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्म्माधर्म्मनिमित्तेभ्यः" सू० "स्मरणमित्यनुवर्त्तते निमित्तशब्दस्य द्वन्द्वात्परं श्रुतस्य प्रत्येकमभिसम्बन्धः । प्रणिधानं मनसो विषयान्तरसञ्चारवारणम् । निबन्ध एकग्रन्थोपनिबन्धनं यथा प्रमाणेन प्रमेयादिस्मरणम् । अभ्यासः संस्कारबाहुल्यम् एतस्य यद्यपि नोद्बोधकत्वं तथापि सादृश्ये योग्यसद्बोधकसमवधानं स्यादित्याशयेन तदुपन्यासः । अभ्यासोऽदृष्टतत्संस्कारः उद्बोधकत्वेनोक्त इति केचित् । लिङ्गं व्याप्यं व्यापकस्य स्मारकम् । लक्षणं यथा कपिध्वजादि अर्ज्जुनादेः । सादृश्यं देहादेः । परिग्रहः स्वीकारस्तस्य स्वस्वामिभावोऽर्थः तदेकतरेणान्यतरस्मरणम् । आश्रयाश्रितौ राजादितत्परिजनौ परस्परस्मारकौ । सम्बन्धो गुरुशिष्यभावादि गोणपन्यायात् पृथगुक्तः । आनन्तर्य्यं प्रोक्षणावघातादेः । वियोगो यथा दारादेः । एककार्य्यान्तेवासिप्रभृतयः परस्परस्मारकाः । विरोधादहिनकुलादेरन्यतरेणापरस्मरणम् । अतिशयः संस्कारउपनयनादिराचार्य्यादिस्मारकः । प्राप्तिर्धनादेर्दातारं स्मारयति । व्यवधानमावरणं यथा खड्गादेः कोषादि । सुखदुःखयोरन्यतरेणापरस्य ताभ्यां तत्प्रयोजकस्य वा स्मरणम् । इच्छाद्वेषौ यद्विषयकतया गृहीतौ तस्य स्मारकौ । भयं मरणादेर्भयहेतोर्वा स्मारकम् । अर्थित्वं दातुः । याच्ञादेः क्रिया वाय्वादेः, रागात्प्रीतेः पुत्रादेः स्मरणं, धर्म्माधर्म्माभ्यां जन्मान्तरानुभूतसुखदुःखसाधनयोः प्रागनुभूतसुखादेश्च स्मरणमिति उक्तेषु च किञ्चित्सहकारि किञ्चिच्च ज्ञानमुद्बोधकं शिष्यव्युत्पादनाय चाय प्रपञ्चः" वृ० ।

**उद्भट** पु० उद्+भट–करणे अप् । तण्डुलादेः प्रस्फोटनहेतौ १शूर्पे तदाकारत्वात् २कच्छपे, ३श्रेष्ठाशये महाशये, ४प्रवरे, च "पदेपदे सन्ति भटारणोद्भटाः" नैष० उद्गतो भटात् शास्त्रात्" निरा०त० । शास्त्रबहिर्भूते लोकप्रसिद्धे ऽशासनपक्षे लोके ।

**उद्भव** पु० उद्+भू–भावे अप् । १उत्पत्तौ । "स्त्रैयं वसुधे स्वङ्गानां मत्समे योषितोद्भवः" या०स्मृ० । कर्त्तरि अप् । २उत्पत्तिमति । "दिलीपसूनुर्मणिराकरोद्भवः" "सोमोद्भवायाः सरितो नृसोमः" रघु । "सुभ्रावदोषोऽस्मितेन मध्ये सोमोद्भवायाः सुरनिम्नगायाः" इस । "विष्णुपादोद्भवा गङ्गा" पुरा० "सत्त्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः" सा०द० । अपादाने अप् । ३उत्पत्त्युपादाने । "अहमनत्र भूतानामुद्भवश्च भविष्यताम्" गीता । उद्गतो भवात् निरा० स० । ४संसारातीते ५विष्णौ पु० । "उद्भवः क्षोभणो देवः" विष्णुस० "प्रपञ्चोत्पत्त्युपादनकारणत्वात् उद्भवः, उद्गतः संसारादिति वा" भा० उभयथा वाक्यम् ।

तत्र गुणविधानमनर्थकम् । न इति ब्रूम, प्रकृतौ ज्योतिष्टोमे गुणविधानमर्थवद्भविष्यति,यदि नामधेयं स्यात्, यावदेव यजेत इति, तावदेव उद्भिदा यजेत इति, न प्रकृतौ कश्चित् गुणविशेषः स्यात् । गुणविधौ च गुणसंयोगात् अभ्यधिकमर्थं विदधत उद्भिदादयः शब्दा अर्थवन्तो भविष्यन्ति तस्मात् गुणविधय इत्येवं प्राप्तम्” भा० “अपि वा नामधेयं स्यात् यदुत्पत्तावपूर्व्वमविधायकत्वात्” १,४,२,सू० “अपि वा इति पक्षो विपरिवर्त्तते । नामधेयं स्यात् इति प्रतिजानीमहे, एवमविहितमर्थं विधास्यति ज्योतिष्टोमात् यागान्तरं, श्रुतिरेव यागमभिधास्यति, इतरथा श्रुतिरुद्भिदादीन् वदन्ती उद्भिदादिमतो लक्षयेत् । उद्भिद्वता यागेन कुर्य्यादिति । यागेन कुर्य्यात् इति यजेतेत्यस्यार्थः करणं हि यागः । उद्भिदाद्यपि तृतीयानिर्द्देशात् करणं, तत्र उद्भिदा यागेन इति कर्मनामधेयत्वेन सामानाधिकरण्यसामञ्जस्यम्, द्रव्यवचनत्वे मत्वर्थलक्षणया सामानाधिकरण्यं स्यात् । श्रुतिलक्षणाविषये च श्रुतिर्ज्यायसी । तस्मात् कर्मनामधेयम् । ‘ननु प्रसिद्धं द्रव्यवचनत्वमपह्नुवीत, अप्रसिद्धं कर्मवचनत्वं प्रतिपद्येत’ उच्यते, तृतीयानिर्द्देशात् कर्मवचनता । कुतः ? करणवाचिनो हि प्रातिपदिकात् तृतीया भवति, करणं च यागः, तेन यागवचनमिममनुज्ञास्यामहे ।

“नैतद्युक्तं,यदि तृतीयानिर्द्देशे सति उद्भिदादिभ्यः शब्देभ्यो यागे बुद्धिरुत्पद्येत, स्यादेतदेव, न हि नो बुद्धिरुत्पद्यते, तस्मात् अयुक्तम् । तृतीयावचनम् अन्यथा नोपपद्यते” इति चेत् । यागे नोपपादि, न जात्वचित् अनवगम्यमानेऽपि यागवचनो भविष्यति, तस्मात् गुणविधयः । लक्षणेति चेत्, वरं लक्षणा कल्पिता, न यागाभिधानं, लौकिकी हि लक्षणा, वृत्तोऽप्रसिद्धकल्पनेति । अपि च यदि नामधेयं विधीयते, न यागः,अथ यागः, न नामधेयम्, उभयविधाने वाक्यभेदः” इति । उच्यते, न नामधेयं विधायिष्यते, अनुवादा हि उद्भिदादयः । कुतः प्राप्तिः ? इति चेत् । ततोऽभिधीयते, उच्छब्दसामर्थ्यात् भिच्छब्दसामर्थ्याच्च उद्भिच्छब्दः क्रियावचनः, उद्भेदनं प्रकाशनं पशूनामनेन क्रियते इत्युद्भिद् यागः, एवमाभिमुख्येन जयात् अभिजित्, विश्वजयात् विश्वजित्, एवं सर्वत्र । अतः कर्मनामधेयम् । यत्तु प्रवृत्तिविशेषकरोऽनर्थक इति, नामधेयेऽपि गुणफलोपबन्धेनार्थवत्, तस्मात् कर्मनामधेयान्येवंजातीयकानि—इति सिद्धम्” भा०

गवामयने सत्रे सप्तममासिकोत्तमाभिप्लविकस्थाने २एकाहभेदे । “सप्तमस्य मासस्योत्तमयोरभिप्लवयोः स्थाने त्रिवृद्व्यूढोदयराज उद्भिद्वलभिदौ” आश्व०श्रौ० १२, १,५, “सप्तमस्य मासस्य ये तयोरभिप्लवा तेषां यौ उत्तमाभिप्लवौ तयोः स्थाने त्रिवृत्स्तोमको व्यूढोदयराजः उद्भिद्वलभिदौ च द्वे अहनी इत्येतानि द्वादशाहानि” नारा०वृ० । गवामयनशब्दे विवृतिः ।

उद्भिद् पु० उद्+भिद–क । १वृक्षादौ पञ्चविधे स्थावरे । २उद्भेदके त्रि० “होता यक्षत्तनूनपातमुद्भिदम्” यजु० २८,२५ “उद्भिदं यज्ञफलानामुद्भेत्तारम्” वेददी० ।

उद्भिन्न त्रि० उद्+भिद–क्त । १उत्पन्ने कर्मणि क्त । २विकसिते दलिते च । “यौवनोद्भिन्नयौवना” ।

उद्भूत त्रि० उद्+भू–क्त । १उत्पन्ने “विषविक्षतयोद्भूतः कोटिसूर्य्यसमप्रभः” ति०त० पु० “सत्वरमयनोद्भूत” कलशभग न्यायमते २प्रत्यक्षयोग्ये “उद्भूतरूपं नयनस्य गोचरः” उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः” भाषा० । उद्भूतत्वञ्च उद्भवापरपर्य्यायो रूपादिविशेषगुणगतो जातिभेदः कणा० सूत्रवृत्तौ उक्तं यथा “अनेकद्रव्यसमवायात् रूपविशेषाच्च रूपोपलब्धिः” क० सू० । “तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम्” सू० । “रूपगतो विशेषोरूपविशेषः तच्चोद्भूतत्वमनभिभूतत्वं रूपत्वञ्च तस्माद्रूपस्योपलब्धिः । ननु परमाणोर्द्व्यणुकस्य च रूपं प्रत्यक्षं स्यादित्यत उक्तमनेकद्रव्यसमवायादिति अनेकपदं भूयस्त्वपरं तेनानेकानि भूयांसि द्रव्याणि आश्रयतया यस्य तदनेकद्रव्यं त्रसरेणुप्रभृति तत्समवायात्, घटादयोऽप्यवयवद्वारेण परम्परयाऽनेकद्रव्याश्रया एव, इत्थञ्चद्व्यणुकादौ रूपत्वविरहात् चाक्षुषत्वाभावः चाक्षुषे तेजसि च उद्भूतत्वविरहात् । उद्भवः रूपादिविशेषगुणगतो जातिविशेष एव रूपत्वादिव्याप्यः । नन्वेवं शुक्लत्वपरमित्यादुत्वादिभिरपि परस्परमाकाङ्क्षणप्रसक्तिरेव तत्तद्ग्राह्यतयाजातिकल्पने तु कल्पनागौरवम् उद्भवपदस्य नानार्थत्वमिति चेन्न बाह्यैकैकेन्द्रियग्रहणयोग्यगुणत्वस्यैवोपाधेरुद्भवत्वात् तदुपाधिविरहस्यैवानुद्भवत्वात्, । अनुद्भवाभाव एव उद्भव इति केचित् । तच्चिन्त्यम् अनुद्भवस्याप्येवं अवस्थापयितुमशक्यत्वात् । अतीन्द्रियविशेषगुणत्वमनुद्भूतत्वमिति चेत् एवं तर्हि ऐन्द्रियकविशेषगुणत्वस्यैवोद्भवत्वाप्रत्तेः । ऐन्द्रियकत्वावच्छेदकं किमिति चेत् तत्तत्, विशेषगुणेष्वेकैकोद्भूतत्व जातिः गुणगतजातौ परस्पर-

"तिसृभ्यो हिङ्करोति स पराचीभिः, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिस्स एकया, सप्तभ्यो हिङ्करोति स तिसृभिस्स एकया स तिसृभिरुद्गातो पञ्चदशस्य विष्टुतिः" ब्रा० "त्रिषु पर्यायेषूत्तरोत्तरसङ्ख्योत्कर्षमेत्य उद्गाती पञ्चदशस्य विष्टुतिरिति। त्रिषु पर्यायेषूत्तरोत्तरसङ्ख्योत्कर्षमेतोत्युद्यतीत्युच्यते" भा०।

सप्तदशस्तोमस्यापराप्युद्यती तत्रैव दर्शिता "अथोद्यत्याख्या सप्तदशस्तोमस्यापरा विष्टुतिमाह" भा०। "तिसृभ्यो हिङ्करोति स पराचीभिः, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिस्स एकया, नवभ्योहिङ्करोति स तिसृभिस्सतिसृभिस्स तिसृभिरुद्यती सप्तदशस्य विष्टुतिः" ब्रा०। 'तिसृभ्य पञ्चभ्यो नवभ्य इति क्रमेण सङ्ख्याया ऊर्द्ध्वगमनादुद्यती ऊर्द्ध्वं गच्छन्ती एतत्संज्ञा एषा सप्तदशस्तोमस्य विष्टुतिः" भा०।

अथ सन्ति गवामयने त्रिवृदादयः स्तोमा विहिता तेषां त्रिवृदादिस्तोमानां तिस्रोविष्टुतयः (सन्निवेशविशेषरूपेण स्तवनानि) तत्र बहिष्पवमानसाधनस्य त्रिवृत्स्तोमस्य तिस्रो विष्टुतयः उद्यती कुलायिनी परिवर्त्तिनी चेति तत्राद्या दर्शिता अन्त्ये तत्तच्छब्दे वक्ष्येते।

**उद्यत** त्रि० उद्+यम–कर्त्तरि–क्त। १उद्यमयुक्ते कृतोद्यमे "आततायी वधोद्यत" अमरः। भावे क्त। २उद्यमे न०। यमेर्नियमनार्थत्वे कर्मणि क्त। ३उत्तोलिते ४उद्यमिते "प्रदक्षस्तेन उद्यत आश्विनः" यजु०२९.५। "उद्यम्यते इत्युद्यत" वेददी०। "पर्य्यायोद्यतकार्म्मुकौ" रघु।

**उद्यति** स्त्री उद्+यम–भावे क्तिन्। उद्यमे। "वैश्वदेवानि जुह्वोत्यश्वमेधस्योद्यत्यै" शत०ब्रा० १३,१,८,१।

**उद्यम** पु० उद्+यम–घञ् न वृद्धिः। १प्रयासे प्रयत्नभेदे २उद्योगे। "निशम्य चैनां तपसे कृतोद्यमाम्" "यथाक मेना न नियन्तुमुद्यमात्" कुमा०। ३उत्तोलने च "सिप्रदशकोद्यमे लक्ष्यप्रतिलक्ष्य निपातने" भा०स्त्र०।

**उद्यमन** न० उद्+यम–णिच्–ल्युट्।१उत्क्षेपणे २उत्तोलने।

**उद्यमित** त्रि० उद्+यम–णिच्–क्त।१उत्तोलिते २उद्यमाय प्रेरिते। "आत्मसोमधुमदोद्यमितानाम्" किरा०।

**उद्यान** पु न० उद्यायतेऽत्र उद्+या–आधारे ल्युट् अर्द्धर्चादि। आरामे। तत्करणप्रकारादि आरामशब्दे ८०१पृ० उक्तम्। "बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या" "उद्यानानां नवजलकणैर्यूथिकाजालकानि" मेघ०

**उद्यानपाल** त्रि० उद्यानं पालयति पाल–अण् उप०स०। (माली) उद्यानरक्षके "उद्यानपालसामान्यमृतवस्तमुपासते" कुमा०। ण्वुल्। उद्यानपालकोऽप्यत्र। स्त्रियां टाप् अतइत्त्वम्। "तत्र प्रविशति उद्यानपालिका" मालविकाग्निमित्रनाटकम्।

**उद्यापन** पु न० उद्+या–णिच्–ल्युट् अर्द्धर्चादि। व्रतादिसमापने व्रतप्रतिष्ठायाम्। हेमाद्रौ व्रतखण्डे "उद्यापनं प्रवक्ष्यामि" इत्युपक्रम्य व्रतभेदे प्रयोगः। प्रतिष्ठा च कर्म्मान्तरं न तदङ्गमिति' रघु०। अस्येतिकर्त्तव्यतासामान्यप्रकारः व्रततत्त्वादौ अनुसन्धेयः। विशेषतस्तु तत्तद्व्रतोक्तविधायकवाक्येभ्योऽवसेयः विस्तरस्तु हेमाद्रौ व्रतखण्डे दृश्यः। तत्र तिथि० त०। व्रतारम्भप्रतिष्ठयोर्वर्ज्यकालमाह ज्योतिषे "गुरोर्भृगोरस्तवाल्ये वार्धके सिंहके गुरौ। वक्रिजोवातिचारेऽङ्कि गुर्वादित्ये दशाहिके। पूर्वरात्राद्यनाद्यातातिचारिगुरुवत्सरे। प्रायाशिगतजीवस्य चातिचारे त्रिपक्षके। कन्यादाद्भुत सम्प्राप्ते नीचस्थे च मलिम्लुचे। मासलङ्घितके चापि क्षये राहुयुते गुरौ। पौषादिकचतुर्मासे वरणाङ्कित वर्षणे। एकेनाह्ना चैकदिने द्वितीयेन दिनत्रये। तृतीयेन तु सम्प्राप्ते मासत्रयाणि शुभान्विता। विद्यारम्भकर्णवेधौ चूडोपनयनोद्वहान्। तीर्थस्नानमनादृत्तं तथाभादिसुरेक्षणम्। परीक्षाऽऽरामयज्ञाश्च पुरश्चरणदीक्षणे। व्रतारम्भप्रतिष्ठा च गृहारम्भप्रवेशने। प्रतिष्ठारम्भणे देवकूपादेर्वर्जयन्ति च। हानि यद्विवशाश्वस्ते जीवस्य भार्गवस्य च। द्वात्रप्रतिमेहत्यस्ते पादास्ते द्वादश क्रमात्। अस्तात् प्राक् परयो पञ्च गुरोर्भार्गवकवासते। पञ्च दशोमहास्ते तु भृगुर्बालोदयाह्निक। पादास्ते तु दशाहानि इद'शुक्रो दिनत्रयम्"। एवं व्रतारम्भप्रतिष्ठयोर्वर्ज्यकालोक्ते सिंहस्थगुरौ तदकर्त्तव्यताकथनं साहसमेव हरितालिकादिव्रते तद्वर्जनस्यासम्भवात् तस्य सिंहस्थगुरुविकल्पेनैव निमित्तत्वात् तत्र हरितालिकाशब्दे वक्ष्यते। सिंहस्थगुरुविककालस्याशुद्धिबोधकवाक्यस्य व्रतारम्भप्रतिष्ठाव्यतिरिक्तविषयकत्वेनाप्युपपत्तेः। "पूर्वे काले व्रतानां तु प्रतिष्ठा विधिवच्चरेत्। न तत्र कालनियमस्तत्र विघ्ने परावृद्धके इति" वचनात् पूर्वकाले न समयाशुद्धिर्बाधिकेति केचित्। एतद्वचनस्यामूलकत्वमाकलय्य।

**उद्याम** पु० उद्यम्यतेऽनेन उद्+यम–करणे घञ् वा वृद्धिः। ऊर्द्ध्वनियमनसाधने रज्ज्वादौ। "मित्रपाश प्रतिमुञ्चते

१शरीरनिर्मलीकरणद्रव्यादौ। “चूर्णैरुद्वर्त्तनैः पाणौ तैलाभ्यामथ मूर्द्धयेत्” सुश्रु०। “नाक्रमेद्रक्तविण्मूत्रष्ठीवनोद्वर्त्तनादि च” या० स्मृतिः। भावे ल्युट्। २द्रव्यभेदे स्नेहाद्यपहारार्थे व्यापारे च। “उद्वर्त्तनं वातहरं कफमेदोविनाशनम्। स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम्” “यवाश्वगन्धायष्ट्याह्वैस्तिलैश्चोद्वर्त्तनं हितम्। शतावर्य्यश्वगन्धाभ्यां पयस्यैरण्डजीवनैः” “ततोऽस्य बलातैलमभ्यक्तार्योऽवचार्य्यम् यवपिष्टमुद्वर्त्तनार्थे” सुश्रु०। ३विलेपने, ४मर्दने च। उद्+वृत-ल्युट्। ५उत्पतने ६उच्चाटने च “गात्रस्योत्सन्नस्यैव हित संवाहनानि च” सुश्रु० “चटुलशफरोद्वर्त्तनप्रेक्षितानि” मेघ०।

**उद्वर्त्तनीय** त्रि० उद्वर्त्तनाय हितम् छ। उद्वर्त्तनसाधने द्रव्ये “इदमुद्वर्त्तनीयं गोधूमचूर्णमिति” दुर्गोत्सवपद्धतिः।

**उद्वर्द्धन** न० उद्+वृध–ल्युट्। १अन्तर्हासे त्रिका०। णिच–ल्युट्। २उद्धतासम्पादने। ल्यु। ३उद्धिसम्पादके त्रि०।

**उद्वर्हण** न० उद्+वर्ह–ल्युट्। १उन्मूलने २उत्पाटने ३उद्धरणे। क्त। उद्वर्हित उन्मूलिते त्रि०

**उद्वह** पु० उद्वहति कर्त्तृं भवति उद्+वह–अच्। पुत्रे “पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः” स्मृतेस्तस्य नरकत्रायकर्त्तृत्वात् तथात्वम् २वंशधारके “उदयमस्तमयञ्च रघूद्वहात्” “पार्थिवोद्बुद्धरघूद्वहः” रघु० ३कन्यायां स्त्री कर्त्तृप्रवहणायोद्वपरिवहति अच्। वायुसमार्गते ४तृतीयस्कन्धस्थे वायौ पु०। आवहशब्दे विवृतिः “आवहः प्रवहश्चैव विवहश्च समीरणः। परावहः संवहश्च उद्वहश्च महाबलः। तथा परिवहः श्रीमानुत्पातभयशंसिनः। इत्येते क्षुभिताः सप्त मारुता गगनेचराः” हरि० २२६अ०। बा० भावे अप्। ५विवाहे “चूडोपनयनोद्वहान्” राजमा०।

**उद्वहन** न० उत्तोलन वहनम्। उत्तोल्य स्कन्धादिना वहने। “स्कन्धेन देहोद्वहनाय मेघः” कुमा० “कैलासनाथोद्वहनाय भूय” “आपीनभारोद्वहनप्रयत्नात्” रघु० २विवाहे च “भुव प्रयुक्तोद्वहनक्रियायाः” रघु०। “अपितृभ्य पितादद्यात् सुतसंस्कारकर्म्मसु। पिण्डानोद्वहनात्तेषां तदभावेऽपि तत्क्रमात्” स्मृतिः।

**उद्वादन** न० उद्+वद–णिच्-ल्युट्। १उच्चैरावेदने। “उपदीषी स्वेष्वग्निषु नष्टमित्यनन्नाद्युद्वादनान्तं सान्निपातिकम्” कात्या० २५,१४,२, “उपदीषो मेदिन स्वामग्नीन् विहृत्य नष्टमित्यन्तमाद्युद्वादनान्तं सान्निपातिकं कर्म्म कुर्य्यात्” कर्कः। उद्वादनप्रकारश्च शत० ब्रा० २,२,१,२९, दर्शितो यथा “अथैक उद्वदति दीक्षितोऽयं ब्राह्मणो दीक्षितोऽयं ब्राह्मण इति निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्य्यो योऽयं यज्ञं प्रापदित्ययं युष्माकैकोऽभूत्त गोपायतेत्येवैतदाह त्रिष्कृत्व आह” भा०। “उद्वदति उच्चैरावेदयति” भा० २उच्चैर्वादाकरणे च उद्+वद-णिच् ल्युट्। उद्वादयनमप्यत्र न० “यथेन्द्र उद्वादनं लब्धा चक्रे अधस्पदम्” अथ० ५,८,८,

**उद्वान** पु० उद्+वम–समक्तौ घञ्। १उद्वमने णिच्–कर्म्मणि अच्। २उद्वमिते त्रि० रायमुकुटः।

**उद्वान्त** न० उद्+वम–क्त। कृतोद्वमने उद्गीर्णे अमरः।

**उद्वाप** पु० उद्+वप–भावे घञ्। १उन्मूलने २उद्धरणे। ३मूयमाण परिपरित्यागे पश्चात् “आवापोद्वापाभ्याम्” मुक्ता०। कर्म्मणि घञ्। उद्वाप्य संस्थीयमाने ४भस्मादौ। “कपालानि भस्मोद्वापे कुर्य्यात्” कात्या० ५,२,६ भस्मोद्वापशब्देन प्रत्यहं गार्हपत्यादिस्थरेभ्यो भस्मोद्धृत्य यो राशिः क्रियते स उच्यते कर्कः”। णिच् भावे अच्। ५मुण्डने।

**उद्वाय** पु० उद्+वा–घञ्। १उद्वासने २उपशमे। तत आचारे क्विप्। उद्वायति। “वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति” छा० उ०। “उद्वायति उद्वासनं प्राप्नोत्युपशाम्यति” भा०। गणव्यत्ययोऽनात्र।

**उद्वास** पु० उद्+वास–घञ्। स्वस्थानातिक्रमेण अस्तप्राप्तौ “अमरावत्यादीनां पुरीणां द्विगुणोत्तरोत्तरेण कालेनोद्वास” छा० उ० भा०। तत बलादि० इनि मतुप् च। उद्वासिन् उद्वासवत् तद्वति त्रि० स्त्रियां ङीप्।

**उद्वासन** न० उद्+वस–ल्युट्। १मारणे उद्+वस+णिच्-ल्युट्। २विसर्जने। स्रुगादीनाम् उच्चोच्चलनेनान्यत्र स्थापनरूपे अग्न्याधानाङ्गे ३संस्कारभेदे “अथ उपस्तृश्य भावादाय्यै परिस्तरणपात्रसंसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणस्रुक्संमार्जनोद्वासनावेक्षणानि कृत्वाग्नीध्र उत्पूय पश्चादाज्यग्रहणम्” कात्या० ९,१,२, “अतोद्वासनमाहवनीय आग्रयिणे २,७,८, “आज्याधिश्रयणस्रुक्संमार्जनोद्वासनावेक्षणानि” कात्या० ८,६,२१, ४स्थानान्तरनयने च “दक्षिणतोऽधिश्रयणोद्वासने” २५,८,९, भस्मनि अधिश्रयणमुद्वासनं च गार्हपत्याद्दक्षिणस्यां दिशि कुर्य्यात्” कर्कः।

**उद्वास्य** अव्य० उद्+वस–णिच्–ल्यप्। विसृज्येत्यर्थे “उद्वास्य देवं स्वेधाम्नि” तन्त्रम्। २स्थानान्तरं नीत्वेत्यर्थे च कर्मणि यत्। ३उच्चोसनीये ४उद्धरणीये च त्रि०।

जिघांसा मातुलकन्योद्वाहस्तु शिष्टैरपि क्रियते तस्य श्रुतिविरुद्धत्वेऽपि किञ्चित् श्रौत लिङ्गमास्थाय तेषां तथाचरणमिति मन्तव्यं। तस्य श्रौतलिङ्गस्याभ्यार्थपरता पराशरभाष्यादौ दर्शिता। अतएव द्वारकारूपदर्शितदेशशालिना तथाचरणे भाग०१०स्कन्दे। "यद्यप्यनुस्मरन् वैरं रुक्मी कृष्णावमानितः। व्यतरत् भागिनेयाय सुतां कुर्वन् स्वसुः प्रियम्"। "दौहित्रायानिरुद्धाय पौत्रीं रुक्म्याददद्धरेः। रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया जानन्नधर्मं तद्यौनं स्नेहपाशानुबन्धनः"। अधर्मं जानन्नित्युक्त्या तेन तस्याधर्मत्वम्। "मातुलस्य सुतामूढ्वे"ति मातृगोत्रसम्बन्धात् तस्याधर्मत्वम् सुव्यक्तमेव। स च विवाहोऽष्टविधः "ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः। गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः" मनुः एतेषां लक्षणं तत्तच्छब्दे दृश्यम्। "येन भार्य्या कृता पूर्वं कृतोद्वाहा परस्य वै" हरिवं०।

उद्वाहन न० उद्+वह–णिच्–ल्युट्। १गवादेर्वाहकस्य अदने २उन्नयने ३स्थानान्तरनयने। उद्वाह्यते स्थानान्तरं नीयतेऽनेन उद्+वह–णिच्–करणे ल्युट्। ४उद्धारणसाधने "उद्घाटनं घटीयन्त्रं सलिलोद्वाहने मतः" अमरः। उद्+वह–स्वार्थे णिच्–भावे ल्युट्। ५विवाहे। वाहनस्य हलाकर्षणस्योपरि वाहनं कर्षणं यत्र। ६द्विहल्ये क्षेत्रे यत्र प्रथममेकवारं हला पुनः कर्षणं क्रियते तादृशे क्षेत्रे हेम०। [ टके (कड़ि) हेम०।

उद्वाहनी स्त्री उद्धूयते स्वार्थे णिच्–कर्मणि ल्युट्। वरा

उद्वाहिक त्रि० उद्वाहः प्रयोजनमस्य ठक् मन्त्रापूर्वकविधेरनित्यत्वात् न वृद्धिः। विवाहसाधने मन्त्रादौ "नोद्वाहिकेषु मन्त्रेषु विधवावेदनं क्वचित्" मनुः। वृद्धौ औद्वाहिकोऽप्यत्र त्रि०।

उद्वाहित पु०स्त्री उद्वाहोजातोऽस्य तारका० इतच्। जातविवाहे "बाले वृद्धे तथैवास्त गते च दैवमन्त्रिणि। उद्वाहितायाः कन्याया दम्पत्योरेकनाशनम्" राजमा०।

उद्वाहिनी स्त्री उद्वाहः उद्वहनं साध्यतयाऽस्त्यस्याः इनि ङीप्। रज्जौ मेदिनि०।

उद्विग्न त्रि० उद्+विज–कर्त्तरि क्त। उद्वेगयुक्ते, "निमग्नोद्विग्नसंज्ञोऽयं धर्मे दोमैव मेदिनी" भट्टिः। द्व पर्य्यायाराजमतया२व्याकुलचित्ते,३क्षुभिते च।

उद्वीक्षण न०उद्+वि+ईक्ष–भावे ल्युट्। १ऊर्द्ध्वदृष्टौ। करणे ल्युट्। २तत्साधने नेत्रे "सयाजलोद्वीक्षणकौतुहलम्" रघु।

उद्वीत त्रि० उद्+वि+इ–क्त। विशेषेणोद्गते। (उद्धवापिरक्षोषा) वमन्नात् प्राविते "ततोयुधिष्ठिरानीकाद्‌वीतानिर्वमिव्यतम्" भा० द्रो० १६अ०।

उद्वृत्त त्रि० उद्गतो वृत्तात् निरा०स०। १दुर्वृत्ते। उद्+वृत–क्त। २उत्तोलिते ३भग्नोच्छ्रिते। ४अधिके। "उद्वृत्तोहि पम्बः समधिकफलमापद्यते" . व्या० न्याय०। "कलमयोद्वृत्तनिवापसुप्रापा" भा० आ० प०७। ५क्षुभिते च "उद्वृत्तसन्नक्राद् वहलोऽमल्ल" रघु०।

उद्वेग पु० उद्+विज–घञ्। १व्याकुलचित्ततायाम् २विरहजन्ये तु क्षोभमे, "मनोभिः सोद्वेगैः प्रणयविहतिध्वस्तरुचयः" किरा०। "सहलोद्वेगमिव प्रजेरद्रिति" रघुः। "यान्तोद्वेगलिपितमवन्न ज्येष्ठक्रमैर्भ्रान्त्या" भेष०। "कोऽत्र बाधते उद्वेगं जनयति, पिरोऽव्यक्तोते नाविकात्तुप्तावति च कटुका" सुश्रु०। "सद्गेनैव्यनुद्वेगो साधुर्भ परिकीर्त्तितम्" सा०द०। ३भये च। ४गुवाकफले न०। उद्गतो वेगोऽस्मात्। ५स्थिरे,६ स्तिमिते ७मीनमानिनि च त्रि०।

उद्वेजन त्रि० उद्+विज–भावे ल्युट्। १उद्वेगे, अमरः "परदाराभिमर्शेषु प्रवृत्तान् नृन् महीपतिः। उद्वेजनकरैर्दण्डैर्विच्छयित्वा प्रवासयेत्" मनु तन्त्रे साधु च। उद्वेजनीय उद्वेजक त्रि० "परिहरेदुद्वेजनीयां कथां" सुश्रु०।

उद्वेजित त्रि० उद्+विज–णिच्–क्त। कृतोद्वेगे "उद्वेजिता वृष्टिभिराश्रयन्ते" कुमा०।

उद्वेदि त्रि०उन्नता वेदिर्यत्र प्रा० ब०, नत्वलोपः। उन्नतवेदिके। "विमानं नवमुद्वेदि चतुःस्तम्भप्रतिष्ठितम्" रघु

उद्वेप पु०उद्+वेप–भावे घञ्। १उत्कम्पने। कर्त्तरि अच्। २तद्युक्ते त्रि०। ततः तेन निर्वृत्तमित्यर्थे चतुर्था० अच्। उद्वेप तन्निर्वृत्ते त्रि०। स्त्रियां ङीप्।

उद्वेल त्रि० उत्क्रान्तोवेलाम् अत्या० स०। १वेलातिक्रान्ते २मर्य्यादातिक्रान्ते "भवमभयोर्हेलादावक्षुभैर्नतोदधे" रघु

उद्वेष्टन न० उद्+वेष्ट–ल्युट्। १करपादयोर्बन्धने, २उपवेष्टने च। "वक्ष्ये मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रम" "हृदयोद्वेष्टनं तन्द्रा तालाशु विशोषणं" सुश्रु०। उद्गतं वेष्टनात् निरा०स०। ३उन्मुक्तबन्धने त्रि०। "कदाचिद्वेष्टनवालवासवा" रघु कुमारव

उद्वोढृ पु० उद्+वह–तृच्। परिणेतरि। "उद्वोढापि भवेत् पापी च वर्णात् कुलनायिके।। वेश्यागमनजं पापं तस्य च कोटिनेदिने" मत्स्यनि०स०।

उद्भस उज्झे क्र्या० पर० सक० सेट्। उद्भसाति औभासीत्

कालेन मध्याह्नाद्गतस्तस्य नतसंज्ञा । अथ चरेणोनयुतस्योन्नतकालस्य किल ज्या साध्या । सा च ज्या मध्यावधिर्भवति । स च मध्यप्रदेशोऽहोरात्रवृत्तस्योन्मण्डलसंपाते भवति । यत उन्मण्डलसंपाताभ्यामूर्ध्वमहोरात्रवृत्तस्यार्धमधोऽर्धम् । अत उन्मण्डलावधेर्जीवा साध्या । क्षितिजोन्मण्डलयोरन्तरं चरार्धम् । अतश्चरार्धेन वर्जितादुन्नतादुत्तरगोले दक्षिणे तु युतात् । यत उत्तरगोले क्षितिजादुपर्युन्मण्डलं, दक्षिणेऽधः । तस्मात् कालाद्या ज्या सा धिता सा त्रिज्यावृत्तपरिणता । सा च सूत्रसंज्ञा । अथ यदि त्रिज्यावृत्ते एतावती तदा द्युज्यावृत्ते कियतीत्यनुपातेन द्युज्यावृत्तपरिणता । सा च कलासंज्ञा" प्रमि० ।

सि० शि० उक्ते यन्त्राणामुन्नतांशज्ञानार्थे ४उपायभेदे च । "यन्त्रवेधविधिना प्रवीक्षितयो नतिश्च भवतोऽवलम्बकौ । तौ क्रमाद्विपदशक्तिहृद्दलेऽत्र वा नतसमुन्नता लवाः" शि० "चक्रयन्त्रेण यष्टिवेधवद्भं च विध्येत् । तत्र यन्त्रनेम्या ये उन्नतांशास्तेऽवलम्बांशाः । ये नतास्ते लम्बांशा । अथ वा विषुवद्दिनार्द्धे येऽर्कस्य नतोन्नतांशास्तेऽवलम्बांशा इति युक्तियुक्तम्" प्रमि० । "उन्नत द्युनिशमण्डले कलात् सावनं द्युतिविधौ हि तत्प्रभा । तिर्यगक्षवशतोऽक्षकर्णखण्डे दृशो न तु भरं च लम्बवत्" शि० । "दृङ्मण्डले क्षितिजादुपरि ग्रहपर्यन्तं येऽ शास्त उन्नतांशाः समध्याद्ग्रहस्ते नताः । उन्नतांशानां ज्या शङ्कुः । नतांशज्या दृग्ज्या शङ्कुं कच्छपपृष्ठाभिमुखं कार्यं । दृक् कक्षेणोच्छ्रितत्वात् । अवयवौ शङ्कुच्छायाधिकारे व्याख्यात एव" प्रमि० ।

"उदग्दिशं याति यथा यथा नरस्तथा तथा स्यान्नतमृक्षमण्डलम् । उदग्ध्रुवं पश्यति चोन्नतं क्षितेस्तदन्तरे योजनजाः पलांशकाः" सि० शि० ।

तत भावे ष्यञ् औन्नत्य न० । तल् उन्नतता स्त्री । त्व उन्नतत्व न०, तद्भावे "तदेव नैसर्गिकमुन्नतत्वम्" रघु०

**उन्नतकाल** पु० सि० शि० उक्ते छायात कालज्ञानसाधने प्रक्रियाभेदे "फलघ्नुतिघ्नस्त्रिगुणस्य वर्गाद् द्युज्येष्टकर्णाहतिहृद्विशेषा । इष्टान्त्यका तद्रहितान्त्यका या भवन्ति या उत्क्रमचापलिप्ताः । नतासवस्ते द्युदलेऽथ तैरूनितस्त चोन्नतकाल एवम्" शि० । "त्रिज्यावर्गं पलकर्णेन गुण्यं द्युज्यया इष्टकर्णस्य च घातेन भाज्यं यत्फलं लभ्यते सेष्टान्त्यका । तयेष्टान्त्यया रहितया अन्त्याया यच्छेषं तस्योत्क्रमेण धनुः कार्यं तस्य धनुषो यावत्यः कलास्तावन्तस्तस्मिन् कालेन नतासवो ज्ञेया. तैर्नतासुभिरूनीकृता- दिनदलासव उन्नतासवः स्युः । प्रकारान्तरेण त्रैराशिकत्रयेणोपपत्ति । यदीष्टच्छायाकर्णेन द्वादशाङ्गुलशङ्कुर्लभ्यते तदा त्रिज्याकर्णेन क इति । अत्र त्रिज्याया द्वादश गुण इष्टकर्णो हरः । फलं महाशङ्कुः । अथ तस्य धृतिकरणार्थमनुपातः । यदि द्वादशाङ्गुलशङ्कोर्विषुवत्कर्णः कर्णस्तदास्य महाशङ्कोः क इति । पूर्वं त्रिज्याया द्वादश गुण इदानीं हरः । अतस्तुल्यत्वाद्द्वादशाङ्कयोर्गुणहरयोर्नाशे कृते सति त्रिज्यायाः पलकर्णो गुण इष्टच्छायाकर्णो हरः फलमिष्टधृतिः । अथेष्टान्त्यार्थमनुपातः । यदि द्युज्यया त्रिज्या लभ्यते तदेष्टधृत्या किमिति । इदानीं त्रिज्या गुणो द्युज्या हरः । हरयोर्घाते हर इति द्युज्येष्टकर्णाहतिर्भवति । गुणयोर्घाते त्रिज्यावर्गः पलकर्णगुणितो भवति । एवं फलमिष्टान्त्यका । तया रहिताया अन्त्याया यदवशेषं सा नतासोरुत्क्रमज्या भवति । अतस्तस्या धनुरुत्क्रमेण नतकालः स्यात् । नतकालो दिनार्धात् पतित उन्नतकालः स्यादित्युपपन्नम्" प्रमि०

**उन्नतानत** न० उन्नतं च तदानतञ्च । उच्चनीचस्थानादौ । "बन्धुरं तून्नतानतम्" अमरः ।

**उन्नति** स्त्री उद्+नम-क्तिन् । १वृद्धौ, २उदये, ३गरुडभार्यायाञ्च तत्र चन्द्रशृङ्गोन्नति सि० शि० उक्ता यथा "मासान्तपादे प्रथमेऽथ चेन्दोः शृङ्गोन्नतिर्यद्दिवसेऽवगम्या । तदोदयेऽस्ते निशि वा प्रसाध्य शङ्कुर्विधोः स्वोदितनाडिकाद्यैः" शि० । "कृष्णाष्टम्या उपरि प्रथमेऽह्नि वा शुक्लाष्टम्याः प्रागेव यस्मिन्नभीष्टदिने चन्द्रशृङ्गोन्नतिर्ज्ञातुमभीष्टा तस्मिन् दिने मासान्तपाद औदयिकौ चन्द्रार्कौ स्फुटौ कार्यौ । प्रथमचरणे तात्कालिकौ तत्र शृङ्गोन्नतिर्ज्ञेया । निशि वा । एतदुक्तं भवति । मासान्तपाद उदयकाले शशिशृङ्गोन्नतिः साध्या । प्रथमचरणे त्वस्तकाले । अथ वा निरुदयास्तनियमेन । यत्रेष्टे तत्रोदयात् प्रागिष्टघटीतुल्यकाले वा यत्राले तत्रास्तादुपरीष्टासु घटीषु वा शृङ्गोन्नतिः साध्या । तत्र तात्कालिकौ चन्द्रार्कौ कृत्वा चन्द्रस्य स्फुटकान्त्युदयास्तलग्नोन्नतघटिकादिभिस्तदुपकरणं शङ्कुः साध्यः । अत्रोपपत्तिः । चन्द्रस्यार्धोदूने शुक्ले तत्कोटौ शृङ्गाकारे भवतः । तत्रेष्टकाले कतरा शृङ्गोन्नतिर्भविष्यतीति ज्ञातव्यम् । तत्र शुक्लस्य शृङ्गाकारतार्धोदूने शुक्ले । तच्चार्धोदूनत्वं मासान्तपादे प्रथमे च सम्भवति । द्वितीयतृतीययोरपि चरणयोर्भंशुमादिभिः कृष्णशृङ्गोन्नतिरानीता सा मम न चम-

"पूर्वापरक्षितिजसंगमयोर्निबध्न यास्ये ध्रुवे पललवैः क्षितिजादधः स्वे । सौम्ये कुजादुपरि चापलवैर्ध्रुवे त-दुन्मण्डलं दिनमिषो ध्वयहङ्गिकारि' सि० । "समवृत्त-क्षितिजयोर्यौ पूर्व्वापरौ सम्पातौ तयोर्ध्रुवचिह्नयोश्च यन्न बद्धिमध्यते तदुन्मण्डलसंज्ञम् । दिनरात्र्योर्ह्रासवृद्धी तद्वशेन भवत" प्रमि० । सूर्य्यसिद्धान्ते रङ्गनाथेन च समवृत्तं यथा "प्राक्पश्चिमाश्रिता रेखा प्रोच्यते सममण्डलम् । उन्म-ण्डलं च विषुवन्मण्डलं परिकीर्त्त्यते" सू० । 'प्राक्पश्चि-माश्रिता पूर्व्वपश्चिमसम्बद्धा बाधिता रेखा समवृत्तमुच्यते । सैव रेखोन्मण्डलं विषुवन्मण्डलम् । च समुच्चये । उभय-संज्ञक कथ्यते । अत्रोपपत्तिः । क्षितिजपूर्व्वापरवृत्तस-योगौ पूर्व्वापरे तन्मूलं पूर्व्वापरस्थलमिति । पूर्व्वापर-वृत्तस्य भूमावूर्द्ध्वाधरात्तकारित्वतत्त्वेनादर्शनाद् आकारतयैव दर्शनाच्च पूर्व्वापरवृत्तमपि तन्मूलम् । पूर्व्वापरवृत्तस्य सम मण्डलत्वेनाभिधानात् तद्रेखा सममण्डलसञ्ज्ञोक्ता । अथ स्वनिरक्षदेशक्षितिजवृत्तस्योन्मण्डलाख्यस्य तत्र योगयोः सत्त्वात् तन्मध्यस्थलत्वेन पूर्व्वापरस्थलस्यापि सत्त्वात् पूर्व्वापरस्थलमुन्मण्डलसञ्ज्ञम् । एतेनान्यदेशक्षितिजसञ्ज्ञया स्वदेशक्षितिजसञ्ज्ञा सुतरां सिद्धेति पूर्व्वापरस्थलस्य क्षितिजवृत्तसञ्ज्ञा द्योतिता । पूर्व्वापरस्थानयोः क्षितिज-वृत्तस्य संलग्नत्वादुन्मण्डलवृत्तस्य क्षितिजानुकारित्वाच्च" रङ्ग० । "उद्गतादयोऽस्य । परोऽथ बोट्टवृत्तगते रवौ श्रुतिः" सि० शि० । प्रा०स० । २उन्मण्डले त्रि० ।

उन्मण्डलकर्ण पु० सि०शि० उक्ते छायया दिनज्ञानार्थे उन्म-ण्डलस्थार्कस्य छायाकर्णे । तदानयनं तत्रैव यथा "धृतायनांशार्कभुजज्यकाऽक्षया खरामनिघ्न्यम्भुवो" (१०१५ २०) धृता परः । पलश्रुतिघ्नः पलभाविभाजितः परोऽथ बोट्टवृत्तगते रवौ श्रुतिः" सि० । "अर्कस्य सायनांशस्य बृहती भुजज्या साध्या । कं खगुणाङ्कैर्ध्ना स्यं । तया ज्यया पूर्व्वाग्निनिर्तिभिर्म्भूनयनिघ्नो (१०१५२०) भाज्या । यल्लब्धं सभी परख्य । स परः पलकर्णेन गुण्यः पलभया भाज्यः । फलमुन्मण्डलगतस्यार्कस्य छायाकर्णो वा भवति" प्रमि० ।

उन्मण्डलशङ्कु पु० सि०शि०उक्ते अक्षक्षेत्रप्रदर्शनार्थे उन्मण्डल-शङ्कौ । 'अथादिक्षेत्र कथिता च कोटिरक्ष्णसमा दोः श्रवणोऽग्रमज्या । उद्वृत्तशङ्कुः कोटिरथाग्रकाखण्ड भुज-स्तच्छ्रवण क्षितिज्या' । सदृ यद्वृत्त समवृत्तशङ्कुरपि तद्वृतेस्तावद् कोटिकर्णौ । अथादिक्षेत्रं भुज एवमष्टौ क्षेत्राण्यभूम्यज्ञभवानि तावत्' सि० ।"अत्र किल निरक्षदेशे यदेव विषुवन्मण्डलं तदेव सममण्डलम् । तथा क्षितिजा-दन्यदुन्मण्डलं नाम वलयं नास्ति ।--तत्र ध्रुवौ च क्षि-तिजासक्तौ । अथ निरक्षदेशादुत्तरतो यथा यथोत्तरतो गच्छति तथा तथोदग्ध्रुवमुन्नतं पश्यति । तथा यैर्भागैर्ध्रुव उन्नतस्तैरेव भागैस्तत्र खस्वस्तिकाद्दक्षिणतो विषुव-न्मण्डलं नतं पश्यति । विषुवन्मण्डलस्य तिर्य्यक्स्थित-त्वात् तदाश्रिताग्नन्यहोरात्रवृत्तानि स्वस्थाने तिर्य्यङ्नानि भवन्ति । अत साक्षे देशे खगोलवलयानां तिर्य्यग्भखगोल-वलयानां च सम्पातात् तत्रस्थक्षेत्राण्युत्पद्यन्ते । तान्य-क्षक्षेत्राणाम्युपयोगित्वात् कथ्यन्ते । अक्षभा नाम पलभा पलिभा वा भुजः । द्वादशाङ्गुलं शङ्कुः कोटिः । अक्ष-कर्णस्तत्र कर्णः" प्रमि० उद्गृत्समाप्यत । एवमुन्मण्डलादि-शङ्कुरप्यत ।

उन्मत्त पु० उद्+मद-करणे क्त । १धूस्तूरे "विस्वैरष्टार्क-शमीभूदथिलोन्मत्तविषयुभिः" सुश्रु० । २मुचकुन्दवृक्षे च । कर्त्तरि क्त । ३उन्मादवति,४ग्रहावेशवति च त्रि० । "बाल-वृद्धातुरोन्मत्तैर्मत्तोन्मत्तापवर्ज्जितम्" नारद । "उन्मत्तेन यातिकाद्युन्मादयुक्तेन" मिता० । "उन्मत्तानाञ्च या गाथा शिशूनां चेष्टितं च यत् । स्त्रियो यत्र प्रभावन्ते नास्ति तत्र व्यतिक्रमः" म०त० मनुसपृ० । ४उद्धते च उत्कटमदम् । अतिशयेन मत्ते । ५अतिमत्ते "कदोन्मत्तस्य भूपस्य कुञ्जरस्य च गच्छतः;" पञ्चतन्त्रम् ।

उन्मत्तक पु०उन्मत्त इव कन् । १तापसभेदे । अमभूतयन्त्रे ४२८ पृष्ठे विवृतिः । स्वार्थे कन् । २उन्मत्ते । "क्लीबोऽथ प-तितस्तज्जः पङ्गुरुन्मत्तको जडः" याज्ञवल्क्यः ।

उन्मत्तगङ्ग अव्य० उन्मत्ता उत्तुङ्गा गङ्गा यत्र सञ्ज्ञायाम् अन्यपदार्थत्वे अव्ययी० । देशभेदे । 'उन्मत्तगङ्गं' नाम देशः" सि०कौ० ।

उन्मत्तगीत त्रि० उन्मत्तेन गीतम् "इत्यनूतेन जनमिति" पा० ३त० । उन्मत्तेन गीते एवम् उन्मत्तप्रल-पितादावपि तत्पुरुषेण प्रलपितादयो त्रि० ।

उन्मथन न० उद्+मथ-भावे ल्युट् । १उन्मर्द्दने २हिंसने । "अन्योन्यसूतोन्मथनादभूताम्" रघु 'वायुनोन्मथनं चापि भ्रमस्य क्षपतश्चया" सुश्रु० । सुश्रुतोक्ते ३यन्त्रकर्मभेदे च उग्रमन्तयन्त्रे ११९०पृ० दृश्यम् । कर्त्तरि ल्यु । ४उन्म-र्द्दनकारके त्रि० । "विपक्षचित्तोन्मथना नखव्रणाः" किरा० ।

उन्मथित त्रि० उद्+मथ-क्त । उद्धृते मर्द्दिते ।

उन्मद पु० उद्गतो मदो यस्मात् प्रा० ब० गतलोपः ।

विषमाश्च चेष्टा बलवद्विग्रहादयः । सन्निकृष्टं निदानमाह । "एकैकशः इत्यादि" सन्तु० तस्य सम्प्राप्तिमाह । "तैरल्पसत्त्वस्य मलाः प्रदुष्टा बुद्धेर्निवासं हृदयं प्रदूष्य । स्रोतांस्यधिष्ठाय मनोवहानि प्रमोहयन्त्याशु नरस्य चेतः" । अल्पसत्त्वस्य अल्पसत्त्वगुणस्य । मलाः वातादयः । बुद्धेर्निवासं हृदयं प्रदूष्येति । एतेनाश्रयस्य दुष्ट्या तदाश्रिताया बुद्धेरपि दुष्टिरुक्ता । मनोवहानि स्रोतांसि हृदयाश्रितानि दश एतानि विशेषतो बोद्धव्यानि । यतश्चरकेण सकलशरीरस्रोतांस्येव मनोधिष्ठानत्वेनोक्तानि । प्रमोहयन्ति विकृतं कुर्वन्ति । उन्मादस्य सामान्यं रूपमाह । "धीविभ्रमः सत्त्वपरिप्लवश्च पर्याकुला दृष्टिरधीरता च । अबद्धवाक्त्वं हृदयञ्च शून्यं सामान्यमुन्मादगदस्य लिङ्गम्" । धीविभ्रमः शुक्तिकायां रजतज्ञानम् । सत्त्वपरिप्लवः सत्त्वं मनस्तस्य चाञ्चल्यम् । अबद्धवाक्त्वम् असम्बद्धभाषित्वम् । शून्यं स्मृतिशून्यम् । वातिकोन्मादस्य निदानपूर्विकां सम्प्राप्तिमाह । "रूक्षाल्पशीतान्नविरेकधातुक्षयोपवासैरनिलोऽतिवृद्धः । चिन्तादिदुष्टं हृदयं प्रदूष्य बुद्धिं स्मृतिं चाप्युपहन्ति शीघ्रम्" । प्रदूष्य प्रकर्षेण दूषयित्वा । तस्यैव रूपमाह । "अस्थानहास्यस्मितनृत्यगीतवागङ्गविक्षेपणरोदनानि । पारुष्यकार्श्यारुणवर्णताश्च जीर्णे बलञ्चानिलजस्य रूपम्" । अस्थाने अनवसरे हास्यादीनि रोदनान्तानि । जीर्णे आहारे । बलं व्याधेः । पैत्तिकस्य निदानपूर्विकां सम्प्राप्तिमाह । "अजीर्णकट्वम्लविदाह्यशीतैर्भोज्यैश्चितं पित्तमुदीर्णवेगम् । उन्मादमत्युग्रमनात्मकस्य हृदि स्थितं पूर्ववदाशु कुर्यात्" । हृदि स्थितं पित्तं चितं सञ्चितम् पुनः अजीर्णकट्वम्लविदाह्यशीतैर्भोज्यैरुदीर्णवेगं सत् उन्मादं कुर्यात् पूर्ववत् हृदयं प्रदूष्य इत्यर्थः । तस्य रूपमाह "। अमर्षसंरम्भविनग्नभावाः सन्तर्जनाभिद्रवणौष्ण्यरोषाः । प्रच्छायशीतान्नजलाभिलाषाः पीता च भा पित्तकृतस्य लिङ्गम्" । अमर्षोऽसहिष्णुता । संरम्भः आरभटी आडम्बर इति यावत् । सन्तर्जनं परत्रासनम् । अभिद्रवणं पलायनम् । औष्ण्यं गात्रे । रोषो दाहविशेषः । प्रच्छायेत्यादि छायायां, शीतयोरन्नजलयोरभिलाषः । श्लैष्मिकस्य निदानपूर्विकां सम्प्राप्तिमाह । "सम्पूरणैर्मन्दविचेष्टितस्य सोष्मा कफो मर्म्मणि सम्प्रवृद्धः । बुद्धिं स्मृतिं चाप्युपहत्य चित्तं प्रमोहयन् सञ्जनयेद्विकारम्" । सम्पूरणैः भोजनादिभिः । मन्दविचेष्टितस्य व्यायामवर्जितस्य । सोष्मा कफ इति कफोऽप्युन्मादं करिष्यन् पित्तं सहायमपेक्षते व्याधिस्वभावात् । मर्म्मणि अत्र मर्म्मशब्देन हृदयमुच्यते । विकारमुन्मादरूपम् । तस्य रूपमाह । "वाक्चेष्टितं मन्दमरोचकश्च नारीविविक्तप्रियता च निद्रा । छर्द्दिश्च लाला च बलञ्च भुक्ते नखादिशौक्ल्यञ्च कफात्मके स्यात्" । वाक्चेष्टितं मन्दं वचनमल्पम् । नारीविविक्तप्रियता नारीप्रियता निर्जनप्रियता च । भुक्ते सति बलं व्याधेः । सान्निपातिकस्य निदानपूर्व्वकं लक्षणमाह । "यः सन्निपातप्रभवोऽतिघोरः सर्व्वैः समस्तैः स तु हेतुभिः स्यात् । सर्व्वाणि रूपाणि बिभर्त्ति तादृग्विरुद्धभैषज्यविधिर्व्विवर्ज्यः" स सान्निपातिक उन्मादः । सन्निपातग्रहणेनैव सर्व्वात्मकत्वलब्धम् । पुनः सर्व्वैरिति वचनं तद्रजस्तम प्राधान्यार्थम् । तेन रजस्तमोभिर्मिलितैरित्यर्थः । तेन वातादयो रजस्तमोभिर्मनोदोषैर्मिलिताः समस्ताश्च निदाने कपिता उन्मादं जनयन्ति । सर्व्वैर्हेतुभिः समस्तैर्मिलितैः स्यात् । यतोऽन्योव्याधिः सर्व्वैर्हेतुभिर्मिलितैरेव भवतीति नियमो नास्ति । अयन्तु व्याधिस्वभावात् सर्व्वैर्हेतुभिर्मिलितैः स्यात् । तादृगुन्मादः विरुद्धभैषज्यविधिः विरुद्धभैषज्यविधिरिति कोऽर्थः । त्रिदोषजे प्रत्येकं वातादिप्रत्यनीका कार्य्या । सा च परस्परविरोधिनी त्रिदोषघ्नन्ति किञ्चिदेव द्रव्यमामलकादि तच्चाल्पायौगिकम् । अतएव विवर्ज्यं न चिकित्स्य इत्यर्थः"। मनोदुःखजस्य विप्रकृष्टं निदानमाह ।"चौरैर्नरेन्द्रपुरुषैरित्यादि" सन्तु० । अन्यैर्हिंसादिभिः । गाढमतिशयेन । मते अभिहते प्रियया प्राप्तुमशक्यया रिरंसो पुरुषस्य विकारः उन्मादरूपः । तस्य रूपमाह ।"चित्तं प्रजल्पतीत्यादि" सन्तु० चित्तमावर्ण्यम् । मनोऽनुगतं गोप्यमपि । विघ्नो विरुद्धज्ञानः । अतीव मूढः अतीवज्ञानशून्यः । अत्र विकल्पो बोद्धव्यः । विषजस्य रूपमाह । "रक्तेक्षण इत्यादि" सन्तु० परास्तत । असाध्यमाह । "अवाङ्मुखस्तून्मुखो वा क्षीणमांसबलो नरः । जागरूकोऽसन्देहमुन्मादेन विनश्यति" । अथ देवादिकृतस्योन्मादस्य सामान्यं लक्षणमाह । "अमर्त्यवाग्विक्रमवीर्य्यचेष्टो ज्ञानादिविज्ञानबलादियुक्तः । प्रकोपकालो नियतश्च यस्य देवादिजन्मा स मनोविकारः"। अमर्त्त्यवाग्विक्रमवीर्य्यचेष्टः न मर्त्त्येन मनुष्येण वागादयो यस्य सः । विक्रमः पराक्रमः । वीर्य्यं शौर्य्यम् । ज्ञानादिविज्ञानबलादियुक्तः । ज्ञानं बुद्धिः । आदिपदेन ह्रीदा मेधाविचारप्रागल्भ्यादयो गृह्यन्ते । विज्ञानं शि-

स्नानादिविषयकं ज्ञानम् । चेष्टा व्यापारश्च । आदिपदेनाभिभाषणादि गृह्यते । निगदव्याख्यातमित्यादिभिः । मनो विकारः उन्मादः । तत्र देवाविष्टस्य लक्षणमाह । “सन्तुष्टः शुचिरतिदिव्यमाल्यगन्धो निस्तन्द्रोऽवितथसंस्कृतप्रभाषी । तेजस्वी स्थिरनयनो वरप्रदाता ब्रह्मण्यो भवति नरः स देवजुष्टः” । अतिदिव्यमाल्यगन्धः अतिशयो दिव्यमाल्यस्येव गन्धो यस्य सः । निस्तन्द्रः निद्रारहितः । अवितथं सत्यम् । ब्रह्मण्यः ब्राह्मणभक्तः । दैत्याविष्टस्याह । “संस्वेदी द्विजगुरुदेवदोषवक्ता जिह्माक्षो विगतभयो विमार्गदृष्टिः । सन्तुष्टो भवति न चान्नपानजातैर्दुष्टात्मा भवति स दैत्यग्रहजुष्टः” । विमार्गदृष्टिः कुमार्गरतः । दुष्टात्मा दुष्टस्वभावः । गन्धर्वाविष्टस्याह । “हृष्टात्मा पुलिनवनान्तरोपसेवी स्वाचारः प्रियपरिगीतगन्धमाल्यः । नृत्यन् वै प्रहसति चारु चाल्पशब्दं गन्धर्वग्रहपरिपीड़ितो मनुष्यः” । हृष्टात्मा हृष्टजीवात्मा । पुलिनं तोयोत्थितं तटम् वनान्तरं वनमध्यम् तयोः सेवी । स्वाचारः अनिन्दिताचारः । प्रियाणि परि समन्ततोभावेन गीतगन्धमाल्यानि यस्य स तथा । चारु चाल्पशब्दमिति नृत्यनक्रियायाः विशेषणम् । यक्षाविष्टस्याह । “ताम्राक्षः प्रियतनुरक्तवस्त्रधारी गम्भीरो द्रुतगतिरल्पवाक् सहिष्णुः । तेजस्वी वदति च किं ददामि कस्मै यो यक्षग्रहपरिपीड़ितो मनुष्यः” । पित्राविष्टस्याह । “प्रेतानां स दिशति संस्तरेषु पिण्डान् शान्तात्मा जलमपि चापसव्यवस्त्रः । मांसेप्सुस्तिलगुडपायसाभिकामस्तद्भक्तो भवति पितृग्रहाभिजुष्टः” । प्रेतानां मृतानां पितॄणाम् । दिशति ददाति । अपसव्यवस्त्रः दक्षिणस्कन्धप्रान्तोत्तरीय । नागाविष्टस्याह ।“उर्व्यां प्रसरति सर्पवत् कदाचित् सृक्किण्यौ भृशमपि जिह्वयावलेढि । क्रोधालुर्गुडमधुदुग्धपायसेप्सुर्विज्ञेयो भवति भुजङ्गमेन जुष्टः” । प्रसरति सर्पवत् उरसा चलति । सृक्किण्यौ ओष्ठप्रान्तौ । राक्षसाविष्टस्याह ।“मांसासृग्विविधसुराविकारलिप्सुर्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूरः । क्रोधालुर्विपुलबलो निशाविहारी शौचद्विड् भवति स राक्षसैर्गृहीतः” । अतिनिष्ठुरोऽतिनिर्दयः । ब्रह्मराक्षसाविष्टस्याह । ‘देवविप्रगुरुद्वेषी वेदवेदाङ्गविद्विषि । आत्मपीड़ाकरोऽहिंस्रो ब्रह्मराक्षससेवितः । अहिंस्रः अहिंसाशीलः । पिशाचाविष्टस्याह । “उद्ध्वस्तः कृशपरुषो चिरप्रलापी दुर्गन्धो भृशमशुचिस्तथातिलोलः । बह्वाशी विजनवनान्तरोपसेवी व्याचेष्टन् भ्रमति रुदन् पिशाचजुष्टः” । उद्ध्वस्तः नग्नः । दिगम्बर इति विदेहवचनात् । ( सु॰सु॰ उद्धस्त इति पाठः ) कृशो निर्मांसः । परुषो रूक्षः । अतिलोलः सर्वस्मिन् अन्नपाने लोलुपः । व्याचेष्टन् विरुद्धमाचेष्टन् । ग्रहा हिंसाक्रीड़ापूजार्थं गृह्णन्ति । अतएवोक्तम् । “ग्रहाश्च भिन्नमर्य्यादं क्षतं वा यदि वाऽक्षतम् । हिंस्युर्हिंसाविहारार्थं सत्कारार्थमथापि वा । तत्र हिंसार्थं गृहीतस्य लक्षणमाह । ‘स्थूलाक्षो द्रुतमटनः सफेनवामी निद्रालुः पतति च कम्पते च योऽति । यश्चाद्रिद्विरदनगादिविच्युतः स्यात् सोऽसाध्यो भवति तथा त्रयोदशेऽब्दे । यश्चाद्रीत्यादि यः पर्व्वतादिपतितः सन् ग्रहैर्गृहीत इत्यर्थः । आदिशब्देन भित्तिप्रासादादयो गृह्यन्ते त्रयोदशेऽब्दे सर्व एव देवादिगृहीतोऽसाध्यः । देवादीनामावेशसमयमाह ।“देवग्रहाः पौर्णमास्यामसुरा सन्ध्ययोरपि । गन्धर्वाः प्रायशोऽष्टम्यां यक्षाश्च प्रतिपद्यपि । पितरः कृष्णपक्षे च पञ्चम्यामपि चोरगाः । रक्षःपिशाचा रात्रौ च चतुर्दश्यां विशन्ति हि” । कृष्णपक्षे अमावास्याम् । प्रायःपदादन्यत्रापि । तिथ्यभिधानप्रयोजनं लक्षणार्थं तत्र तिथौ बलिदानार्थञ्च । ननु यदि देवादयो विशन्ति तदा विशन्तस्ते दृश्यन्ते कथं नेत्यत आह । “दर्पणादीन् यथा छाया शीतोष्णं प्राणिनो यथा । स्वमणिं भास्करार्श्चिश्च यथा देहञ्च देहधृक् । विशन्ति न च दृश्यन्ते ग्रहास्तद्वच्छरीरिणम्” । दर्पणादीत्यादि शब्देनान्यदपि निर्म्मलद्रवद्रव्यं गृह्यते । छाया प्रतिबिम्बम् । स्वमणिं सूर्य्यमणिम् । देहधृक् जीवात्मा” । भा॰प्र॰ । एतानि च वाक्यानि सुश्रुतोत्तरतन्त्रस्थानि । तत्र हि “प्रद्युम्नागतविज्ञानमनवस्था सहिष्णुता । क्रिया वाऽमानुषी यस्मिन् स ग्रहः परिकीर्त्त्यते” इति ग्रहं परिभाष्य “अस्वस्थेया ग्रहगणा ग्रहाधिपतयश्च ये । व्यज्यन्ते विविधाकाराभिद्यन्ते ते तथाष्टधा देवास्तथा शत्रुगणास्तेषां गन्धर्वयक्षाः पितरो भुजङ्गाः । रक्षांसि या चापि पिशाचजातिरेषोऽष्टधा देवगणो ग्रहाख्यः” इति विभज्य “सन्तुष्टः शुचिरित्यादिना तल्लक्षणानां लक्षणान्याह । तानि भा॰प्र॰ सङ्गृह्योदाहृत्य व्याख्यातानीति द्रष्टव्यम् । अत्र च प्रकृतदेवादीनां न क्वचित् प्रवेशः किन्तु तत्परिचारकाणामेव देवाद्याचरवतां प्रवेश इत्युक्तं यथा सु॰ उत्त॰ ।“तपांसि तीव्राणि तथैव दानं व्रतानि धर्मो नियमश्च सत्यम् । गुणास्तथाष्टावपि तेषु नित्या व्यस्ताः समस्ताश्च

यथाप्रभावम् । न ते मनुष्यैः सह संविशन्ति न वा मनुष्यान् क्वचिदाविशन्ति । ये वा विशन्तीति वदन्ति मोहात्ते भूतविद्याविषयादपोह्याः । तेषां ग्रहाणां परिचारका ये कोटीसहस्रायुतपद्मसंख्याः । असृग्वसामांसभुजः सुभीमा निशाविहाराश्च समाविशन्ति । निशाचराणां तेषां हि ये देवगणाश्रिताः । ते तु तत्सत्त्वसंसर्गाद्विज्ञेयास्तु तदङ्गनाः । देवग्रहा इति पुनः प्रोच्यन्ते शुचयश्च ये । देववच्च नमस्यन्ते प्रत्यर्थ्यन्ते च देववत् । स्वामिशीलक्रियाचारा क्रमएव सुरादिषु । नैर्ऋतेयाः दुहितरस्तासां स प्रसवस्तुत । सत्यवादपरत्त्वेषु वृत्तिस्तेषां गणे कृता । हिंसाविहारा ये केचिद्दिव्य भावमुपाश्रिता । भूतानीति कृता सञ्ज्ञा तेषां संज्ञा प्रवक्तृभि । ग्रहसंज्ञाभिभूतानि यस्माद्धेत्यनया भिषक् । विद्यया भूतविद्यात्वमतएव निरुच्यते"।

अथोन्मादस्य सामान्यचिकित्सा

'वातिके स्नेहपानं प्राक् विरेकः पित्तसम्भवे । कफजे वमनं कार्य्यं परे वस्त्यादिकक्रमः । यच्चोपदेक्ष्यते किञ्चिदपस्मारे चिकित्सितम् । उन्मादे तच्च कर्त्तव्यं सामान्याद्दोषदूष्ययो । जलादिदुःसर्पेभ्यो विषमेभ्यश्च तं सदा । रक्षेदुन्मादिनं यत्नात् सद्यः प्राणहरा हि ते । ते जलादय·" । विशेषचिकित्सा भा०प्र०आदौ दृश्या । सचाय रोग । महापातककर्म्मविपाकज । "उन्मादस्त्वगदोषो राजयक्ष्मेत्यादि' शु० त० नारदोक्ते "चित्तसंमोह उन्माद कामशोकभयादिभिः"। सा०द० उक्ते २व्यभिचारिभावभेदे ।

**उन्मादक** पु० उद्+मद-णिच्-ण्वुल् । उन्मादजनके धुस्तूरादौ । [ उन्मादकारके त्रि० ।

**उन्मादन** पु०उद्+मद-णिच्-ल्यु । १कन्दर्पबाणभेदे त्रिका०।

**उन्मादवत्** त्रि० उन्मादोऽस्त्यस्य मतुप् मस्य व । उन्मादयुक्ते स्त्रियां ङीप् । [ न्मादिनं यत्नात्" सुश्रु० ।

**उन्मादिन्** त्रि० उद्+णिनि स्त्रियां ङीप् । उन्मत्ते "रक्षेदु

**उन्मान** न०उद्+मा-भावे ल्युट् । ऊर्द्ध्वमाने तच्च प्रथितगुरुत्वेन पलादिमितपाषाणादिना तुलाधारफलके एकपार्श्वे स्थितेन अन्यपार्श्वस्थसुवर्णादेरुन्नमनादिना गुरुत्वविशेषज्ञापनव्यापार· (ओजनकरा)"ऊर्द्ध्वमानं किलोन्मानम्" वार्त्तिकोक्ते २ऊर्द्ध्वत प्रमाणे च । अभिधेयार्थे "प्रमाणे द्वयसज्दघ्नञ्मात्रच" पा०"प्रथमश्च द्वितीयश्च ऊर्द्ध्वमाने मतौ मम" वार्त्तिकोक्ते द्वयसच् दघ्नञ् । ऊरुद्वयस ऊरुदघ्न "गजपतिद्वयसीरिति" माघ । सामान्यप्रमाणे तु मात्रजेव । ऊरुमात्र प्रस्थमात्रम् । ४करणे ल्युट् । २तुलादौ । ३द्रोणपरिमाणे पु० वैद्यकम् ।

**उन्मार्ग** त्रि०उत्क्रान्त मार्गात् निरा०स० । मार्गातिक्रान्ते मार्गश्च पन्था रीतिश्च' "नाशयति च दिङ्मोहमिवोन्मार्गे" काद० । २विरुद्धपथे च "मदोन्मत्तस्य भूपस्य कुञ्जरस्य च गच्छत । उन्मार्गे वाच्यता यान्ति महामात्राः समीपगा·" पञ्चतन्त्रम् । उन्मादशब्दे उदा० ।

**उन्मिति** स्त्रि० उद्+मद-क्तिन् । ऊर्द्ध्वमाने ।

**उन्मिष** त्रि०उद्+मिष-क । १प्रफुल्ले २किञ्चित्प्रकाशयुक्ते च

**उन्मिषित** त्रि० उद्+मिष क्त । १प्रफुल्ले विकसिते २किञ्चित् प्रकाशिते च ।' व्यलोकयन्नुन्मिषितैस्तडिन्मयैः" कुमा०।

**उन्मीलन** न०उद्+मील-ल्युट् । १विकाशे २चक्षुरादेः पुटविभेदे (ताकान) "ज्ञानाञ्जनशलाकाभिर्नेत्रोन्मीलनकारक" भा०आ०८४अ० । 'समस्तलनोन्मीलनके तथैव" सि० शि० । भावे घञ् उन्मीलोऽप्यत्र पु० ।

**उन्मीलित** त्रि० उद्+मील-क्त । १विकसिते "ते चोन्मीलितमालतीसुरभयः प्रौढा· कदम्बानिला·" सा०द०। २अनुष्ठिते च णिच्-कर्मणि क्त । ३प्रकाशिते "उन्मीलितं तूलिकयेव चित्रम्" कुमा०। ४भेदितचक्षुरादौ नेत्रादौ "अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नम" गुरुनतिमन्त्र ।

**उन्मुक्त** त्रि० उद्+मुच-क्त । बन्धनरहिते

**उन्मुख** त्रि० उद्+ऊर्द्ध्व मुखमस्य । १ऊर्द्ध्वास्ये,२उद्युक्ते च । "उन्मुखहा स्यशीचिता "कुमा०। "तस्मिन् सयमिनामाद्ये जाते परिणयोन्मुखे' कुमा० । "विपुलतरोन्मुखलोचनावलग्नम्" "दन्ताग्रभिभिन्नपयोदमुन्मुखा " माघ । "असौ शरण्य' शरणोन्मुखानाम्" "या नीतपौरा स्वपदोन्मुखेन" । "मनोऽभिरामा· शृण्वन्तौ रथनेमिस्वनोन्मुखैः" रघु स्त्रियां ङीप् । "भूतयष्टिरिवाभ्यासे मधौ परभृतोन्मुखी" कुमा०"मतिपिद्वापि कैकेय्या शत्रोरिव गुणोन्मुखी" "पति प्रतीत प्रसवोन्मुखीं प्रियाम्" "अद्रेः शृङ्गं हरति पवन किंस्विदित्युन्मुखीभि " "इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा ' मेघ० ।

**उन्मुद्र** त्रि०उद्गता मुद्रा यस्मात् प्रा०ब०।१व्यक्तमुद्रे,२विकसिते च

**उन्मूल** नामधा०मूलत उत्पाटयति उद्+मूल-णिच्। उन्मूलयति ते "उन्मूलयन् महाहस्तान्" भा०स०१४६अ०

**उन्मूलन** न० उन्मूल+णिच्-ल्युट् । उत्पाटने उद्धृतमूलकरणे । "न पादपोन्मूलनशक्ति रंह " रघु ।

उन्मूलित त्रि० उन्मूलि–नामधा० क्त । उत्पाटिते "उन्मूलिता कलधरेण पट यथार्त "उद्भट 'दूरे यन्तु फलानि फल भवता तन्मूलमुन्मूलितम्" उद्भटदू० ।

उन्मृजावमृजा स्त्री उन्मृज अवमृज इत्युच्यते यस्या क्रियायां मयू०स० । उन्मार्जनावमार्जनानिर्देशक्रियायाम् ।

उन्मृश्य त्रि० उद्+मृश–क्यप् । "इत्यमृत्तोलङ्घ्य मृश्ये । "इत्युन्मृश्या हैव ग्रां.राम' शत०ब्रा० ४,१,२२, ल्यप् । २उद्धृत्य स्पृष्ट्वेत्यर्थे अव्य० ।

उन्मेय त्रि० उद्+मा–यत् । परिच्छेद्ये धान्यवत् शकटोन्मेये त्रिका० । २उन्मानमेये दृश्यादौ च ।

उन्मेष पु० उद्+मिष–घञ् । १चक्षुरादेरुन्मीलने, किञ्चित्प्रकाशे च । "खकिरणपरिवेषोन्मेषशून्याः प्रदीपाः" रघु । 'दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते" कुमा० "विद्युदुन्मेषदृष्टिम्' मेघ० । भावे ल्युट् । उन्मेषणमप्यत्र न० "मन्मयोन्मेषणातिविस्तीर्णा यो भव कान्ति" सा०द० ।

उन्मोचन न० उद्+मुच–ल्युट् । बन्धनात् उद्धृत्य विश्लेषणे । "उन्मोचनप्रमोचने उभे वाचो वदामि" अ०५,३०,१,

उप अव्य०वप–क । १अधिकार्थे, २हीने, ३आसन्ने, ४सामीप्ये ५सादृश्ये ६प्रतियत्ने सतो गुणान्तराधाने, ७व्याप्तौ, ८पूजायाम् ९शक्तौ, १०आरम्भे, ११दाने १२दोषाख्याने, १३आचार्यकरणे १४अत्यये १५निदर्शने च । गणरत्ने 'उप सामीप्यसामर्थ्यव्याप्त्याचार्यकृतिस्तुतिदोषदानक्रियारम्भाध्ययनपूजनेषु" इति उपार्थानुक्त्वा क्रमेणोदाजहार तत्र सामीप्ये उपकूपम् । सामर्थ्ये उपकरोति । व्याप्तौ उपकार्णम् । आचार्यकृतौ उपदिशति । स्तुतौ उपरत, दोषे उपघात (इन्द्रियाणां स्वधर्मग्रहणासामर्थ्यम् । दाने उपहरति । क्रियाभेदे उपचरति । यीप्सायां देव देवमुपचरति । आरम्भे उपक्रमते भोक्तुम् । अध्ययने उपाध्याय । पूजने उपचरित पिता पुत्रेण" इति । प्रतियत्ने (संस्कारे) 'उपस्कारो नैष्यं समिधमाहरेति" का०उ०सामीप्ये "उपोपविश्य प्राणान् संसृजन्" श०त०गो० । सादृश्ये उपदेश उपमान । "उपोऽधिके च"पा० "१६आधिक्ये 'उप च त्रयोदश मास' शत०ब्रा०६,२ २, अत्र हीनेऽधिक्ये च कर्मप्रवचनीयता तत्र हीनार्थयोगे तत्सम्बन्धिनि द्वितीया । उप हरिं सुरा –हरेर्हीना इत्यर्थ । अधिकार्थयोगे सप्तमी । उप परार्द्धे हरेर्गुणा –परार्द्धाधिकाइत्यर्थ । सामीप्येऽव्ययीभाव उपकृष्णम् उपकूलम् । 'उपसर्गा क्रियायोगे' पा० क्रियायोगे उपसर्गता अन्यत्र गतिता तत' भवार्थे त्यकन् उपत्यका ।

उपक पु० उप+सज्ञायां कन् । १ऋषिभेदे तत गर्गा० फक् । औपकायन तस्य अद्वन्द्वे द्वन्द्वे च बहुत्वे वा लुक् । अद्वन्द्व, औपका औपकायना । द्वन्द्वे उपकलमका औपकायनलामकायना । अनुकम्पित उपेन्द्रदत्तादि "प्राचामुपादेरडज्वुचौ" पा० वुच"ठाजादावूर्ध्वं द्वितीयादच" पा०इन्द्रदत्तलोपे । उपक २अनुकम्पिते उपेन्द्रदत्तके पु० । पक्षे अच् उपड । चात् ठच् घन् इलच् च । तत्र ठचि उपिक घनि उपिय इलचि उपिल । तत्रार्थे पु० अजादावित्युक्ते कनि न लुक् । उपेन्द्रदत्तक । एवमन्यस्यापि उपपूर्वकस्य सनामकस्य रूप बोध्यम् । तेन तत्रापि उपकादिशब्दर्हन्ति ।

उपकण्ठ त्रि०उपगत कण्ठम् अत्या०स० । १निकटे, २कण्ठासन्ने च "तस्योपकण्ठे घननीलकण्ठ" कुमा० । 'आसन्य चाप श्रवणोपकण्ठे' "उपकण्ठ महोदधे" रघु ३ग्रामान्ते ४अश्वानामास्कन्दितगतौ च न० । विभक्त्यर्थे सामीप्ये वा अव्ययी० । ५कण्ठ इत्यर्थे "रथाङ्गभर्त्तेऽभिनव वरस्य यस्या पितेव प्रतिपादितायाः । प्रेम्णोपकण्ठ मुहुरङ्कभाजो रत्नावलारम्बुधिराबबन्ध" माघः । उपकण्ठम्–कण्ठे वर्त्तेऽन्तिके इत्यर्थे ६कण्ठसामीप्ये च अव्य०

उपकनिष्ठिका स्त्री उपगता कनिष्ठिकाम् अत्या०स० । अनामिकायाम् 'अभिच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशावनामिकाङ्गुष्ठोपकनिष्ठिकाभ्याम् 'आ०श्रौ०सू० १,२,२ 'अङ्गुष्ठोपकनिष्ठिकाभ्यामेकैकमस्यास इत्याद्यन्त" ४,५,४ ।

उपकन्या स्त्री उपगता कन्याम् अत्या० स० । कन्यासख्यादौ अस्य गौरा० पाठात् उपादुदग्रचदत्तेऽपि नान्तोदात्तता ।

उपकरण न०उपक्रियतेऽनेन उप–कृ–ल्युट् । १प्रधानसाधके अङ्गे यथा भोजनादौ व्यञ्जनादि, शयने खट्वादि, स्नानेऽनुलेपनादि, पूजायां पुष्पादि यागे पश्वादि । "वव वेश्म शुभं दद्यात् सर्वोपकरणान्वितम्" शु०त०भविष्यपु० । "भक्तावकाशान्मृदकमन्त्रोपकरणव्ययान्" या० स्मृ० । २नृपादीनां छत्रचामरादिपरिच्छदे च । उपगत' करणम् अत्या० स० । ३इन्द्रियानुगते त्रि० विभक्त्यर्थे सामीप्ये वाऽव्ययी० । ३करणे इत्यर्थे ४इन्द्रियसामीप्ये च अव्य० ।

उपकर्ण अव्य० विभक्त्यर्थे सामीप्ये वा अव्ययी० । १कर्णे इत्यर्थे २श्रोत्रसामीप्ये च । तत्र प्रायभव ठक् औपकर्णिक तत्र प्रायभवे त्रि० "अ स्वामी मम कान्तानौपकर्णिककर्णोषन" भट्टि ।

**उपकर्त्तृ** त्रि० उप–कृ–तृच् स्त्रियां ङीप्। उपकारके आनुगुण्यकारके "उपकर्त्त्रारिणा सन्धिर्न मित्रेणापकारिणा" माघ०। "हीनान्यनुपकर्त्तॄणि प्रवृद्धानि विकुर्वते" रघु०।

**उपकलाप** अव्य० विभक्त्यर्थे सामीप्ये वा अव्ययी०। १कलापे इत्यर्थे २तत्सामीप्ये च ततो भवार्थे परिमुखा० ञ्य। औपकलाप्य तद्भवे त्रि०।

**उपकल्प** त्रि० उपगतः कल्पम् अत्या० स०। कल्पोपगते। गौरा० पाठात् उपात् द्व्यच्कत्वेऽपि नान्तोदात्तता।

**उपकल्पन** न० उप+कृप–णिच्–ल्युट्। १सम्पादने २आयोजने च "वक्ष्याम्यत परं सम्यगाहारस्योपकल्पनम्" सुश्रु०। युच्। तत्रैव स्त्री। "एव विज्ञाय मतिमान् भोजनस्योपकल्पनाम्" सुश्रु०।

**उपकादि** पु० द्वन्द्वेऽद्वन्द्वे च बहुत्वे गोत्रप्रत्ययलुग्निमित्ते पाणिन्युक्ते शब्दसमूहे। स च उपक लमक भ्रष्टक कपिष्ठल कृष्णाजिन कृष्णसुन्दर चूडारक आडारक गडुक उदङ्क सुधायुक अबन्धक पिङ्गलक पिष्ट सुपिष्ट मयूरकर्ण खरीजङ्घ शलाथल पतञ्जल पदञ्चल कठेरणि कुषीतक काशकृत्स्न निदाघ कलशीकण्ठ दामकण्ठ कृष्णपिङ्गल कर्णक पर्णक जटिलक वधिरक जन्तुक अनुलोम अनुपद प्रतिलोम अपजग्ध प्रतान अनभिहित कमक वटारक लेखाभ्र कमन्दक पिञ्जलक वर्णक मसूरकर्ण मदाघ कवन्तक कमन्तक कदामत्त।

**उपकार** पु० उप+कृ–भावे घञ्। प्रधानस्यानुगुण्यसम्पादने, उपकृतौ "उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः" माघ०। "कृतोपकारेव रतिर्बभूव" कुमा०। "उपकारोऽस्य ह्यात कृतोऽद्य मम खेचरै" भा० व० १५० अ०। तस्योपकार्य्यारचितोपका(चा)रा" रघु०। उपकारश्च सहकारिभिः कारणस्य कार्य्योत्पादनार्थमानुगुण्यभेदः यथा दर्शादियागस्य प्रधानापूर्व्वसाधनेऽङ्गादीनां प्रयाजादीनां कलिकापूर्व्वसाधनद्वारा तदानुगुण्यम्। स च बौद्धैः कुर्व्वद्रूपतारूपस्य बीजादेरङ्कुरजनकस्य सम्पादनरूपातिशयाधानमुच्यते सर्व्व० दर्श०। "तथाहि सहकारिभिः सलिलपवनादिभिः पदार्थसार्थैराधीयमाने बीजस्यातिशये बीजमुत्पादकमभ्युपेयम् अपरथा तदभावेऽप्यतिशयः प्रादुर्भवेत्। बीजस्यातिशयमादधानः सहकारिसापेक्षमेवाधत्ते अन्यथा सर्व्वदोपकारापत्तौ अङ्कुरस्यापि सदोदयः प्रसज्येत। तस्मादतिशयार्थमपेक्षमाणं सहकारिभिरतिशयान्तरमाधेयं बीजे, तस्मिन्नप्युपकारे पूर्व्वन्यायेन सहकारिसापेक्षस्य बीजस्य जनकत्वे सहकारिसम्पाद्यबीजगतातिशयानवस्था प्रथमा व्यवस्थिता। अथोपकारः कार्य्यार्थमपेक्ष्यमाणोऽपि बीजादिनिरपेक्ष कार्य्यं जनयति तत्सापेक्षो वा। प्रथमे बीजादेरहेतुत्वमापतेत्। द्वितीये अपेक्ष्यमाणेन बीजादिना उपकारे अतिशय आधेय एव तत्र तत्रापीति बीजादिजन्यातिशयनिष्ठातिशयपरम्परापात इति द्वितीयानवस्था स्थिरा भवेत्। एवमपेक्ष्यमाणेनोपकारेण बीजादौ धर्म्मिण्युपकारान्तरमाधेयमित्युपकाराधेयबीजातिशयाश्रयातिशयपरम्परापात इति तृतीयानवस्था दुरवस्था स्यात्। अथ भावादभिन्नोऽतिशयः सहकारिभिराधीयत इत्यभ्युपगम्यते तर्हि प्राचीनो भावो ऽनतिशयात्मा निवृत्तः अपरश्चातिशयात्मा कुर्व्वद्रूपादिपदवेदनीयो जायत इति फलितम्।

**उपकारक** त्रि० उप+कृ–ण्वुल्। १उपकारकर्त्तरि। "आगन्तवोऽपि कदाचिदुपकारका दृश्यन्ते" हितो०। स्त्रीत्वे टापि अतइत्त्वे उपकारिका। सा च २नृपालये, ३पटनिर्म्मिते गृहे च। ४कारणमात्रे त्रि०। "स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारक" भाषा०। णिनि। उपकारिन् उपकारके त्रि०। "तदुपकारीणि शारीरकसूत्रादीनि" वेदा० सा०। "दातव्यमिति यद्दानं दीयतेऽनुपकारिणे" गीता "मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि" दक्षः। स्त्रियां ङीप्।

**उपकार्य्य** त्रि० उप+कृ–ण्यत्। १उपकारयोग्ये। २राजालये, ३पटनिर्म्मितराजसदने च स्त्री टाप्। "तस्योपकार्य्या रचितोपका(चा)रा" रघु०। "तीरोपकार्य्यां गतमात्र एव" यत्र कृप्रतिविहितोपकार्य्यं मार्य्यः" रघु० राजभवने "रम्यां रघुप्रतिनिधिः स नवोपकार्य्याम्" "उपकार्य्या राजसद्म न्युपचारश्चितेऽन्यवदिति विश्वोक्ते ४उपचारव्याप्ते त्रि०

**उपकिरण** न० उप+कॄ–ल्युट् नि० इत्वम्। १व्याप्तौ २समन्तात् विक्षेपे च "आसूत्कृत्योत्किरणं वा" कात्या० २५, १०, २४। समीपादौ अव्ययी०। ३किरणसामीप्यादौ अव्य०।

**उपकीचक** पु० उपगत कीचकम् अत्या० स०। विराटनृपश्यालककीचकानुजे विराटसैन्यभेदे "समवेतेषु सर्व्वेषु तानुपसुपकीचका। इत्यता यौष्मवती यसुहते कीचकोहत"। ते च पञ्चाधिकशतमिता कीचकत्वेनापि प्रसिद्धा "एव ते निहता राजन्! शत पञ्च च कीचका। स च सेनापतिं पूर्व्वमित्येतत् सूतषट्शतम्" भा० वि० २२, २३ अ०।

**उपकुक्षि** स्त्री उप+कुष–इ। कृष्णजीरके।

**उपकुञ्चिका** स्त्री उप+कुञ्च–ण्वुल् अतइत्त्वम्। १तत्मायां

ष्टतात्पर्य्यनिर्णये "वेदान्तिमते तात्पर्य्यनिर्णायके २हेतुभेदे तत्र उपक्रमोपसंहाराभ्यां द्वाभ्यामेव तात्पर्य्यं निर्णीयते नत्वेकैकेनेति बोध्यम्। करणे घञ्। ३सामाद्युपाये "सामादिभिरुपक्रमैः" मनुः। "उपक्रमैरस्खलितैश्चतुर्भिः" रघुः। कर्म्मणि घञ्। ४आरभ्यमाणे पु० तदादित्वविवक्षायाम् तदन्ततत्पुरुषस्य क्लीवता "नन्दोपक्रमं द्रोण" पा० भा० "रामोपक्रममाचख्यौ रक्षःपरिभवं नवम्" रघुः। करणे घञ्। ५चिकित्सायाम् सुश्रुते भूरिप्रयोगः।

**उपक्रमण** न० उप+क्रम–भावे ल्युट्। १आरम्भे करणे ल्युट्। २तत्साधने सुश्रुतोक्ते दीर्घायुष्यादिज्ञानपूर्व्वकचिकित्सायाम् ३भूमिकायां स्त्री ङीप्। स्वार्थे कन् अत इत्त्वम्। उपक्रमणिका। ग्रन्थप्रस्तावने मुखबन्धे।

**उपक्रमणीय** त्रि० उप+क्रम–अनीयर्। १आरम्भणीये। उपक्रमणे साधु–छ। २चिकित्साङ्गे दीर्घायुष्यादिज्ञानसाधने लक्षणभेदे। आतुरचिकित्सार्थं यथोपक्रमणं कर्त्तव्यं तद्बोधके ३ग्रन्थे च। तत्प्रकारादि सुश्रुते दर्शितं यथा। "अथात आतुरोपक्रमणीयमध्यायं व्याख्यास्यामः। आतुरमुपक्रममाणेन भिषजायुरेवादौ परीक्षेत। सत्येवायुषि व्याध्यृत्वग्निवयोदेहबलसत्त्वसात्म्यप्रकृतिभेषजदेशान् परीक्षेत। तत्र महापाणिपादपार्श्वपृष्ठस्तनाग्रदशनवदनस्कन्धललाटं दीर्घाङ्गुलिपर्वोच्छ्वासप्रेक्षणबाहुं विस्तीर्णभ्रूस्तनान्तरोरस्कं ह्रस्वजङ्घामेढ्रग्रीवं गम्भीरसत्त्वस्वरनाभिमनुच्चैर्बद्धस्तनमुपचितमहारोमशकर्णं पश्चान्मस्तिष्कं स्नातानुलिप्तं मूर्द्धानुपूर्व्या विशुष्यमाणशरीरं पश्चाच्च विशुष्यमाणहृदयं पुरुषं जानीयाद्दीर्घायुः खल्वयमिति। तमेकान्तेनोपक्रमेत्। एभिर्लक्षणैर्विपरीतैरल्पायुर्मिश्रैर्मध्यमायुरिति। गूढसन्धिसिरास्नायुः संहताङ्गः स्थिरेन्द्रियः। उत्तरोत्तरसुक्षेत्रो यः स दीर्घायुरुच्यते। गर्भात् प्रभृत्यरोगो यः शनैः समुपचीयते। शरीरज्ञानविज्ञानैः स दीर्घायुः समासतः। मध्यमस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे। अधस्तादक्षयोर्यस्य लेखाः स्युर्व्यक्तमायताः। द्वे वा तिस्रोऽधिका वापि पादौ कर्णौ च मांसलौ। नासाग्रमूर्द्ध्वं च भवेदूर्द्ध्वं लेखाश्च पृष्ठतः। यस्य स्युस्तस्य परममायुर्भवति सप्ततिः। जघन्यस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे। ह्रस्वानि यस्य पर्वाणि सुमहच्चापि मेहनम्। तथोरस्यवलीढानि न च स्यात् पृष्ठमायतम्। ऊर्द्ध्वं च श्रवणौ स्थानान्नासा चोच्चा शरीरिणः। हसतो जल्पतो वापि दन्तमांसं प्रदृश्यते। प्रेक्षते यश्च विभ्रान्तं स जीवेत्पञ्चविंशतिम्। अथ पुनरायुषो विज्ञानार्थमङ्गप्रत्यङ्गप्रमाणसारानुपदेक्ष्यामः। तत्राङ्गान्यन्तराधिसक्थिबाहुशिरांसि तदवयवाः प्रत्यङ्गानीति। तत्र स्वैरङ्गुलैः पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते। प्रदेशिन्यास्तु मध्यमाऽनामिका कनिष्ठिका यथोत्तरं पञ्चमभागहीनाः। चतुरङ्गुलायते पञ्चाङ्गुलविस्तृते प्रपदपादतले। पञ्चचतुरङ्गुलायतविस्तृता पार्ष्णिः। चतुर्दशाङ्गुलायतः पादः। चतुर्दशाङ्गुलपरिणाहानि पादगुल्फजङ्घाजानुमध्यानि। अष्टादशाङ्गुला जङ्घा जानूपरिष्टाद्द्वात्रिंशदङ्गुलमेवं पञ्चाशत्। जङ्घायामसमावूरू। द्व्यङ्गुलानि वृषणचिवुकदशननासापुटभागकर्णमूलनयनान्तराणि। चतुरङ्गुलानि मेहनवदनान्तरनासाकर्णललाटग्रीवोच्छ्रायदृष्ट्यन्तराणि। द्वादशाङ्गुलानि भगविस्तारमेहननाभिहृदयग्रीवास्तनान्तरमुखायाममणिबन्धप्रकोष्ठस्थौल्यानि। इन्द्रवस्तिपरिणाहांसपीठकूर्परान्तरायामः षोडशाङ्गुलः। चतुर्विंशत्यङ्गुलो हस्तः। द्वात्रिंशदङ्गुलपरिमाणौ भुजौ। द्वात्रिंशदङ्गुलपरिणाहावूरू। मणिबन्धकूर्परान्तरं षोडशाङ्गुलम्। तलं षट्चतुरङ्गुलायामविस्तारम्। अङ्गुष्ठमूलप्रदेशिनीश्रवणापाङ्गान्तरमध्यमाङ्गुल्यौ पञ्चाङ्गुले। अर्द्धपञ्चाङ्गुले प्रदेशिन्यनामिके। सार्द्धत्र्यङ्गुलौ कनिष्ठाङ्गुष्ठौ। चतुर्विंशतिविस्तारपरिणाहं मुखग्रीवम्। त्रिभागाङ्गुलिविस्तारा नासापुटमर्य्यादा। नयनत्रिभागपरिणाहा तारका। नवमस्तारकांशो दृष्टिः। केशान्तमस्तकान्तरमेकादशाङ्गुलम्। मस्तकादवटुकेशान्तो दशाङ्गुलः। कर्णावट्वन्तरं चतुर्दशाङ्गुलम्। पुरुषोरःप्रमाणविस्तीर्णा स्त्रीश्रोणिः। अष्टादशाङ्गुलविस्तीर्णमुरः। तत्प्रमाणा पुरुषस्य कटी। सविंशमङ्गुलशतं पुरुषायाम इति। भवन्ति चात्र पञ्चविंशे ततो वर्षे पुमान् नारी तु षोडशे। समत्वागतवीर्य्यौ तौ जानीयात् कुशलो भिषक्। देहः स्वैरङ्गुलैरेव यथावदनुकीर्त्तितः। युक्तः प्रमाणेनानेन पुमान् वा यदि वाऽङ्गना। दीर्घमायुरवाप्नोति वित्तञ्च महदृच्छति। मध्यमं मध्यमैरायुर्वित्तं हीनैस्तथाऽवरम्। अथ सारान् वक्ष्यामि। स्मृतिभक्तिप्रज्ञाशौर्य्यशौचोपेतं कल्याणाभिनिवेशं सत्त्वसारं विद्यात्। स्निग्धसंहतश्वेतास्थिदन्तनखं बहुलकामप्रजं शुक्रेण। अकृशमुत्तमबलं स्निग्धगम्भीरस्वरं सौभाग्योपपन्नं महानेत्रञ्च मज्ज्ञा। महाशिरःस्कन्धदृढदन्तहन्वस्थिनखमस्थिभिः। स्निग्धमूत्रस्वेदस्वरं बृहच्छरीरमायासासहिष्णुं मेदसा। अच्छिद्रगात्रं गूढास्थिसन्धिं मांसोप-

चितञ्च मांसेन । स्निग्धताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलं रक्तेन । सुप्रसन्नमृदुत्वग्रोमाणं त्वक्सारं विद्यादित्येषां पूर्व्वं पूर्व्वं प्रधानमायुःसौभाग्ययोरपि । भवति चात्र सामान्यतोऽङ्गप्रत्यङ्गप्रमाणादथ सारतः । परीक्ष्यायुः सुनिपुणो भिषक् सिध्यति कर्म्मसु ।

व्याधिविशेषास्तु प्रागभिहिताः सर्व्व एवैते त्रिविधाः साध्या याप्याः प्रत्याख्येयाश्च तत्र तेषाम् भूयस्त्रिधा परीक्षेत किमयमौपसर्गिकः प्राक्केवलोऽन्यलक्षण इति । तत्रौपसर्गिको यः पूर्व्वोत्पन्नं व्याधिं जघन्यकालजातो व्याधिरुपसृजति स तन्मूल एवोपद्रवसंज्ञः । प्राक्केवलो यः प्रागेवोत्पन्नो व्याधिरपूर्व्वरूपोऽनुपद्रवश्च । अन्यलक्षणो यो भविष्यद्व्याधिख्यापकः स पूर्व्वरूपसंज्ञः । तत्र सोपद्रवमन्योन्याविरोधेनोपक्रमेत बलवन्तमुपद्रवं वा प्राक् केवलं यथास्वं प्रतिकुर्व्वीत । अन्यलक्षणे त्वादिव्याधौ प्रयतेत । भवति चात्र । नास्ति रोगो विना दोषैर्यस्मात्तस्माद्विचक्षणः । अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत् ।

प्रागभिहिता ऋतवः । शीते शीतप्रतीकारमुष्णे चोष्णनिवारणम् । कृत्वा कुर्य्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत् । अप्राप्ते वा क्रियाकाले प्राप्ते वा न कृता क्रिया । क्रिया हीनाऽतिरिक्ता वा साध्येष्वपि न सिध्यति । या ह्युदीर्णं शमयति नान्यं व्याधिं करोति च । सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत् ।

प्रागभिहितोऽग्निरन्नस्य पाचकः, (व्रणग्रन्थे) स चतुर्व्विधो भवति दोषानभिपन्न एको विक्रियामापन्नस्त्रिविधो भवति विषमो वातेन, तीक्ष्णः पित्तेन, मन्दः श्लेष्मणा, चतुर्थः समः सर्व्वसाम्यादिति तत्र यो यथाकालमन्नमुपयुक्तं सम्यक् पचति स समः, समैर्दोषैः । यः कदाचित् सम्यक् पचति कदाचिदाध्मानशूलोदावर्त्तातिसारजठरगौरवान्त्रकूजनप्रवाहणानि कृत्वा स विषमः । यः प्रभूतमप्युपयुक्तमन्नमाशु पचति स तीक्ष्णः, स एवाभिवर्द्धमानोऽत्यग्निरित्याभाष्यते स मुहुर्मुहुः प्रभूतमप्युपयुक्तमाशुतरं पचति पाकान्ते च गलताल्वोष्ठशोषदाहसन्तापान् जनयति । यः स्वल्पमप्युपयुक्तमुदरशिरोगौरवकासश्वासप्रसेकच्छर्द्दिगात्रसदनानि कृत्वा महता कालेन पचति स मन्दः । विषमो वातजान् रोगान् तीक्ष्णः पित्तनिमित्तजान् । करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान् । तत्र समे परिरक्षणं कुर्व्वीत विषमे स्निग्धाम्ललवणैः क्रियाविशेषैः प्रतिकुर्व्वीत तीक्ष्णे मधुरस्निग्धशीतैर्व्विरेकैश्च । एवमेवात्यग्नौ विशेषेण माहिषैश्च क्षीरदधिसर्पिर्भिर्मन्दे कटुतिक्तकषायैर्व्वमनैश्च । जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः । सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते । प्राणापानसमानैस्तु सर्व्वतः पवनैस्त्रिभिः । ध्मायते पाल्यते चापि स्वे स्वे स्थाने व्यवस्थितैः ।

वयस्तु त्रिविधं बाल्यं मध्यं वृद्धमिति । तत्रोनषोडशवर्षा बालास्तेऽपि त्रिविधाः क्षीरपाः क्षीरान्नादा अन्नादा इति तेषु संवत्सरपराः क्षीरपा द्विसंवत्सरपराः क्षीरान्नादाः परतोऽन्नादा इति । षोडशसप्तत्योरन्तरे मध्यं वयस्तस्य विकल्पो वृद्धिर्यौवनं सम्पूर्णता हानिरिति । तत्र आविंशतेर्वृद्धिरात्रिंशतो यौवनमाचत्वारिंशतः सर्व्वधात्विन्द्रियबलवीर्य्यसम्पूर्णता । अत ऊर्द्ध्वमीषत्परिहाणिर्यावत्सप्ततिरिति । सप्ततेरूर्द्ध्वं क्षीयमाणधात्विन्द्रियबलवीर्य्योत्साहमहन्यहनि वलीपलितखालित्यजुष्टं कासश्वासप्रभृतिभिरुपद्रवैरभिभूयमानं सर्व्वक्रियास्वसमर्थं जीर्णागारमिवाभिवृष्टमवसीदन्तं वृद्धमाचक्षते । तत्रोत्तरोत्तरासु वयोऽवस्थासूत्तरोत्तरा भेषजमात्राविशेषा भवन्त्यृते च परिहाणेस्तत्राद्यापेक्षया प्रतिकुर्व्वीत । भवन्ति चात्र । बाले विवर्द्धते श्लेष्मा मध्यमे पित्तमेव तु । भूयिष्ठं वर्द्धते वायुर्वृद्धे तद्वीक्ष्य योजयेत् । अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्ज्जयेत् । तत्साध्येषु विकारेषु मृद्वीं कुर्य्यात् क्रियां शनैः ।

देहः स्थूलः कृशो मध्य इति प्रागुपदिष्टः । कर्शयेद् बृंहयेच्चापि सदा स्थूलकृशौ नरौ । रक्षणञ्चैव मध्यस्य कुर्व्वीत सततं भिषक् ।

बलमभिहितगुणं दौर्ब्बल्यन्तु स्वभावदोषजरादिभिरवेक्षितव्यम् । यस्माद्बलवतः सर्व्वक्रियाप्रवृत्तिस्तस्माद्बलमेव प्रधानमधिकरणानाम् । केचित् कृशाः प्राणवन्तः स्थूलाश्चाल्पबला नराः । तस्मात् स्थिरत्वव्यायामैर्बलं वैद्यः प्रतर्कयेत् ।

सत्त्वन्तु व्यसनाभ्युदयक्रियादिस्थानेष्ववैक्लव्यकरम् । सत्त्ववान् सहते सर्व्वं संस्तभ्यात्मानमात्मना । राजसः स्तभ्यमानोऽन्यैः सहते नैव तामसः ।

प्रकृतिं भेषजं चोपरिष्टाद्वक्ष्यामः (प्रकृतिः शारीरस्थाने, भेषजं तत्तत्प्रकरणे)।

सात्म्यानि तु देशकालजात्यृतुरोगव्यायामोदकदिवास्वप्नरसप्रभृतीनि प्रकृतिविरुद्धान्यपि यान्यबाधकराणि भवन्ति । यो रसः कल्पते यस्य सुखायैव निषेवितः । व्यायामजातमन्यद्वा तत् सात्म्यमिति निर्द्दिशेत् ।

देशस्त्वानूपो जाङ्गलः साधारण इति । तत्र बहूदकनि-

म्नोन्नतनदीपर्वतगहनो मृदुशीतानिलो बहुमहापर्व्वतश्चो मृदुसुकुमारोपचितशरीरमनुष्यप्रायः कफवातरोगभूयिष्ठश्चानूप । आकाशसम प्रविरलाल्पकण्टकिवृक्षप्रायोऽल्पवर्षप्रस्रवणोदपानोदकप्राय उष्णदारुणवातः प्रविरलाल्पशैल स्थिरकृशशरीरमनुष्यप्रायो वातपित्तरोगभूयिष्ठश्च जाङ्गलः । उभयदेशलक्षण साधारण इति । भवन्ति चात्र । समा साधारणं यस्माच्छीतवर्षोष्णमारुता । दोषाणां समता जन्तोस्तस्मात् साधारणो मत । न तथा बलवन्तः स्युर्जलजा वा स्थलाहृता । स्वदेशे निचिता दोषा अन्यस्मिन् कोपमागता । उचिते वर्त्तमानस्य नास्ति देशकृत भयम् । आहारस्वप्नचेष्टादौ तद्देशस्य गुणे सति देशप्रकृतिसात्म्यर्त्तुविपरीतोऽचिरोत्थित । सम्पत्तौ भिषगादीनां बलसत्त्वायुषां तथा । केवल समदेहाग्ने सुखसाध्यतमो गद । अतोऽन्यथा त्वसाध्य स्यात् कृच्छ्रो व्यामिश्रलक्षण । क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत् । पूर्व्वस्यां शान्तवेगायां न क्रियासङ्करो हित । गुणालाभेऽपि सपदि यदि सैव क्रिया हिता । कर्त्तव्यैव तदा व्याधि कृच्छ्रसाध्यतमो यदि । य एवमेनं विधिमेकरूपं विभर्त्ति कालादिवशेन धीमान् । स मृत्युपाशान् जगतो गदौघान् छिनत्ति भैषज्यपरश्वधेन" ।

उपक्रान्त त्रि॰ उप+क्रम–क्त । १आरब्धे २विस्तृते शब्दार्थचि॰

उपक्रिया स्त्री उप+कृ–भावे श । उपकारे "तमपीह गुरुं विद्यात् श्रुतोपक्रियया तया" मनुः ।

उपक्रोश पु॰ उप–क्रुश–घञ् । निन्दायाम् । "नायं बिभेत्युपक्रोशाद्धर्म्माद्वा पुरोचनः" भा॰ आ॰ १४५ अ॰ "राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा" रघु अत्या॰ स॰ । २उपगतक्रोशे आसन्नक्रोशे त्रि॰ । अव्ययी॰ । ३क्रोशसमीपे अव्य॰ । भावे ल्युट् उपक्रोशनमप्यत्र । "वाग्दन्तप्रर्णैर्लोकोपक्रोशनैः" दशकु॰ । "कुलोपक्रोशनकरी कुलाङ्गारी निराश्रया" हरि॰ १७६ अ॰ । [स्त्रियां ङीप् ।

उपक्रोष्टृ पु॰ उप+क्रुश–तृच् । १गर्द्दभे । २निन्दके त्रि॰ ।

उपक्लेश पु॰ उपक्लिश्नाति अनेन उप+क्लिश–करणे घञ् । मदादिषु । [ घञ् पक्षे अप् । वीणानिनादे ।

उपक(क्वा)ण पु॰ उप+क्वण–शब्दे "क्वणोवीणायाञ्च" पा॰ वा

उपक्षय पु॰ उप+क्षि–अच् । १अपचये हानौ । सामीप्यादौ अव्ययी॰ । २निवाससमीपादौ, अव्य॰ । ३उपगत क्षयम् अत्या॰ स॰ । ३क्षय प्राप्ते त्रि॰ । तत्पुरुषे उपाद्द्व्यच्कत्वादन्तोदात्तता ।

उपक्षित् त्रि॰ उप+क्षि–क्विप् । समीपनिवासिनि । "यस्य ते अग्ने अन्ये अग्नय उपक्षितो वया इव" ऋ॰ ८, १९, ३३ । [ २सकार्य्यादिसामर्थ्य प्राप्ते च ।

उपक्षीण त्रि॰ उप+क्षि–क्त तस्य न, दीर्घश्च । १अपचयप्राप्ते

उपक्षेप पु॰ उप+क्षिप–भावे घञ् । १आक्षेपे, "कर्णनासाच्छेदोपक्षेपभीषिताभ्याम्" दशकु॰ । २समीपे निक्षेपणे च ।

उपक्षेपण न॰ उप+क्षिप–ल्युट् । शूद्रस्वामिकान्नस्य विप्रगृहे पाकार्थं समर्पणे । "उपक्षेपणधर्म्मेण यत्तु पाचयते द्विजः । अभोज्य तद्भवेदन्नम्" शाम्ब॰ पु॰ । "उपक्षेपणधर्म्मेण शूद्रस्वामिकान्नस्य पाकार्थं ब्राह्मणगृहे समर्पणरूपेणेति" कल्पतरु । २समर्पणमात्रे च ।

उपखात अव्य॰ सामीप्यादौ अव्ययी॰ १खातसामीप्ये २ख्याते इत्यर्थे च । उपगत खातम् अत्या॰ स॰ । ३खातानुगते । उपाद्द्व्यच्कत्वेन तत्पुरुषपक्षे अन्तोदात्ततेतिभेदः

उपग त्रि॰ उप+गम–ड । उपगन्तरि "ओषध्य फलपाकान्ता बहुपुष्पफलोपगा" मनु॰ । "त्रेतायां भावसङ्कल्पा क्रियादानफलोपगा" भा॰ व॰ १४९ अ॰ । "केन्द्रोपगा नवमपञ्चमगाश्च सर्वे" ज्यो॰ त॰ ।

उपगण त्रि॰ उपगतो गणो येन प्रा॰ ब॰ सङ्ख्यावचनत्वेऽपि "अबहुगणादिति" पा॰ निषेधात् न डच् । प्राप्तसमुदाये डचि तु चित्त्वात् अन्तोदात्तता स्यात् । अतस्तस्य पूर्वपद प्रकृतिस्वरार्थं डचोनिषेधः । "रूपातिप्रसङ्गाभावेऽपि स्वरभेदार्थमेव पर्य्युदास" सि॰ कौ॰ स्थितम् ।

उपगत त्रि॰ उप+गम–क्त । १स्वीकृते, २उपस्थिते, ३ज्ञाते ४प्राप्ते च "सर्व्वौ हि नोपगतमप्यपचीयमानं वर्द्धिष्णुमाश्रयमनागतमभ्युपैति" माघ भावे क्त । ५प्राप्त्यादौ न॰ उपगत प्राप्ति अस्त्यस्येनात्यस्य अच् । ६प्राप्तिस्तचके पत्रे च (रसिद) । "धनी वोपगत दद्यात् स्वहस्तपरिचिह्नितम्" या॰ स्मृ॰ । "उपगत प्राप्तमिति यद्वा उपगतम् प्रवेशपत्र स्वहस्तलिखितचिह्नितमधमर्णाय समर्पयेत्" मिता॰ ।

उपगति स्त्री उप+गम–क्तिन् । १प्राप्तौ २ज्ञाने ३स्वीकारे च

उपगन्तृ त्रि॰ उप+गम–तृच् । १प्राप्तरि २स्वीकर्त्तरि ३ज्ञातरि च ।

उपगम पु॰ उप+गम–भावे अप् अवृद्धि । १समीपगमने २अङ्गीकारे ३ज्ञाने, च "सीमन्ते च त्वदुपगमज यत्र नीपं वधूनाम्" मेघ॰ । "व्यावर्त्ततान्योपगमात् कुमारी" स्वगमनोपगमममवेशमवृत्" रघु । भावे ल्युट् । उपगमन

"काकेभ्यो रक्ष्यतामन्नमिति बालोऽपि प्रेषितः। उपघातप्रधानत्वात् न श्वादिभ्योऽपि रक्षति" मीमां० का०। "बीजदोषोपघातेन परस्ये दोषमनुपागते" या० स्मृ०। ३अपकारे। 'स्त्रीणाञ्च प्रेक्षणालम्भमुपघातं परस्य च" मनुः। ४इन्द्रियाणां स्वस्वकार्य्यजननासामर्थ्ये च "तथात्वञ्चेदिन्द्रियाणामुपघाते कथं स्मृतिः" भाषा०। इन्द्रियाणामुपघातश्च एकादशेन्द्रियभेदेन बाधिर्य्यादिभेदात् एकादशविधः। अ-शक्तिशब्दे ४७२पृ० विवृतिः। करणे घञ्। ५रोगे ६पापसमूहे च "रेतोरक्तगर्भोपघातः पञ्चगुणोजातकर्मणा प्रथमसमपोहति" अष्टाभिः संस्कारैः गर्भोपघातात् पूतो भवति" हारीतः। "उपघातः पापसङ्घः, पञ्चगुणः पञ्चप्रकारः उपपातकजातिभ्रंशकरसङ्करीकरणापात्रीकरणमलिनीकरणरूपपापपञ्चकरूपः" स० त० रघु० "पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धविः। हूयते चानुपस्तीर्य उपघातः स उच्यते" गृह्यसंग्रहोक्ते ७होमभेदे। "अनुपस्तीर्य्यनेन स्रुचि अञ्जलावपत्ते पञ्चावत्तं वा शतोपस्तरणादिकं तदलाभेऽपि मेक्षणादिना सकृद् गृहीत्वा होमः" म० त० रघु०। "चरौ तु बहुदैवत्ये होम, स्यादुपघातवत्" छन्दोग०।

**उपघातक** त्रि० उप+हन–ण्वुल्। १नाशके २पीडके च काकवन्ध्यस्य दध्युपघातकत्वेन काकाकाकोभयवृत्तिः, आलङ्कारिकाः "पुंसा सह समायोगो न स धर्मोपघातकः" भा० आ० ७३अ०। "कथं शक्रून् पश्चाद्यामि भूत्वा धर्मोपघातकः" भा० आश्व० ६० अ०।

**उपघातिन्** त्रि० उप+हन–णिनि स्त्रियां ङीप्। १नाशके २पीडके च "यस्य पातयेन्मर्म्मशिरास्नायुसन्धीनां चानुपघाति" सुश्रु०।

**उपघ्न** पु० उप+हन–घञर्थे–क। आसन्ने आश्रये "वेदादिशोभितरोर्मन्तव्यो" रघुः "पितामहाद्रिगुहोपघ्नान्" भट्टिः।

**उपच(ज)** त्रि० उपचिनोति उपजायते वा उप+चि–जन–वा ड। चान्तपाठे वृद्धिकारके जान्तः अनन्तरजाते। "व्रीहियवयोर्वा एतदुपचं (जं) यच्छमीधान्यं तद्व्रीहियवाभ्यामेव भूयांसौ करोति" शत० ब्रा० १,१,१,१०। भाष्यकृता तु अत्र उपचमिति पठित्वा शमीधान्यम् तिलमाषादि उपचिनोति उपचम् अल्पमाषपिष्टेन मिश्रितं व्रीहिपिष्टं तिलचूर्णमामाद् आरोपितम् उपचितं बहु भवतीति" व्याख्यातम्

**उपचक्र** पु० उपगतः सादृश्येन चक्रं चक्रवाकम् अत्या० स०। चक्रवाकसदृशे पक्षिभेदे "भङ्गराजोपचक्राश्च कोयष्टिकाः पतत्त्रिणः" भा० स० १५८अ०। "चकोरैरुपचक्रैश्च पक्षिभिर्जीवजीवकैः" भा० १७८अ०। तत्पुरुषे उपादृहत्त्वात्त्वादन्तोदात्तः। सामीप्यादौ अव्ययी०। १चक्रस्य सामीप्ये २चक्रे इत्यर्थे च अत्र चक्रशब्दो नानार्थः।

**उपचक्षुस्** न० उपगतं चक्षुर्दर्शनानुगुण्यार्थम् अत्या० स०। उपनेत्रे (चसमा) काचादिनिर्मिते दर्शनसाधने द्रव्यभेदे

**उपचतुर** त्रि० उपगताश्चत्वारो यस्य प्रा० ब०। गतलोपः बहुव्रीहौ अचोऽभावः। १चतुर्णां समीपवर्त्तिनि। चतुरस्य सामीप्यादौ अव्ययी०। २दक्षसामीप्यादौ अव्य०।

**उपचय** पु० उप+चि–भावे अच्। १वृद्धौ २उन्नतौ "स्वम्युपचये केचित् परस्य व्यसने परे" माघ। "तदेतेषामस्पृष्टानां ग्रामोपचये भवन्त प्रमाणम्" हितो० "ऋतवो भवन्ति दोषोपचयप्रकोपोपशमननिमित्तम्" सुश्रु०। "चलितदशकाभाव लग्नादुपचया स्मृता" इति ज्योतिषोक्ते ३लग्नात् षष्ठादिस्थानेषु च। [च।

**उपचरित** त्रि० उप+चर–क्त। १उपासिते ३लक्षणया बोधिते

**उपचर्म(न्)** अव्य० चर्मणः सामीप्यादौ अव्ययी० वा अच्समा०। १चर्मसमीपे २चर्मद्योतनार्थे च उपगतश्चर्म अत्या० स०। नान्तः। चर्मोपगते त्रि० स्त्रियां वा डाप् मनन्तत्वान्न ङीप्।

**उपचर्य्य** त्रि० उप+चर–कर्मणि यत् नत उपसर्गाद्देश अथतरेत्यादिवत् सुप्सुपेति समासे सोपसर्गात्तु यथादेश स्यात्। १सेवनीये "ये च यैरुपचर्य्याः स्युर्नियमैस्तान्निबोधत"। उपचर्य्य स्त्रिया साध्व्या सततं देववत् पतिः" मनु "अग्निवच्चोपचर्य्या वै ब्राह्मणाः कुरुसत्तम!" भा० आनु० ८अ०। २चिकित्सनीये च। भावे यत् तथा समासः। ३चिकित्सायाम् ४सेवने च न० [ इला०

**उपचर्य्या** स्त्री उप+चर–भावे क्यप्। १सेवने २चिकित्सायां

**उपचाकु** त्रि० उप+चक मतोघाततृप्त्योः उण्। १प्रतिघातके २भीते च ततः बाह्वादि० अपत्यार्थे इञ्। औपचाकवि तदपत्ये पुंस्त्री०।

**उपचायिन्** त्रि० उपचिनोति उप+चि–णिनि स्त्रियां ङीप्। उपचयकारके वृद्धिकारके। "इतो वृद्धोपचायित्वात् शिशुमामद्य योधय" भा० आश्व० ७९अ०।

**उपचाय्य** पु० उपचीयतेऽग्निरत्र उप+चि–आधारे ण्यत्। यज्ञे इष्टकादिनिर्मिते अग्निधारणार्थे स्थलविशेषे "कथाभीरमरी नित्यमुपचाय्यवतां शुभे!" भट्टिः।

**उपचार** पु० उप+चर–घञ्। १चिकित्सायां, २सेवायां, "स मे चिरायास्खलितोपचाराम्" । "उपचाराञ्जलिखिन्न-

धिवासितम् । तैजसं कांस्यपात्रं वा शङ्खेनाथ प्रदापयेत् । यद्दीयते देवताभ्यो गन्धपुष्पादिकं तथा । अर्घपात्रस्थितं तोयं रभिषिच्य समुत्सृजेत् । नैवेद्यं दक्षिणे वा मे पुरतो वा न पृष्ठतः । दीपं दक्षिणतो दद्यात् पुरतो वा न वामतः । वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे । निवेदयेत् पुरोभागे गन्धपुष्पञ्च भूषणम्" नरसिं०पु० । "कार्पासं सर्वतोभद्रं दद्यात सर्वेभ्य एव हि । नैकान्तरक्तं दद्यात्तु वासुदेवस्य चैलकम् । तत् पूर्वं दर्शयित्वैव मन्त्रं देशाय चोत्सृजेत् । निर्दशं मलिनं जीर्णं छिन्नं गात्रावलिङ्गितम् । परकीयं चाखुदष्टं सूचीविद्धं तथोषितम् । उग्रकेशं विधूतञ्च श्लेष्मसूत्रादिदूषितम् । वर्जयेत् प्योपयोगे च यत्नादास्युपयोजने" । (उग्रकेशं केशेन सह वासितम्) । "पताकाध्वजवस्त्रादौ सूत्रं वस्त्रं नियोजयेत् । ग्रैवेयकादि मुकुटं सौवर्णं राजतञ्च वा । निवेदयेत्तु देवेभ्यो नान्यत्तैजससम्भवम् । मावरं पानपात्रञ्च गण्डकी स्तम्भमेव च । पर्य्यङ्कादि यदन्यत्तु सर्वं तदुपभूषणम्" । गन्धविशेषो गन्धशब्दे वक्ष्यते ।

उपचारच्छल न० वाद्युक्तवाक्यस्य तत्तात्पर्य्यविषयार्थान्तरपरत्वकल्पनेन छलात्मकासदुत्तररूपे दूषणभेदे । छलस्य सामान्यलक्षणविभागोपचारलक्षणोदाहरणानि गौ०सू०तद्व्यत्योर्दर्शितानि यथा । "वचनविघातो ऽर्थविकल्पोपपत्त्या छलम्" सू० । "अर्थस्य वाद्यभिमतस्य योविकल्पोविरुद्धः कल्पो ऽर्थान्तरकल्पनेति यावत् तदुपपत्त्या युक्तिविशेषेण योवचनस्य वाद्युक्तस्य विघातोदूषणं तच्छलमित्यर्थः वक्तृतात्पर्य्याविषयार्थकल्पनेन दूषणाभिधानमिति फलितं तात्पर्य्याविषयत्वं विशेष्ये विशेषणे संसर्गे वा यथा नेपालादागतोऽयं नवकम्बलवत्त्वादित्यत्र नवसङ्ख्यापरत्वकल्पनयाऽसिद्ध्यभिधानं, प्रमेयं धर्म्मत्वादित्यत्र पुण्यत्वार्थकल्पनया भागासिद्ध्यभिधानं, वह्निमान् धूमादित्यत्र धूमावयवे व्यभिचाराभिधानम्" वृ० । "तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलञ्च" सू० । "धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम्" सू० । "धर्मशब्दस्यार्थेन सम्बन्धस्तस्य विकल्पो द्विविधस्तः शक्तिलक्षणान्यतररूपतया च शक्तिलक्षणयोरेकतरवृत्त्या प्रयुक्ते शब्दे तदपरवृत्त्या यः प्रतिषेधः स उपचारच्छलं यथा मञ्चाः क्रोशन्ति नीलोघट इत्यादौ मञ्चस्थाः पुरुषाः क्रोशन्ति न तु मञ्चाः, एवं घटस्य नीलरूपाभेदः, एवं रूपं नीलं इति शक्त्या प्रयुक्ते लक्षणयादूषणमथवा रूपं नीलं इति प्रतिषेधोऽप्युपचारच्छलम् । वाद्यभिमतार्थस्यादूषणेन छलस्यासदुत्तरत्वम् । न च लिङ्गत्वाद्यधिकप्रयोगाद्वादिन एवापराधः स्यादिति वाच्यं तत्तदर्थबोधकतया प्रसिद्धस्य शब्दस्य प्रयोगे वादिनोऽनपराधात् अन्यथा पर्वतोवह्निमानित्युक्ते पर्वतोऽयं कथमवह्निमानित्यादिदूषणेनानुमानाद्युच्छेदः स्यात्" ।

उपचार्य्य त्रि० उप+चर—कर्मणि ण्यत् । १सेवनीये २चिकित्सनीये च भावे ण्यत् ३चिकित्सायां हेम० ४सेवायाञ्च न० ।

उपचित् त्रि० उपचिनोति देहम् उप+चि—क्विप् । देहवर्द्धके श्लीपदादौ "नाशयित्री बलासस्यार्शस उपचितामसि" यजु० १२,९७ । "उपचितः श्वयथुगण्डश्लीपदादयः" वेददी० ।

उपचित उप+चि-क्त । १समृद्धे "स्तनयोगवयोपचित वनम्" रघु । २दिग्धे च मेदि० ३लेपनादिना वर्द्धिते निदिग्धे अमरः ४समाहिते हेम० ५सञ्चिते च "प्रयतत्वाद्धोपचितमशुभं नाशयतीति प्रायश्चित्तम्" हारीत । "उपचितं सञ्चितम्" प्रा०त०रघुनन्दनः । [६उन्नते च ।

उपचिति स्त्री उप+चि—चाय-चिभावो वा भावे क्तिन् । १वृद्धौ

उपचित्र न० "उपचित्रमिदं सससाल्लगौ" वृ० र० उक्ते १समवृत्तवर्णवृत्तभेदे । "विषमे यदि सौ सलगा दले भौ युजि भाद्गुरुकावुपचित्रम्" तदोक्ते अर्द्धसमे २वर्णवृत्तभेदे च । ३धृतराष्ट्रपुत्रभेदे "चित्रोपचित्रौ चित्राक्षश्चारुचित्राङ्गदश्च ह" धृतराष्ट्रपुत्रनामकथने । भा० आ० ६७ अ० ।

उपचित्रा स्त्री उपगता चित्रं वर्णम् चित्रा वा । मूषिकपर्ण्याम् (उन्दुरकानि) अमरः चित्रातारासमीपस्थायां २स्वातौ ३हस्तायाञ्च । राशिचक्रे तयोश्चित्रानुगतत्वात्तथात्वम् । ४दन्तीवृक्षे राजनि० "द्विगुणितवसुलघुरचलधृतिरिह" इत्युपक्रम्य "वाणाष्टनवसु यदि लचिता उपचित्रा नवमे परयुक्ते" वृ०र० उक्ते षोडशमात्रात्मके ५मात्रावृत्तभेदे च ।

उपचेय त्रि० उप+चि—कर्मणि यत् । अङ्कुशादिना चित्वाद्य चयनीये पुष्पादौ ।

उपच्छन्दन न० उप+छदि—णिच् भावे ल्युट् । सान्त्वेन प्रार्थने (फुसलान) "तथा निवेदितस्य नरपतिरहमिमोऽनियोक्त उपच्छन्दनैरेव च ते दापयितुं यतिष्यते" दशकु० । २उपमन्त्रणे च "उपमन्त्रणमुपच्छन्दनमिति" सि० कौ० ।

उपच्यव पु० उप+च्यु—गतौ भावे अप् । स्थानात् निर्गमे । "यत्र नार्य्यपच्यवमुपच्यवन्ति" ऋ० १,२८,३ । "याद्यायामिर्गमनमुपच्यवम्" भा० ।

**उपजन** न० उपजायते जन–घञ् । स्त्रीपुंसयोगेन जायमाने १देहे । "नोपजनं स्मरन्निदं शरीरं स यथा प्रयोग्य आचरणे युक्तः" छा०उ० । "सर्व्वमेव नोपजनं स्मरन् स्त्रीपुंसयोरन्योन्योपगमेन जायते इत्युपजनम् आत्मभावेन वात्मसामीप्येन वा जायते इत्युपजनमिदं तन्न स्मरन्" भा० । भावे घञ् अवृद्धि । २स्तोमादिवृद्धौ पु० । "तत्रोपजनमाचार्य्या वर्ण्णयन्ते स्तोमानाम्" आश्व०श्रौ०८ १,१५ "तत्र स्तोमवृद्धावुपजनस्यागमुच्यते नारा० वृ० "स्तोमातिरेके स्तुतस्योपजनः" ६,७,१ "तदा स्तुतस्तस्योरुपजनो भवति" नारा०वृ० । ३उत्पत्तिमात्रे च "योगो हि प्रभवाप्ययौ" कठोप० भाष्ये योगो हि प्रभवाप्ययौ उपजनापायधर्म्मकौ" इति उक्तम् ।

**उपजप्य** त्रि० उप+जप–कर्म्मणि अर्हार्थे यत् । भेदनीये उपपूर्व्वकाज्जपतेर्भेदार्थकत्वात्तथात्वम् । "उपजप्यानुपजपेद् बुध्येतैव च तत्कृतम्" मनुः । [जरासामीप्ये ।

**उपजरस** अव्य० जरायाः समीपम् अच् समा० जरसादेशश्च ।

**उपजला** स्त्री उपगतो जलम् अत्या०स० । यमुनापार्श्वस्थे नदीभेदे "जलाञ्चोपजलाञ्चैव यमुनामभितो नदीम्" भा०व०१३०अ० ।

**उपजल्पिन्** त्रि० उप+जल्प–णिनि । उपदेशके । "अनाहृतोपदिष्टानामनाहूतोपजल्पिनाम् । ये लोकास्तान् हतः कर्ण । मया त्वं प्रतिपत्स्यसे" भा०श०१२६अ० ।

**उपजाति** स्त्री "अनन्तरोदितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः । इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम" वृ०र० उक्ते वर्णवृत्ते विभिन्नजातिद्वयपादद्वययोगात् चतुर्द्दशप्रकारभिन्ने छन्दोभेदे । यथा उपेन्द्रवज्रेन्द्रवज्रयोः पादद्वयादियोगे १४ भेदाः । तत्र चतुश्चरणप्रस्तारे १६ भेदा भवन्ति तत्र शुद्धा एकैका तत्तन्नामभाक् शिष्टा चतुर्दश उपजातिसंज्ञाः । दिङ्मात्रं दर्श्यते । उ उ उ उ । इ उ उ उ । उ इ उ उ । इ इ उ उ । उ उ इ उ । इ उ इ उ । उ इ इ उ । इ इ इ उ । उ उ उ इ । इ उ उ इ । उ इ उ इ । इ इ उ इ । उ उ इ इ । इ उ इ इ । उ इ इ इ इ इ इ इ । अत्राद्यन्तयोः इन्द्रवज्रोपेन्द्रवज्रयोः शुद्धतया तद्भिन्नानां चतुर्द्दशानां भिन्नजातीयचरणद्वयसम्बन्धयोगात् उपजातित्वम् । यथा "अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम्" इत्यादि" रघु । एवं वंशस्थेन्द्रवंशयोरपि । यथा "इत्थं रथाश्वेभनिषादिनां प्रगे, गणो नृपाणामथ तोरणाद्बहिः" माघः तुल्यसंख्यकवर्णपादयोरेव नोपजातित्वमिति न नियमः किन्तु भिन्नसंख्यकवर्णपादयोरपि । "रामं लक्ष्मणपूर्व्वजं रघुवरं सीतापतिं सुन्दरं काकुत्स्थं करुणामयं गुणनिधिं विप्रप्रियं धार्म्मिकम् । राजेन्द्रं सत्यसन्धं दशरथतनयं श्यामलं शान्तमूर्त्तिम् । वन्दे लोकाभिरामं रघुकुलतिलकं राघवं रावणारिम्" इति पद्ये शार्द्दूलविक्रीडितेन १९ ऊनविंशत्यक्षरपादकेन सह २१ एकविंशत्यक्षरपादकस्रग्धरायाः पादद्वयेन मिश्रणात् उपजातित्वम् । एवं "भक्तिर्मे(?) सुराणामधिपे देवानाञ्च पुरन्दरे" इति देवीभा० अनुष्टुब्वृहत्योः सङ्करादुपजातित्वम् ।

**उपजानु** अव्य० जानुनः समीपम् अव्ययी० । जानुसमीपे । "भीमोऽथ तूपजानुपाजघ्नरन्निः" भट्टिः । तत्र प्रायभवेऽर्थे तत ठक् उगन्तत्वात् ठस्य कः । औपजानुक तत्प्रायभवे त्रि० "पाणी यस्यौपजानुकौ" भट्टि ।

**उपजाप** पु० उप+जप–घञ् । १भेदे, अनैक्यसम्पादके व्यापारे । "उपजापं कृतस्तेन तानाकोपवतस्त्वयि" माघः "तेषु तेषु चाकृत्येषु प्रावरन् परोपजापाः" दशकु० । २उपांशुजपे च ।

**उपजापक** त्रि० उप+जप–ण्वुल् । १भेदके "घातयेद्विविधैर्दण्डैररीणाञ्चोपजापकान्" मनुः । [भेद्ये ।

**उपजापसह** त्रि० उपजापं भेदं सहते सह–अच् । भेदार्हे

**उपजिह्वा** स्त्री उपगता ऊर्द्ध्वमुखी जिह्वा यस्याः । १काकीभेदे । प्रा०स० । २उपरिस्थायां जिह्वायाञ्च (आलजिभ्) "उपजिह्वास्फिचौ बाहू" कायविभागे या०स्मृ० । ३तद्गतो मांसदोषजे ३रोगभेदे "अधिमांसार्व्वुदाद्योऽधिजिह्वोपजिह्वोपकुशगलशुण्डिकालजीनावत वातौष्ठप्रकोपजगलगण्डगलशुण्डीसामभृतयोमांसदोषजाः" स च सुश्रुते मुखरोगेषु उपजिह्वाधिजिह्वोपकुशदन्तवैदर्भप्रभृतिषु जिह्वागतमुखरोगभेदः । मुखरोगविभागे" सुश्रु० । "जिह्वागतास्तु कण्टकास्त्रिविधास्त्रिभिर्दोषैरलाश उपजिह्विकेति पञ्चधा विभज्य "जिह्वाग्ररूपः श्वयथुर्हि जिह्वामुन्नाम्य जातः कफरक्तयोनिः । प्रसेककण्डूपरिदाहयुक्ता प्रकथ्यतेऽसावुपजिह्विकेति" लक्षितं । अत्र स्वार्थे कन् । "उपजिह्विकां तु संलिख्य क्षारेण प्रतिसारयेत्" सुश्रु० । उपजिह्वे च स्वार्थे कन् । ४कीटभेदे स्मारा० कण्टकादितत्तुल्यासत्त्वात्तम् ।

**उपजीक** त्रि० उ+जीव–क्विप् स्वार्थे कन् वलोपः । उपजीवके "उद्भवन्ति उपजीका समुद्रादधि भेषजम्" अथ० २,३,४,

"उपजीका आसिञ्चन् धन्वन्युदकम्" । ६,१००,२,

उपजीव त्रि० उपगतो जीवं जीवनम् अत्या० स०। जीवनोपगते । "उपजीवाः स्थो जीव्यासम्" यजु० १९,६९,२, उपादि द्व्यच्कत्वेन तत्पुरुषेऽन्तोदात्तोऽयम् ।

उपजीवक त्रि० उप+जीव–ण्वुल् । १उपजीवनोपायवति, "श्वकाः सेतुभेत्तारः परवृत्त्युपजीवकाः । अक्षवाहा मित्राणां ते वै निरयगामिनः" भा० आ० २२अ०। उपजीव्यतया २इतरालम्बके ३प्रयोज्ये "उपजीव्योपजीवकभाव" न्यायम० उपजीव्यशब्दे विवृतिः ।

उपजीवन न० उप+जीव–करणे ल्युट् । १जीविकायाम् । "क्षत्रियस्यैतदेवाहुर्धर्म्मं कृष्णोपजीवनम्" भा० व० २१अ० । "उपजीवनस्तु पर्जन्योदानमस्य परायणम्" भा० व० २१ अ०। भावे ल्युट् । २इत्याद्यर्थमाश्रये "स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम्" या० स्मृ० "आत्मप्रदानं सौम्य त्वमकार्य्येणोपजीवनम्" भा० स० ७६अ०।

उपजीवनीय त्रि० उप+जीव–कर्म्मणि अनीयर् । इत्याद्यर्थमालम्बनीये "तत्र या अस्यै स्वरूपतया ओषधयस्तदस्या उपजीवनीयतमम्" शत० ब्रा० १,२,२,१०, "एवंतामुपजीवनीयामकुर्व्वत" १,२,५,११,

उपजीविका स्त्री उपजीव्यते उप+जीव–करणे कर्त्तृत्वोपचारात् ण्वुल् अत इत्वम् । जीवनोपायभूतायां वृत्तौ ।

उपजीविन् त्रि० उप+जीव–णिनि । १आश्रिते २इत्याद्यर्थमालम्बके च "भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम्" रघुः। "अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । नैषां प्रतिग्रहो देयो न शिला तारयेच्छिलाम्" "जातिमात्रोपजीवी वा कामं स्यात् ब्राह्मणब्रुवः" मनुः । स्त्रियां ङीप् ।

उपजीव्य त्रि० उप+जीव–ण्यत् । १आश्रये । २ज्ञानवत्ताद्युत्पत्त्याद्यर्थम् अवलम्बनीये "वत्समुपजीव्यानां मान्यानामाराध्यं कटाक्षविक्षेपैः" सा० द०। "उपजीव्यद्रुमाणाञ्च विंशतिर्हि गुणोदम" या० स्मृ० । "उपजीव्यतामापन्नः" भट्टि०। उपजीव्यत्वञ्च स्वसत्ताप्रयोजकत्वम् स्वज्ञानप्रयोजकत्वञ्च । उपजीव्योपजीवकभावश्च ज्ञानत्वयोः प्रयोज्यप्रयोजकभावः । यथा एकस्यान्यसत्ताप्रयोजकत्वम् परस्य च तत्प्रयोज्यसत्ताकत्वम् । एवम् अन्यज्ञानप्रयोजकत्वम् अन्याधीनज्ञानविषयत्वं च यथायथं प्रयोगानुसारे बोध्यम् । [उपजीवकमप्यत्र न० ।

उपजोष पु० उप+जुष–प्रीतौ घञ् । १प्रीतौ २सेवने च । ल्युट् ।

उपजोषम् अव्य० उप+जुष–प्रीतौ बा० अम् । १प्रीतौ २कल्याणे ३यथाकर्म्म भोगमित्यर्थे च । तत्र प्रीतौ "यथोपजोषं सर्व्वत्र जनश्चिक्रीड भारत" । भा० आ० ११२अ०। "यथोपजोषं विहितैर्हि कृष्णा" भा० आ० १९९अ० अत्र सर्व्वत्र उपजोषशब्देनापि यथाशब्दस्याव्ययीभावोऽपि भवितुमर्हति । उप–सामीप्ये जोषम् मौनम् । ४सामीप्येन मौने च "किमिदमुपजोषमास्यते" शकु० ।

उपज्ञा स्त्री उप+ज्ञा–कर्म्मणि अङ् । विनोपदेशेन स्वयमुज्ञाते १प्रथमं ज्ञायमाने । उपज्ञाशब्दस्य तु तदादित्वविवक्षायाम् उत्तरपदस्थस्य तत्पुरुषे क्लीवता । "पाणिन्युपज्ञं व्याकरणम्" सि० कौ० । "अथ प्राचेतसोपज्ञं रामायणमितस्ततः" रघु० । "केतव्युपज्ञं मत वह्नमर्थम्" । भट्टि० भावे अङ् । २आद्यज्ञाने तत्पुरुषे स्त्री न क्लीवता ।

उपज्ञात त्रि० उप+ज्ञा–क्त । विनोपदेशेन ज्ञातेऽर्थे ।

उपज्योतिष न० उपगतं साहाय्येन ज्योतिषम् अत्या० स० । ज्योतिषशास्त्रानुकारिणि गणितादिशास्त्रे ।

उपढौकन न० उप+ढौक–भावे ल्युट् । १उपहारे राजादेः संतोषार्थं द्रव्यादिमार्पणे ( भेटदेओया ) कर्म्मणि ल्युट् । २उपह्रियमाणे उपायनद्रव्ये ।

उपतन्त्र न० उपगतं तन्त्रम् अत्या० स०। शिवोक्ततन्त्रसदृशे सिद्धर्षिकृते तन्त्रभेदे तच्च वाराहीतन्त्रे दर्शितं यथा "शैवोक्तान्युपतन्त्राणि कपिलोक्तानि यानि च । अद्भुतानि च तन्त्राणि जैमिन्युक्तानि यानि च । वशिष्ठ कपिलश्चैव नारदो गर्ग एव च । पुलस्त्यो भार्गवः सिद्धो याज्ञवल्क्यो भृगुस्तथा । शुक्रो बृहस्पतिश्चैव अन्ये ये मुनिसत्तमाः । एभिः प्रणीतान्यन्यानि उपतन्त्राणि यानि च । न संख्यातानि तान्यत्र धर्म्मविद्भिर्महात्मभिः । सारात् सारतराण्येव सङ्गृहीतानि निबोधतेति" ।

उपतप्त त्रि० उप–आधिक्ये–तप–क्त । सन्तप्ते । "नारोपतप्तोऽपि भयं न च प्रभुः" नैष० ।

उपतप्तृ त्रि० उप+तप–बा० भावे तृच् । १सन्तापे । अमरे भावप्रकरणे "स्वारः स्वर्गः स्वप्नोपतप्तेति" पाठात् भावे एव तृच् इति क्षीरस्वामी । तेन शब्दकल्पद्रुमे तापकपर्य्यायताकथनं प्रामादिकमेव । कर्त्तरि तृच् स्त्रियां ङीप् । २तापके ३रोगादौ च ।

उपताप पु० उप+आधिक्ये तप–आधारे घञ् । १त्वरायां भावे घञ् । २सन्तापे शब्दरत्नावली ३रोगे मेदि० । करणे घञ् ४अशुभे ५पीडने च रत्नावली । "दौहित्तानुपतापे" आश्व० गृ० ६,८,१,"स्तोमघातेन्द्रियोपतापान् तदा क्षमा

जायते पर्व्विस्ताम्रचूडशिखोपमा। कोषस्याभ्यन्तरे सक्थ्नौ पर्वसन्धिगतापि च। सवेदना पिच्छिला च दुश्चिकित्स्या त्रिदोषजा। लिङ्गवर्त्तिरिति ख्याता लिङ्गार्श इति चापरे"। लिङ्गं वर्त्तं स्थानम्। कोषाभ्यन्तरे अण्डकोषाभ्यन्तरे। सक्थ्नौ लिङ्गस्कन्धसक्थ्नो पर्वसन्धिगता मणिपर्वणोः सन्धिगता"। तच्चिकित्सादि सुश्रु॰चिकि॰ १९अ॰। "उपदंशेषु साध्येषु स्निग्धस्विन्नस्य देहिन"इत्यादि उक्तम्

**उपदर्शक** पु॰ उप+दृश-णिच्-ण्वुल्। १द्वारपाले। २दर्शयितरि त्रि॰उप सामीप्ये दृश-ण्वुल्। समीपस्थतया द्रष्टरि ३साक्षिणि। तस्य कार्य्यानुपलब्धत्वाभावादुपद्रष्टृत्वम्।

**उपदश** त्रि॰ ब॰व॰ दशानां समीपवर्त्तिनः ब॰व्री॰ डच् समा॰। दशसंख्यासमीपवर्त्तिषु नवैकादशसंख्याकेषु।

**उपदा** स्त्री उप-दा-भावे अङ्। १उत्कोचे, २उपढौकने च। "तदर्थिनः इद्व्रायलाभशुल्कोपदा दीयते"पा॰ सदभिहितोभावो द्रव्यवत् प्रकाशते इत्युक्ते "३उपह्रियमाणे द्रव्ये च। "उपदा विविशु शश्वन्नोत्सेका कोशलेश्वरम्""अन्येतरा जानपदोपदाभि" "प्रत्यर्प्य पूजामुपदाच्छलेन" रघु.। भावे ल्युट् उपदानमप्यत्र न॰। स्वार्थे कन्। तत्रैव उत्कोचे च। उपदा+अभूततद्भावे भ्वादौ च्वि। उपदीभूत उपदीकृतः "तस्य रत्नमुपदीकृतं न्टपा." माघः। उपददाति उप+दा-कर्त्तरि क्विप्। उपदातृव्यदातरि त्रि॰ "सर्वायानुरध सनायोपदाम्" यजु॰ २०,९,"उपदाम् उपदानदातारम्" वेददी॰

**उपदानवी** स्त्री स्वर्भानुदानवस्य प्रभानामकन्यायां पुलोम्न कन्या भेदे। "स्वर्भानोस्तु प्रभा कन्या पुलोम्नस्तु सुताम्यम्। उपदानवी हयशिरा शर्म्मिष्ठा वार्षपर्व्वणी"। हरि॰२अ॰"उपदानवी सुतान् लेभे चतुरस्त्वैलिकात्मजान्। दुष्मन्तमथ सुमन्त प्रवीरमनघ तथा"हरि॰१२अ॰।

**उपदि(श)श्** अव्य॰दिशि, दिशो, समीप वा वा अच् समा॰। १दिशीत्यर्थे २दिशो, सामीप्ये च॰उपगता दिशौ अस्या॰ समा॰हलन्तत्वाद्वा टाप्।दिशोर्मध्यवर्त्तिन्यां विदिशि कोणे स्त्री"आवृण्वन् सर्व्वतोव्योम दिशश्चोपदिशस्तथा" भा॰ व॰ १७१ अ॰।

**उपदिश** पु॰ "भगिन्यां वसुदेवस्य श्रुतश्रवसि जज्ञिरे। शिशुपालो दशग्रीवोरैभ्योऽथोपदिशो बली" हरिव॰ ११७अ॰ उक्ते शिशुपालभ्रातरि वसुदेवस्य भागिनेये न्टपभेदे

**उपदिश्य** अ॰उप+दिश-ल्यप् १उपदेशं कृत्वेत्यर्थे। उपदिशि भवः दिगा॰यत्। २विदिग्भवे त्रि॰।

**उपदिष्ट** त्रि॰उप+दिश-कर्म्मणि क्त। यस्य जनस्य उपदेश कृतस्तस्मिन् १जने उपदेशेन २ज्ञापिते च। "उपदिष्टातिदिष्ट गोत्वस्यैव निषेधः" उद्वा॰त॰ रघुनन्दनः।

**उपदी** स्त्री उपेत्य दीयते खण्ड्यते उप+दो-घञर्थे क गौरा॰ ङीप्। (परगाछा) वन्दाया राजनि॰ स्वार्थे कन्। सा ह्रस्वः। उपदिका उपदीकाप्यत्र हेमचन्द्रः। "इमा वम्रो यदुपदीका" शत॰ब्रा॰१४,१,१,८, अत्र वम्री॰ शब्दस्यैव वन्दापर्यायत्वश्रवणात् हेमचन्द्रे वम्रोतिपाठ कल्पनेन शब्दकल्पद्रुमे तत्पर्य्यायताकथन प्रामादिकमेव २कीटभेदे च मेदिनि।

**उपदीक्षिन्** पु॰ उपगतोदीक्षिणं सामीप्येन अत्या॰स॰। यज्ञे दीक्षितस्य निकटस्थे "उपदीक्षी स्वेष्वग्निषु नश्यति कृन्तनाद्युद्दाद्मान्त सन्निपातिकम्" कात्या॰ २५,१४,२, "उपदीक्षी नेदिष्ठ" कर्क।

**उपद्रष्** त्रि॰उपरिस्थः सन् पश्यति उप+दृश-क्विन्। उपरिस्थतया द्रष्टरि साक्षिणि सूर्य्यचन्द्रादौ। "अय सूर्य्य इवोपदृगय सरांसि धावति" ऋ॰९,५४,२, "अय सोमः सूर्य्य इवयथा सूर्य्य सर्व्वस्य लोकस्योपद्रष्टा तत्तत्कर्म्मणा मुपद्रष्टुपद्रष्टा"भा॰।"भद्रा सूर्य्य इवोपदृक"। ८,१०२,१५।

**उपदृषद्(द्)** अव्य॰ सामीप्यादौ अव्ययी॰ वा अच्समा॰। दृषदः पाषाणस्य सामीप्यादौ

**उपदेव** पु॰ उपगतोदेवम् सादृश्येन अत्या॰स॰। "देवकस्या भवन् पुत्राश्चत्वारस्त्रिदशोपमा। देववानुपदेवश्च सदेवो देवरक्षित "हरिवं॰३८अ॰उक्ते १देवकनृपपुत्रभेदे। "अक्रूरेणोपसेनाया सुगात्र्या कुरुनन्दन"। प्रसेनश्चोपदेवश्च जज्ञाते देववर्चसौ" हरि॰ ३४अ॰ उक्ते २अक्रूरपुत्रभेदे च। देवतुल्यतेजस्कत्वात्तन्नामयोस्तथात्वम्। देवसदृशालौकिक सामर्थ्ययुक्ते ३पिशाचादौ। अन्तोदात्तोऽयम्, उपदेवाश्च दश "विद्याधरोऽप्सरोयक्षोरक्षो गन्धर्वकिन्नरौ। पिशाचो गुह्यकः सिद्धोभूतोऽमी देवयोनयः" इत्यमरोक्ताः बोध्याः एषाञ्चालौकिकशक्तिकत्वात्तथात्वम्। उपदेवतादयोऽप्यत्र।

**उपदेवी** स्त्री "या पत्न्योवसुदेवस्य चतुर्दश वराङ्गनाः। पौरवी रोहिणी१नाम मदिराऽपि२ तथा धरा३। वैशाखी च तथा भद्रा४ सुनाम्नी५ चैव पञ्चमी। सहदेवा१ शान्तिदेवा२ श्रद्देवा३ देवरक्षिता४। वृकदेव्युपदेवी५,६,च देवकी चैव सप्तमी७। १२। सुतनुर्वडवा चेति द्वे एते परिचारिके"१४। हरि॰ ३७उक्ते वसुदेवस्य पत्नीभेदे। जातौ ङीष् २विद्याधरादिजातिस्त्रियाम्।

अङ्कुशादिना १आकर्षणे । "अङ्कुशं मौर्वमित्याङ्कुर-र्णानामुपधारणे । आमान्य फलिता शाखा पक्वं पक्वं प्रशातयेत्"१४०। २सम्यक्चिन्तने च । शुच । उपधारणा योगाङ्गे चित्तस्य एकविषये स्थापनार्थव्यापारभेदे स्त्री ।

उपधावन न० उप+धाव-ल्युट् । १उपसरणे २अनुचिन्तने

उपधि पु० उप+धा-भावे कि । अन्यथास्थितस्य वस्तुनोऽन्यथा प्रकाशनरूपे व्यापारे ।"योगाधमनविक्रीतं यो गदानप्रतिग्रहम् । यत्र वाप्युपधिं पश्येत् तत्सर्वं विनिवर्त्तयेत्"मनु.२छले अमर "अरिषु हि विजयार्थिनः क्षितीशा विदधति सोपधि सन्धिदूषणानि" किरा० । "बलोपधिविनिर्वृत्तान् व्यवहारान् निवर्त्तयेत्" या० स्मृतौ दीपकलिकायां पाठ । उपधिश्छलमिति शूलपा०बलोपाधीति" मिता०पाठ, उपाधिर्भयादिरिति व्याख्यातञ्च । "बलोपधिकृतम्" या० स्मृ० । "यच्च वितथमास्थाय सर्वैरुपधिना कृतम्" भा०अ०२७अ०। "स्मृत्वा चैवोपधिकृतं मातुर्दास्ये निमित्तत"१४अ० । आधारे कि ।३रथचक्रे हेम० । उपधिना छलेन जीवन्ति ठक् । औपधिक भयादिदर्शनेन धनोपजीविनि "उत्कोचकाश्चौपधिका वञ्चकाः कितवास्तथा" मनु औपधिका ये भयादिदर्शनादिना धनमुपजीवन्तीति कुल्लू०। उपधिका इति पाठोऽनाकर

उपधूपित पु० उप+धूप-क्त । १मृतौ २सन्तापयुते त्रि० ।

उपधूमित त्रि०धूमोजातोऽस्य तारका० इतच् दाहकायोगात् धूमं धूमित प्रा०स०। १जातधूमे (धोयान) यात्रादौ वर्ज्जनीये ज्योतिषोक्ते सूर्य्यगन्तव्यदिग्भागे स्त्री "दग्धा दिगैन्द्री ज्वलिता दिगैशी धूमिता चानलदिक् प्रभाते प्रत्येकमेवं प्रहराष्टकेन क्रमाद्दिशोऽष्टौ कथिता क्रमेण । दग्धा दिगुक्ता दिननाथयुक्ता विमुक्तखटाप्ता भवति प्रदीप्ता । संधूमिता वा ज्वलिता प्रयाता येभ्या दिगन्ता खलु पञ्चशान्ता." पीयू० वसन्तराजः । तन्निदर्शनचक्रं यथा ।

| | दग्धा | दीप्ता | उपधूमिता | ५यान्ता: |
|---|---|---|---|---|
| १यामे | ऐन्द्री | पूर्वा | आग्नेयी | याम्यादिसौम्यान्ता: |
| २यामे | पूर्वा | आग्नेयी | याम्या | नैर्ऋत्यादीशान्ता. |
| ३यामे | आग्नेयी | याम्या | नैर्ऋती | पश्चिमादिपूर्वान्ता: |
| ४यामे | याम्या | नैर्ऋती | वारुणी | वायव्यादिवह्निदिगन्ता |
| ५यामे | नैर्ऋती | पश्चिमा | वायवी | सौम्यादियाम्यान्ता: |
| ६यामे | पश्चिमा | वायवी | उत्तरा | ऐशादिनैर्ऋत्यन्ता |
| ७यामे | वायवी | उत्तरा | ऐशी | पूर्वादिपश्चिमान्ता. |
| ८यामे | उत्तरा | ऐशी | पूर्वा | आग्नेयादिवायव्यन्ता: |

तत्र प्रहरभेदेन दग्धादित्रिके न गच्छेत् यान्तासु पञ्चसु गच्छेत् । एवं प्रधूमिता सधूमितादयोऽप्यत्र ।

उपधृति स्त्री उप+धृ-क्तिन् । १सम्धारणे २किरणे हेम० ।

उपधेय त्रि० उप+धा-यत् । मन्त्रभेदेन स्थापनीये इष्टकादौ "यत्र यद्धवन्मन्त्रोपधेयास्तिष्टकास्तु" सि०कौ० ।

उपध्मान पु० उपध्मायते यत्र ध्मायतेऽनेन उप+ध्मा-करणे ल्युट् ।ओष्ठे "तालव्या ओष्ठजावपू" "उपूपध्मानीयानामोष्ठौ" सि० कौ० उक्ते तस्य उवर्णपयोरुच्चारस्थानत्वात्तथात्वम् । उपध्मान इति केचिदाहु' ।

उपध्मानीय पु० उपाध्माने ओष्ठे भव छ । पफपरे विसर्गस्थानिके गजकुम्भाकृतितया लेखनीये वर्णभेदे उपध्मानशब्दे उदा० । उपाध्मानीय इति केचिदाहु' ।

उपध्वस्त त्रि०उप+ध्वन्स-क्त । १नष्टे २मिश्रिते च।"कृष्णग्रीवा आग्नेया बभ्रवः सौम्या उपध्वस्ताः सावित्रा वत्सतर्यः" यजु०२४,२४ उपध्वस्तमध पतनम्"वेददी०"एतद्वास्यै रूपतममिवेति रोहिणी इ त्येनोपध्वस्ता"शत०ब्रा० ४,५,८,२ । "रुद्रदक्षिणे त्रिरात्रे प्रतिविभज्य नयन् रोहिणीमुपध्वस्ताम्" कात्या० १२,४,१५। "उपध्वस्ता मिश्रिताम्"संपद्वृत्ति ।

उपनक्षत्र न० उपगतं नक्षत्रम् अत्या०स० । अश्विन्यादि सप्तविंशतिनक्षत्राणां प्रत्येकं सप्तविंशत्यानुगतेषु ७२९ संख्यातेषु राशिचक्रस्थेषु तारकभेदेषु । "तानि वा एतानि सप्तविंशतिः, नक्षत्राणि सप्तविंशति, सप्तविंशतिर्ह्येव नक्षत्राणामेकैकं नक्षत्रमनूपतिष्ठन्ते तानि च सप्त शतानि विंशतिश्चाधि" शत०ब्रा० १०,५,४,५ । अत्राधीत्येन नवाधिकत्व गम्यते सप्तविंशत्या सप्तविंशतिगुणने ७२९ संख्यासम्भवात् श्रुतौ सहचारेण तथानुक्तिस्तु इष्टकानां ७२०सख्यकत्वात्तत्संख्यासाम्यसम्पादनार्थेति बोध्यम्

उपनख न० उपगतमधिष्ठानतया नख नखमांसम् अत्या० स० । सुश्रुतोक्तेषु चतुश्चत्वारिंशत्क्षुद्ररोगेषु चिप्याख्ये रोगभेदे । तल्लक्षणं तु तत्रोक्तं "नखमांसमधिष्ठाय पित्तं वातश्च वेदनाम् । करोति दाहपाकौ च त व्याधिं चिप्पमादिशेत् । तदेव क्षतरोगाख्यं तथोपनखमित्यपि"।

उपनत त्रि० उप-नम-क्त । १नम्रे "शौरे प्रतापोपनतैरितस्ततः" माघ० २उपगते च "अचिरोपनतां स मेदिनीम्" रघु । ३उपस्थिते च हेम० ।

उपनति स्त्री उप+नम-भावे क्तिन् । १नमने २उपगमे ३उपस्थितौ आधारे क्तिन् ।उपनत्याधारे"साध स उप-

विशेषकालोऽभिधीयते । तत्रादौ वर्णभेदेन कालभेदस्य मुख्यता यथा ह प्रमि० काश्यप । "अष्टमे वसन्ते विप्राणां ग्रीष्मे राज्ञां शरद्यथो । विशां मुख्यञ्च सर्व्वेषां द्विजानाञ्चोपनायनम्" । नारद "शरद्ग्रीष्मवसन्तेषु व्युत्क्रमात्तु द्विजन्मनाम् । मुख्यं साधारणं तेषां व्रतं माघादिपञ्चसु" । नि० सि० गर्ग । "विप्रं वसन्ते क्षितिपं निदाघे वैश्यं घनान्ते व्रतिनं विदध्यात् । माघादिशुक्लान्तकपञ्चमासाः साधारणा वा सकलद्विजानाम्" । शुक्लोज्यैष्ठं । माघादिमासप्राशस्त्यमाह हेमाद्रौ ज्योतिषे"। "माघादिषु च मासेषु मौञ्जी पञ्चसु शस्यते" । अन्यत्रापि । "ब्राह्मणक्षत्रवैश्यानां माघादिष्वपि पञ्चसु । साधारणं तु सर्व्वेषां व्रतोपनयनं विदुः" । तत्र मासभेदे फलभेद यथाह व्यव० च० सुरेश्वर '। "माघे मासि महागुणोधनपतिः प्राज्ञोधनी फाल्गुने मेधावी भवति व्रतोपनयने चैत्रे च वेदान्वितः । वैशाखे सुभगः सुखी पटुमतिर्ज्यैष्ठे वरिष्ठोबुधोऽप्याषाढेऽपि महाविपक्षविजयी ख्यातो महापण्डितः" । कृत्यचि० "माघे द्रविणसंलाढ्यः फाल्गुने च दृढव्रतः । चैत्रे भवति मेधावी वैशाखे कोविदोभवेत् । ज्यैष्ठे गहननीतिज्ञ आषाढे क्रतुभाजनम् । शेषेष्वन्येषु रात्रिः स्याच्चिरस्थ निधिः च व्रतम्'। निषिद्धमिति विप्रक्षत्रियविषयं न वैश्यपरं तस्य "शरदि वैश्यमिति" स्मृत्या प्रागुक्तकाश्यपेन च शरद्युपनयनविधानात् । यत्तु 'विप्रस्य क्षत्रियस्यापि व्रतं स्यादुत्तरायणे । दक्षिणे च विशां कार्य्यं नानध्याये न संक्रमे" इति गर्गवचने चकारात् विप्रक्षत्रयोर्दक्षिणायने उपनयविधानं तत् प्रायश्चित्तोपनयनपरमिति स० त० रघु० । वस्तुत चस्त्वर्थे दक्षिणायने तु वैश्यस्य मुख्योपनयनपरम् "उदगयने आपूर्य्यमाणपक्षे कल्याणे नक्षत्रे चूड़ोपनयनगोदानविवाहा" आश्व० सूत्र तु विप्रक्षत्रविषयम् । प्रायश्चित्तोपनयनपरत्वे "नानध्याये न संक्रमे" इति पर्य्युदासानुपपत्तिः वक्ष्ये प्रदर्शयिष्यमाणगर्गवचनेन प्रायश्चित्तोपनयनस्यानध्यायेऽपि कर्त्तव्यतावगमात् । "जन्मलग्नमक्षत्रमासराशिषु उपनयनप्राशस्त्यमाह" ज्यो० चि० वृक्षं । "जन्मोदये जन्मसु तारकासु मासेऽथवा जन्मनि जन्मभे वा । व्रतेन विप्रो न बहुश्रुतोऽपि विद्याविशेषे प्रथितः पृथिव्याम्"। "विवाहे मेखलाबन्धे जन्ममासं विवर्ज्जयेत् । विशेषाज्जन्मपक्षन्तु वसिष्ठाद्यैरुदाहृतम्" गर्गवाक्यं तु क्षत्रियवैश्यपरम् न

तु ब्राह्मणविषयं वाक्यान्तरविरोधात्" । अथ पक्षनिर्णयं व्य० च० । "श्रेष्ठं पक्षमुशन्ति शुक्लमसितस्याद्यत्रिभागं तथा रिक्तां प्रोज्झ्य तिथिं तथा त्वयनयोः सन्धिञ्च शेषाः शुभा" इति आपूर्य्यमाणे पक्षे इत्यादिप्रागुक्ताश्वलायनसूत्रम् "पक्षे च कृष्णेतरे" भुजबलभीम । तिथिनिर्णय । निर्णया० "तृतीयैकादशी श्लाघ्या पञ्चमी द्वादशी तथा" । "द्वितीषु रुद्ररविदिक्प्रमिते तिथौ च कृष्णादिमत्रिलवकेऽपि न चापराह्णे" मु० चि० । निर्णया० व्यव० च० । "न च षष्ठ्यामथाष्टम्यां पञ्चदश्यां न पर्व्वणि । रिक्तासु च न कर्त्तव्यं त्र्यहस्पृग्दिवसे तथा" । अष्टमीपञ्चदश्योरनध्य । यत्वेऽपि पृथगुपादानं नैमित्तिकविषयमेवमन्येऽपि । "षष्ठ्यामशुचिरभार्य्यो रिक्तासु बहुदोषभाक्" स० त० । "रिक्तायामर्थहानिः स्यात् पौर्णमास्यान्तथैव च । प्रतिपद्यपि चाष्टम्यां कुलबुद्धिविनाशनमिति" । अन्यत्रापि "सप्तम्यामष्टम्यां प्रतिपदि रिक्तात्रयोदश्याम् । आयुर्व्विद्यानाशोव्रतबन्धे पञ्चदश्याञ्च"। "द्वितीया पञ्चमी षष्ठी सप्तमी दशमी तथा । त्रयोदशी तृतीया च शुक्ले श्रेष्ठा प्रकीर्त्तिता" इत्यत्र सप्तमीत्रयोदश्योर्यत् प्राशस्त्यमुक्तं तद्वसन्ताभिप्रायेण । नि० सि० नारदेन व्यतिरेकमुखेन वसन्ते गलग्रहादिप्रतिप्रसवोक्तेः । यथा "विनर्त्तुना वसन्तेन कृष्णपक्षे गलग्रहे । अपराह्णे चोपनीतः पुनः संस्कारमर्हति" । गलग्रहमाह मदनरत्ने नारद ।'कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् । त्रयोदशी चतुष्कञ्च अष्टावेते गलग्रहा' । रा० मा० "आरम्भानन्तरं यत्र प्रत्यारम्भोन विद्यते । गर्गादिमुनयः सर्व्वे तमेवाहुर्गलग्रहम्' । दैवज्ञमनोहरे । 'प्रदोषे निश्यनध्याये सन्ध्यागर्ज्जे गलग्रहे । मधु विनोपनीतस्तु पुनः संस्कारमर्हति'।एवं दिनाचतुर्द्दशीगलयोर्मध्या यदा भवेत् । द्वादशी तत्र वर्ज्ज्या स्यात् गलग्रहतया मतेति ज्यो० वचनात् तादृशद्वादश्या वर्ज्यता । वृद्धगर्ग । "स्मृतिपूक्तामनध्यायान् सप्तमीञ्च त्रयोदशीम्" वर्जयेदित्यनुवर्त्त । तत्रानध्यायप्रदोषकालौ अनध्यायशब्दे १४५ पृ० दर्शितौ "अनध्यायेऽपि कर्त्तव्यं यस्य नैमित्तिकं भवेत्" वृद्धगर्गवचनात् "प्रायश्चित्तोपनयनेऽनध्यायस्य न दूषकताऽधिकारात् कृष्णपक्षगलग्रहादौ, समुच्चय । "नो जीवास्तातिचारे सितगुरुदिवसे काणशुद्धौ व्रत व्रत्" दीपिकोक्ते समयाशुद्धिमात्रं वर्ज्जनीयम् । गुरुशुक्रास्तादिपूपनयने दोष-

माह तत्रैव । "अस्तङ्गते दैत्यगुरौ गुरौ वा बाल्येऽपि वा पापयुतेऽप्यतुक्ते । व्रतोपनीतो द्विजः प्रणाशं प्रयाति देवैरपि रक्षितोऽयः" । नक्षत्रनिर्णयः मु०त०भुजब० "स्वातीशक्रधनाश्विमित्रकरभे पौष्णे त्वदित्याहरिश्चिन्द्रौ तोयपतौ भगे दितिसुते भाद्रद्वये चागरे" १५,१८,१७ १,१७,१३ २७,८,१४,२२,५,२४,११,१२, २५ २६,२० एतत्संख्यकेषु सप्तदशसु नक्षत्रेषु उपनयनं सत् । मु०चि० प्रमि० विशेषः "क्षिप्रध्रुवाहिचरमूलमृदुत्रिपूर्वारौद्रेऽर्कविद्गुरुसितेन्दुदिने व्रतं सत्" अस्य व्याख्या प्रमि० "प्राजापत्यादि षट्के भगत्रादिषु पञ्चसु । मूलादिदशके चैव सर्वेषां व्रतबन्धनम्" । तेन २२ द्वाविंशतिर्नक्षत्राणि विहितानि । अत्र पुनर्वसुग्रहणं क्षत्रियवैश्यविषयं न तु ब्राह्मणविषयम् "पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हतीति राजमा० । "त्र्यहस्पृशि मले मासि शूद्रत्वमधिगच्छति । पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हतीति" सारसंग्रहे च विप्रोपनयननिषेधात् । तथा च "भरणीकृत्तिकामघाविशाखाज्येष्ठास्तूपनयनं न कार्य्यम् एतानि नक्षत्राणि च सर्वशाखामत्ययभायाणि यथोक्तं तत्रैव 'भरणी कृत्तिकापित्र्यविशाखाशक्रभानि च । सर्वशाखामलं प्रोक्तं व्रतं तत्र विवर्ज्जयेत्" । वेदिभेदे नक्षत्रभेदो यथा ज्योतिर्निबन्धे व्य०च०च । "मूलहस्तात्रये सार्पे शैवे पूर्वात्रये तथा । ऋग्वेदाध्यायिनां कार्यं मेखलाबन्धनं बुधैः" १८, १३, १४, १५, ८, ६, ११, २० २५ एतन्मितानि ऋग्वेदिविषयाणि "पुष्ये पुनर्वसौ पौष्णे २७हस्ते मैत्रे १७ शशाङ्कभे । ध्रुवेषु १२, २१, २६, ४ च प्रशस्तं स्याद्यजुषां मौञ्जीबन्धनम्"। पुष्याश्लेषा २२हस्ताश्विमित्रर्द्धे कर्णोत्तरात्रयम् २२,१२,२१,२६। प्रशस्तं मेखलाबन्धे वटूनां सामगायिनाम्" । भगे ११मैत्रा१७श्विनीहस्ते रेवत्यदितिवासवम् २१। अथर्वपाठिनां शस्तो भगणोऽयं व्रतार्पणे' । नि०सि० । "पूर्वा ११,२०,२५, हस्तात्रये१२,१४,१५, सार्पे ६ श्रुतिमूले च २२,१९,बह्वृचाम् । यजुषां पौष्णमैत्रार्कादित्यपुष्यध्रुवभे । साम्नां गाना हरीशार्कादित्यपुष्योत्तराश्विभौ । धनिष्ठादितिमैत्रार्काश्विन्द्रपौष्णेऽथर्वणाम्" ५ २७, । अन्यत्रापि । "पूर्वाहस्तत्रयाश्लेषाश्विमूलानि भानि च । ऋग्वेदाध्यायिनां शस्तभान्याहुर्मौञ्जीबन्धने । उत्तरारोहिणीयुग्मपुष्यापौष्णार्कादितौ । मैत्रे यजुर्विदाञ्चोपनयनन्तु प्रशस्यते । उत्तराश्रवणार्द्राश्विपुष्याहस्ताधनेषु च । सामगानां व्रतं शस्तमिति वेदविदो विदुः । अश्विनी रेवती हस्ता भगमैत्रधनादितौ । अथर्ववेदिनाञ्चोपनयनन्तु शुभावहमिति" प्रमि०धृतप्रागुक्तवचने ज्येष्ठायामलत्वेनोक्तावपि प्रागुक्तभुजबलादिवचने "अश्विनीमृगचित्रासु हस्ते स्वात्याञ्च शक्रभे । पुष्ये च पूर्वफल्गुन्यां श्रवणे पौष्णभे तथा । वासवे शततारासु व्रतबन्धः प्रशस्यते" श्रीपतिवचने च ज्येष्ठाया ग्रहणमत्रापद्विषयम् । वेदभेदेन विहितनक्षत्रेषु तस्या अकीर्त्तनेऽपि वेदभेदेन प्राशस्त्यमात्रस्य प्रतीतेस्तदलाभेऽन्यवेदिविहितनक्षत्रस्यापि ग्रहणार्थं मुहू० चि० द्वाविंशतिनक्षत्राणां सामान्यतो ग्रहणं तदलाभेऽपि तथैव बोध्यम् । ज्येष्ठायास्त्वत्यन्तापद्विषय एव ग्राह्यता केष्वपि वेदिषु तदनुक्तेः व्य०च०गुरुः । "त्रिपूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे । स्वात्यां सौम्यपुनर्वस्वोरुत्तमं ह्युपनायनम् । वारुणे वैष्णवे पुष्ये वायव्ये पौष्णभे तथा । आश्विन्यां षट्सु भेषूक्तं मध्यमं तु चतुर्मुखैः । शेषेषु वर्जयेद्धीमान् द्विजानामौपनायनम्" अत्रान्येषां वर्ज्यनोक्तिरपि अनापद्विषया' एतद्व्यतिरिक्तनक्षत्राणां प्रागुक्तवचनैर्विहितत्वात् । ज्योतिर्निबन्धे नारदः । "शेषान्यर्कत्रयान्त्येज्यचन्द्रादित्युत्तरात्रयम् । विष्णुवाय्वश्विमित्राजयोनिभान्युपनायने' । वर्जनीययोगानाह व्य०च०गुरुः । "व्याघातं परिघं वज्रं व्यतीपातञ्च वैधृतिम् । गण्डातिगण्डौ शूलञ्च विष्कुम्भञ्च विवर्ज्जयेत्' अन्यत्रापि । "विष्कुम्भशूलपरिघव्यतिपातगण्डव्याघातवैधृतियुतं त्वतिगण्डवज्रम् । योगं विहाय कुजमन्दपराक्रमध्या क्षितानिर, शमशुभञ्च व्रतं प्रशस्तम्" प्रमिता० । "क्षीणचन्द्रेऽस्तगे शुक्रे निरंशे चैव भास्करे । कर्त्तव्यं नोपनयनं नानध्याये गलग्रहे' । निरंशसूर्यमाह तत्रैव । 'राशेः प्रथमभागस्थो निरंशः सूर्य उच्यते"। तेन रघुनन्दनेन निरंशपदस्य संक्रान्तिपरत्वस्य कल्पनं चिन्त्यम् । वारनिर्णयमाह नारदः । 'आचार्य्यसौम्यकाव्यानां वाराः शस्ताः शशीनयोः । वारौ मध्यफलौ प्रोक्तौ वितरौ निन्दितौ व्रते' तत्राप्यस्तमितस्य बुधस्य वारो वर्जनीयः । "अस्तं गतस्य सौम्यस्य वारो वर्ज्यो द्विजन्मनामिति" नारदोक्तेः । अन्यत्र तु । "शुभो बुधोऽस्तमितः पापग्रहयुतो न चेति" । चन्द्रवारस्तु कृष्णे वर्ज्जनीयः । 'पापग्रहाणां वाराः स्युर्न शुभाश्चन्द्रवासरः । सितपक्षे प्रशस्तः स्यात् कृष्णे वारो विधोर्मध्यमीति" व्य०च० उक्तेः । सामगानां कुजवारेऽप्युपनयनमुक्तं श्रीपतिना । "शाखाधिपे बलिनि

केन्द्रगतेऽथवास्मिन् वारेऽस्य चोपनयनं कथितं द्विजानाम्। नीचस्थितेऽरिगृहगेऽथ पराजिते वा जीवे-भृगावुपनय स्मृतिकर्म्महीनः"। ज्योतिर्निबन्धे नारदः "सर्व्वेषां जीवशुक्रक्षमाराः मौञ्जीव्रते शुभाः। चन्द्रार्कौ मध्यमौ ज्ञेयौ सामवच्छजयो कुजः। शाखाधिपतिवारश्च शाखाधिपबलं तथा। शाखाधिपतिलग्नञ्च दुर्लभं त्रितयं व्रते"। मु० चि० "शाखेशवारतनुवीर्य्यमतीव शस्तं शाखेशसूर्य्यशशिजीवबले व्रतं सत्। जीवे भृगौ रिपुगृहे विजितेऽथ नीचे स्याद्वेदशास्त्रविधिना रहितोऽव्रतेन"। वशिष्ठः "शाखेशगुरुशुक्राणां मौढ्ये बाल्ये च वार्द्धके। नैवोपनयनं कार्य्यं वर्णेशे दुर्बले सति"। तेन भौमबुधयोरस्तादिषु सामगाथर्व्वणशाखिनोरुपनयनादि न भवतीति गम्यते। तत्र नीचाद्यवस्थितत्वे स्वगृहस्वोच्चांशस्थितत्वेन शाखेशादेरपवादमाह वशिष्ठः "यत्र नीचाद्यवस्थे स्वांशे वा स्वोच्चभागगे। शाखेशे वा गुरौ शुक्रे न नीचफलमश्नुते"। शाखेशवर्णेशास्तु। "विप्राधीशौ भार्गवेज्यौ कुजार्कौ राजन्यानामोषधीशो विशाञ्च। शूद्राणां ज्ञश्चान्त्यजानां शनिः स्याच्छाखेशाः स्युर्जीवशुक्रारसौम्याः" मु० चि० "ऋग्वेदोऽथ यजुर्व्वेदः सामवेदो-ह्यथर्व्वणः। वेदानामधिपा जीवशुक्रभौमबुधाः क्रमात्" गुरुः। "ऋग्वेदाधिपतिर्जीवो यजुर्व्वेदाधिपो भृगुः। सामवेदाधिपो भौमः शशिजोऽथर्व्ववेदराट्" दीपिका। लग्नभेदे फलमाह व्य० च० वशिष्ठः। "मेषे भवति वाक्कुण्ठो वित्तविद्यार्ज्जितो वृषे। युग्मे वेदार्थदर्शी च कुलीरे च षड़ङ्गवित्। शिल्पकर्म्मकरः सिंहे षष्ठे भवति पण्डितः। तुलायां विनयप्राप्तः कारुकश्चोऽथ वृश्चिके। सर्व्वत्र पूजितश्चापे शूद्रवृत्तिर्मृगे तथा। राजप्रेष्यान्वितः कुम्भे मीने वेदान्तपारगः"। लग्नकेन्द्रस्थरव्यादिग्रहफलमाह मु० चि० "राजसेवी वैश्यवृत्तिः शस्त्रवृत्तिश्च पाठकः। प्राज्ञोऽर्थवान् म्लेच्छसेवी केन्द्रे सूर्य्यादिखेचरे" व्य० च० गुरुः। "रवौ लग्नादिकेन्द्रस्थे दीप्तः स्फुरितसंज्ञकः। तत्रोपनीतस्य शिशोः कुलनाशो भवेत् तदा। कुजे लग्नादिकेन्द्रस्थे दीप्तः कुजितसंज्ञकः। तत्रोपनीतं वक्तारं हन्ति वर्षाच्च सप्तमे। शनौ लग्नादिकेन्द्रस्थे दीप्तो रुदितसंज्ञकः। करोति महतीं पीड़ां व्रतिनो वा गुरोस्तथा। राहौ लग्नादिकेन्द्रस्थे दीप्तो रक्ताक्षयो भवेत्। व्रतिनो जननीं हन्ति पापधा धनसञ्चयम्। केतौ लग्नादिकेन्द्रस्थे दीपश्च प्राप्तसंज्ञकः। समस्य व्रतिनो हन्ति-वित्तविद्याविनाशनम्"। लग्नषष्ठाष्टमान्त्यस्थः करोत्येव निशाकरः। व्रतिनो देहमथनं निधनं दुःखसञ्चयम्"। वशिष्ठः "त्रिकोणाग्निधनस्थाने ग्रहाश्चेद्घ्नन्ति सर्व्वदा। आचार्य्यमशुभा घ्नन्ति शिष्यं घ्नन्त्यशुभेतराः"। "केन्द्रत्रिकोणगे जीवे भानौ शुक्रेऽथवा व्यये। द्वितीये चेच्छुभो योगो द्विजानामौपनायने"। लग्नाद्यधिकस्थानभेदे ग्रहविशेषस्थितौ फलभेदमाह काश्यपः "षष्ठाष्टमं विना जीवः सर्व्वत्र शुभकृत् सदा। सर्व्वत्र शुभकृच्छुक्रः षष्ठसप्ताष्टमं विना। भास्करो लग्नगः कुर्य्याद्वटुं भूपतिसेवकम्। धनस्थः स्वर्णरहितं भ्रातृस्थः सुखिनं सदा। बन्धुगो दुःखिनं नित्यं सुतगो मतिवर्ज्जितम्। षष्ठगो रोगरहितं सप्तमे मार्गवर्ज्जितम्। अष्टमे हरिरहितं नवमे धर्म्महारिणम्। व्यापारगो भिषग्वृत्तिं दीर्घायुष्यं तथाऽऽयगः। रिपुफगो ह्यनियुक्तश्च फलमेतद्गुरावपि। सिते चन्द्रे लग्नसंस्थे शुभं स्यादसितेऽशुभम्। धनगे स्याद्धनप्राप्तिस्तृतीये सुखसंस्थितिः। चतुर्थे बुद्धिवृद्धिं च पञ्चमे सौख्यमुत्तमम्। षष्ठे तु व्याधिपीड़ा स्यात् सप्तमे सुखसन्ततिः। अष्टमे निर्धनः प्राणी नवमे धर्म्मसञ्चयः। दशमे स्यात् सदाचारो लाभे स्याद्धनसञ्चयः। दारिद्र्यं रिपुफगे विद्याच्चन्द्रे फलमुदाहृतम्। ज्ञातिनाशः सुखं कार्य्यहानिरहिर्म्मतिर्गदः। धर्म्मोद्यमतिर्हिर्ब्बिनाशो लग्नात् कुजे फलम्। बुद्धिर्वृद्धिर्वित्तनाशो लाभः पुत्रोन्नतिः सुखम्। आयुःक्षयो धर्म्मसौख्ये कोपलाभः क्षयः क्रमात्। सौम्ये लग्नादिराशीनां फलमेतदुदाहृतम्। निन्दां हानिं सुखं रोगं द्यूतहानिं जड़ं मतिम्। विपत्क्लेशं सुखं मृत्युमुदयात् कुरुते शनिः। चन्द्रे विशेषमाह तत्र। "पापात् सप्तमगश्चन्द्रं पापग्रहेण वा युतम्। व्रते विवर्ज्जयेद्यत्नाद्दोषमाशु मनीषिणः"। तत्फलं तत्रैव "पापग्रहात् सप्तमगं शशाङ्कं पापग्रहेणापि युतञ्च हित्वा। व्रतं प्रशस्तं मुनयो वदन्ति नोचेत्सदा मृत्युमुपैति शीघ्रम्"। गुरुस्तु। "पापग्रहेक्षिते लग्ने जीवितार्थी न कारयेत्। चन्द्रो वा क्रूरग्रहयुक्तो मृत्युं संप्रयच्छति"। वर्ज्ज्ययोगमाह मु० चि० "कवीज्यचन्द्रलग्नपा रिपौ मृतौ व्रतेऽधमाः। व्ययेऽब्जभार्गवौ तथा तनौ मृतौ सुते खलाः"। अन्यत्रापि। "लग्नाधिनाथसितजीवनिशाधिनाथान् षष्ठाष्टमे व्ययगतावपि चन्द्रशुक्रौ। लग्नाष्टपञ्चमगतानशुभग्रहांश्च यत्नात् त्यजेद्व्रतविधौ मुनयो वदन्ति"। सारसंग्रहे। "मेखलाबन्धकाले तु सर्व्वदा

पञ्चमहं त्वत् । शुभगृहं प्रशंसन्ति सदालोकितमेव वा' । योगान्तरमाह प्रमि० महेश्वरः । 'जीवे लग्नमधिष्ठिते भृगुसुते धर्मात्मजस्थे विधौ शुक्रांशे,ऽथवेद्विविसुत-स्थाने सतमोऽधम । तत्रैव स एव । "विधौ पितांशगे गुरौ तनौ त्रिकोणगे भृगौ । समस्तवेदवित् यथागमे-ऽतिनिर्मल' । व्रतशफलमाह ज्यो०प० गुरुः । गुरुस्तशुक्रांशगते च चन्द्रे विद्याधनायुःसुखवान् द्विजन्मा । शनैश्चरमन्दार्कमरांशकस्थे क्रिमो जडो मूर्खतरोऽतिनिःस्व' मु० चि० । 'क्रूरो जडो भवेत् पापः पटुः' षट्कर्म-वाहद्रु । यथाद्विभाक् तथा सर्वोरथाद्यगे तनौ क्रमात् । विद्यानिरत शुभराशिनवे पापांशगते हि दरिद्रनर । चन्द्रे स्वनवे बहुदुःखयुत कर्णादितिभे धनवान् सुखवे' । प्रमि० नारद 'श्रवणादितिनक्षत्रे कर्कांशस्थे निशाकरे । तदा व्रती वेदशास्त्रधनधान्यसमृद्धिमान्'' । एतच्च कृष्णपक्षविषयम् 'शुक्ले स्वांशे निशानाथे विमशान् वक्रतद्व्रतेत् । कृष्णे स्वांशगतश्चन्द्रो जातिभ्रंशं करोति हि'' वशिष्ठोक्तेः 'रविगुरुशुद्धौ व्रतोद्वाहौ'' इत्युक्तेश्च ते गुरु-शुद्धिरावश्यकी । तत्र गुरुशुद्धौ विशेषमाह'' मु० चि० वटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तग । श्रेष्ठो गुरुः ख-षट्त्र्याद्ये पूजयाऽन्यत्र निन्दित'' । ''स्वोच्चे स्वभे स्वमैत्रे वा स्वांशे वर्गोत्तमे गुरुः । रिष्फाष्टतुर्यगोऽपीष्टो नीचा-रिस्थः शुभोऽप्यसन्'' अत्र जीवस्य नीचस्थत्व इव अरि-गृहस्थत्वेऽपि वर्ज्यता प्रतीयते अतएव ''जन्मभाद्दशमे सिंहे नीचे वा यत्र भे गुरौ । मौञ्जीबन्धः शुभः प्रोक्तः चैत्रे मीनगते रवाविति' निर्णयसिन्धुधृतवचने मीन-गतरविकाल एव प्रतिप्रसवसार्थक्यम् । एतेन ''शाखाधिपे बलिनि' इत्यादिवाक्ये उपक्रमे शाखाधिपश्रवणात् गुरोररिगृहस्थत्वे तस्य ऋग्वेदाधिपतया तद्वेदिनामेवो-पनयननिषेधकल्पनमपि निरस्तम् 'शाखेशसूर्यशशिजीवबले इत्यादिप्रागुक्तवचने शाखेशात् पृथक्त्वेन जीवस्य ग्रहणे-नारिगृहस्थत्वेऽपि सर्ववेदिनां दोषस्यावश्यकत्वात् एतेन ''नीचस्थितेऽरिगृहगेऽथ पराजिते वा जीवे भृगौ' इत्यादिवचने क्रमान्वय वदन् परास्त तथात्वे प्रति-प्रसवानर्थक्यापत्ते । अन्यदाकरे दृश्यमिति दिक् । तत्सादृश्यापन्नार्थे ३कर्मभेदे तत्र चिकित्साविद्यायां उपनयनप्रकारो दर्शितः सुश्रुतेन यथा ।

अथात शिष्योपनयनीयमध्यायं व्याख्यास्यामः । ब्राह्मणक्षत्रियवैश्यानामन्यतममन्वयवयःशीलशौर्यशौचाचारविनयशक्तिबलमेधाधृतिस्मृतिमतिप्रतिपत्तियुक्तं तनुजिह्वौष्ठदन्ताग्रमृजुवक्त्राक्षिनासं प्रसन्नचित्तवाक्चेष्टं क्लेशसहञ्च भिषक् शिष्यमुपनयेत् । अतो विपरीतगुणं नोपनयेत् उपनयनीयन्तु ब्राह्मणं प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु प्रशस्तायां दिशि शुचौ समे देशे चतुर्हस्तं चतुरस्रं स्थण्डिलमुपलिप्य गोमयेन दर्भैः संस्तीर्य पुष्पैर्लाजभक्तै रत्नैश्च देवता पूजयित्वा विप्रान् भिषजश्च, तत्रोल्लिख्याभ्युक्ष्य च दक्षिणतो ब्राह्मणं स्थापयित्वाग्निमुपसमाधाय खदिरपलाशदेवदारुबिल्वानां समिद्भिश्चतुर्णां वा क्षीरवृक्षाणां न्यग्रोधोदुम्बराश्वत्थमधूकानां दधिमधुघृताक्ताभिः, दार्व्यां हौमिकेन विधिना स्रुवेणाज्याहुतीर्जुहुयात् । सप्रणवाभिर्महाव्याहृतिभिस्ततः प्रतिदैवतमृषींश्च स्वाहाकारं कुर्यात् शिष्यमपि कारयेत् । ब्राह्मणस्त्रयाणां वर्णानामुपनयनं कर्त्तुमर्हति राजन्यो द्वयस्य, वैश्यो वैश्यस्यैवेति । शूद्रमपि कुलगुणसम्पन्नं मन्त्रवर्जमनुपनीतमध्यापयेदित्येके । ततोऽग्निं त्रिः परिणीयाग्निसाक्षिकं शिष्यं ब्रूयात् । कामक्रोधलोभमोहमानाहङ्कारेर्ष्यापारुष्यपैशुन्यानृतालस्यायशस्यानि हित्वा नीचनखरोम्णा शुचिना कषायवाससा सत्यव्रतब्रह्मचर्याभिवादनतत्परेणाऽवश्यं भवितव्यं मदनुमतस्थानगमनशयनासनभोजनाध्ययनपरेण भूत्वा मत्प्रियहितेषु वर्त्तितव्यमतोऽन्यथा ते वर्त्तमानस्याधर्मो भवत्यफला च विद्या न च प्राकाश्यं प्राप्नोति । अहं वा त्वयि सम्यग्वर्त्तमाने यद्यन्यथादर्शी स्यामेनोभाग्भवेयमफलविद्यश्च । द्विजगुरुदरिद्रमित्रप्रव्रजितोपनतसाध्वनाथाभ्युपगतानां चात्मबान्धवानामिव स्वभेषजैः प्रतिकर्त्तव्यमेवं साधु भवति । व्याधशाकुनिकपतितपापकारिणां न च प्रतिकर्त्तव्यमेवं विद्या प्रकाशते मित्रयशोधर्मार्थकामांश्च प्राप्नोति'' एवं धनुर्विद्याग्रहणार्थमप्युपनयनं द्रष्टव्यम् । उपनयनाय हितम् छ । उपनयनीय उपनयनाबेदके शास्त्रे त्रि० तत्र साधु छ । उपनयनीय उपनयनकारके गुरौ पु० । उभयत्र उदा० उक्त सुश्रुतवाक्ये दर्शितम् ।

उपनहन न० उप+नह–बन्धने भावे ल्युट् । बन्धने करणे ल्युट् । बन्धनसाधने वस्त्रादौ । 'प्रेष्यति च सोमोपनहनमाहर' कात्या० ७,७,१ । सोम उपनह्यते बध्यते येन तत् सोमोपनहन वास' कर्क । ''आसन्द्यैनमवभृत कृत्वा मुञ्च सोमोपनहनेन' कात्या० २२,६,१२ । ''अथ सम्प्रेष्यति सोमोपनहनमाहर' यजमानो वा सोमोपनहनम् दत्ते'' शत०ब्रा० ३,२,३,४ ।

**उपनागरिका** स्त्री “माधुर्य्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते” इत्युक्तलक्षणे वृत्त्यनुप्रासवृत्तिभेदे। यथा “अपसारय घनसारं कुरु हारं दूर एव किं कमलैः। अलमालि! मृणालैरिति वदति दिवानिशं बाला”।

**उपनामुक** त्रि० उप+नम-वा० उकञ्। १सन्नमनशीले २फला-द्युपगमाय प्रसृते “यदिदिवि भिर्य्यजेतोपनामुक एनं यज्ञः स्यात् यमाग्नेऽत्युपनामुक एनम्” शत० ब्रा० १२, ४, ६, ७।

**उपनाय** पु० उपनाययति उप+नी-णिच् करणस्य कर्त्तृत्व-विवक्षायाम् कर्त्तरि अच्। उपनयसंस्कारे हेम०। तस्य आचार्य्यसमीपनयनसम्पादनकरणत्वात्तथात्वम्।

**उपनायक** पु० उपगतो नायकम् अत्या० स०। १नायकसदृशे उपपतौ “नायकस्य गुणोत्कर्षकथका उपनायकाः” सङ्गी-तोक्ते २नायकसहायभेदे उप+नी-ण्वुल्। ३उपस्थापके त्रि० ज्ञानलक्षणारूपसन्निकर्षे पु०। उपनयशब्दे दृश्यम्।

**उपनायन** न० उप+नी-स्वार्थे-णिच्-ल्युट् करणे कर्त्तृत्व-विवक्षायां कर्त्तरि नन्द्या० ल्यु वा। उपनयसंस्कारे। उपनयनशब्दे बहुप्रयोगो दृश्यः। ‘ब्राह्मणस्योपनायनम्’ मनुः। उपनायनं प्रयोजनमस्य ठक्। औपनायनिक उपनयनप्रयोजने विधाने त्रि०। “एष प्रोक्तो द्विजातीना-मौपनायनिको विधिः” मनुः औपनायनिक इत्यत्र कुल्लू० अनुशतिकादिकादित्वकल्पनमनादरमेव उपनायनशब्देनैव तदुपसिद्धेस्तथाकल्पनानौचित्यात्।

**उपनाह** पु० उप+नह-घञ्। १वीणायास्तन्त्रीबन्धनस्थाने, २व्रणाद्युपशमार्थे लेपनद्रव्ये च। “आदौ विम्लापनं कुर्य्यात् द्वितीयमवसेचनम्। तृतीयमुपनाहञ्च चतुर्थीं पाटनक्रि-याम्” “शोफयोरुपनाहन्तु कुर्य्यादामविदग्धयोः” “ति-लोपनाहं कुर्य्याच्च सर्वदा वातरोगिणाम्” “साल्वणमुप-नाहार्थे वातादीनामनुपशमनार्थे” इति च सुश्रुतः।

**उपनाहन** न० उप+नह-स्वार्थे णिच्-भावे ल्युट्। प्रले-पादिबन्धने “प्रशमयेत् स्नेहस्वेदोपनाहनैः”। “वेशवारैः सलवणैः स्निग्धैः स्यादुपनाहनम्” सुश्रुतः।

**उपनिक्षेप** पु० उप+नि-क्षिप-कर्म्मणि घञ्। १रूपसंख्या-प्रदर्शनेन रक्षणार्थं परस्य हस्ते निहिते द्रव्ये ‘आधिसीमो-पनिक्षेपजड़बालधनैर्विना। तथोपनिधिराजस्त्रीश्रोत्रि-याणां धनैरपि’ या० स्मृ०। “उपनिक्षेपो नाम रूपसंख्या-प्रदर्शनेन रक्षणार्थं निहितमिति’ मिता० भावे घञ्। २न्यासार्पणे।

**उपनिधातृ** त्रि० उप+नि+धा-तृच्। उपनिधत्ते नान्य-समीपे १स्वद्रव्यस्थापके २स्थापकमात्रे च। “पाणिभ्या-मुपनिधाता स्वस्य देशः” शत० ब्रा० १, १, २, १७। उप+नि+धा ण्वुल्। उपनिधायकोऽप्यत्र।

**उपनिधान** न० उप+नि+धा-भावे ल्युट्। उपनिधत्ते न १स्थापने ‘उपनिधानमुपनिधि’ मिता०। २समीपे स्थापने “कृतभिहितोभाव” इत्याद्युक्ते उपनिधीयमाने ३द्रव्ये च।

**उपनिधि** पु० उप+नि+धा-भावे कि। रूपसंख्ये अप्रदर्श्य परस्यान्तिके रक्षणार्थं स्वधनस्थापने ‘कृतभिहितोभावो द्रव्य-वत् प्रकाशत’ इत्युक्ते तथा निधीयमाने २द्रव्ये च। उप-निधिस्वरूपतत्कृत्यकार्य्यविशेषौ मिता० दर्शितौ यथा “वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते। द्रव्यन्तदौप-निधिकं प्रतिदेयं तथैव तत्” या० स्मृ०। ‘निक्षेप-द्रव्यस्याधारभूतं द्रव्यान्तरं वासनं करण्डादि तत्स्थं यद्द्रव्यं रूपसंख्यादिविशेषमनाख्यायाकथयित्वा मुद्रितम-न्यस्य हस्ते रक्षणार्थं विश्वासादर्प्यते तद्द्रव्यमौपनिधिक-मुच्यते यथाह नारदः। “असंख्यातमविज्ञातं समुद्रं यन्नि-धीयते। तज्जानीयादुपनिधिं निक्षेपं गणितं विदुरिति” प्रतिदेयन्तथैव तत् यस्मिन् स्थापितं तेनैव पूर्व्वमुद्रादि चिह्नितमर्पितं तथैव स्थापकाय प्रतिदेयं प्रत्यर्पणीयम्। प्रति-देयमित्यस्यापवादमाह मिता०। “न दाप्योऽपहृतन्तु राज-दैविकतस्करैः” या० स्मृ० “तमुपनिधिं राज्ञा दैवेनोदकादिना तस्करैर्वापहृतं नष्टं न दाप्योऽसौ राज्ञा तदुपनिहितस्वामि-न एव तद्द्रव्यं नष्टं यदि जिह्मकारितं न भवति यथाह नारदः। “गृहीतुः सह योऽर्थेन नष्टो नष्टः स दायिनः। दैवराजकृते तद्वन्न चेत्तज्जिह्मकारितमिति’ मिता०। अस्याप-वादमाह। ‘भ्रेषश्चेन्मार्गितेऽदत्ते दाप्यो दण्डञ्च तत्समम्” या० स्मृ०। “स्वामिना मार्गिते याचिते यदि न ददाति तदा तदुत्तरकालं यद्यपि राजादिभिर्भ्रेषो नाशः सञ्जातस्तथापि तद्द्रव्यं मूल्यकल्पनया धनिने ग्रहीता दाप्यो राज्ञे च त-त्समन्दण्डम्। भोक्तारम्प्रति दण्डमाह’ मिता०। “आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तं वापि सोदयम्” या०। “यः स्वेच्छया स्वामिनमननुज्ञाप्य उपनिहितं द्रव्यमाजीवत्युपभुङ्क्ते व्यव-हरति वा प्रयोगादिना लाभार्थं स्वोपभोगानुसारेण द-ण्ड्यस्तस्योपनिधिं सोदयमुपभोगे सवृद्धिकं व्यवहारे स-लाभं स्वामिने दाप्य। वृद्धिप्रमाणञ्च कात्यायनेनोक्तम्। “निक्षेपं वृद्धिशेषञ्च क्रयं विक्रयमेव च। याच्यमानो न चेद्दद्याद्वर्द्धते पञ्चकं शतमिति”। एतञ्च भक्षिते द्रष्टव्यम्। उपेक्षाऽज्ञाननष्टे तेनैव विशेषो दर्शितः “भक्षितं सोदयं

नैव सिद्धे पुन पितृत्यादित्याग ग्रहणं व्याख्यातम्। अयाज्ययाजनाज्ञातिकर्मदुष्टानां शूद्रमात्रादीनां याजनम्। पितृमातृसुतानामपतितानां त्यागो गृहस्थाश्रमे-प्रकाशनम्। तडागस्यारामस्य चोद्यानोपवनादेर्विक्रय। कन्याया दूषणमङ्गुल्यादिना योनिविदारणं न तु सम्भोगः तस्य "सखिभार्य्या कुमारीष्विति" गुरुतल्पसमत्वस्योक्तत्वात्। परिविन्दकयाजनं तस्य च कन्याप्रदानम्। कौटिल्यम् गुरोरन्यत्र गुरुविषयस्य तु कौटिल्यस्य सुरापानसमत्वमुक्तम्। पुनर्व्रतलोपग्रहणं शिष्टप्रतिपत्तेरपि ब्रह्मचारिकर्मलोपेक्षणात् आत्मार्थं ब्रह्मचारिकस्य भक्षयामितीयं रूपेषु मान्यार्थं न तु स्नातकव्रतग्रहार्थं तत्र "स्नातकव्रतलोपे च प्रायश्चित्तम् भोजनमिति" मनुना लघुप्रायश्चित्तस्य प्रतिपादितत्वात् आत्मार्थञ्च पाकलवणक्रियारम्भः "अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणादिति" तस्यैव प्रतिषिद्धत्वात्। क्रियामात्रविषयत्वे तु प्रतिषेधकल्पनागौरवं स्यात्। मद्यपायाः स्त्रियोजायाया अपि निषेवणमुपभोगः। स्वाध्यायत्यागो व्याख्यातः अग्नीनाञ्च श्रौतस्मार्त्तानां त्यागः सुतत्यागः सत्क्रियाकरणम्। अभ्यासाभ्यासिमित्रमातुलादीनां त्यागः सति विभवे अपरिरक्षणम्। पाकादिदृष्टप्रयोजनसिद्ध्यर्थमार्द्रद्रुमच्छेदनं स्यात् रक्षणीयपरिरक्षणार्थमपि। स्त्रिया हिंसया औषधेन च जीवनं वर्त्तनं स्त्रीहिंसौषधजीवनम्। तत्र स्त्रीजीवनं नाम भार्य्यामपण्य भावेन प्रयोज्य तल्लब्धोपजीवनम् स्त्रीधनोपजीवनं वा। हिंसया जनमारणादिव्यवेन जीवनम्। औषधजीवनं वशीकरणेन। हिंस्रयन्त्रस्य तिलेक्षुपीडनकरस्य प्रवर्त्तनम्। व्यसनानि मृगयादीन्यष्टादश। आत्मविक्रयोद्रव्यगृहणेन परदास्यकरणम्। शूद्रसेवनं हीनेषु मैत्रीकरणम्। अनूढसवर्णदारस्य केवलहीनवर्णदारोपयमनम्, सा धारणस्त्रीसम्भोगश्च। अनाश्रमे वासः अवस्थानमाश्रमित्वम्। परपाकरतित्वम्। असच्छास्त्रस्य चार्वाकादिग्रन्थस्याधिगमः। सर्व्वाकरेषु सुवर्णाद्युत्पत्तिस्थानेषु राजाज्ञयाधिकारित्वम्। भार्य्याया विक्रय। चशब्दात् अन्यान्यप्यभिचाराऽनतिपूर्व्वलशुनादिभक्षणादेर्ग्रहणम्। एषां गोवधादीनामतेषुकमुपपातकसञ्ज्ञा वेदितव्या" मिता०। उपपापमप्यत्र। "जलोदर यकृत्प्लीहाम्लजरोगव्रणानि च। श्वासजीर्ण ज्वरच्छर्दि भ्रममोहगलग्रहाः। रक्तार्बुदविसर्पाद्या उपपापोद्भवा गदाः" शाता०।

**उपपातिन्** त्रि० उप+पत–णिनि स्त्रियां ङीप्। १कृतोपपातके। २अतर्कितोपस्थिते च। "रन्ध्रोपपातिनोऽनर्था" हितो०

**उपपाद** पु० उप+पद–घञ्। १उपपत्तौ। उपगतः पादम् अत्या० समा०। २पादोपगते त्रि०। स्त्रियां ग रा० ङीप्।

**उपपादक** त्रि० उपपादयति उप+पद–णिच्–ण्वुल्। उपपत्तियुक्तकारके पद–ण्वुल्। उपपत्तियुक्ते १युक्तियुक्ते च।

**उपपादन** न० उप+पद+णिच् ल्युट्। १युक्त्या समर्थने २सम्यक्प्रतिपादने ३प्राप्तियुक्तकरणे च। "लोहपिण्डं यथा वह्निं प्रविश्य ह्यभितापयेत्। तथा त्वमपि जानीहि गर्भे जीवोपपादनम्" भा० आश्व० १८अ०।

**उपपादित** त्रि० उप+पद–णिच्–क्त। १युक्त्या समर्थिते, "उपपादितस्तुतत् पुरस्तात्" जग० २सम्यक् प्रतिपादिते च

**उपपादुक** त्रि० उपपद्यते उप+पद–उकञ्। दृष्टकारण निरपेक्षतया अदृष्टमात्रसहकृतेभ्योऽणुभ्यो जायमाने देवदेहे नारकिदेहे च "हेम० दिव्योपपादुका देवाः" अमरः।

**उपपाद्य** त्रि० उप+पद–णिच्–यत्। १युक्त्या समर्थनीये २प्रतिपाद्ये च। ल्यप्। ३उपपत्तियुक्तं कृत्वेत्यर्थे अव्य०।

**उपपुर** न० समीपस्थं पुरं प्रा० स०। पुरसमीपस्थे शाखानगरे। उपपुरे भवः अण् उत्तरपदवृद्धिः। औपपौर तद्भवे त्रि०।

**उपपुराण** न० उपगतमनुगतं पुराणम् अत्या० स०। व्यासोक्ताष्टादशपुराणसदृशेषु नानामुनिप्रणीतेषु नानाविधेषु पुराणेषु। तानि यथा। आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् २। तृतीयं वायवीयञ्च ३कुमारेणानुभाषितम्। चतुर्थं शिवधर्माख्यं ४ साक्षान्नन्दीशभाषितम्। दुर्वाससोक्तमाश्चर्यं ५नारदीयमतः परम् ६। नन्दिकेश्वरयुग्मञ्च७, तथैवोशनसेरितम्८, कापिलं वारुणं१० शाम्बं ११ कालिकाह्वयमेव च १२। माहेश्वरं १३ तथा पाद्मं १४ दैवं १५ सर्व्वार्थसाधकम्। पराशरोक्तमपरं १६ मारीचं १७ भास्कराह्वयम् १८। मत्स्य० कूर्मपु०। हेमाद्रौ तु एतद्वचनमन्यथा पठितम् यथा "अन्यान्युपपुराणानि मुनिभिः कथितानि तु। आद्यं सनत्कुमारोक्तं नारसिंहमतः परम्। तृतीयं नारदप्रोक्तं कुमारेण तु भाषितम्। चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम्। दुर्वाससोक्तमाश्चर्यं नारदोक्तमतःपरम्। कापिलं मानवं चैव तथैवोशनसेरितम्। ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च। माहेश्वरं तथा शाम्बं सौरं सर्वार्थसञ्चयम्। पराशरोक्तमपरं तथा भागवताह्वयम्। इदमष्टादशं प्रोक्तं पुराणं कौर्म्मसंज्ञितम्। चतुर्द्धा संस्थितं पुण्यं संहितानां प्रभेदतः"। अत्र दर्शितवचने भागवत-

भागवतमेव न देवीभागवतं देवीभागवतं तु निर्मूलमेवेति वदन्ति। द्वितीयपक्षैकदेशिनोऽपि विष्णुभागवतं बोपदेवकृतमिति वदन्ति। वस्तुतस्तूभयोरपि पुराणयोः पुराणमतभेदेन महापुराणत्वमुपपुराणत्वञ्च। ननु पुराणेष्वेकम्भागवतं प्रविष्टं न तूपपुराणेषु द्वितीयमस्तीति चेन्न कूर्मगरुडपाद्मादिषु द्वितीयस्य स्पष्टपरिगणनात्। तथा हि ब्राह्मे दानप्रस्तावे कूर्मपुराणे अष्टादश पुराणान्युक्त्वा "अन्यान्युपपुराणानि मुनिभिः कथितानि तु। आद्यं सनत्कुमारोक्तं नारसिंहमतः परमित्यादि" पराशरोक्तं प्रवरन्तथा भागवतद्वयमिति" तथा गारुडे तत्त्वरहस्ये द्वितीयांशेऽष्टमकाण्डे प्रथमाध्याये प्रथमतो महापुराणानां सात्त्विकादिभेदेन विभागमुक्त्वा उपपुराणानां सात्त्विकादिभेदेन विभागप्रदर्शनपरे ग्रन्थेऽप्युक्तं "पुराणम्भागवतन्त्वौशं नन्दीप्रोक्तं तथैव च। पाशुपत्यं रेणुकञ्च भैरवं च तथैव चेति"। तथा तत्पूर्व्वमपि "विष्णुधर्मोत्तरं चैव तत्र भागवतन्तथेति"। तत्त्वभागवतन्तथेति पाठेऽपि तत्त्वं शास्त्रमित्यर्थं तद्विशेषणेन चोत्तमत्वं सूचितं तथा पाद्मे यक्कमपरीक्षायां "ब्राह्मन्याद्यं वैष्णवञ्च मार्त्तण्डं नारदेरितमित्यादि"। तथैव गदितं राम वराहाद्यपि सन्तथा। वाराहं ब्रह्मवैवर्त्तं शकुनेषु प्रपठ्यते। शैवभागवतन्त्वौशमथ विष्णोत्तरमेव चेति"। तथा पाद्मे भागवतमाहात्म्ये एकोनविंशेऽध्याये उपपुराणेषु "शैवमादिपुराणञ्च देवीभागवतन्तथेति" तथा मधुसूदनसरस्वतीकृतसर्व्वशास्त्रार्थसंग्रहेऽप्युपपुराणमध्ये भागवतम्परिगणितं नागोजीभट्टादिभिश्च, धर्म्मशास्त्रग्रन्थेषु एवमन्यैरपि निबन्धकारैरिति। ननु देवीभागवतस्य "तत्र भागवतम्पुण्यं पञ्चमं वेदसम्मितम्" इति प्रथमाध्यायस्थवचनेनाष्टादशमहापुराणेषु पञ्चममिदं पुराणमिति स्पष्टं महापुराणत्वबोधनात्तस्य कथमन्यपुराणवचनमुपपुराणत्वं बोधयेदत एव क्वचित् इष्टपरमिति चेन्न नारदीयशिववायव्यादीनां पुराणानां स्वमुखेनान्यमुखेन वा महापुराणत्वेन प्राय नामानामन्यपुराणेषूपपुराणत्वस्य व्यवस्थापनात् पुराणमतभेदेनैकस्यापि पुराणस्य महापुराणत्वोपपुराणत्वसिद्ध्या तद्विरोधाभावात्। पुराणभेदेन मतभेदस्तु बहुशः प्रसिद्धः। वैष्णवपुराणेषु सात्त्विकत्वं शैवपुराणेषु तामसत्वं, वैष्णवपुराणमतेन, शैवपुराणेषु सात्त्विकत्वं वैष्णवपुराणेषु तामसत्वं 'दश शैवपुराणानि सात्त्विकानि विदुर्बुधाः। तामसानि च चत्वारि वैष्णवानि प्रचक्षते'। इति स्कान्दे शैवपुराणमतेनेत्येवम्प्रकारेणेति"।

अत उपभागवतमन्यदुक्त्वा हयग्रीववधोपेतमित्यनेन पुराणे प्रतिपाद्यदेवकर्त्तृकवध एवाभिप्रेत इति व्यवस्थाप्य तत्रैवोक्तं यथा "देवीभागवतातिरिक्तसर्वपुराणेषु देवीकृतो हयग्रीवासुरवधो न क्वचिदप्यस्ति चन्द्रहासस्यैव तस्य सत्वात् केवलं देवीभागवत एव देवीकृतः सोऽस्ति तदुपक्रमेण तु देवीभागवते स्पष्टमतिदर्शितेति युक्तमेव, अनन्तरं च तत्रैव पुराणदानप्रस्तावे "ददाति स्वर्णसिंहाय यस्तु भागवतं द्विज। सर्वपापविनिर्मुक्तः सर्वव्याधिविवर्जितः। अं...गत प्राप्नोति वैष्णवं पदमिति' पठितम्। अत्र च स्वमत भागवतमेव पक्षीकृतम्। किञ्चेदं वचनं देवीभागवतपक्ष एव स्वरसतः सङ्गच्छते प्रथमश्लोके, एकादशद्वादशस्कन्धयोश्च सविस्तरं गायत्रीविधानतन्मन्त्रनामादि कथनात् सर्व्वस्य च गायत्रीदेवतात्वात्। श्रीभागवतपक्षे तु वैकुण्ठं गच्छेदित्येव वदेदिति किञ्च "यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः" इत्यादिमात्स्यवचनमपि देवीभागवतस्यैव महापुराणत्वं बोधयति यतो वेदे "त्रिपदा गायत्रीति" गायत्रीलक्षणं श्रूयते तेन च त्रिपाच्छन्दोधिकृत्य यत्र धर्मविस्तारो वर्ण्यते तद्भागवतमिति तदर्थः। त्रिपाच्छन्दश्च देवीभागवते प्रथमश्लोके "सर्वचैतन्यरूपान्तामाद्यां विद्यां च धीमहि। बुद्धिं या नः प्रचोदयादिति" श्रूयते। न च विष्णुभागवते तच्छन्दोऽस्ति मुख्यार्थसम्भवे गायत्रीपदस्य लक्षणया धीमहीत्यर्थकरणेन विष्णुभागवतपरत्वकल्पनमस्य वचनस्य तु साहसमेव। क्वचित् पुराणेषु यदि तादृशान्येव विष्णुभागवतपराणि वचनानि सन्ति तत्र गत्यन्तराभावादस्तु लक्षणा उदासीने मात्स्यवाक्ये तु मुख्यविषयत्वसम्भवे साऽनुचिता। यत्तु गायत्र्यर्थश्च विष्णुध्यानं न तु शिवशक्तिसूर्य्यादिध्यानमित्युक्तं तत्तु नास्तिकत्वमूलकमेव शैवादीनां "भर्गो देवस्य" इति श्रुतौ भगवत्पदादिभिर्व्वैतन्त्रेषु पुराणादिषु च शिवसूर्य्यशक्त्यादिरूपार्थस्योक्तत्वाच्च। किञ्च "हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा। गायत्र्या च समारम्भस्तद्वै भागवतं विदुरिति' पुराणान्तरवाक्यमपि देवीभागवतस्यैव महापुराणत्वबोधकं तथा हि हयग्रीवनामासुरो देवीभागवते प्रथमस्कन्धे निवद्धस्तेनोपासिता ब्रह्मप्रतिपादिका विद्या स्त्रीदैवत्यो मन्त्रो वा विद्या यत्र वर्ण्यते तद्भागवतमित्यर्थः। स दैत्यस्तदुपासिता विद्या चेत्युभयमपि तत्रैव प्रथमस्कन्धे दर्शितम् "जपन्नेकाक्षरं मन्त्रं मायाबीजात्मकं मकेत्यादिना"। ननु विष्णुभागवते पञ्चमस्कन्धेऽपि हय

श्रीममन्त्रस्य सप्ताद्दिदं वचनमुभयभागवतसाधारणमिति चेन्न नारदीये शारदातिलकादिभिश्चेषु च "मन्त्राः पुंदेवता ज्ञेया विद्याः स्त्रीदेवता स्मृताः" इत्यादिवचनैः स्त्रीदैवत्यमन्त्रेष्वेव विद्यापदप्रयोगो न पुंदैवत्यमन्त्रेष्विति प्रतिपादनात् "क्वचित् पुंदैवत्यमन्त्रे तथा प्रयोगस्तु गौणः न च गौणार्थमादाय तद्वचनस्य विष्णुभागवतपरत्वं कल्पयितुमुचितं लक्षणाद्यपदोषापत्तेः तस्मात् तद्वचनमुभयसाधारणमिति देवीभागवतस्यैव महापुराणत्वं बोधयति किञ्च "सारस्वतस्य कल्पस्येति" मात्स्यवचनादपि देवीभागवतमेव महापुराणं यत्र हेतुः प्रकरणशुद्धिः प्रत्यय च सु.। "पुराणसंख्यामाचक्ष्व सूत! विस्तरतः क्रमादिति" मुनिप्रश्नोत्तरं "ब्रह्मणाभिहितं पूर्वं यावन्मात्रं", पद्मकल्पवृत्तान्ताश्रयं पाद्मं, वराहकल्पवृत्तान्ताश्रयं वैष्णवं श्वेतकल्पवृत्तान्ताश्रयं वायवीयमित्येवं तत्तत्कल्पवृत्तान्ताश्रयाणि पुराणान्युक्त्वा तदुत्तरं "यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः इत्युपक्रम्य "सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः। तद्वृत्तान्तोद्भवं लोके तद्भागवतमिष्यते" इत्युक्त्वा ततोऽन्यान्यपि महापुराणान्येव तत्तत्कल्पवृत्तान्ताश्रयाणि दर्शितानि पश्चादुपपुराणकथनार्थम् 'उपभेदान् प्रवक्ष्यामीति' प्रतिज्ञाय पद्मपुराणादार्षमिह निर्गतमेव नन्दिपाम्बादित्यपञ्चकान्युक्त्वा अन्योपपुराणान्यपि महापुराणेभ्य एव निर्गतानीति "अष्टादशभ्यस्तु पृथक्पुराणं यत् प्रदृश्यते। विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतमिति वचनेन" सूत प्रतिपन्नवान्। ततः "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च" इत्यादिना पुराणलक्षणमुक्त्वा "सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः। राजसेषु च कल्पेषु माहात्म्यं ब्रह्मणो विदुः। तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च। सङ्कीर्णेषु सरस्वत्याः पितॄणाञ्च निगद्यते" इति वचनेन पुराणप्रतिपाद्यहरिब्रह्माग्निहरसरस्वतीपितॄणां माहात्म्यसम्बन्धात् कल्पानां सात्त्विकराजसतामससङ्कीर्णत्वभेदेन चातुर्विध्यमुक्तमिति तत्र कल्पानां तत्तद्देवतासम्बन्धो नाम तु तत्तत्कल्पाश्रिततत्तत्पुराणप्रतिपाद्यमुख्यदेवताप्राधान्येनैव बोध्यम् अन्यप्रकारस्य क्वचिदपि पुराणेषु अनुपलम्भात्। तस्मिन्नेव सति "सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामरा इत्यादि वचनं भागवतस्य लक्षणप्रतिपादकं प्रतिपादितम्। तदर्थस्तु "यथा गारुडकल्प इत्यत्र गरुडस्यायं गारुडः यथा च वाराहकल्प इत्यत्र वराहस्यायं वाराह इति व्युत्पत्तिः प्रसिद्धा

तद्वदेव "सरस्वत्याख्यया कल्पो गौरीकल्पस्तथैव चेति" कल्पनामसु सरस्वतीकल्पस्यैव कथितत्वात्, मत्स्यपुराणे उपान्त्याध्याये "सङ्कीर्णेषु सरस्वत्याः पितॄणां कल्प उच्यते" वचनेन तथैवोक्तत्वाच्च ब्रह्मविष्णुरुद्राणां कल्पवद्गौरीलक्ष्म्योः कल्पवच्च सरस्वतीकल्पस्यार्थतः प्राप्तत्वाच्च तादृशसारस्वतकल्पसम्बन्धिनो ये देवमनुष्यास्तद्वृत्तान्तस्योद्भव उत्पत्तिर्यस्मात् तत्पुराणं भागवतं विदुः तद्वृत्तान्तप्रदर्शकं यत्पुराणं तद्भागवतसंज्ञकमिति यावत्। अत्र च तत्तद्देवतानामाविर्भावाश्रया ये ये कल्पास्ते तत्तन्नाम्ना व्यवह्रियन्ते अतश्च तत्तन्नामककल्पाश्रितेषु पुराणेषु तत्तद्देवताया एव मुख्यत्वेनोत्पत्तिप्रदर्शकवाक्यैर्लक्ष्मीकल्पादिकल्पाश्रितकूर्मपुराणादिषु सर्वत्र प्रसिद्धमेव तथा च मुख्यत्वेन सरस्वत्या आविर्भावप्रतिपादकं पुराणं यत्तद्भागवतमित्यतिरहस्यार्थः। तत्र सारस्वतकल्प इति पदेनैव कल्पस्य सरस्वतीसम्बन्धे बोधिते तस्य सङ्कीर्णत्वं "सङ्कीर्णेषु सरस्वत्याः" इति वचनेन ईश्वरप्रेरणां विनापि स्वतागतमेव। अस्मिंश्च वचने भागवतपदेन विष्णुभागवतस्य ग्रहणं यस्यापूर्वोपपन्नमेव तत्र मुख्यत्वेन सरस्वत्याविर्भावस्याभावात् विष्णुभागवते द्वितीयस्कन्धे "पाद्मं कल्पमथो शृणु" इति वचनेन स्वमुखेनैव तस्य पाद्मकल्पकथाश्रयत्वस्योक्तत्वात् तद्विरोधाच्च। न च पाद्मकल्प एव सारस्वत सरस्वान् समुद्रस्तस्माज्जातं कमलं सारस्वतं तस्य कल्प इति व्युत्पत्त्येति वाच्यं "पद्मकल्पस्य वृत्तान्तं तत्र यथादुदाहृतम्। तस्मात् पाद्मं समाख्यातं इति" पूर्वोदाहृतमत्स्यपुराणवचनेन "एतदेव यदा पद्ममभूद्धैरण्मयं जगत्। तद्वृत्तान्ताश्रयं तद्वत् पाद्ममित्युच्यते बुधैः। पाद्मं तत्पञ्चपञ्चाशत्सहस्राणीह कथ्यते" इति मत्स्यपुराणवचनेन "सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः" इति वचनेन च पाद्मकल्पसारस्वतकल्पयोः पृथक्कथनात् किञ्च सारस्वतकल्पपाद्मकल्पयोरैक्ये पद्मकल्पप्रतिपादकं पुराणद्वयं पाद्मं भागवतं चेत्येव वदेत् किञ्च पद्मकल्पस्य वृत्तान्तविषयत्व "अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः" इति न्यायेन पूर्वं बुद्ध्याद्य प्रसिद्ध पद्मपदं विहाय प्रसिद्धसारस्वतपदं पाद्मपदस्य वाचकं कृत्वा सारस्वतपदघटितकल्पने प्रयोजनाभाव। किञ्च "सरस्वत्याख्यया कल्प इत्यादि" पूर्वोक्तस्य सारस्वतपदनिरूप्यार्थकस्य वचनसमूहस्य विरोधश्च। न च पाद्मकल्पसारस्वतकल्पयोः पृथक्त्वे, त्रिंशत्कल्पेषु मत्स्यपुराणान्तिमाध्याये कीर्त्त-

तेषु सारस्वतपदेन पाद्मस्य ग्रहणं न स्यादिति वाच्यम् प्रभासखण्डे त्रिंशत्कल्पेषु विष्णुकल्पार्चिष्कल्पबृहत्कल्पानां ग्रहणेऽपि तेषां कल्पानां यथा मात्स्याग्निमाध्याये न ग्रहणं तथा पाद्मस्यापि न ग्रहणमित्यस्य तुल्यत्वात् । यदि तेषां पर्य्यायत्वेन कुत्रचिदन्तर्भावः क्रियते तर्ह्यस्यापि कुत्रचिदन्तर्भावोऽस्तु अतएव विष्णुभागवतस्य प्रबन्धटीकाकारेण "पितृकल्पे एव पूर्वार्धान्ते पद्मस्योद्भवात् पितृकल्पपदेन पाद्मकल्पो वेदितव्य" इत्युक्तम् पुराणकथनप्रस्तावे सारस्वतकल्पपाद्मकल्पयोः पृथक्करणेन सारस्वतपदेन पाद्मस्य सर्वथा न ग्रहणम् । वस्तुतस्तु त्रिंशत्कल्पा ब्रह्मणस्त्रिंशत्तिथ्यात्मका त्रिंशत्तिथिषु प्रतिपदादिषूत्पद्यन्ते "भव' भुवः स्तव' भूर्भुव' इत्यादयस्त्रिंशत्कल्पा "पाद्मादयश्च पुराणोक्ता दिनकल्पा ब्रह्मणः प्रतिदिनसेवोत्पद्यन्ते" इति दिनकल्पतिथिकल्पानां सुतरां भेदात् तिथिकल्पेषु दिनकल्पानां पाद्मादीनां न ग्रहणमिति सिद्धान्तः । यत्तु विष्णुभागवतस्यारम्भतः पाद्मकल्पकथान्वयत्वेऽपि कृष्णजन्मखण्डस्यैव सारस्वतकल्पभवत्वेन तस्य च दशमस्कन्धे सत्त्वात् "सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामरा इति" वचनस्य विष्णुभागवतं विषयोऽस्त्वित्याशङ्क्यते तत् कृष्णजन्मखण्डस्य सारस्वतकल्पभवत्वप्रतिपादकानां वचनानां निर्मूलत्वात् समूलत्वेऽपि यस्मिन् पुराणे यस्य कल्पस्य प्रथमतः प्रतिपादनं तत्कल्पप्रतिपादकमेव तत्पुराणमिति नियमः । सर्वपुराणे तथा दृष्टत्वात् तथा च कृष्णजन्मखण्डस्य दशमस्कन्धे विद्यमानत्वेऽपि प्रथमतस्तत्कथाया अभावात् पाद्मकल्पकथायाः प्रथमतो विद्यमानत्वस्य स्वेनैवोक्तत्वाच्च न "सारस्वतस्य कल्पस्येति" वचनस्य विष्णुभागवतं विषयः । किञ्च कृष्णजन्मखण्डस्य यथा दशमस्कन्धे कथनं तथा सर्वपुराणेषु तत्कथनं वर्त्तत एवेति सर्वपुराणानां तद्वचनविषयत्वं स्यात्तथा च सर्वपुराणानि भागवतपदवाच्यानि स्युस्तस्मात् सारस्वतकल्पस्य यत्र प्रथमतः प्रतिपादनं स एव तद्वचनस्य विषयो वक्तव्यस्तादृशं च देवीभागवतमेवास्तीति देवीभागवतमेव तद्विषयो वक्तव्य इति । किञ्च शिवपुराणे उमासंहितायाम् "ब्रह्मणा संस्तुता सेयं मधुकैटभमाथने । महाविद्या जगद्धात्री सर्वविद्याधिदेवता । द्वादश्यां फाल्गुनस्यैव शुक्लायां समभून्नृपेति" वचनात् फाल्गुनशुक्लद्वादश्यां देव्या उद्भवस्तद्दिन एव च सारस्वतकल्पोद्भवस्तदुक्तं हेमाद्रौ" कल्पादिप्रकरणे नागरखण्डे "सारस्वतस्तु द्वादश्यां शुक्लायां फाल्गुनस्य चेति" तथा च सरस्वत्याः कल्प इत्यर्थकस्य "सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामरा" इति वचनस्य सर्वथा देवीभागवतमेव विषयो न विष्णुभागवतमिति बोध्यं किञ्च तस्य ग्रहणे तस्य हरिमाहात्म्यप्रतिपादकत्वात् तदाश्रितकल्पस्य सात्त्विकत्वमेव यास्यति 'सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेरिति' वचनात् । ततश्च "संकीर्णेषु सरस्वत्या" इति वचनेन सारस्वतकल्प इति नाम्ना च परमहंसनामप्यैव कर्त्तव्या स्यात् अतो विष्णुभागवतं विहाय देवीभागवतमेवास्य वचनस्य विषयोऽभिन्नतापि वक्तव्यत्वात् सारस्वतस्य कल्पस्येति वचनात् देवीभागवतमेव महापुराणम् अस्ति चात्र सरस्वत्याविर्भावप्रतिपादकं वचनं तदुक्तं देवीभागवते प्रथमस्कन्धे "तस्यास्तु सात्त्विकी शक्ती राजसी तामसी तथा । महालक्ष्मीः सरस्वती महाकालीति ताः स्त्रियः । तासां तिसृणां शक्तीनां देहाङ्गीकारलक्षण । सृष्ट्यर्थञ्च समाख्यातं सर्गं शास्त्रविशारदैरिति" "अष्टादश शुकप्रोक्तं नित्यं भागवतं शृणु" इति वचनमपि शुकाय प्रोक्तमिति व्युत्पत्त्या देवीभागवतपरमपि सङ्गच्छते । भवति हि देवीभागवतं शुकायैव प्रोक्तं व्यासेनेति । किञ्च अष्टादशपुराणानि कृत्वा सत्यवतीसुत । भारताख्यानमखिलं चक्रे तदुपबृंहितमिति" मात्स्यवचनमपि देवीभागवतस्यैव महापुराणत्वं बोधयति अष्टादशपुराणोत्तरं भारतस्य जातत्वात् भारतोत्तरं च विष्णुभागवतस्य जातत्वात् भारतोत्तरकालं निर्विण्णो व्यासश्चकारेति विष्णुभागवते १स्क० एवोक्तत्वात् । ननु "वेदशाखाः पुराणानि वेदान्तभारतं तथा । कृत्वा समोहसम्मूढोऽभवं राजन्नमस्यपीति" देवीभागवते तृतीयस्कन्धे एवोक्तत्वात् तत्रापि च विरोधस्तदवस्थ एवेति चेन्न उच्यते तदानीं पन्योमैव जातं किन्तु जनमेजयं प्रति एवं वक्ष्यतीति ज्ञानचक्षुषा ज्ञात्वा भारतात् पूर्वमेव देवीभागवतं कृतमित्यर्थस्य कल्पनात् । त्वन्मते तु तथा कल्पयितुं न शक्यते चतुःश्लोक्या भागवतोपदेशस्य जायमानत्वात् उपदेशात् पूर्वं तज्ज्ञानाभावस्यावश्य कल्पनीयत्वात् यदि तत्रापि पूर्वं व्यासस्य ज्ञानमस्तीति स्वीक्रियते तदा वचसमोघ, सर्वोऽप्यर्थवादः स्यात् ततश्च पञ्चसारस्वतप्रपञ्च इत्यास्तां तावत् । वस्तुतस्तु वेदशाखा पुराणानीति पाठोऽसङ्गत इति वक्ष्यते तृतीयस्कन्धे तदा न कोऽपि विरोध । यत्तु पाद्मे भागवतमाहात्म्ये श्रीमद्भागवतकथाश्रवणाय समागतानां परिगणनप्रसङ्गे "वेदान्तानि च वेदाश्च मन्त्रास्तन्त्राणि संहिता । दश सप्त पुराणानि षट् शास्त्राणि समाय

यु”इत्युक्तं तत्र व्यासकृतपुराणानामष्टादशत्वादष्टादशेति वक्तव्ये सप्तदशत्वोक्तिः, श्रीमद्भागवतस्याष्टादशत्वक्रमयति न स्याष्टादशानन्तर्गतत्वे देवीभागवतस्याष्टादशान्तर्गतत्वे वा चतुर्दशानां श्रोतुमागतानां पुराणानामष्टादशत्वानुक्तेर्निर्बीजत्वप्रसङ्गात् एवं पाद्मे“दश सप्त पुराणानि कृत्वा सत्यवतीसुत । नाप्तवान्मनसा तोषं भारतेनापि भामिनि” । चकार संहितामेतां श्रीमद्भागवतीं परामिति”सप्तदशत्वोक्तिः श्रीमद्भागवतस्यैव एतां संहितामिति निर्दिष्टस्याष्टादशत्वक्रमयति देवीभागवतस्याष्टादशत्वेऽष्टादशपुराणानीत्यनुक्तेर्निर्बीजत्वप्रसङ्गादित्याद्युक्तवत् तेषामेव वचनैर्विष्णुभागवतस्याष्टादशपुराणान्तर्गतत्वं न सिध्यति किन्तु देवीभागवतस्यैवेति वार्धुषिकत्वं कुर्वाणो मूलमेव विनाशितवानिति न्याय आगतः । तथा हि भारते व्यासत्वाच्छ्रुत्वा तत्संहितां कौष्टुकिर्मार्कण्डेयं प्रत्यागत्य सन्देहं पृष्टवान् तस्मै मार्कण्डेयो मार्कण्डेयपुराणमुक्तवान् तदुक्तं मार्कण्डेयपुराणे“तदिदं भारताख्यानं बह्वर्थं श्रुतिविस्तरम् । तत्त्वतो ज्ञातुकामोऽहं भगवन्तमुपस्थित”” इति तथा च भारतोत्तरं मार्कण्डेयपुराणमभवत् तथैव त्वदुक्तरीत्यैव विष्णुभागवतमपि तथा च भारतात् पूर्वं षोडश पुराणान्येव सिद्धानि तथा च पूर्वोक्तवचनमध्ये षोडशेत्येव वक्तव्ये सप्तदशेत्युक्तत्वात् देवीभागवतमेव महापुराणमन्यथा सप्तदशत्वप्राप्तिर्न स्यात् तस्मात् तद्वचनप्रामाण्याद्देवीभागवतमेव महापुराणमिति सिध्यति न तु विष्णुभागवतं, भारतात् पूर्वं सप्तदश मदीयभागवतसंहितानि मार्कण्डेयमष्टादशमुभयमतसिद्धमेव विष्णुभागवतस्य भारतोत्तरजायमानत्वेन तन्मध्ये तस्यावस्थानस्यकाभावादित्येव ख्यापनेनापि दोषाभावादिति सुधियो विभावयन्तु । यत्तु पाद्मे “वैष्णवं नारदीयञ्च तथा भागवतं शुभम् । गारुडञ्च तथा पाद्मं वाराहं शुभदर्शने ॥ सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै” इत्युक्त्वा भागवतस्य सात्त्विकत्वमुक्तं सात्त्विकेषु पुराणेषु इति कौर्मोक्त्या च सात्त्विकपुराणानां विष्णुपरत्वमुक्तम् अतो विष्णुपरमेव भागवतमष्टादशपुराणान्तर्गतं न तु देवीभागवतमिति अपि च स्कान्दे प्रभासखण्डे “चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः । अष्टादशपुराणेषु शेषेषु भगवान् भवः” इत्युक्तं स्कान्दे शौरसंहितायां च ‘कथ्यते दशभिर्विप्रा । पुराणैः परमेश्वरः । चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा प्रकीर्त्तितः । एकेनाग्निस्तथैकेन भगवान् चण्डभास्करः ” इत्युक्तमतोऽपि विष्णुभागवतमष्टादशान्तर्गतमस्त्वन्यदित्याद्युक्तवत् त्वन्मते मात्स्योक्तसात्त्विकराजसतामससंकीर्णपुराणेषु मध्ये तथाच व्यवस्था पूर्ववचनैस्त्वयोक्ता संकीर्णपुराणानान्तु नोक्ता तेषाञ्चेषु पुराणेष्वन्तर्भाव इति वद करिष्यामि कुत्रचिदिति चेत् मन्मतेऽपि श्रीभगवत्या विष्णुशक्तित्वाभिमानेन“विष्णुमन्त्राधिष्ठात्री देवता वेदमाता दुर्गा दुर्बोधध्वान्तभानुं गुरुं चेति श्रीमन्त्रदीपिकोक्तप्रकारेण विष्णुमन्त्राणां दुर्गाया अधिष्ठातृत्वेन तयोरैक्याद्वा तत्प्रतिपादकभागवतस्य वैष्णवेष्वेवान्तर्भावात् अतएव “हरिर्द्वाभ्यां रविर्द्वाभ्यां द्वाभ्यां चण्डीविनायकौ । द्वाभ्यां ब्रह्मा समाख्यातः शेषेषु भगवान् शिव इति वचनं सङ्गच्छते” वस्तुतस्तु द्वयोरपि भागवतयोरस्मन्मते प्रमाणत्वात् विष्णुभागवतपक्षपातिनां वचनानामस्माकं विरोधाभावेन तत्स्थापने प्रयोजनाभावएव । तथा च नारदीयादिपुराणमते श्रीविष्णुभागवतं महापुराणन्तद्वचनानि प्रक्षिप्तान्येवेति न छिन्नितानि देवीभागवतं तु तन्मते उपपुराणम् । शैवमात्स्यपुराणादिमते तु देवीभागवतं महापुराणं विष्णुभागवतमर्थादुपपुराणमिति सिद्धम्” ।

पद्मपा० ८६ अ० महापुराणप्रतिपाद्यविषयवर्णने“श्रीमह्योवाच, नारीचे । शृणु वक्ष्यामि वेदव्यासेन यत् कृतम् । श्रीमद्भागवतं नाम पुराणं ब्रह्मसम्मितम् । तदष्टादशसाहस्रं कीर्त्तितं पापनाशनम् । सुरपादपरूपोऽयं स्कन्धैर्द्वादशभिर्युतः । भगवानेव विप्रेन्द्र । विश्वरूपी समीरितः । तत्र तु प्रथमे स्कन्धे सूतर्षीणां समागमः । व्यासस्य चरितं पुण्यं पाण्डवानां तथैव च । पारीक्षितमुपाख्यानमितीदं समुदाहृतम् । परीक्षिच्छुकसंवादे सृतिद्वयनिरूपणम् । ब्रह्मनारदसंवादेऽवतारचरितामृतम् । पुराणलक्षणञ्चैव सृष्टिकारणसम्भवः । द्वितीयोऽयं समुदितः स्कन्धो व्यासेन धीमता । चरितं विदुरस्याथ मैत्रेयेणास्य सङ्गमः । सृष्टिप्रकरणं पश्चाद्ब्रह्मणः परमात्मनः । कापिलं साङ्ख्यमप्यत्र तृतीयोऽयमुदाहृतः । सत्याश्चरितमादौ तु ध्रुवस्य चरितं ततः । पृथोः पुण्यसमाख्यानं ततः प्राचीनबर्हिषः । इत्येष तुर्य्यो गदितो विसर्गे स्कन्ध उत्तमः । प्रियव्रतस्य चरितं तद्वंश्यानाञ्च पुण्यदम् । ब्रह्माण्डान्तर्गतानाञ्च लोकानां वर्णनन्ततः । नरकस्थितिरित्येष संस्थाने पञ्चमो मतः । अजामिलस्य चरितं दक्षसृष्टिनिरूपणम् । वृत्राख्यानं ततः पश्चान्मरुतां जन्म पुण्यदम् । षष्ठोऽयमुदितः स्कन्धो व्यासेन परिपोषणे । प्रह्लादचरितं पुण्य

क्रीणाति रसो वा आप स रसमेवैतत् क्रीणात्यथ यश्चिरयाव भवति स शुक्रमेवैतत् क्रीणात्यथ यदुष्णो भवति सत्व-पसमेतैतत् क्रीणात्यथ यद्जा भवति स तपसमेवैतत् क्रीणात्यथ यद्धेनुर्भवति सा चिरमेवैतत् क्रीणात्यथ यन्मिथुनौ भवत स मिथुनमेवैतत् क्रीणाति त वै दशभि रेव क्रीणीयान्नादशभिर्दशाक्षरा वै विराड्वैराज सोम-स्तस्माद्दशभिरेव क्रीणीयान्नादशभि"।

उपबर्ह पु० उपबर्ह्यते आस्तीर्यते उप+बर्ह-स्तृतौ कर्मणि घञ्। (बालिश) १उपधाने बर्ह-हिंसायाम् भावे घञ्। २उपपीडने च।

उपबर्हण न० उपबर्ह्यतेकर्मणि ल्युट्। १उपधाने "पुराणा यशः पुराणवाहन्दी सोपबर्हणमान्वादिष्टा दक्षिणा' शत० ब्रा० १३,८४,१०,बर्ह हिंसायां भावे ल्युट्।२उपपीडने च

उपबहु त्रि० उपगता बहवो यत्र सङ्ख्यात्वेऽपि पर्य्युदासात् न डच्। बहुसङ्ख्यासमीपवर्त्तिनि।

उपबाधा स्त्री उप+बाध-अ। सपीडने।

उपबाहु पु०उपगतो बाहुम् अत्या०। १बाहोः समीपवर्त्ति-न्यङ्गभेदे तत इदमर्थे बाह्वादि० इञ्। औपबाहवि तत्सम्बन्धिनि त्रि०। सामीप्यादौ अव्ययी०। २बाहु-सामीप्यादौ अव्य०।

उपब्द पु०उपगत शब्द' प्रा०स० पृषो०। 'सोमाभिषवशब्दे "ग्रावाणो घ्नन्तु रक्षस उपब्दे" ऋ०७,१०४,१७, "उप-ब्दे अभिषवशब्दे" भा०

उपब्दि पु०उप+शब्द-इन् पृषो०। श्रोतमर्थे शब्दे "न योरुपब्दिरश्व्यः" ऋ०१,७४,७, "उपब्दिः शब्दाह्वः" भा० "मरुतां पृच्छन् आवतामुपब्दि" ऋ०१,१६९,७, ततोऽस्त्यर्थे मतुप्। उपब्दिमत् श्रोतु योग्ये शब्दयुक्ते "सशब्दमबिद्मतु" तैत्ति० "उषणैव उपब्दिमान् तत-स्य रूपम्' शत०ब्रा०। [सम्यग् भञ्जने २इतीभावे च।

उपभङ्ग पु० उप+भन्ज घञ् कुत्वम्। १युद्धादित पलायने

उपभुक्त त्रि० उप+भुज-क्त। कृतोपभोगे वस्तुनि

उपभुक्ति स्त्री उप+भुज क्तिन्। उपभोगे

उपभूषण न० उपमित भूषणेन अत्या०स०। घण्टाचामरादौ "घण्टाचामरकुम्भादिपात्रोपकरणादिकम्। तद्भूषणान्तरे-ऽस्याद्युपभूषणात्तदुपभूषणम्" पु०। उपचारशब्दे१२०१९०दृश्यम्।

उपभृत् स्त्री उप+भृ-आधारे क्विप्। आश्वत्थे यज्ञपात्र-भेदे स्रुचि "आश्वत्थ्युपभृत्" कात्या०१,३,३५, उपभृत्संज्ञका स्रुक् आश्वत्थी 'कर्क "पाणिभ्यां जुहूं परिगृह्णोपभृत्या च.मम्" १,१०,६.'सव्यमुपभृत्" आश्व०श्र० ४,२,३।

उपभोग पु० उप+भुज-घञ् कुत्वम्। विषयसेवाजन्य सुखभेदे "स्त्रीणां स्वपरिदायस्तु भोगफल स्मृत' दा०भा०स्मृ०। 'न जातु काम कामानामुपभोगेन शाम्यति" मनु भारतञ्च। "आगमेमोपभोगेन नष्ट भाव्यमतोऽन्यथा"। "इह कर्मोपभोगाय तैः स सरति सोऽव्ययः' या०स्मृ०। 'प्रियोपभोगचिह्नेषु पौरोभा-ग्यमिवाचरत्" लज्योपभोगोत्सुकयेव लक्ष्म्या' रघु भोगश्च विषयसम्पर्गजन्यसुखभेदः'। अधिक भोगशब्दे वक्ष्यते। ततः अस्त्यर्थे इनि। उपभोगिन् तद्वति त्रि० "ब्राह्मणाश्च वनिष्यन्ति ब्राह्मणस्योपभोगिन' भा० व० १९० अ० स्त्रियां ङीप्॥

उपभोग्य उप+भुज-ण्यत् अभक्ष्यार्थत्वे कुत्वम्। उपभोग-योग्ये वस्तुनि अर्थे तु न कुत्वम्। उपभोज्यमित्येव। "असत सा नागवधूपभोग्यम् कुमा०। 'किञ्चित्कालो-पभोग्यानि यौवनानि धनानि च" पञ्चत०।"विविधान्य नपानानि पुरुषा ये,तुयाचितः। ते वै स्वयोपभोज्यानि ब्राह्मणाना ददुश्च ह" भा० आश्व० ८८अ०।

उपभोजिन् त्रि० उ+भुज-णिनि। उपभोगकारके।"मिष्टा-न्नाधारपौवेषु परपाकोपभोजिषु" "उच्छिन्नबलिभिक्षेषु भिक्षकाद्योपभोजिषु' स्मृ०।

उपम त्रि० उपमीयते उप+मा-घञर्थे क। १उपमेये। "पद यद्विष्णोरुपमं निधायि"ऋ०५,३,३।"उपममुपमेयमिव" भा०। उपमीयते समीपे क्षिप्यते मि-बा० ड। २अन्तिके निरु० "यत् केतमुपम समतृत"ऋ०७,३०,३।'उपमम-न्तिकम्"भा०।३अन्तिकस्थे त्रि०। दिवश्चिदस्ता उपमा"ऋ० १०,८,१।'उपमात् समीपस्थान्'भा०"राजानि कष्टे-ष्ठुपमस्य वव्रे" ऋ०४,४२,१।

उपमङ्गु पु० "अक्रूर सुते तस्मात् श्वफल्काद्गान्दिनीषु। उपमङ्गुस्तथा मङ्गुर्मृदरारिमेजय" हरिव० ३५ अ० इत्युक्ते श्वफल्कपुत्रे अक्रूरानुजे यदुवंश्ये क्षत्रियभेदे।

उपमन्त्रण न० उप+मन्त्र-ल्युट्। आमन्त्रणे वशीकर-णाय प्रार्थनापूर्व्वकप्रवर्त्तनारूपे व्यापारभेदे। "भाकमो-पसम्भाषणज्ञानयज्ञनिमन्त्रुपमन्त्रणेषु वदः' पा०। "उप-मन्त्रणमुपच्छन्दनम्" सि० कौ०। २उपच्छन्दने। (खोसामदो) तत अस्त्यर्थे इनि उपमन्त्रिन्। (खोसामुदिया) उपच्छन्दनकारके मर्म्मसचिवे।"बृहमा-मुपमन्त्रिणः' ऋ० ८,१०२,४। "उपमन्त्रिण उपमन्त्र

वसन्तोऽम्बरचरिणा इमजामुपस्थानयुक्ता यायमिच्छन्ति" भा०

**उपमन्थनी** स्त्री उपमथ्यतेऽनया उप+मन्थ–करणे ल्युट् ङीप्। अग्निमन्थनसाधनद्रव्ये "चतुरौदुम्बरो भवति औदुम्बरश्चमस औदुम्बरः स्रुव औदुम्बर इध्म औदुम्बर्य्या उपमन्थन्यौ" शत० ब्रा० १४, ६, ३, २१।

**उपमन्यु** पु० आयोदधौम्यशिष्ये ऋषिभेदे। "धौम्यो नामायोदस्य तत्र शिष्या बभूवुरुपमन्युरारुणिर्वेदश्चेति" भा० आ० तच्चरितञ्च तत्र वर्णितं यथा।

"अथापरः शिष्यस्तस्यैवायोदधौम्यस्योपमन्युर्नाम। तं चोपाध्यायः प्रेषयामास वत्सोपमन्यो! गा रक्षस्वेति। स उपाध्यायवचनादरक्षद्गाः स चाहनि गा रक्षित्वा दिवसक्षये गुरुगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायः पीवानमपश्यदुवाच चैनं वत्सोपमन्यो! केन वृत्तिं कल्पयसि पीवानसि दृढमिति। स उपाध्यायं प्रत्युवाच भो! भैक्षेण वृत्तिं कल्पयामीति तमुपाध्यायः प्रत्युवाच। ममानिवेद्य भैक्षं नोपयोक्तव्यमिति। स तथेत्युक्त्वा भैक्षं चरित्वोपाध्यायाय न्यवेदयत्। स तस्मादुपाध्यायः सर्व्वमेव भैक्षमगृह्णात्। स तथेत्युक्तः पुनररक्षद्गाः अहनि रक्षित्वा निशामुखे गुरुकुलमागम्य गुरोरग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वोवाच वत्सोपमन्यो! सर्व्वमशेषतस्ते भैक्षं गृह्णामि केनेदानीं वृत्तिं कल्पयसीति। स एवमुक्त उपाध्यायं प्रत्युवाच भगवते निवेद्य पूर्व्वमपरं चरामि तेन वृत्तिं कल्पयामीति तमुपाध्यायः प्रत्युवाच। नैषा न्याय्या गुरुवृत्तिरन्येषामपि भैक्षोपजीविनां वृत्त्युपरोधं करोषि इत्येवं वर्त्तमानो लुब्धोऽसीति। स तथेत्युक्त्वा गा अरक्षत् रक्षित्वा च पुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वा पुनरुवाच वत्सोपमन्यो! अहं ते सर्व्वं भैक्षं गृह्णामि न चान्यच्चरसि पीवानसि भृशं केन वृत्तिं कल्पयसीति। स एवमुक्तस्तमुपाध्यायं प्रत्युवाच भो! एतासां गवां पयसा वृत्तिं कल्पयामीति तमुवाचोपाध्यायो नैतन्न्याय्यं पय उपयोक्तुं भवतो मया नाभ्यनुज्ञातमिति। स तथेति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायगृहमेत्य गुरोरग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायः पीवानमेव दृष्ट्वोवाच वत्सोपमन्यो! भैक्षं नाश्नासि न चान्यच्चरसि पयो न पिबसि पीवानसि भृशं केनेदानीं वृत्तिं कल्पयसीति। स एवमुक्त उपाध्यायं प्रत्युवाच भो! फेनं पिबामि यमिमे वत्सा मातॄणां स्तनान् पिबन्त उद्गिरन्ति। तमुपाध्यायः प्रत्युवाच एते त्वदनुकम्पया गुणवन्तो वत्साः प्रभूततरं फेनमुद्गिरन्ति तदेषामपि वत्सानां वृत्त्युपरोधं करोष्येवं वर्त्तमानः फेनमपि भवान्न पातुमर्हतीति स तथेति प्रतिश्रुत्य पुनररक्षद्गाः। तथा प्रतिषिद्धो भैक्षं नाश्नाति न चान्यच्चरति पयो न पिबति फेनं नोपयुङ्क्ते स कदाचिदरण्ये क्षुधार्त्तोऽर्कपत्राण्यभक्षयत्। स तैरर्कपत्रैर्भक्षितैः क्षारतिक्तकटुरूक्षैस्तीक्ष्णविपाकैश्चक्षुष्युपहतोऽन्धो बभूव ततः सोऽन्धोऽपि चङ्क्रम्यमाणः कूपे पपात। अथ तस्मिन्ननागच्छति सूर्य्ये चास्ताचलावलम्बिनि उपाध्यायः शिष्यानवोचत् नायात्युपमन्युः त ऊचुर्वनं गतो गा रक्षितुमिति तानाह उपाध्यायः। मयोपमन्युः सर्व्वतः प्रतिषिद्धो नियतं कुपितस्ततो नागच्छति चिरं ततोऽन्वेष्य इत्येवमुक्त्वा शिष्यैः सार्द्धमरण्यं गत्वा तस्याह्वानाय शब्दं चकार, भो उपमन्यो! क्वासि वत्सैहीति। स उपाध्यायवचनं श्रुत्वा प्रत्युवाचोच्चैरयमस्मिन् कूपे पतितोऽहमिति तमुपाध्यायः प्रत्युवाच कथं त्वमस्मिन् कूपे पतित इति। स उपाध्यायं प्रत्युवाच अर्कपत्राणि भक्षयित्वाऽन्धीभूतोऽस्म्यतः कूपे पतित इति। तमुपाध्यायः प्रत्युवाच। अश्विनौ स्तुहि तौ देवभिषजौ त्वां चक्षुष्मन्तं कर्त्ताराविति स एवमुक्त उपाध्यायेनोपमन्युरश्विनौ स्तोतुमुपचक्रमे देवावश्विनौ वाग्भिरृग्भिः'। अश्विस्तुतिमुपवर्ण्य कथा समापयामास यथा "इत्येवं तेनाभिष्टुतावश्विनावाजग्मतुराहतुश्चैनं प्रीतौ स्व एष तेऽपूपोऽशानैनमिति। स एवमुक्तः प्रत्युवाच नानृतमूचतुर्भगवन्तौ। न त्वहमेतमपूपमुपयोक्तुमुत्सहे गुरवेऽनिवेद्येति। ततस्तमश्विनावूचतुः आवाभ्यां पुरस्तादभ्यवहृत उपाध्यायेनैवमेवाभिष्टुताभ्यामपूपो दत्तः उपयुक्तश्च तेनानिवेद्य गुरवे, त्वमपि तथैव कुरुष्व यथाकृतमुपाध्यायेनेति। स एवमुक्तः प्रत्युवाच एतत् प्रत्यनुनये भवन्तावश्विनौ नोत्सहेऽहमनिवेद्य गुरवेऽपूपमेनमुपयोक्तुमिति। तमश्विनावाहतुः प्रीतौ स्वस्तवानया गुरुभक्त्या उपाध्यायस्य ते कार्ष्णायसा दन्ताः भवतोऽपि हिरण्मया भविष्यन्ति चक्षुष्मांश्च भविष्यसि श्रेयश्चावाप्स्यसीति। स एवमुक्तोऽश्विभ्यां लब्धचक्षुरुपाध्यायसकाशमागम्योपाध्यायमभ्यवादयत् आचचक्षे च स चास्य प्रीतिमान् बभूव आह चैनं यथाश्विनावाहतुस्तथा त्वं श्रेयोऽवाप्स्यसीति। सर्व्वे च ते वेदाः प्रतिभास्यन्ति सर्व्वाणि च धर्म्मशास्त्रा

घोति एषा तत्रापि परीत्योपमन्यो”। उपमन्योरपत्यम् विदा० अञ् । औपमन्यव तद्यतेत्र बहुत्वे तु तस्य लुक् । उपमन्यव “उपमन्यु पराशरकुण्डिनेभ्य ” “उपमन्यू ना यामित्राभरद्वसिष्ठप्रमदेति’ आश्व०श्रौ०सू० १२'१५ १,२,

**उपमर्द्द** पु० उप+मृद–घञ् ।१आलोडने,२हिंसने, पूर्व्वधर्मि-विनाशनेन ३धर्म्मान्तरोत्पादने। यथा अस्तेर्भू चक्षिङो वचि स्या–दिव इत्याद्यादेशे। ४निष्पीडने “अन्यास्तु तावदुपमर्द्दसहासु भृङ्ग”शा०द०। धान्यादे ५निष्पलली-करणे च। (धानमाडा) भावे ल्युट् उपमर्द्दनमप्यर्थे न०। कर्त्तरि ण्वुल्। उपमर्द्दक तत्कारके त्रि०।

**उपमा** स्त्री उप+मि–अ । १सादृश्ये, “अतुलोपमाभ्याम्’ पा० उक्ते तद्योगे उपमानवाचकात् षष्ठी न तु तृतीया। ‘स्फुटोपम भूतिसितेन शम्भुना” माघे तु सहार्थे तृतीया मल्लि०। २अर्थालङ्कारभेदे च अर्थालङ्कारभेदस्य ३९६ पृ० विवृतिर्दृश्या। न्यायमतसिद्धे उपमानजन्ये ३गवयादिपदव्युत्पत्तिज्ञानरूपे, वेदान्तिमतसिद्धे ४गवादिसा-दृश्यज्ञानरूपे अनुभवभेदे च उपमानशब्दे विवृतिः। करणे वा० अ। ५उपमाने च। “अपि लङ्घितमध्वानं बुबुधे न बुधोपम:” रघु। ‘यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता” गीता “यजते सोपमा दिवः” ऋ० १,३१,१५, स्वार्थे ष्यञ्। औपम्य उपमाने न०।

**उपमात्** स्त्री उपमीयते प्रक्षिप्यते उप+मिञ–क्षेपे–बा०ध्यति। स्थूणायाम् वत्सबन्धनसाधने स्तम्भे “मातुरुपमादिव द्यौ” ऋ० ६,६७,६,।“उपमीयते प्रक्षिप्यते इत्युपमात् स्थूणा’ सा यथा वतृस धारयति तद्वदित्यर्थ ’ भा०।

**उपमाति** स्त्री उप+मि–क्तिन् वेदे नि०आत्।१उपमायाम्। “पूर्वीष्ट इन्द्रोपमातय’ ’ ऋ०८,४०,६, लोके तु उप-मितिरित्येव उक्तार्थे। उप+मीङ–वधे–क्तिन् बा०आत्। २हिंसने उपमातिवनि। “रिपो धाद्रयाक नूदुपमाति वनि” ऋ०५,४१,१६, उपमातये वनति वनु व्याप्तौ इन्। हिंसनव्याप्त इत्यर्थ उपमातिवनिर्हन्ता” भा०।

**उपमातृ** स्त्री उपमिता माता अवा०स०। १धात्र्याम् अ-मर। सा हि मातृतुल्य प्रतिपालयतीति तस्यास्तथात्वम् २मातृवल्याम् मातृष्वसादिषु च। तास्य “मातृष्वसा मा-तुलानी पितृव्यस्त्री पितृष्वसा। श्वश्रू पूर्व्वजपत्नी च मातृतुल्या, प्रकीर्त्तिता’ दायभा० धृत० स्मृ० उक्ता। स्वस्रादिपर्य्युदासात् ऋदन्तत्वेऽपि स्त्रियां न ङीप्। उप+मा–तृच्। ३उपमानकर्त्तरि त्रि०। स्त्रियां ङीप्।

**उपमाद** त्रि० उपमादयति उप+मद–णिच् अच्। उप-मादके हर्षजनके “देवानामुपमादकस्य:” ऋ०७ ५ ५, “उपमादमुपमादकं यत्नम्” भा०।

**उपमान** न० उपमीयतेऽनेन उप+मा–भावे ल्युट्। सादृश्य-ज्ञाने। करणे ल्युट्। २सादृश्यज्ञानसाधने सादृश्यप्रतियो-गिनि, येन सादृश्यं भवति तस्मिन्, यथा चन्द्र इव मुख-मित्यादौ चन्द्र उपमानम्। प्रसिद्धस्यैवोपमानत्वम् प्रसि-द्धस्योपमेयत्वम्। उपमानमभूद्विलासिनाम् कुमा० “उप-मानमनुज्ञासमहीरुहाणाम्’ माघ। ३उपमितिप्रमाकरणे उपमानलक्षणञ्च न्या०सू० इत्थोदर्शितं यथा “प्रसिद्ध साधर्म्यात् साध्यसाधनमुपमानम्’ सू०। “प्रसिद्धस्य पूर्व्व-प्रमितस्य गवादे साधर्म्यात् सादृश्यात् तज्ज्ञानात् स छस्य गवयादिपदवाच्यत्वस्य साधनं सिद्धिरुपमानमुपमितिर्यत इत्यध्याहारेण करणलक्षणम् अथ वा साध्यसाधनमिति करणल्युटा करणलक्षणमेवेदम् अत्र च वैधर्म्योपमिति मन्यन्ते टीकाकृत यथा अतिदीर्घग्रीवत्वादिपश्वन्तरवैधर्म्य ज्ञानादुष्ट्र करभपदवाच्यतायाङ् । एवमन्योऽप्युपमानस्य विषयइति भाष्य यथा मुद्गपर्णीसदृशी ओषधी विष हन्त्रीत्यतिदेशवाक्यार्थे ज्ञाते मुद्गपर्णीसादृश्यज्ञाने जाते इयमोषधी विषहरणीत्युपमित्या विषयीक्रियतइत्यादि’।

उपमानचि० सादृश्यपदार्थनिरुक्तिपूर्व्वकमुपमानस्य प्रमाणान्तरत्व व्यवस्थापितं यथा। “तत्र सादृश्यप्रमा करणमुपमानमिति केचित्। सादृश्यञ्च पदार्थान्तरम्। तथा हि। सदृशव्यवहारादबाधितादस्ति सादृश्य तच्च न प्रतिपदार्थमेकं सर्वस्य सर्वसदृशत्वापत्ते’ स्वसदृशत्वापत्तेश्च सुसदृशमन्दसदृशव्यवहारस्य तदेकत्वेऽनुपपत्तेश्च। न च व्यञ्जकभूय सामान्याल्पत्वभूयस्त्वाभ्यां तद्धीरिति वाच्यं बहुभिरल्पैश्च व्यज्यमानघटादौ ह्रासवृद्ध्योरदर्शनात् व्यञ्जकाभिमतादेव व्यवहारसिद्धौ अतिरिक्तासिद्धेश्च। नापि संयोगवत् व्यासज्यवृत्त्यनेकम्, गोत्वोपलक्षितसादृश्याश्र यत्वात् गवयवत्, गोरपि स्वसदृशत्वप्रसङ्गात् गोरसन्निकर्षे सयोगवद्प्रत्यक्षत्वप्रसङ्गाच्च। प्रत्यक्षत्वे वा गवयनिरूपित-स्यैकविषित्वेद्यत्वेन गोनिष्ठतया चाक्षुषत्वप्रसङ्ग। किन्तु प्रत्याश्रयं भिन्नम्। न चैकैकव्यभिचारादनुगतरूपाभावादनु गतप्रत्यय’ सादृश्यपदव्युत्पत्तिश्च न स्यादिति वाच्यम् अनु-गतवित्तिवेद्यसादृश्यत्वसामान्यात् सप्तपदार्थातिरिक्तत्व त्वा जातिवदन्यविशेषणस्य स्वलक्षणाजन्यत्वयोरुपपत्ते। तच्च द्रव्ये न गुण कर्म वा, गुणकर्मवृत्तित्वात् न च सदाश्रय

तद्धर्मवत्ता तदभेदो वा तत्ता सा च सोऽयमिति प्रत्यभिज्ञाने भासते। भेदे भासमाने तदन्यस्मिन् तद्धर्मवत्ता तद्वत्ता यतो भवति तद्वदयं न तु स इति तयोर्भेदात्। नन्वेवं व्यक्त्यन्तरे गोत्वपक्षे तद्बोधदयमिति स्यान्नत्वयमपि गौरिति चेन्न गोत्वमात्रस्य तदन्यव्यक्तिवृत्तित्वपक्षे समुच्चय, एकत्र नानासम्बन्धावगमात्। तद्वोवृत्तिबहुधर्मज्ञाने भवत्येव भवत्वावच्छेदेति। तथाप्ययमपि शृङ्गादिमानिति समुच्चयधी स्यात् न तु गोसदृश इति चेन्न एकत्रोभयसम्बन्धसमुच्चयोऽन्यगतभूयोधर्मवत्त्वमन्यत्र सादृश्यमिति विवेकात् नवीनास्तु। विलक्षणसुखद्वये इतरसकलव्यावृत्तसादृश्यमनुभूयते न तु तद्द्वयमात्रवृत्तिजातिरस्ति तद्द्वयाभावे जातेरनाश्रयत्वेनानित्यत्वप्रसङ्गात्। नापि जन्यधर्मान्तरमस्त्यधिकं सादृश्यमुपेयं तथापि समानधर्मवत्त्वव्यञ्जकं विना कथं तत्र सादृश्याभिव्यक्तिरिति चेन्न प्रतीतिबलात् द्रव्ये तथा, गुणादौ तु व्यभिचारात् अतएव न व्यञ्जकेनान्यथासिद्धिस्तदभावेऽपि सादृश्यानुभवादित्याहुः। तन्तुच्छविलक्षणसुखद्वयं न सुखमात्रहेतुजन्यं सुखान्तरस्यापि सदृशत्वापत्तेः किन्तु विलक्षणादृष्टजन्यं तच्चादृष्टं विहिततत्तत्क्रियाविशेषानुष्ठानादन्येषामप्यस्तीति तेषामपि तादृशानि सुखानि भवन्तीति तेषु कारणविशेषप्रयोज्या विलक्षणतास्ति तस्मादात्मनामानन्त्यात् अनादिनिधनत्वादुत्पन्नानागतविजातीयं न सुखमस्ति एवं दुःखान्तरकार्य्येष्वपि नह्यनुत्पन्नमनुत्पत्स्यमानजातीयं कार्य्यमस्ति। यच्च व्यक्तिनाशे जातेरनित्यत्वमापादितं तदपि न विनाशकाभावात् अतएव प्रलयेऽपि तदवस्थानम्। अपि चैकत्र प्रतियोगिभेदेन सादृश्यं भिन्नं नत्वेकम्, सुसदृशमन्दसदृशव्यवहारात् तथा च योग्यत्वादेकपक्षे सर्वपक्षप्रसङ्गात्। प्रतियोगिगतभूयोधर्मज्ञानस्य व्यञ्जकस्य क्रमाक्रमे तदेव व्यवहारनिमित्तमित्युक्तम्। किञ्चैवं वैसादृश्यमपि स्यात्। न च सादृश्याभाववत्तत्, वैपरीत्यस्यापि सम्भवात् सादृश्याभावत्वेनैव प्रतीतिर्विशब्दस्य निषेधार्थत्वादिति चेत्तर्हि गौरिव महिषीत्यत्र पावनत्वक्षीरवत्त्वादिना विवक्षितसादृश्यानाश्रये गवये वैसादृश्यं न स्यात् न हि तत्र गोसादृश्यं तदभावश्च। तस्मात् साधर्म्यवैधर्म्ये सादृश्यवैसादृश्ये। यत्तु तद्भिन्नत्वेऽनेकधर्मवत्त्वं सादृश्यं तेनाभेदेऽपि "गगनं गगनाकारं सागरं सागरोपमं। रामरावणयोर्युद्धं रामरावणयोरिव" इत्यादौ सादृश्यं, न चैवं गोरपि गोसदृशत्वे गवयपदाभिधेयत्वापत्तिः तत्र सदृशपदस्य विशेषे तात्पर्य्यात्। अन्यथा महिषेऽतिप्रसङ्ग इति तन्न तस्य तेन वा सदृश इति प्रतीतिप्रयोगात् न चाभेदे सम्बन्धः सम्बन्धार्थो वा सम्भवति। गगनं गगनाकारमित्यादौ तु गगनाद्यैर्वैसादृश्यधर्मवत्त्वान्यदित्यत्र तात्पर्य्यम्। यद्वा सर्गान्तरीयगगनसागरयोरुपमानत्वं तयोर्युद्धविशेषे तयोरेव युद्धान्तरमुपमानमिति। नन्वयं देवदत्तस्तदन्यो वा भवतु तत्सदृशस्त्वावदयमिति भेदाभेदसंशयेऽपि सादृश्यनिश्चयात् अतिरिक्तं सादृश्यमिति चेत् न देवदत्ताभिप्रायेणैकदेशे सादृश्यपदप्रयोगात् कथमन्यथा ह्य एवायं न तु तत्सदृश इति, सदृशोऽयं न तु स इति प्रतीतिप्रयोगौ। न चात्र सदृशपदं भेदमात्रपरमिति युक्तं तथ्ये सम्भवति लक्षणाया अयोगात्। तस्माच्च पदार्थान्तरं सादृश्यमिति। स्यादेतत्। मा भूत् पदार्थान्तरं तथापि प्रत्यक्षाच्छब्दाद्वा गवये गोसादृश्यज्ञानात् गवयसदृशो गौरितिज्ञानमुपमिति। न चैतत्प्रत्यक्षं विशेष्यासन्निकर्षात् नानुमानं लिङ्गाभावात्। न च गवयगतं सादृश्यं लिङ्गम् अपक्षधर्मत्वात्। अथ सदृशद्वयान्तर्दर्शने यो यद्गतसादृश्यप्रतियोगी स तत्सदृश इति प्रत्यक्षेण व्याप्तिग्रहे सति गवयगतसादृश्यप्रतियोगित्वात् गौर्गवयसदृश इत्यनुमितिरिति चेत् व्याप्तिग्रहं विनैव प्रथममपि प्रत्यक्षाच्छब्दाद्वा गोसदृशं गवयं ज्ञात्वा गवि गवयसादृश्यज्ञानोदयात्। किञ्च गवि गवयसादृश्यं न साध्यं प्रथमतस्तदप्रतीते गवयगतसादृश्यप्रतियोगित्वञ्च गवि न प्रत्यक्षं विशेष्यासन्निकर्षादिति नानुमितिगम्यं तल्लिङ्गस्यापि तद्गतत्वेनाप्रत्यक्षत्वे लिङ्गान्तरगम्यत्वेऽनवस्थानात्। न च गौरेतद्गवयसदृशः गवयगतभूयोऽवयवादिसामान्यवत्त्वात् गवयान्तरवदिति गवयान्तरज्ञानेऽपि गवि गवयसादृश्यं विनानुपपद्यमानं तत्कल्पयति। न हि गोसदृशो गवयः एतद्विसदृशो गौरिति वाच्यम्। गवयनिरूपितगोसादृश्याप्रसिद्धौ तेन विनानुपपत्तिज्ञानाभावात्। किञ्च तथार्थापत्तिर्व्यतिरेक्यनुमानं न च गवयगतसादृश्यप्रतियोगित्वं गवि प्रत्यक्षादिना ज्ञातुं शक्यमित्युक्तम्। नन्वेवं करभे गोर्वैधर्म्यज्ञानात् गवि करभवैधर्म्यज्ञानमपि मानान्तरं स्यादिति चेत् गवि करभवैधर्म्यं यदि करभवृत्तिधर्माभावत्वं तदाऽस्मृते गवि ग्राह्यास्ति तावदनुपलब्धिगम्यमेव अथ करभव्यावृत्तधर्मवत्त्वं तदा गोधर्मा गविगता एव इदानीं स्मृतगोधर्माणां करभेऽभावमात्रमधिकं गम्यं तच्च प्रत्यक्षादेव। अथ तत्प्रतियो-

मर्त्यगणं परे। इत्यादित्यःकेशायुन्त्यमित्राश्वीज्येन्दुतारका" पी०धा०। फलमाह। "निजनिजगणमध्ये प्रीतिरुत्तमा स्यादमरमनुजयोः सा मध्यमा संप्रदिष्टा। असुरमनुजयोश्चेन्मृत्युरेव प्रदिष्टो दनुजविबुधयोः स्याद्वैरमेकान्ततोऽत्र" मु०चि०। "असुरमनुजयोः राक्षसमनुष्यगणयोः स्त्रीपुंसयोः मृत्युरेव प्रदिष्ट उक्तः द्वयोर्वान्यतरस्य वेत्याकाङ्क्षायां प्रबलेन दुर्बलं बाध्यते इति न्यायेन मनुष्यगणस्यैव नाश, यदाह नारदः। "दम्पत्योर्जन्मभे चैकगणे प्रीतिरनेकधा। मध्यमा देवमर्त्यानां रक्षोनॄणां तयोर्मृतिः" काश्यपः "स्वगणे चोत्तमा प्रीतिर्मध्यमाऽमरमर्त्ययोः। मर्त्यराक्षसयोर्वैरमसुरासुरयोरपीति" अयमर्थः पुरुषोरक्षोगणः स्त्री मनुष्यगणा तदा वैरं, यदि वैपरीत्यं तदा मृत्युः। तथा पुरुषोरक्षोगणः स्त्री देवगणा तदा वैरं वैपरीत्ये मृतिः। उक्तं च। "राक्षसी यदि सा नारी नरो भवति मानुषः। मृत्युस्तत्र न सन्देहो विपरीतः शुभावहः"। शार्ङ्गीये। "रक्षोगणः पुमान् स्याच्चेत्कन्या भवति मानवी। केऽपीच्छन्ति तदोद्वाहं व्यस्तश्चोऽपीह नेच्छतीति"। एतत्तुल्यन्यायत्वाद्देवराक्षसयोरपि द्रष्टव्यम्। अत्र गुणविभागो दैवज्ञम०। "षड्गुणा गणसाम्ये च पञ्च स्यु सुरमानुषे। नार्या देवो नरः पुंसश्चत्वारो वा गुणास्त्रय। देवराक्षसयोः शून्यं तथैव नररक्षसोः। पुंसो रक्षोगणो यत्र नार्या देवोऽथ वा नरः। गुणौ द्वौ क्रमतश्चैको गुणो ग्राह्योऽन्यथा न हीति"। अस्यापवादमाह गर्गः। "ग्रहमैत्री च राश्योर्विद्यते नियतं यदि। न गणाभावजनितं दूषणं स्याद्विरोधनम्"। अत्रिरपि। "राशीशयोः सुहृद्भावे मित्रत्वे वांशनाथयोः। गणादिदोषेऽप्युद्वाहः पुत्रपौत्रप्रवर्द्धनः"। अत्र परिहारं चन्द्रदर्पणे वक्ष्यति। मनुरपि। "ग्रहमैत्री च रज्जुश्च यदि नाडी पृथक् तयोः। विवाहः शुभदः कन्या राक्षसी वा नरो नरः" इति पी०धा०। रज्जुकूटमन्यत्र दृश्यम्। अथ भकूटम् "मृत्युः षट्काष्टके ज्ञेयोऽपत्यहानिर्नवात्मजे। द्विद्वादशे निर्धनत्वं द्वयोरन्यत्र सौख्यकृत्" मु०चि०। "स्त्रीपुंसराश्योः परस्परं षष्ठाष्टमराशित्वे सति मृत्युर्ज्ञेयः। यथा मेषकन्ययोः वृषधनुषोः। एवं नवात्मजे नवपञ्चमेऽपत्यानां बालानां हानिर्नाशः स्यात्। यथा सिंहधनुषोः एवं द्विद्वादशे सति निर्धनत्वं दारिद्र्यं स्यात्। यथा मेषवृषयोः अन्यत्र तृतीयैकादशे चतुर्थदशमे सप्तसप्तमे वा सति सौख्यं तत्पाणिपीडनं स्यात्। यदाह नारदः "षट्काष्टके मृतिर्नवपञ्चमे त्वनपत्यता। नैस्व्यं द्विद्वादशेऽन्येषु दम्पत्योः प्रीतिरुत्तमेति"। अत्र विशेषो ज्योतिःप्रकाशे। "पुंसो मृत्युगृहे सुतस्था च कन्या धर्मे स्थिता धनवती पतिवल्लभा च। द्विद्वादशे धनस्थे धनस्था च कन्या रिष्फे स्थिता धनवती पतिवल्लभा चेति"। अन्यत्र। "मृगः कुलीरेण घटेन सिंहो वैरप्रदः स्यात् समसप्तकोयम्। तुला मृगेणाथ वृषेण सिंहो मेषेण कर्को मिथुनेन मीनः। चापेन कन्या घटभेन चालिर्दौर्भाग्यदैन्ये दशतुर्यकेऽस्मिन्निति" पी०धा०। अस्यापवादः "प्रोक्ते दुष्टभकूटके परिणयस्त्वेकाधिपत्ये शुभोऽथो राशीश्वरसौहृदेऽपि गदितो नाड्यृक्षशुद्धिर्यदि। अन्यर्क्षेऽशपयोर्बलित्वसखिते नाड्यृक्षशुद्धौ तथा ताराशुद्धिवशेन राशिवशताभावे निरुक्तो बुधैः" मु०चि०। "प्रोक्ते दुष्टराशिकूटे सत्यपि द्वयोःस्त्रीपुंसराश्योरेकाधिपत्ये एकस्वामित्वे परिणयो विवाहः शुभोगदितः। यथा षट्काष्टके मेषवृश्चिकयोस्तुलावृषयोर्वा। नवपञ्चमे त्वेकाधिपत्याभावः। द्विद्वादशे मकरकुम्भयोः। अथ वा राशीश्वरयोः राशिस्वामिनोः सौहृदे मैत्रे परिणयः शुभोगदितः। यथा षट्काष्टके मीनसिंहयोरित्यादौ, नवपञ्चमे मेषधनुषोरित्यादौ। द्विद्वादशे मीनमेषयोरित्यादौ। यदाह वशिष्ठः "द्विद्वादशे वा नवपञ्चमे वा षट्काष्टके राक्षसयोषितोर्वा। एकाधिपत्ये भवनेशमैत्रे शुभाय पाणिग्रहणं विधेयमिति" राजमा०। "भवेत्त्रिकोणे बहुपुत्रवित्तं द्विद्वादशे चायमुपैति कन्या। षट्काष्टके सौख्यफलं विधत्ते स्त्रीणां विवाहे ग्रहमैत्रीभावे" इति एकाधिपत्येऽपीति शेषः। अतएव ग्रहमैत्र्यैकाधिपत्याभावे वैरषट्काष्टकमित्यादि वदन्ति। यदाह नारदः "वैरषट्काष्टकं मेषकन्ययोर्धटमीनयोः। चापोक्षयोर्मृगकीटभयोः कुम्भकुलीरयोः। पञ्चास्यमृगयोर्जन्म राश्योः प्रोक्तोऽशुभप्रदः" इति। उक्ता इवं चापोक्षयोरित्यकारान्तनिर्देशश्छान्दसः। एतद्भिन्नं मित्रषट्काष्टकमित्याहुः। तदुक्तं जगन्मोहने "मित्रषट्काष्टकं कीटमेषयोर्वृषजूकयोः। कर्किचापभयोर्मीनसिंहयोर्मृगयुग्मयोः। कन्याकाकुम्भयोरन्यत् प्रयत्नाद्वै वर्जयेदिति"। एवञ्च ग्रहमैत्र्यभावे वैरनवपञ्चममित्याहुः। तथा च शार्ङ्गधरीये उक्तं। "मीनालिभ्यां युते कीटे कुम्भे मिथुनसंयुते। मकरे कन्यकायुक्ते न कुर्यान्नवपञ्चमे" इति। एतादृशस्य नवपञ्चमस्य फलान्तरमुक्तं केचित् यथा ज्योतिर्निबन्धे शार्ङ्गधरः। "वरबन्धोर्मातृपितोर्जीवितो-

मित्रसुमित्रजन्मशुभदा क्षेमा च संपत्करी । षष्ठाष्टे नव पञ्चमे व्ययभवे योगेषु सुयोषितोः प्रीत्यायु सुतवृद्धिवित्तजनक कार्य्यो विवाहस्तदेति" । चकारात् षष्ठी च । जन्मतारा यद्युत्पत्तितारा तदा राशिभेदे चरणभेदे वा शुभा ध्येया । दशमैकोनविंशतितारे शुभे एव । अत्रापि पक्षे नाडीशुद्धिरपेक्षितैव । नाडीशुद्ध्यभावे विवाहोनैव भवेत् । उक्तं वात्र पमति" । अथ तस्यापि परिहारस्याभावे परिहारान्तरमाह । अथ राशिवश्यताभाव इति । अत्रापि द्वयोः स्त्रीपुंसयोः राशिनाथविरोधादिके विषये षट्काष्टकादौ सति "द्विधा मृगेन्द्र नरराशिवश्या" इत्यादिना पुरुषराशेः स्त्रीराशिवश्यताभावे सति विवाह शुभोनिगदितः । "यदि भवनवशित्वमिति श्रीपत्युक्तेर्य अस्मिन्नपि पक्षे नाडीशुद्धिरपेक्षितैवोक्तादेवहेतोः । तदयमत्र निष्कृष्टोऽर्थः । षट्काष्टकनवमपञ्चमद्विद्वादशाख्येषु दुष्टभकूटेषु सत्सु परस्परं ग्रहमैत्री एक परिहारः । एकाधिपत्ये द्वितीय । ग्रहयोरेऽन्यशत्रुत्वे मैत्रे च तृतीय । ताराशुद्धौ चतुर्थः । राशिवश्यत्वे पञ्चम । सर्व्वेष्वपि परिहारेषु नाडीशुद्धिरपेक्षितैव । नाडीविरोधसत्त्वे तु विवाहोनैव स्यादिति । एवञ्च ग्रन्थकर्त्ता 'भवनपतिसुहृत्त्वमित्यस्य' श्रीपतिश्लोकस्य वाक्यचतुष्टयमङ्गीकृत्य तत्परिहाराभिधानकृतम् । तट्टीकाकृन्महादेवेनाप्येवमेव व्याख्यात । यत्र हि प्रत्येक परिहारकम् तत्र गुणसमुदाय परिहारक स्यादिति किं वाच्यम् । वस्तुतस्तु । "मैत्री चेत्खपयोर्द्वयोरपि तयोरेकाधिपत्येऽपि चेत्ताराभित्रसुमित्रजन्मशुभदा क्षेमा च सम्पत्करीत्यादि प्राग्लिखितेन राजमार्त्तण्डवाक्येन दुष्टभकूटे ग्रहमैत्र्या सह तदेकाधिपत्येन सह ताराशुद्धिरेव परिहारिका सूचिता । अर्थादेकस्य मित्रत्वेऽपरस्य समत्वे वश्यत्वापेक्षा अतएतद्वाक्य ज्योति सारसागरे विवृतम् "तत्रान्योन्यमित्रत्वे तुल्याधिपतित्वे वा ताराशुद्धिरेव चिन्त्या । एकमित्रतायान्तु वशित्वादि गुणान्तरापेक्षा । शत्रुत्वे तु सर्व्वथा त्याग इति"। अत एतस्मिन् पक्षे चेत्पदाभिधानादेकवाक्यतावशाय । एवं श्रीपतिवाक्यमपि व्याकर्त्तव्यमेकवाक्यताबलात् । तत्र षट्काष्टके पुनर्भवनपतिसुहृत्त्वमिति सकलगुणसत्त्वमेव परिहारकम् । अनयोर्द्दुष्टभकूटयोर्द्वयमेव । यदाह ज्योतिर्निबन्धे गर्गः "ग्रहमैत्र्य । शुभा तारा राशिवश्यं त्रिभि शुभम् । षडष्टकस्य धा प्राहुर्द्वाभ्यां द्विर्द्वादशत्रिकोणकमिति' । 'द्विर्द्विर्द्वादशम् । 'द्विर्द्वादशे वा नवपञ्चमे वेत्यादीनि' श्रीपत्यादीनि तूपलक्षणपरतया व्याख्येयानि । अत्र यथासम्प्रदाय व्यवस्था ध्येयेत्यलमियता" पी०धा०

अत्रापवाद । "मैत्र्यां राशिस्वामिनोरंशनाथद्वन्द्वस्यापि स्याद्गणानां न दोष । खेटारित्वं नाशयेत् सद्भकूट खेटप्रीतिश्चापि दुष्ट भकूटम् । मु० चि० "स्त्रीपुंसराशिस्वामिनोर्मैत्र्यां सत्यां तथा राशिनवांशयोर्द्वन्द्व युग्म तस्यापि मैत्र्यां सत्यां गणानां दुष्टगणानां दोषो न स्यात्, स्त्री रक्षोगणा पुमान् मनुष्यगणोदेवगणो वा तदा गणदोषो न स्यादित्यर्थ" । यदाहात्रि "राशीशयो सुहृद्भावे मित्रत्वे वांशनाथयो । गणादिदोषेऽप्युद्वाह पुत्रपौत्रप्रवर्द्धन" । अथ सद्भकूटं शुभफलदभकूट राशिकूट तृतीयैकादशादिकं खेटारित्वं ग्रहयो' शत्रुता सम्बन्धिनं दोषं नाशयेत् । एवमेव खेटप्रीतिर्ग्रहमैत्री चापि दुष्टं भकूट षडष्टकादिसम्बन्धिनं दोषं नाशयेदित्यर्थ" तदुक्तं सप्तर्षिमते विवाहपटले । "नभोगारित्वम् हरेत् सद्भकूटं विरुद्धं भकूटं हरेत् खेटमैत्री । सदा नाशयत्येकनाडीसमाजोभकूटादिकान् सप्तभेदांश्च ते ताम्" । (मु० चि०) चतुर्थचरणे "प्रोक्ते दुष्टभकूटक इत्यादिना पुनरुक्तोऽपि चरणाविच्छेदार्थं पठित" । यत्तु नारदेन "एकाधीशे मित्रभावे शुभदं पाणिपीडनम् । द्विद्वादशे त्रिकोणे च न कदाचित् षडष्टके" इति । एतन्नाडीदोषे सत्येव द्रष्टव्यम् । अधुनोदितवाक्यस्वरसात् । "भवनपतिसुहृत्त्वं स्यात् तथैकाधिपत्यं यदि भवनवशित्वं चैव षष्ठाष्टकेऽपि । शुभकृदिह विवाहोऽन्योऽन्यताराविशुद्धौ यदि खलु फणिचक्रे स्यान्न नाडीसमाज" इति श्रीपत्युक्तेश्च "अन्यथा प्रागभिहितवशित्वादिवाक्यान्यनर्थकान्यापद्येरन्निति" । पी० धा० । अथ नाडीकूटमाह । "ज्येष्ठार्यम्णेशनीराधिपभयुगयुगन्दास्रभं चैकनाडी पुष्येन्दुत्वाष्ट्रमित्रान्तकवसुजलभ योनिबुध्न्ये च मध्या । वाय्वग्निव्यालविश्वोडुयुगयुगमथो पौष्णभञ्चापरा स्याद्दम्पत्योरेकनाड्यां परिणयनमसन्मध्यनाड्यां हि मृत्यु" मु० चि० ज्येष्ठा प्रसिद्धा । अर्यमा उत्तराफल्गुनी । ईश आर्द्रा । नीराधीपो वरुणस्तद्भ शततारका एभ्यो नक्षत्रेभ्यो युगयुग द्वयं द्वयम् । ज्येष्ठामूले उत्तराफल्गुनीहस्तौ । आर्द्रा पुनर्वसू । शततारकापूर्व्वभाद्रा चेत्यर्थ । दास्रभमश्विनी च एतच्च नक्षत्रनवक परस्परमेकनाडीत्युच्यते । अत्र पुष्य प्रसिद्ध । इन्दुर्मृग त्वाष्ट्र चित्रा मित्रोऽनुराधा अन्तक भरणी च-

पञ्चभागव्यधो येषां जायते यत्कन्ययोः । तेषां मृत्युर्न सन्देह शेषांशाः स्वल्पदोषदा इति" तन्नाड्यागमकल्पे गुरु "दोषापनुत्तये नाड्या मृत्युञ्जयजपादिकम् । विधाय ब्राह्मणांश्चैव तर्पयेत् काञ्चनादिना । हिरण्मयीं दक्षिणाञ्च दद्याद्वर्णादिकूटके । नाडीऽत्र परमं दैव सर्वदोषापहारकमिति" । एवं सर्वसम्मतत्वादष्टौ कूटभेदा अभिहिता नान्येव । 'माहेन्द्रं गौडदेशे च माधवे रज्जुमनक मित्यादिना बादरायणवाक्यैर्नान्यकूटानां तत्तद्देशविषयतापादनात् । ते च कूटभेदास्तविस्तरं हिमायां तोडरानन्दे च सामान्यविशेषभावसहिता द्रष्टव्याः" पी० धा० । अथ नाडीदोषापवादः "राश्यैक्ये चेद्भिन्नमृक्षं द्वयोः स्यान्नक्षत्रैक्ये राशियुग्मं तथैव । नाडीदोषो नो गणानाञ्च दोषो नक्षत्रैक्ये पादभेदे शुभं स्यात्" मु० चि० । "द्वयोः स्त्रीपुंसयोरेकराशित्वे सति यदि भिन्नमृक्षं स्यात् तदा नाडीदोषो गणानाञ्च दोषो नास्ति । यथा एकस्मिन्नपि कुम्भराशौ शततारकापूर्वभाद्रपदापादत्रयं चेत्येवं रूपो नक्षत्रभेदः । तथैव नक्षत्रैक्ये राशियुग्मं राशिद्वयं चेत् स्यात् तदापि प्रागुक्तो दोषो न स्यात् । उपलक्षणत्वात् तारादोषोऽपि न भवेत् । यथा एकस्मिन्नेव नक्षत्रे पूर्वाभाद्रपदाख्ये पूर्वभाद्रपदायाः प्रथमपादत्रयं कुम्भे चतुर्थचरणश्च मीने इत्येवंरूपो राशिभेदः" । यदाह नारदः । "एकराशौ पृथग्धिष्ण्ये दम्पत्योः पाणिपीडनम् । उत्तमं मध्यमं भिन्नराश्येकर्क्षगयोस्तयोः । एकर्क्षे चैकराशौ च विवाहः प्राणहानिदः" । वशिष्ठः । "दम्पत्योर्जन्मभे चैकं राशौ च निधनं तयोः । एकस्य च तयोर्वापि किञ्चिद्भेदेऽपि वा भवा" । किञ्चिद्भेदे नक्षत्रभेदे राशिभेदे च । गर्गः "एकराशिं विना नाडीयोगमादौ विवर्जयेत् । न दोषस्त्वेकराशिस्थे सकूटेऽन्येषु मृत्युदेति" । भृगुरपि "दम्पत्योरेकराशिश्चेत् पृथक्त्वञ्च यदा भवेत्" । वशिष्ठोक्तो विवाह स्त्वाद्यनाड्यां न योजयेदिति । "अतएवाह केशवार्कः "नक्षत्रमेकं यदि भिन्नराश्योरभिन्नराश्योर्यदि भिन्नमृक्षम् । प्रीतिस्तदानीं निबिडा नृनार्योश्चेत् कृत्तिकारोहिणिवत्र नाडीति" । चतुर्थचरणसमानत्वं चेद्यदि कृत्तिकारोहिणीवत् स्यात् तदापि नाडीदोषो न स्यात् । उपलक्षणत्वाद्गणदोषोऽपि । यथा कृत्तिकारोहिण्योरेकनाडीत्वेऽपि गणदोषोऽपि तत्र वर्जिताऽशुभफलं नैव स्यात् । अत्रापि प्रथमुत पुं तारामेलिता द्वितीयता स्त्रीतारैतत्रापि विशेषो ध्येयः ।

यदाह गर्गः "एकराशौ पृथग्धिष्ण्ये पुंनारी प्रथमा भवेत् । एकतिथ शोभना प्रोक्ता स्त्रीतारा चेत्पुरोगा भवेदिति" । तदेव कैमुतिकन्यायेन यत्र नाडीगणदोषाद्यभावो यथा रोहिणीमृगशीर्षयोर्वृषमिथुनयोर्वा तत्र पाणिपीडनं शुभं स्यादिति किं वाच्यमित्यर्थः । एवमेकराशिनक्षत्रेऽपवादमाह । नक्षत्रैक्ये इति । स्त्रीपुंसयो राश्यैक्ये नक्षत्रैक्ये च यदि चरणभेदो यथा भरण्याः प्रथमपादे पुंसो जन्म द्वितीयपादे स्त्रियास्तदापि शुभं कल्याणं स्यात् । तदुक्तं केशवार्केण । "पराशरः प्राह नवांशभेदादेकर्क्षराश्योरपि सौमनस्यमिति" । सौमनस्यं प्रीतिः । वशिष्ठेनापि "एकर्क्षजन्मभाजां भवति विवाहः शतांशभेदाच्चेत् । यद्युभयांशैक्यं भवति तदा नाशको मिथः" इति । एतच्च सङ्कोचविषयं वेदितव्यम् । तथा च जगन्मोहने ।"एकर्क्षे चैकराशौ च विवाहस्त्वशुभः स्मृतः । सङ्कोचे तु तदा कार्यो भिन्नपादोऽयदा तयोरिति" । अत्रापि विशेषो ज्योतिर्निबन्धे विधिरत्ने । "रोहिण्यार्द्रा मघेन्द्राग्नी तिष्यश्रवणपौष्णभम् । उत्तराप्रोष्ठपाच्चैव नक्षत्रैक्येऽपि शोभना" इति । इन्द्राग्नी विशाखा तद्देवत्वात् । तत्रैव विधिरत्ने ।"विशाखिकाऽर्द्राश्रवणप्रजेशतिष्यान्त्यनागपृथ्यमघा मघक्षाः । स्त्रीपुंसताऽरैक्यपरिग्रहेऽपि शेषास्त्रिवर्ज्या इति सद्भिरुक्ता" इति । शेषास्तारा इत्यर्थः । अथ द्वयोरन्यतरस्य वा जन्मराशिनक्षत्राद्यज्ञाने उपायमाह । वशिष्ठः ।"प्रसुप्तजन्मनामाग्रे नामभे परिकल्पना । तेनैव चिन्तयेत् सर्वं राशिकूटादि जन्मवत् । जन्मभं जन्मधिष्ण्येन नामधिष्ण्येन नामभम् । व्यत्यासेन यदा योज्यं दम्पत्योर्निधनप्रदम् । कुर्यात् षोडश कर्माणि जन्मराशौ बलान्विते । सर्वाण्यन्यानि कर्माणि नामराशौ बलान्विते" इति । बृहस्पतिरपि । "व्यवहारराजसेवासंग्रामग्रामकेषु । ज्ञातेऽपि जन्मराशौ फलमुक्तं नामराशिवशादिति" । नाम सकारागारान्जन्मनक्षत्रनाम स्वरोदयाभिहितशतपदचक्रान्तर्गतस्वीयनामादिवर्णवशात् ज्ञेयमिति । यत्तु अकारादिवर्णे वृषभादिनामकथ्यते तत्र यथासम्प्रदायं व्यवस्था" पी० धा० । नाडीभेदेऽष्टौ गुणाः प्रागुक्ताः ।

ज्यो० त० नाडीचक्रवेधस्तत्रविशेषो दर्शितो यथा स्वरोदये । "अश्विन्यादि लिखेच्चक्रं सर्पाकारं त्रिनाडिकम् । तत्र वेधवशात् ज्ञेयं विवाहादौ शुभाशुभम् । त्रिनाडीवेधनक्षत्रमश्विन्यादिक्रमोत्तरम् । हस्तेन्द्रमूलभ

मार्थम् । तथा हि । चतुर्घटिके नक्षत्रगण्डान्ते महान् दोषः, तदधिके स्वष्टघटिकात्मके मध्यमदोषः । ततोऽधिके चरणार्द्धाधिके स्वल्पदोषः । अतएवोक्तं सूर्य्यसिद्धान्ते “सार्पेन्द्रपौष्णधिष्ण्यानामन्त्याः पादा भसन्धयः । तदग्रभेषु साद्यांशो गण्डान्तं नाम कीर्त्त्यते । व्यतीपातत्रयं घोरं गण्डान्तत्रितयं तथा । एतद्भसन्धित्रितयं सर्व्वकर्म्मसु वर्जयेदिति” । अर्द्धांशचरणार्द्धं प्रहरं इत्यर्थः । दीपिकायाञ्च । “आद्ये मघाचतुर्भागे मूलपादाद्य एव च । रेवत्यन्त्यचतुर्भागे विवाहः प्राणनाशकः” इति । अथ लग्नगण्डान्तमुच्यते । कर्कोति कर्क प्रसिद्ध अलिर्वृश्चिक अण्डजो मीन एषामेषां लग्नानामन्त्येऽर्द्धघटिका, तथा सिंहमेषौ प्रसिद्धौ अश्वो धनुः एषां लग्नानामादिभूतार्द्धघटिका गण्डान्तं नाम । तथा च कर्कसिंहयोर्वृश्चिकधनुषोर्मीनमेषयोर्वा लग्नयोरन्तरालवर्त्तिन्येका घटिका लग्नगण्डान्तमशुभदमित्यर्थः । यदाह कश्यपः “सिंहकर्कटयोश्चापकीटयोर्मीनमेषयोः । गण्डान्तमन्तरालं स्याद्घटिका निधनप्रदेति” । यत्तु नारदेनोक्तम् “कुलीरसिंहयोः कीटचापयोर्मीनमेषयोः । गण्डान्तमन्तरालं स्याद् घटिकार्द्धं मृतिप्रदमिति” । वशिष्ठेनापि । “लग्नान्तरालं घटिकार्द्धमेतत्कुलीरहर्य्योरलिचापयोश्च । मीनाजयोः सर्व्वगुणान्निहन्ति लोभो यथा सर्व्वगुणान्नरस्येति” । तद्दोषाधिक्यसूचनार्थम् । अथ तिथिगण्डान्तमुच्यते । पूर्णान्त इति । पूर्णाः पञ्चमीदशमीपञ्चदश्यस्तासामन्ते घटिकैका, तथा नन्दाः प्रतिपत्षष्ठ्येकादश्यस्तासामादिभूतैका घटिका तिथिगण्डान्तं नाम । तथा च पञ्चमीषष्ठ्योर्दशम्येकादश्योः पञ्चदशीप्रतिपदोर्वा तिथ्योरन्तरालवर्त्ति घटीद्वयं तिथिगण्डान्तमशुभमित्यर्थः । यदाह नारदः “पूर्णानन्दाख्ययोस्तिथ्योः सन्धिर्नाडीद्वयं सदा । गण्डान्तं मृत्युदं जन्मयात्रोद्वाहव्रतादिषु” इति । यत्तु कश्यपेनोक्तम् “पूर्णानन्दाख्ययोस्तिथ्योः सन्धिर्नाडीचतुष्टयम् । उद्वाहजन्मयानेषु गण्डान्तं निधनप्रदमिति” । तद्दोषतारतम्यसूचनार्थम् । एवं गण्डान्तस्य सन्धिरुक्तः । तत्र तिथिलग्नगण्डान्तपरिहारः शाकल्यसंहितायाम् । “तथैव तिथिगण्डान्तं नाशयेन्दौ बलशालिनि । तथैव लग्नगण्डान्तं नास्ति जीवे बलान्विते” इति । अथात्र प्रसङ्गादन्येषामपि सन्धिरुच्यतेऽस्माभिः । यदाह गुरुः ‘घटिकाद्वयमृक्षान्ते मासान्ते तु दिनत्रयम् । वर्षान्ते वर्जयेत्पक्षं पक्षाद्दिनसप्तकमिति’ । तिथ्यादिसन्धिम-

प्याह वशिष्ठः “पक्षोऽब्दसन्धिस्त्रिदिनञ्च माससन्धिर्द्विनाड्यः खलु भद्वयोश्च । नाड्यर्द्धमत्र तिथिलग्नयोगसन्धिस्तदर्द्धं करणस्य सन्धिः” । वर्षेषु विशेषमाह स एव “सौराब्दान्ते त्यजेत्पक्षं चान्द्रे तु नवभं त्यजेत् । सावनान्तेऽष्टभं त्याज्यं नाक्षत्रे पौष्णभात् त्र्यहमिति” । अत्रापि विशेषमाह स एव । “अब्दाः स्युस्त्रिविधा जीवसौरचान्द्राह्वयाः सदा । तेषामादौ तथा चान्ते त्रिदिनं वर्जयेच्छुभे” इति । अयञ्च सर्व्वकार्य्यसाधारणो निषेधः अन्यथा मीनादित्ये विवाहप्रसङ्गाभावादेव वर्षान्तनिषेधस्य वैयर्थ्यापातात् । गुरुः “ऋक्षान्ते पुत्त्रनाशः स्यान्मासान्ते तु धनक्षयः । वर्षान्ते वर्गनाशः स्यात्तु ग्रहणात् सर्व्वनाशनमिति” । आवश्यककार्य्ये तु “नक्षत्रयोगतिथिसन्धिषु नाडिकैका तिथ्यष्टविप्रतिपलैः सहितोभयत्र । कर्कालिमीनतनुसन्धिषु दिक्पलानि त्याज्यानि येन विवरेषु च पञ्च पञ्चेति” वासनासिद्धं केशवार्कवाक्यमनुसर्त्तव्यम् । वासना च सिद्धान्तशिरोमणावभिहिता । “ग्रसितबुधिकलाभ्यचन्द्रभुक्त्येन्दुभान्वोर्गतिविवरकलाभिर्भूय एवाभिरेव । पृथगथ गतियुक्त्या नाडिकाः सन्धिराप्ता भतिथिकरणयोगानां फलं तत्र मिश्रमिति” । सन्धिफलमप्याह केशवार्कः । “सन्धौ सुरज्ञो शुभमेति कन्या मृतप्रजा वा यदि सन्धिसन्धिः । वदन्ति वात्स्या ऋतुनाविमूढां निशीथमध्यं दिनसन्धिमूढाम्” तत्राद्यं रात्रिमध्यन्दिनसन्धिः ‘मध्ये निशाह्नोर्घटीत्रयम्’ मु० चि० । इत्याद्ये प्रकरणेऽभिहितं । सन्धिसन्धिस्तु केशवार्केणोक्तः । “रवेर्भभेदेकाष्टहाधिकस्य यदंशवृन्दं खलु सायनस्य । तदत्र राशिद्वयभागतष्टं स्फुटं वसन्तादृतवो भवन्ति । तत्सन्धियोगाः स्फुटघटीसमाः स्युर्विसङ्ख्यायोह्निमुपायनीयाः । स सन्धिसन्धिः खलु यत्र शेषं शून्यं भवेदेष विशेषः पुरस्तः” इति मीनसङ्क्रान्तिमारभ्य वसन्तर्त्तुगणनेति पञ्चमस्तोलस्यैकाष्टाधिकस्येत्युक्तम् । गण्डान्तदोषपरिहारमाह वशिष्ठः “गण्डान्तदोषमखिलं हरतेऽभिजिदाख्यः । हन्ति यथा मृगव्याधः पक्षिसङ्घमिवाखिलम्” । तदेतद्दोषापवादाख्यस्य प्रकारस्य निखिलकल्याविवाहविषयं न जातकादौ” पी० धा० । अथ कर्त्तरीदोषः । “लग्नात् पापावृजुवक्रौ व्ययार्थस्थौ यदा तदा । कर्त्तरी नाम सा ज्ञेया मृत्युदारिद्र्यशोकदा” । मु० चि० “यदा पापग्रहौ लग्नाद्व्ययार्थस्थावृजुवक्रौ द्वादशस्य पापग्रहो मार्गी, द्वितीयस्य पापग्रहो वक्री स्यात्तदा कर्त्तरी नाम दोषः.

शारदोषाः प्रभवन्ति रात्रौ सूर्याश्मीह्यनुपमैश्चरणामिमिति"। गौड़ावदन्ति तन्मूलमपि मृग्यम्"। अथाभिजित्प्रमाणम्। वैश्वेति पी॰धा॰ 'अभिजिच्छब्दे २२७पृ॰ तद्दिष्टति॰'।

अथ पञ्चशलाकचक्रे विद्धनक्षत्राणि। "वेधोऽन्योन्यमसौ विरिञ्च्यभिजितोर्याम्यानुराधर्क्षयोर्विश्वेन्द्वोर्हरिपित्र्ययोर्ध्रुवहृतोर्हस्तोत्तराभाद्रयोः। स्वातीवारुणयोर्भवेच्चित्रविभादित्योस्तथोफान्त्ययोः खेटे तत्र गते तुरीयचरणाद्योर्वा तृतीयद्वयोः" मु॰चि॰।

"विरञ्चि रोहिणी रोहिण्यभिजितोर्मध्ये क्रूराक्रूरैः कृतो वेधोऽन्योन्यं परस्परं भवेत्। रोहिणीस्थे पापे अभिजिद्विद्धा अभिजित्स्थे रोहिणी विद्धेत्यर्थः। एवं सर्व्वत्र ऊफा उत्तरफल्गुनी। तल्लेखनप्रकारमाह नारदः। "तिर्य्यक् पञ्चोर्द्ध्वगाः पञ्च रेखे द्वे द्वे च कोणयोः। शम्भुकोणे द्वितीयेऽग्निधिष्ण्यं चक्रे च विन्यसेत्। भान्यतः साभिजिन्त्येकरेखागकोणे च विद्धभमिति"। चक्रे तस्मिन्नेकरेखास्थितेन तद्विद्धं खेचरेण प्रदिष्टम्। क्रूरैर्विद्धं सर्वधिष्ण्यं विवर्ज्यं सौम्यैर्विद्धं नाखिलं पाद एवेति"। सप्तविंशतिर्नक्षत्राणि चक्रे तत्र द्वयोर्द्वयोः परस्परवेधे चतुर्दश युग्मानि वक्तव्यानि तु कथमष्टावेवाभिहितानि उच्यते विवाहे ह्येकादशनक्षत्राणामेव प्राशस्त्याभिधानात् तद्वेधोपयोगीन्येतावन्त्येव युग्मानि सम्भवन्तीति तावतामेवाभिधानम्। अतएव दैवज्ञम॰ "रोहिण्यभिजितोर्मूलादित्ययोर्मृगवैश्वयोः। रेवत्युत्तरफाल्गुन्योर्मघाश्रवणयोर्भवेत्। हस्तोत्तराभाद्रपदोः स्वातीवारुणयोर्मिथः। अनुराधाभरण्योश्च वेधोऽयं पञ्चरेखजः" इति तत्रैवोक्तम्। वाराहविवाहपटले प्रत्येकवेधफलानि "रविवेधे वैधव्यं पुत्रनाशं करोति कुजवेधे। वन्ध्या पण्डितवेधे दीक्षाकरणं करोति गुरुवेधः। भृगुसुतवेधेऽपुत्रा दासी रविजातराहुसम्भूते" इति। पण्डितो बुधः दीक्षाकरणं प्रव्रज्याम्। चरणवेधमाह खेट इति। तत्र तस्मिन् नक्षत्रे विद्यमाने पापे सति यदि चतुर्थपादेऽस्ति तदा विद्धनक्षत्रस्य प्रथमपादे वेधः। यदि तृतीयपादे तदा द्वितीयचरणस्य वेधः एवं यदि द्वितीयपादस्थः तदा तृतीयपादे वेधः यदि प्रथमपादे तदा चतुर्थपादस्य वेध इत्यर्थः। यदाह वसिष्ठः 'अन्तोऽन्त्यपादमादिगो द्वितीयगस्तृतीयकम्। तृतीयगो द्वितीयकञ्चतुर्थगस्तु चादिमम्। भिनत्ति वेधकृद्ग्रहोऽन्यथान्यपादमादिशेत्"। एतद्यद्यपि शुभाशुभग्रहसाधारणं प्रतीयते तथापि सौम्यग्रहपरत्वं द्रष्टव्यम्। यतो वसिष्ठेनैव शार्ङ्गरदीकाभिधानावसरे "विषप्रदिग्धेन हतस्य पत्रिणा मृगस्य मांसं शुभदं सताहते। तथैव पादो न शुभोऽप्यविद्धपादाः शुभायेति पितामहेन" इत्याद्यङ्ग समाहितम्। 'पाद एव न शुभः शुभग्रहैर्विद्ध इत्यखिलशास्त्रसम्मतम्। क्रूरविद्धभयुतं न शोभनं शोभनेषु गदितं न पादतः" इति। नारदः। "पादमेव शुभैर्विद्धमशुभैश्चैव तद्भभम्" इति। कश्यपोऽपि। "क्रूरविद्धं युतं धिष्ण्यं क्रूराक्रान्तञ्च तद्भभम्। मणिहेममयं हर्म्यं भूताक्रान्तमिव त्यजेत्" इति तद्भभं सकलनक्षत्रम्। तथा च क्रूरग्रहविद्धे सम्पूर्णनक्षत्रत्यागः शुभविद्धे चरणत्याग इति सिद्धान्तः। तत्र [illegible]द्धे पञ्चशलाकावेध एव यदाह वसिष्ठः "पञ्चशलाकाचक्रे पाणिग्रहणे भवेद्वेधविधिरुक्तः। अन्यत्र शुभमित्यक्त सप्तशलाकाजमितरत्रेति"। श्रीपतिः 'वधूप्रवेशने दाने वरणे पाणिपीडने। वेधः पञ्चशलाकाख्योऽन्यत्र सप्तशलाकजः" इति पी॰धा॰। अत्र केचित् सप्तशलाकाचक्रवेधमाहुः। तत्र विद्धनक्षत्राणि यथा "शाक्रेज्ये, शतभाश्लिष्टे, जलशिवे, पौष्णार्य्यम्णे, वसुद्वीशे, वैश्वसुधांशुभे, हयभगे, सार्पानुराधे, तथा। हस्तोपान्तिमभे, विधातृविधिभे, मूलादिती त्वाष्ट्रभाऽजाङ्घ्री, याम्यमघे, तथानलहरिभे, विद्धे कुभट्टे यके" मु॰चि॰ "कुभट्टे खके सप्तशलाके चक्रे शाक्रेज्ये ज्येष्ठापुष्यनक्षत्रे मिथः क्रूराधिष्ठितत्वेन विद्धे ज्ञेये। एवं जलशिवे पूर्व्वाषाढार्द्रे विद्धे ज्ञेये एवं सर्व्वत्र। वैश्वसुधांशुभे उत्तराषाढामृगशिरसी, हयभगे अश्विनीपूर्व्वफाल्गुन्यौ, उपान्तिमभं उत्तराभाद्रपदा, अत्र मूलवाक्यं स्वरोदयस्य यज्ञोपवीतप्रकरणे लिखितम्। चक्रोद्धारो व्यवहारसमुच्चये "सप्त सप्त विनिपात्य रेखिकास्तिर्यगूर्द्ध्वमथ कृत्तिकादिकम्। लेखयेदभिजिता समन्वितं चैकरेखसगमेन विध्यते" दीपिका। "यस्या शशी सप्तशलाकभिन्नः पापैरपापैरथवा विवाहे। उद्वाहवस्त्रेण तु सा रुदन्ती श्मशानभूमिं रुदती प्रयाति"। तथा च भोज। "विद्धे सप्तशलाकाख्ये विधवा लग्नवाससा। पुनर्यात्यचिराचारी ससाग्नौ सखचन्द्रिकाम्"। वैधव्यस्य महत्त्वस्य ख्यातत्वाद्वैवर्त्तति तदुक्तं वराहेण "महत्त्वजदाहे फलमल्पसारकामिते वदेदिति"। अत्रापि तुल्यन्यायत्वात् क्रूरवेधे पूर्णं नक्षत्रमत्याज्यम् शुभग्रहवेधे पादस्त्याज्य इति ध्येयम्। पी॰धा॰। "सप्तशलाकाजमितरत्रेति" प्रागुक्तवचनात्

वादिमतेऽपि वक्रगामिना राहुणा सम्मुखमश्विनीरेवतीत्यादिगणनया विपरीतमुत्पन्नेन नत्वन्यथाश्रयितव्यमिति साम्प्रदायिकाः" पी॰धा॰ ।

अथ पातदोषः । "हर्षणवैधृतिसाध्यव्यतिपातकगण्डशूल-योगानाम् । अन्ते यद्गतमं पातेन निपातितन्तत् स्यात्" । मु॰चि॰ । "हर्षणेत्यादि षड्योगानामन्ते यच्चन्द्रनक्षत्रं भवेत् तत् पातेन चण्डीशचण्डायुधाख्येन निपातितं स्यात् यदाह त्रिविक्रमः "साध्यहर्षणशूलानि वैधृतिव्यतिपातकौ । षष्ठं गण्डस्य चान्ते स्यात्तत् पातेन निपातितमिति' । नारदेन प्रकारान्तरेणैतत्प्रकारसम्पादकः पातोऽभिहितः । "सूर्यभात्सार्पपित्र्यान्त्यत्वाष्ट्रमित्रोडुविष्णुभे । सङ्ख्यया दिनभे तावदाश्विभात्पातदुष्टभम्" । वसिष्ठेनापि 'रविभाद्दिहिपित्रमित्रत्वाष्ट्रभहरिपौष्णभेषु गणितेषु । आश्विनभादिन्दुयुतौ तावति वै पतति गणनया पातः । अयमपि पातदोषश्चण्डीशचण्डायुधाख्यो ज्ञेयः । अखिलेषु मङ्गलेष्वपि वर्ज्यो यस्माद्विनाशदः कर्त्तुरिति" यद्यप्यत्र हर्षणादीनामुपादानं नास्ति तथाप्यभिहितार्क्षादिनक्षत्रसाहित्येन पाताभिधानात्तत्तुल्यसङ्ख्याकेष्वेव योगेषु पातसम्भवो जायते इति मत्वा हर्षणादीनामनुक्तिः । एवञ्च प्रागुक्तेषु दशसु विरुद्धयोगेषु लत्तापातयोः पृथक् कीर्त्तनम्' । ज्यो॰त॰ रघुनन्दनेन "षष्ठं द्वादशपूर्णरश्मिरवनीसूनुस्तृतीयं गुरुः षष्ठं चाष्टममर्कजस्तु पुरतोऽहन्ति स्फुटं लत्तया' इत्यादि लत्तामाघातवाक्यमुक्त्वा "लत्तापातोऽयमिति, यदुक्तं तच्चिन्त्यमूलम् तयोर्विभिन्नदोषत्वात् अन्यथा प्रागुक्तव्यवहारोच्चयवाक्योक्तदशसंख्यानुपपत्तेः तद्वाक्ये पातशब्दस्याश्रवणाच्च ।

अथ क्रान्तिसाम्यम् "पञ्चास्याजौ गोमृगौ तौलिकुम्भौ कन्यामीनौ कर्क्यली चापयुग्मे । तत्रान्योन्यं चन्द्रभान्वोर्निरुक्तं क्रान्तेः साम्यं नो शुभं मङ्गलेषु" मु॰चि॰ । "पञ्चास्याजौ सिंहमेषौ अन्ये प्रसिद्धाः । एषु राशियुग्मेषु चन्द्रभान्वोः पाठक्रमेण व्युत्क्रमेण वा स्थितयोः क्रान्तिसाम्यमिदं मङ्गलेषु नो शुभं स्यात् । अत्र पञ्चास्याजाविति वक्ष्यमाणोदाहरणदिक्प्रदर्शनार्थत्वात् सर्वथा सूर्याचन्द्रमसोः सायनयोर्योगे षड्राशिमिते द्वादशराशिमिते वा विद्यमानत्वेन क्रान्तिसाम्यस्य सम्भवात् । अत सम्प्रतिशाकस्थानांशानन्दैतान्न एव षड्राशियोगा द्वादशराशियोगा वा सम्भवन्तीति चेन्न राश्यन्तानामधिकानामपि सम्भवात् प्रत्यग-

कलाविकलान्तस्थितत्वेनानन्तभेदसम्भवाच्चातः प्रागुक्तं व्याख्यानं ज्यायः । क्रान्तिसाम्यस्य च महापात इति नाम । एतस्य निन्द्यतामाह वशिष्ठः "दोषो महापात इति प्रसिद्धः सर्वेष्वतोऽहनि वधू वरं च । न रश्मिजं लग्नगुणास्तगताः शुभान्वशा नाऽपनितोऽपवादम्" । अयमिर्वर्ज्यम् । नारदोऽपि "यस्मिन् दिने महापातस्तद्दिनं वर्जयेत् शुभे" इति अतएव पतनमात्रपातः सकलशुभकर्मणामित्यस्पर्यतापि । स च स्पष्टः सोमसिद्धान्ते । "एकभानां विनाशाय भद्भिन्न पतत्ययम् । व्यतीपातः प्रसिद्धोऽत्र संज्ञाभेदेन वैधृतिः" इति । महापातशब्दस्य रूढिस्तु रवीन्दुक्रान्तिसाम्य एव नत्वन्येषां ग्रहाणां क्रान्तिसाम्ये । यथा जलजशब्दस्य रूढिः कमले न तु भेकादौ । क्रान्तिर्नाम ग्रहाणां दक्षिणोत्तरवृत्ते गमनम् । या च सूर्यस्य क्रान्तिः सा यदा चन्द्रक्रान्त्या तुल्या स्यात् स पातमध्यकालः । तत्रोत्तरगतयो रवीन्द्वोः क्रान्त्योः समानत्वं भुजसाम्ये सति भवति । भुजोनाम 'त्र्यूनं भुजः स्यात् त्र्यधिकेन हीनं भार्द्धञ्च भार्द्धादधिकं विभार्द्धम् । भवाधिकेनोनितमर्कभं चेति" लक्षणलक्षितं तत्साम्यं तु सूर्याचन्द्रमसोर्योगे षड्राशितुल्ये द्वादशराशितुल्ये वा सति भवति । अतएव ग्रन्थकृता तादृशायोगा एव पठिताः । "विनायपातेन्दुभिरायनांशकैर्युतो रविः शीतकरश्च दृश्यते । समापमत्वे व्यतिपातवैधृताह्वयास्तदैक्ये रसभेऽर्कभे क्रमात्" इति भास्कराचार्य्योक्तिमङ्गीकृत्य सामान्यतः क्रान्तिसाम्यदिवसस्य शीघ्रोपस्थित्यर्थं भुजसाम्यप्रतिपादनम् । तदुक्तं वसिष्ठेन स्वसिद्धान्ते 'चक्रे चक्रार्द्धतुल्ये वा किञ्चिन्न्यूनाधिकेऽपि वा । सायनार्केन्दुयोगे चेत्तदा पातस्य सम्भवः । शुभमङ्गलकर्माणि लोकानाञ्च विनाशयेत् । स्नानदानादिकं तत्र जपश्राद्धादिकाः क्रियाः । कदापि कुरुते मर्त्यः सुमहत् फलमश्नुते । सूर्यपर्वे कुरुक्षेत्रे कोटिसङ्ख्यगुणं फलम् । तत्फलं लभते पाते स्नानश्राद्धजपादिना । उत्पत्तौ लक्षगुणितं भ्रमणे कोटिसङ्गुणम् । पातेऽप्यर्बुदसङ्ख्यं च पतिते दत्तमक्षयमिति' । तथा सूर्यसिद्धान्तेऽपि । "एकायनगतौ स्यातां सूर्याचन्द्रमसौ यदा । तद्युतौ मण्डले क्रान्त्योस्तुल्यत्वे वैधृताभिधः । विपरीतायनगतौ चन्द्रार्कौ क्रान्तिलिप्तिकाः । समास्तदा व्यतीपातो भगणार्द्धे तयोर्युतौ । तुल्यांशुजालसम्पर्कात्तयोस्तु प्रवहाहतः । तद्दृक्क्रोधभवो वह्निर्लोकाभावाय जायते" इति । अतएवानन्तरोक्तक्रान्तिसाम्ये महापातदोषो

भाग, शुभदो न चान्ये। द्विभर्तृका मेषनवांशके स्यात् वृषांशके सा पशुशीलयुक्ता। धनान्विता पुत्रवती तृतीये कुलीरकांशे कुलटाप्यजस्रम्। सिंहांशके सा पितृमन्दिरस्था कन्यांशके वित्तयुता सुशीला। तुलांशके सर्व्वगुणास्पदा सा कीटांशके निःस्वतरा विशीला। चापांशकाद्ये भगिनी द्वितीये भागेऽन्यसक्ता मलिना गदाढ्या। निःस्वा मृगांशे विगुणा घटांशे विभर्तृका योगरता विशीला। मीनांशके भर्तृसुतार्थहीना शुभग्रहैर्युक्तनिरीक्षिते वा। तस्मात्तदंशोत्तमवांशकेषु कुर्य्याद्विवाहङ्गुणषड्वर्गे। नवांशदोष सकलङ्गुणौघं लग्नोत्थसौम्यग्रहसम्भवश्च। बुध निहन्त्येव हकोऽजसक्तु षड्वर्गज सौम्यविशुद्धराशाम्"। पशु-शीलयुक्ता पशुचारपरा गदोरोग एते एव च नवांशा सकलमुनिभिरुक्ता "तुलामिथुनकन्यांशा धनुराद्यार्द्धसंयुता। एते नवांशा शुभदा यदि नान्त्यांशकाः क्वचिदिति" नारदोक्तेः शौनकस्तु मीनांशकमपि शुभमाह "सुदती सौभाग्यवती प्रहसितवदना च मीनांशे" इति। तत्र निषेधस्य तुल्यबलत्वात्षोडशीग्रहणाग्रहणव-द्विकल्प इत्याहुः तन्न एकबाधेनोपपत्तावनेकबाधोन-न्याय्य इति बहुमुनिवचनप्रामाण्यात् मीनांशत्याग एवो-चितो न त्वेकमुनिवचनानुरोधात्पाक्षिकोविकल्पविधिस्त-स्याष्टदोषग्रस्तत्वात्। का तर्हि शौनकवाक्यस्य गतिरिति चेत् गुणबहुदोषलघ्वौ सर्वान्तरासम्भवे मीनांशको निषि-द्धोऽपिग्राह्य इत्येव विषया गतिर्युक्ता" पी०धा०।

"अन्त्यनवांशे न च परिणेया काचन वर्गोत्तममिह हित्वा। नो चरलग्ने चरनवयोगे तौलिमृगस्थे शशभृति कुर्य्यात्" मु०चि०।" विहितनवांशेष्वपि यथा मेषलग्ने धनुर्नवांशोऽन्तिम इत्येव विधिविषये लग्नान्तिमनवांशे काचन कन्या न परिणेया न विवाह्या। परन्तु वर्गोत्तम नवांशं हित्वा तत्र विवाह उचित एव। यथा मिथुनलग्ने मिथुनांशोऽन्तिमोऽपि वर्गोत्तम। यदाह कश्यप "अन्त्यांशका अपि श्रेष्ठा यदि वर्गोत्तमाह्वया। अनुक्तांशास्तु न ग्राह्या यतस्ते कुनवांशकाः" इति। वशिष्ठोऽपि "वर्गोत्तम विनान्त्यांशे विवाहो न शुभप्रद। वर्गोत्तमश्चेदन्त्यांश पुत्रपौत्रादिवर्द्धन" इति। अन्यच्च नो चरलग्ने इति। तौलिमृगस्थे तुलामकरस्थे शशभृति चन्द्रे सति चरलग्ने विहितचरनवयोगे नो कुर्य्यात्। यथा मेषलग्ने तुलांशे उक्तञ्च केशवार्केण "चरभ चरवेऽस्तगतनृलग्नेनृमृगगता धरये मृगतुलस्थेऽपि। युवतिरत्र भवेत् कृतकौतुका मदन-मत्स्यमपत्यजनीनृपुरुषीति"। अनघो जीर्णोभर्त्ता तस्य त्यजने त्यागे उन्मुखी परपुरुषरता स्यादित्यर्थः" पी०धा०।

अथ लग्नादिस्थ ग्रहदोष "व्यये शनिः खेऽवनिजस्तृतीये भृगुस्तनौ चन्द्रमसा न शस्ता। लग्नेट् कविग्लौश्च रिपौ मृतौ ग्लौर्लग्नेट्शुभारांश्च मदे च सर्वे" मु०चि०।

"व्यये द्वादशस्थाने स्थितः शनिर्न शस्तः "सोम-पुत्रेऽपि हि जाता द्वादशगे मद्यपा कुरुते" इति शौनकोक्तेः। अत्र रविसुते इत्यनुवर्त्तते। "खे दशमेऽवनिजो मङ्गलो न शस्त। "शाकिनी व्योम्नि वक्रे" इति केशवार्कोक्तेः। तृतीयो भृगु शुक्र न शस्त "धन्या धनगे शुक्रे तपस्त्वं प्राप्नुयान्नारी। दुश्चिक्यगते तु कन्या लावण्याढ्यं कनीयसा-व्रजते" इति शौनकोक्तेः। तनौ लग्ने चन्द्रः सर्वाः पापग्रहाश्च न शस्ताः। "लग्नस्थेऽर्के कन्या विधवा संवत्सरेऽष्टमे भवति। लग्नस्थो हिम-रश्मिर्मृत्युं कुर्य्यात् स्वयोदये मासे। भौमः सद्यो विधवा लग्नस्थोऽब्दाच्च सौम्यग्रहयोगात्। कामयति नीचवर्गान् लग्नस्थे रविसुते बहून् पुरुषान्। शनिवद्विधुन्तुदस्य तु विज्ञेय सद्यादिति पितृरिति" शौनकोक्तेः। लग्नेट् लग्नस्वामी, कविः शुक्र ग्लौश्चन्द्रश्च रिपौ षष्ठस्थाने न शस्ता। "षष्ठे शुक्रे सौम्यगे च मृत्यु, षष्ठगे लग्नपतौ च मृत्युरिति" ज्योतिर्निबन्धोक्तेः। "भृगु-षट्काख्यो दोषोलग्नात् षष्ठगते सिते। उच्चगे शुभ-संयुक्ते तल्लग्न सर्वदा त्यजेदिति" नारदोक्तेः। "अब्द-चतुष्कान् मृत्युर्दम्पत्यो षष्ठगे चन्द्रे" इति शौनकोक्तेः। ग्लौश्चन्द्र लग्नेट् शुभाश्चन्द्रबुधगुरुशुक्रा आरोभौम-श्चैते मृतावष्टमस्थाने न शस्ता: "मासत्रयेण विधवां निधन-गश्चन्द्रमा कुरुते"। मासत्रयेण कन्या निधनस्थे याति पञ्च-त्वम्"। बुधस्याप्यनुवर्त्तते। "दम्पत्योर्निधनस्थ सप्तदशाब्दा-द्वियोगदो जीव। मृत्युं नयति भृगुर्निधनस्थ सप्त-भिर्वर्षैरिति" शौनकोक्तेः। नारद "कुजाष्टमो महा-दोषो लग्नादष्टमगे कुजे। शुभत्रययुत लग्न त्यजेत् तत्तुङ्गो यदि"। अत्र सम्मति प्रागुक्ता। लग्नेट् च पुन सर्वे सूर्य्यादयो ग्रहा मदे सप्तमस्थाने न शस्ता निषिद्धा। "सर्वे जामित्रसंस्थाश्छिद्रन्ति मरणमिति" वशिष्ठोक्तेः। कश्यपोऽपि "सप्तम्यामगा सर्वे ग्रहा कुर्वन्ति शोभनम्। दम्पत्योर्मरणं यत् स्यादेकस्य च न च द्वय" इति अर्थादन्येषु स्थानेषु ग्रहा समी-चीनास्तत्र केषुचित् स्थानेषु शुभा एव केषुचिन्मध्यमा

एवेत्येतदपि वक्ष्यति । अतोऽसमर्थमतिवं शिष्य त्रिषु क्रमेण निषिद्धस्थानान्युक्तानि । "त्याज्या लग्नेऽब्धयो मन्दात्, षष्ठे शुक्रेन्दुलग्नपाः । रन्ध्रे चन्द्रादयः पञ्च सर्वेऽस्ते ऽब्जगुरू समाविति" । (मन्दादब्धय चत्वारो मन्दरविचन्द्रकुजा इत्यर्थः) । अब्जगुर्वोः समत्वं शौनकमतेन तादृशविरुद्धफलाभावात् । यदाह "कन्यास्तिष्ठो जनयति सापत्न्यं चैव सप्तमे शशिनि" । "शोकपरितोषिताङ्करोति पत्युः कलत्रगो देवपूज्य इति" । गुरुरित्यनुवर्त्तते अत्र वचनद्वयप्रामाण्याद्विकल्पः । यवनेश्वरोक्तं "जामित्रगो यदि भवेदुशना बुधो वा शीर्षोदयानुपगतश्च सितचन्द्रपक्षे । कन्याविवाहसमये परिहृत्य दोषान् सौभाग्यपुत्रसहिता वनिता करोतीति" तच्चन्द्रजामित्रविषयम् । तथा च भुजबलः "स्त्रीणां विवाहे तु बलैरुपेता पत्युः प्रणाशं विहगा विदध्युः । त्यक्त्वा बुधं देवगुरुं शुक्रं च निशाकरादस्तगृहप्रपन्नाः" इति । अतएव दीपिका "रविमन्दकुजाक्रान्तं मृगाङ्कात् सप्तमं त्यजेत् । विवाहयात्राचूडासु गृहकर्म्मप्रवेशने" इति पी० धा०

अथ लग्नात स्थानविशेषे ग्रहभेदानां शस्तता "त्र्यायाष्टषट्सु रविकेतुतमोऽर्कपुत्रास्त्र्यायारिगः क्षितिसुतो द्विगुणायगोऽब्जः । सप्तव्ययाष्टरहितौ सगुरू सितोऽष्टत्रिद्व्यूनषड्व्ययगृहान् परिहृत्य शस्तः" मु० चि० ।

"तृतीयैकादशाष्टमषष्ठस्थानेषु रविकेतुतमोऽर्कपुत्राः शस्ताः शुभफलदातारः । यदाह शौनकः "बन्धुजनेभ्यः पूजां विवाहदिवसे सहजगे त्वर्के । प्राप्नोति धनं षष्ठे त्र्यब्दादूर्द्ध्वं सुतांश्चैव । दम्पत्योः सह मरणं निधनस्थेऽर्केऽष्टमप्रत्या । कारयति धनविवृद्धिं त्र्यब्दादूर्द्ध्वं तथायगः सवितेति" (रवेः) धनधान्यसुतयुक्तां पञ्चमवत्सरात्तृतीयस्थः । षष्ठः षड्भिर्मासैरसपत्नीं कन्यकां कुरुते । निधनगतार्किः कुर्य्यादामरणादार्तवियुक्ताम् । आयगतार्किः कन्यां त्रिवर्गयोग्यां करोति षण्मासादिति" (शनेः) अत्र राहुकेत्वोः फलं शनिवदेवेति "स्वर्भानोः शास्य शिखिनि वा लग्नभावादिसंस्थे" इति वसिष्ठोक्तेः, त्र्यायारिगः तृतीयैकादशषष्ठस्थानस्थितः क्षितिसुतो भौमः शस्तः । "सहजस्थो भूमिसुतः सौभाग्यकरस्तु यावदायुष्यम् । सवत्सरेण विपुलं धनागमं शत्रुसङ्गस्तु । मणिकाञ्चनरत्नाढ्यामेकादशगः कुजोऽष्टदृष्टकेन" इति शौनकोक्तेः । अब्जश्चन्द्रो द्विगुणायगो द्वितीयतृतीयैकादशस्थः शस्तः । "अब्दाद्धनसंयुक्तां करोति चन्द्रो धने भार्य्याम् । चन्द्रस्तृतीयराशौ सौभाग्यकरस्तु यावदायुष्यम् । लग्नादेकादशगः कन्यामिन्दुर्धनान्वितां कुरुते" इति शौनकोक्तेः । सगुरुः बुधबृहस्पती सप्तमद्वादशाष्टमातिरिक्तस्थानस्थितौ शस्तौ । उक्तस्थानानाम् अशुभत्वादन्येषां शुभदातृत्वात् । यदाह वसिष्ठः । "प्रीतिर्वृद्धिः सगुणनिरतिर्बन्धुपूजा सुताप्तिः सद्वैपक्ष्यं तनयरहितं त्वन्यथा भर्तृनाशः । धर्मे वृद्धिर्भवति धरणीलब्धिरत्नेव वृद्धिर्हानिः स्त्रीणां क्रिमकरगुने लग्नभावादिसंस्थे" इति । "अर्थाप्तिर्भवति सुयशः प्रीतिरन्योन्यहर्षः इष्टप्राप्तिर्बहुविधमयं चान्त्रपाणां विरक्तिः । पापासक्तिः सुकृतविरतिर्भूरिलाभः सुरेज्ये स्त्रीणां सौख्यं रिपुहतभयं लग्नभावादिसंस्थे" इति अत्र शुभदैव अत्र शुभावहो शिखिविश्वमर । क्लीवत्वं त्यागम् केचिद्बहुविधभयमिति" पठन्ति तत्प्रकारे मतकारस्त्वान्ते "उभयकुलानन्दकरीं करोति न चिराद्गुरुः षष्ठे" इति षष्ठस्थानस्थितगुरौ शौनकेनापि सम्यक्फलाभिधानात् । सित इति अष्टमतृतीयसप्तषड्द्वादशस्थानानि परिहृत्य त्यक्त्वान्येषु स्थानेषु सितः शुक्रः शस्तः । तदुक्तं वसिष्ठेन "भोगप्राप्तिर्विविधविभवं स्वैरवृत्तिर्मनोज्ञा द्युम्नाधिक्यं भवति निधनं सर्वनाशोऽवसत्त्वम् । तथ्यप्रीतिर्बहुविधगुणा सर्वसम्पत्सपुत्रिरस्तं स्त्रीणामुपगमसितः तथा लग्नभावादिसंस्थे" इति द्युम्नं द्रविणम् । अवसत्त्वं दरिद्रता । अस्वं दारिद्र्यम् । वसिष्ठः "मृत्युर्नैस्वं बहुविधधनं भ्रातृहानिः प्रजानां व्याधिः सौख्यं बहुविधमतोऽमर्षहानिश्चिरायुः । श्रेयोहानिर्भवति हृदयव्याधिरर्थागमश्च भानौ स्त्रीणामतिशयरुजा लग्नभावादिसंस्थे ।(रवेः)नाशः सम्पद्बहुविधयशोबन्धुवृद्धिः प्रजाप्तिः शस्त्रानुमृत्युर्भवति न चिराद्दीर्घसापत्न्यबाधा । प्रव्रज्या त्वं दुहितृजननं वर्द्धनं भोगभाक्त्वं दास्यं स्त्रीणां तुहिनकिरणे लग्नभावादिसंस्थे (इन्दोः)। अत्र चतुर्थचन्द्रस्य प्रजाप्तिः फलमभिहितम् श्रीपतिनापि "सुखे तु कथितो बन्धुक्षयः कैश्चनेष्वेकीयमतमनुसृत्योक्तमिति चन्द्रलता चतुर्थस्थानस्य मध्यमत्वमङ्गीकृतम् । "वधू मधुरवियुक्ता चतुर्थस्य शशी स्याद्दादिति" शौनकः । विरुद्धार्थयोः का गतिरिति चेत् । बालचन्द्रविषयमशुभफलम् तद्भिन्नचन्द्रविषयं शुभफलम् । उक्तञ्च केशवार्केण "बालोऽब्जः सिद्धिश्च यानि लग्नाच्चतुर्थस्य सृजति सुखे सुवासिनीत्वमिति" वसिष्ठः "मृत्युः शोको बहुविधधनं भ्रातृवैरं कुमुद्वतिस्त्रीप्राप्तिर्भवति मरणस्त्रीभयोर्वैशनाशः। स्त्रीणां हेतो व्यसनमि

ति । तत्रापि पूर्व्ववद्वत्तपातेन घटिकात्मकः कालो मर्द्द-खण्डं भवति । सोऽपि स्थूल" प्रमिताक्षरा ।

इदानीं घटीकरणमाह । "स्थित्यर्धमाढीगुणिता खभुक्ति षष्ट्या ६० हृता तद्रहितौ युतौ च । तत्ये-न्दुपातायनखच्चराभ्यां स्थित्यर्धमाद्यं स्फुटमन्तिमं च" । स्पष्टार्थम् । अत्र स्पर्शकालमयनांशेन कोटिफलेन कर्म कार्य्यम् । एवं स्थित्यर्द्धमसकृत् स्फुटं भवतीति सुगमा वासना" प्रमिताक्षरा ।

"इदानीमेवं विमर्दार्धमपीत्यतिदिशति । "एवं विम-र्दार्द्धं फलोनयुक्तसपातचन्द्रोद्भवसायकाभ्याम् । पृथक् पृथक् पूर्ववदेव सिद्धे स्फुटे स्त आद्यान्त्यविमर्दखण्डे" शि० स्पष्टार्थम् । इदानीमिष्टकाले भुजानयनमाह ।

"स्पर्शाग्रत, स्वागिकमिष्टमत्र प्राङ्मोक्षतो मौक्षिकमत्र पूर्वे । पीठेन निघ्ना स्थितिखण्डकेन भुक्त्यन्तरांशा भुज इष्टकाले । एवं विमर्दार्द्धहृताः पृथक् ते संमीलनोन्मीलन-योर्भुजौ स्तः" शि० । पूर्वार्द्धं स्पष्टार्थम् । इष्टोनेन स्थिति-खण्डेन गुणिता भुक्त्यन्तरभागाः कलात्मको भुजो भवति । एवं त एव भुक्त्यन्तरांशा प्रथमविमर्दार्द्धगुणाः संमी-लनभुजो भवति । द्वितीयगुणास्तदोन्मीलनम् । अत्रो-पपत्तिः । इष्टकाले यत्र ग्राहकबिम्बमध्यचिह्नं यत्र च मध्यग्रासचिह्नं तयोरन्तरं ग्राहकमार्गखण्डं भुज इहोच्यते । तस्यानयनं त्रैराशिकेन । यदि घटीषष्ट्या भुक्त्यन्तरकला लभ्यन्ते तदेष्टोनस्थितिदलेन किमिति । अत्र गुणकभाजकयोः षष्ट्यापवर्त्तने कृते जाता भुक्त्य-न्तरांशा गुणकस्थाने । हरस्थाने रूपम् । एवं विमर्दा-र्धाभ्यां विमर्दभुजौ" प्रमि०

इदानीं कर्णार्थमाह । "कोटिश तत्कालशरोऽथ कोटीदोर्वर्गयोगस्य पदं श्रुतिः स्यात् । मानैक्यखण्डं श्रुतिवर्जितं सद्ग्रासप्रमाणं भवतीष्टकाले" शि० । 'इष्टकाले यावान् शरः सा तत्र कोटिः' । कोटिभुजवर्ग-योगपदं कर्णः । कर्णोनं मानैक्यार्धमिष्टकाले ग्रासप्रमाणं भवति । अत्रोपपत्तिः । भुजोऽत्र क्रान्तिवृत्ते प्राच्यपरस्तत्र याम्योत्तरः शरोऽत्र कोटिः । तद्वर्गयोगपदं कर्णं इत्युचितम् । कर्णो नाम बिम्बमध्ययोरन्तरम् । स या-वता मानैक्यार्धादूनो भवति तावद्ग्राहकबिम्बं ग्राह्ये प्रविष्टम् । अतस्तावानिष्टकाले ग्रास इत्युपपन्नम्" प्रमि० ।

इदानीं ग्रासात् तत्कालज्ञानमाह । "ग्रासोनमानैक्यद-लस्य वर्गाद्विक्षेपकृत्या रहिताद् पदं यत् । गत्यन्तरांशैर्वि-हृतं फलेन स्थित्यर्धकं स्याद्भवतीष्टकालः । तत्कालेनाग्रेण मुहुः स्फुटोऽग्रे ग्रस्येऽन्यथा वा परिलेखतोऽयम्" शि० । इष्टग्रासेनोनस्य मानैक्यार्धस्य वर्गात् तत्कालविक्षेपवर्गेणो-नान्मूलं गत्यन्तरांशैर्भजेत् । फलेन स्पर्शस्थित्यर्धं हीनं यदि स्पार्शिको ग्रासः । यदि मौक्षिकस्तदा मौक्षिकं हीनम् । शेषमिष्टकालो भवति । स च स्थूलः । अथ तत्कालश-रेण य आनीयते स सूक्ष्मासन्नः । एवमसकृत् स्फुटः स्यात् । यद्वाभीष्टकालमग्रे परिलेखादेव वक्ष्ये । अत्रोपपत्तिर्विलोमगणितेन, ग्रासोनमानैक्यार्द्धं कर्णस्तत्का-लशरः कोटिस्तद्वर्गान्तरपदं भुजः । स गत्यन्तरांशैर्विहृत-फलमिष्टकालस्य मध्यग्रहस्य च यावदन्तरमतः खस्थित्य-र्धाच्छोधितमित्युपपन्नम्" प्रमि० ।

इदानीं स्पर्शादिव्यवस्थितिमाह । "मध्यग्रहः पर्वविरामकाले प्राक् प्रग्रहोऽस्मात् परतश्च मुक्तिः । स्थित्यर्द्धमाद्योऽथ मर्द्दजात संमीलनोन्मीलनके तथैव" शि० । स्पष्टार्थम् । इदानीं वलनानयनमाह । "खाङ्का ९० हत स्वद्युदलेन भक्ताः स्पर्शादिकालोत्थनतं लवाः स्युः । तेषां क्रमज्या पलकर्णभक्ता निघ्ना द्यु-मौर्व्या यदवाप्तचापम् । प्रजायते भागपूर्वे नते क्रमादुदग्-यमागं वलनं पलोत्थम्" शि० ।"यस्मिन् काले वलनं साध्यं तस्मिन् काले या नतघटिकास्ता खाङ्का ९०हताश्चन्द्रमहे रात्र्यर्द्धेन भक्ता अर्कग्रहे दिनार्द्धेन, फलमंशा स्युः । तेषां क्रमज्याऽक्षज्यया गुणया द्युजीवया भक्ता फलस्य चापं पलोत्थं वलनं जायते । प्राङ्नते सौम्यं, पश्चि-मनते याम्यम् । वलनानयनमुत्क्रमजाया कैश्चित् कृतं तच्चिरासार्थमत्र क्रमज्येति विशेषणम् । न पुनरेतद्विशेष-णवत्त्वादन्यत्र सर्वत्रोत्क्रमज्या प्राप्नुवन्ति" प्रमि० ।

इदानीमायनं वलनमाह । "युतायनांशोडुप-कोटिशिञ्जिनी जिनांशमौर्व्या १३९७ गुणिता विभा-जिता । द्युजीवया लब्धफलस्य कार्मुकं भवेच्च याम्याया-नदिक्कमायनम्" शि० । "ग्रहस्य सायनांशस्य कोटिज्या जिनांशज्यया १३९७गुणया द्युज्यया भक्ता फलस्य चाप-मायनं वलनं भवति । तच्च यस्मिन्नयने ग्रहो वर्त्तते तद्दिक् भवति । अत्रोपपत्तिर्गोले" प्रमि० ।

इदानीं स्फुटवलनार्थमाह । "तयोः पलोत्थायनयोः समान्ययोर्युतेर्वियुक्तेस्तु विभिन्नकाष्ठयोः । या शिञ्जिनी मानदलैक्यनिघ्नी त्रिज्योद्धृता तद्वलनं स्फुटं स्यात् । यैरुत्क्रमज्याविधिनैतदुक्तं दिव्यक्ष ते गोलगतिं विदन्ति" शि० ।

"तयो पलोद्भवायनयोर्वलनचापयो सजातयोर्योगो भिन्नजातयोरन्तरं तस्य ज्या मानैक्यार्द्धगुणा त्रिज्यया भक्ता फलं स्फुटा वलनज्या भवति। यैरिह वलनद्वयस्योत्क्रमज्याविधिरोक्तं सम्यङ् न ते गोलगतिं विदन्तीति गोलं परिभाव्य दिशा वलनस्योत्क्रमज्ययोपपन्नय. क्रमज्ययेति तैः सम्यक् क्वापि नावलोकितमित्यर्थः। अत्रोपपत्तिर्गोले सविस्तरा। इह सममण्डलं दृष्टुः प्राची सममण्डलादिष्टे नते काले विषुवन्मण्डलप्राची यावता यतश्चलिता तावत् तद्दिक् पलोद्भवं वलनं ज्ञेयम्। अथ विषुवन्मण्डलात् क्रान्तिवृत्तप्राची यावता यतश्चलिता तदायनं तद्दिक् ज्ञेयम्। तयोर्योगवियोगात् स्फुटमिति। सममण्डलात् क्रान्तिमण्डलप्राची यावता यतश्चलिता तत् स्फुटमित्यर्थः। एवं त्रिज्यापरिणतं तदनुपातेन मानैक्यार्द्धपरिणतं कृतम्। यतोऽत्र मानैक्यार्द्धवृत्ते वलनं देयम्" प्रमि०। इदानीमङ्गुलिप्तार्थमाह।
"त्रिज्योद्धृतत्वस्यमयोत्थयष्टुः सार्द्धद्वि२,३० युक्तोऽङ्गुलिप्तिकाः स्युः। स्थूलाः सुखार्थं द्युदलेन भक्तं खखमतं सार्द्धयमा२,३०न्वितं वा" शि०। "मध्यग्रहणकाले ग्रहस्य त्रिप्रश्नोक्ता यष्टुः साध्यः। स यष्टुस्त्रिज्यया भक्तः। फलं सार्द्धद्वियुक्तमङ्गुलिप्तिका भवन्ति। अथवोन्नतघटिका ग्रहस्य दिनार्द्धघटीभिर्भक्ताः फलं सार्द्धद्वियुक्तं सुखार्थं स्थूला अङ्गुलिप्तिका भवन्ति। अत्रोपपत्तिः। गगनमध्यस्य यद्ग्रहबिम्बं तस्य निखिलकरनिकरपिहितप्रभित्वात् किञ्चित् स्वल्पं दृश्यते। अथोदये क्षितिजस्थधूव्यवहिततत्करनिकरविशालमिव प्रतिभाति। तत् स्वल्पत्वं विशालत्वं चोपलब्ध्या युक्तिमद्भिः कल्पितम्। तत्र गगनमध्ये सार्द्धत्रिकल ३,३०। उदये सार्द्धद्विकल २,३० अङ्गुलं कल्पितम्। अथान्तरेऽनुपातेन। यदि त्रिज्यातुल्ये यष्ट्यङ्गुलिप्तान्तरं रूपं १ लभ्यते तदेष्टेन किमिति फलं सार्द्धद्वियुक्तमङ्गुलिप्तिकाः स्युरित्युपपन्नम्। अथवा स्थूलोऽनुपातः। यदा दिनार्द्धतुल्याभिरुन्नतघटिकाभी रूपं लभ्यते तदेष्टाभिः किमिति" प्रमि०।

इदानीं वलनादीनामङ्गुलीकरणमाह "प्राभिर्विभक्ता वलनेषुबिम्बदोःक्षमलिप्ताः स्युरथाङ्गुलानि। शरा यथाशा ग्रहणे रवींदोश्चन्द्रग्रहे व्यस्तदिशस्तु वेद्याः" शि०। आभिरङ्गुलकलाभिर्वलनविक्षेपबिम्बक्षमभुजकोटिकर्णा भाज्या। फलान्यङ्गुलानि भवन्ति। इह रविग्रहणे शरा यथागतदिश एव। चन्द्रग्रहणे तु व्यस्तदिशो ज्ञातव्याः। अत्रोपपत्तिः अङ्गुलकरणे तु कथितैव। शराग्रे हि चन्द्रः, शरमूले भूभाऽतश्चन्द्रविक्षेपादन्यदिशि भूभा वर्त्तते। तत्स्थानज्ञानार्थं चन्द्रग्रहणे व्यस्तदिश शरा वेद्या इत्युपपन्नम्" प्रमि०। इदानीं परिलेखमाह।
"ग्राह्यार्धसूत्रेण विधाय वृत्तं मानैक्यखण्डेन च साधिताशम्। बाह्येऽत्र वृत्ते वलनं ज्यकावत् प्राक्चिह्नतः स्पर्शभवं हिमांशोः। सव्यापसव्यं खलु याम्यसौम्यं मौक्षं तथा पश्चिमतश्च देयम्। परिप्रश्ने पश्चिमपूर्वतस्ते विपर्ययदिक्चिह्नित एव साध्यम्। सूत्राणि केन्द्राद्वलनाग्रसक्तान्यङ्काम्यतः स्पर्शविमुक्तिबाणौ। ज्यावत्स्वकाभ्यां वलनाग्रकाभ्यां देयौ यथाशावश मध्यबाणः। केन्द्रात् प्रदेयो वलनस्य सूत्रे तेभ्यः पृथग्ग्राहकखण्डकेन। वृत्तं कृतं स्पर्शविमुक्तिमध्यग्रासाः क्रमेणैवमिहावगम्याः" शि०। "समायामवनौ ग्राह्यार्धप्रमाणेन सूत्रेणेष्टस्थानकल्पितबिन्दोर्वृत्तं लिखित्वा तस्मादेव बिन्दोर्मानैक्यखण्डप्रमाणेन सूत्रेणान्यद्वृत्तं कृत्वा तस्य बिन्दोरुपरि प्राच्यपरं याम्योत्तरं च सूत्रं खटिकाया रजसोत्थाय रेखे कार्ये। अथ मानैक्यार्धवृत्ते वलनं देयम्। तत्र चन्द्रस्य स्पार्शिकं प्राचीचिह्नतो, मौक्षिकं प्रतीचीचिह्नतः। रवेस्तु स्पार्शिकं प्रतीचीचिह्नतो मौक्षिकं प्राचीचिह्नतः। अथ मध्यवलनं यदि विक्षेपो दक्षिणतो देयस्तदा दक्षिणचिह्नाद्यदोत्तरस्तदोत्तरचिह्नात्। तत् कथं देयमित्याह। सव्यापसव्यं याम्यसौम्यमिति। यदि याम्यवलनं तदा सव्यक्रमेण प्राचीचिह्नाद्याम्यं, दक्षिणचिह्नात् पश्चिमं, पश्चिमचिह्नादुत्तरमुत्तरचिह्नात् पूर्वमिति सव्यम्। इतोऽन्यथापसव्यम्। तच्च वलनं ज्यावद्देयं न धनुर्वत्। एवं वलनानि दत्त्वा केन्द्राद्वलनाग्रगतानि सूत्राण्यङ्क्यानि। अथ स्पर्शवलनाग्रात् स्पार्शिको मोक्षवलनाग्रान्मौक्षिको विक्षेपो देयः। स च ज्यावत्। अथ मध्ये विक्षेपः केन्द्राद्वलनसूत्रे देयः। तेभ्यः शराग्रचिह्नेभ्यो ग्राहकार्धप्रमाणेन सूत्रेण वृत्तान्युत्पाद्य स्पर्शमुक्तिमध्यग्रासाः वेदितव्याः अत्र वासना। मानैक्यार्धवृत्ते ग्राहकवृत्तस्य मध्यं यदा भवति तदा ग्राह्यग्राहकयोर्बिम्बप्रान्तौ संलग्नौ भवतोऽतो मानैक्यार्धवृत्तं बहिर्लिखितं तत्र दिगङ्कितं तत्र या प्राची सा सममण्डलप्राची ततस्तस्या वलने दत्ते या केन्द्राद्वलनाग्रगा रेखा सा क्रान्तिवृत्तप्राची। एवं सर्वदिशां वलनम्। अथ वलनसूत्राज्ज्यावद्विक्षेप। यतः क्रान्तिवृत्तप्राच्या विक्षेपो याम्योत्तरः। एवं स्पर्शमोक्षयोः सिद्ध। अथ

मध्यग्रह केन्द्राद्वलनसूत्रेऽतो दत्तो यतो मध्यग्रहणं नाम तत्कालक्रान्तिवृत्तप्राच्या याम्योत्तरा दिक्। विक्षेपाग्रे छादकवृत्तमध्यमतस्तत्र कृतैर्वृत्तैः स्पर्शमोक्षमध्या भवन्तीत्युपपन्नम्" प्रमि०।

इदानीं निमीलनोन्मीलनेष्टग्रासपरिलेखमाह। "केन्द्राद्भुजं स्वे वलनस्य सूत्रे शरं भुजाग्राच्च ततश्च केन्द्रात्। प्रसार्य कोटिश्रुतियोगचिह्नाद्वृत्ते कृते छादकखण्डकेन। संमीलनोन्मीलनकेष्टकालग्रासाश्च वेद्या यदि वान्यथाऽमी" सि०। "संमीलनकाले वलनमानीय तत् प्राक्चिह्नात् प्राग्वद्दत्त्वा केन्द्राद्वलनाग्रगां रेखां कृत्वा तस्यां रेखायां केन्द्रात् पूर्वतो भुजो देयः। भुजाग्रात् तत्कालशरप्रमाणा शलाका तथा केन्द्रात् कर्णमिता च प्रसार्य शलाकाद्वययोर्युतिचिह्नाद्ग्राहकार्द्धेन वृत्तं विलिख्य संमीलनस्थानं ज्ञेयम्। एवमुन्मीलनवलनं पश्चिमतो दत्त्वोन्मीलनस्थानं ज्ञेयम्। एवमेव तत्कालवलनमिष्टवशेन प्राक् पश्चिमतो वा दत्त्वोक्तवदिष्टग्रासो ज्ञेयः। यदि वान्यथामी इत्यस्याग्रे सम्बन्धः। अत्रोपपत्तिः। भुजो हि छादकमार्गखण्डम् तत्र शरः कोटिस्तद्वर्गयोगपदं कर्णः। कर्णाद्ग्राहकबिम्बे लिखिते संमीलनादिकं भवतीति युक्तियुक्तम्। ननु ग्राह्यबिम्बमध्याद्वलनसूत्रे भुजो दत्तस्तत् कथं भुजो छादकमार्गखण्डमित्युच्यते सत्यम् यत्र ज्ञातचिह्नजकोटिकर्णैस्त्र्यस्रमुत्पद्यते तदन्यसमायतचतुरस्रार्द्धं स्यात्। तदत्र भुजाग्राद्विक्षेपः कोटिः। एवं भुजमूलादपि। विक्षेपमूलयोरन्तरे यावान् भुजस्तावान् विक्षेपाग्रयोरपि। अतश्छादकमार्गखण्डं भुज इत्युच्यते तददुष्टम्" प्रमि०।

इदानीमन्यथा संमीलनादिपरिलेखमाह। "ये स्पर्शमुक्त्योर्विहिताश्च चिह्ने ताभ्यां पृथङ्मध्यशराग्रयाते। रेखे किल प्रग्रहमोक्षमार्गौ तयोश्च माने विगणय्य वेद्ये। बिम्बान्तरार्द्धेन विधाय वृत्तं केन्द्रेऽथ तन्मार्गयुतिद्वयेऽपि। भूभार्द्धसूत्रेण विधाय वृत्ते संमीलनोन्मीलनके च वेद्ये" सि०। स्पर्शशराग्रान्मध्यशराग्रयाता रेखा कार्या। स प्रग्रहमार्गो ज्ञेयः। अथ मध्यशराग्रान्मुक्तिशराग्रगा पृथगन्या रेखा कार्या। स मुक्तिमार्गो ज्ञेयः। तयोर्मार्गयोः प्रमाणे अङ्गुलशलाकया मित्वा पृथगभीष्टे स्थाप्ये। अथ बिम्बान्तरार्धप्रमाणेन सूत्रेण केन्द्रे वृत्तमुत्पाद्य तस्य वृत्तस्य मार्गद्वयेन यौ योगौ तच्चाद्योगद्वयचिह्नात् भूभार्धसूत्रेण वृत्ते विधाय संमीलनोन्मीलने ज्ञातव्ये। अत्रोपपत्तिः। स्वमार्गेणागच्छतो ग्राहकमध्यस्य यत्र मानान्तरार्धतुल्यं कर्णो भवति तत्रस्थे तस्मिन् ग्राहके संमीलनमुन्मीलनं च यत उत्पद्यते ततो बिम्बान्तरार्धेन वृत्तं विलिख्य ते स्थाने ज्ञातव्ये" प्रमि०।

इदानीमिष्टग्रासार्थमाह। "मार्गाङ्गुलघ्नं स्थितिखण्डभक्तमिष्टं स्युरिष्टाङ्गुलसंज्ञकानि। इष्टाङ्गुलानीष्टवशात् स्वमार्गे दद्यात्तत्र च छादकखण्डवृत्तम्। ग्रासेष्टखण्डं यदि वाऽयमस्य स्थूलः सुखार्थं परिलेख एवम्" सि०। "इष्टमितीष्टकालो घटिकादिरनष्टस्थापितैर्मार्गाङ्गुलैर्गुण्यः स्वस्थित्यर्द्धघटीभिर्भाज्यः फलमिष्टाङ्गुलानि भवन्ति। तानीष्टाङ्गुलानि स्वमार्गे दत्त्वा। कथमिति चेत् इष्टवशात्। यदि स्पर्शादनन्तरमिष्टं कल्पितं तदा स्पर्शशराग्रादनन्तरमिष्टाङ्गुलानि देयानि यदि मध्यात् पूर्वमिष्टं तदा मध्यशराग्रात् पूर्वतो देयानि। एवं मुक्तिमार्गेऽपीष्टवशादिष्टाङ्गुलाग्रे छादकबिम्बार्द्धेन वृत्तं विलिख्येष्टग्रासो ज्ञेयः। एष वा स्थूलः सुखार्थं परिलेखः। अत्रोपपत्तिस्त्रैराशिकेन। यदि स्थित्यर्द्धघटीभिर्मार्गाङ्गुलानि लभ्यन्ते तदेष्टघटीभिः किमिति फलमिष्टाङ्गुलानि। तदग्रे छादकबिम्बमध्यमित्यर्थः। तत्र छादकार्द्धेन वृत्ते कृते इष्टग्रासो भवतीति किं चित्रम्" प्रमि०। इदानीं ग्रासात् कालानयनं परिलेखेनैवाह॥ "ग्रासोनमानैक्यदलेन केन्द्रे वृत्तात् कृतान्मार्गदले बहिर्ये। ते सगुणे स्वस्थितिखण्डकेन मार्गाङ्गुलाप्ते पृथगिष्टकालौ" सि०। "मानैक्यार्द्धेन ग्रासोनेन केन्द्रे वृत्तं लिखेत्। तस्माद्वृत्ताद्बहिर्ये मार्गखण्डे भवतस्ते स्वस्थितिखण्डकेन गुणिते स्वमार्गाङ्गुलैर्भाज्ये। फलं स्पर्शादग्रत इष्टकालो भवति। मोक्षात् पृष्ठतश्च। अत्रोपपत्तिः। ग्रासोनमानैक्यदलमिष्टकाले ग्राह्यग्राहकबिम्बमध्ययोरन्तरं कर्ण इत्यर्थः। इदं पूर्वमेव कथितम्। तेन कर्णेन केन्द्रे वृत्तात् कृताद्ये मार्गखण्डे बहिर्भवतस्ताभ्यामिष्टकालानुपातः। यदि मार्गाङ्गुलैः स्थित्यर्द्धघटिका लभ्यन्ते तदा बहिर्भूतखण्डाङ्गुलैः किमिति फलमिष्टकाल इति" प्रमि०।

इदानीं ग्रहणे वर्णमाह। "स्वल्पे छन्ने धूम्रवर्णः सुधांशोरर्द्धे कृष्णः कृष्णरक्तोऽधिकेऽर्धात्। सर्वच्छन्ने वर्ण उक्तः पिशङ्गो भानोश्छन्ने सर्वदा कृष्ण एव" सि०।

इदानीमादेश्यानादेश्यानाह।

"इन्दोर्भागः षोडशः खण्डितोऽपि तेजःपुञ्जच्छन्नभावान्न लक्ष्यः। तेजस्तैक्ष्ण्यात् तीक्ष्णगोर्द्वादशांशो नादेश्योऽतोऽल्पो

लम्बनप्रयोजनमाह। "तस्य संस्कृतः पर्वविरामः एवं स्फुटोऽसकृत् स पर्वमध्यकालः" सि॰शि॰। "एवं यद्दर्शान्तकाले लम्बनमुत्पन्नं तद्वित्रिभलग्नादूनेऽर्के धनमतो दर्शान्तघटिकासु क्षेप्यम्। यदि वित्रिभादधिकेऽर्के जातं तदा दर्शान्तघटीभ्यः शोध्यम्। एवमसकृल्लम्बनसंस्कृतात् दर्शान्तकालाल्लग्नमानीय वित्रिभं च कृत्वोक्तप्रकारेण लम्बनं साध्यम्। तेन गणितागतो दर्शान्तः पुनः संस्कार्यः। एवं मुहुर्यावदविशेषः। एवं संस्कृतो दर्शान्तो ग्रहणमध्यकालो भवति। अत्रोपपत्तिः। अत्र चन्द्रकक्षाया आसन्नत्वाद्रविकक्षाया दूरत्वात् कुपृष्ठाच्छ्रिताद्द्रष्टू रविमण्डलगामि यत् सूत्रं तस्मादधश्चन्द्रोऽवलम्बितो दृश्यते तल्लम्बनम्। क्रान्तिवृत्ते परमोच्चस्थाने किल वित्रिभम्। तस्मादूनो यदा रविस्तदार्कादवलम्बितश्चन्द्रः पृष्ठतो भवति। चन्द्रो हि शीघ्रगतिः। शीघ्रे पृष्ठगते युतिरेष्या। अतो लम्बनं तिथौ धनम्। यदा वित्रिभलग्नादधिकोऽर्कस्तदा चन्द्रोऽवलम्बितोऽर्कादग्रतो भवति। शीघ्रेऽग्रगे युतिर्जाता लम्बनतुल्येन कालेनातस्तस्य लम्बनमृणम्। एवं लम्बनसंस्कृतो दर्शान्तो ग्रहणमध्यकालः स्यादित्युपपन्नम्। यदि त्रिज्यातुल्ययार्कदृग्ज्यया परमा भुक्त्यन्तरपञ्चदशांशतुल्या लम्बनलिप्ता ४८। ४६ लभ्यन्ते तदेष्टयार्कदृग्ज्यया किमिति। फलं दृग्लम्बनकला। एवमनेनैवानुपातेन दृक्क्षेपज्यया लम्बनलिप्ता उत्पद्यन्ते ता अवनतिलिप्ता ता भुजरूपाः। दृग्लम्बनकला कर्णः तयोर्वर्गान्तरपदं स्फुटलम्बनलिप्ता। यतो दृङ्नत्यानयनेऽर्कदृग्ज्या कर्णो दृक्क्षेपो भुजः। अतो दृक्क्षेपाज्जाताऽवनतिर्भुजः। स्फुटलम्बनलिप्ता कोटिः। इदमखिलं गोले लम्बनोपपत्तौ कथितम्। तद्यथा। "यत्र कुपृष्ठाच्छ्रितो द्रष्टा चन्द्रं पश्यति लम्बितम्। साध्यते कुदलेनातो लम्बनं च नतिस्तथा। इष्टापवर्तिता दृश्या कक्षे च शशिसूर्ययोः। भित्तौ विलिख्य तन्मध्ये तिर्यग्रेखा तयोर्ध्वगाम्। तिर्यग्रेखायुतौ कल्प्य कक्षायां क्षितिजं तथा। ऊर्ध्वरेखायुतौ खार्धं दृग्ज्याचापाग्रकेऽर्कतौ। तत्पार्केन्दू समुत्पत्तिं लम्बनस्य प्रदर्शयेत्। एकं भूमध्यगं सूत्रं नतेऽस्मिन्नर्कमण्डलम्। द्रष्टुर्भूपृष्ठगादन्यद्दृक्सूत्रं तदुच्यते। कक्षायां सूत्रयोर्मध्ये यास्ता लम्बनलिप्तिकाः। गर्भसूत्रे यदा स्यातां चन्द्रार्कौ समलिप्तिकौ। दृक्सूत्रालम्बितश्चन्द्रस्तेन तल्लम्बनं स्मृतम्। दृग्गर्भसूत्रयोरैक्यात् खमध्ये नास्ति लम्बनम्। अथ याम्योत्तरावाप्तं भित्तौ पूर्वं क्रमाल्लिखेत्। ये कक्षे मण्डले ते तु ज्ञेये बिम्बप्रमण्डले। त्रिभोनलग्नदृग्ज्या या स दृक्क्षेपो द्वयोरपि। तच्चापाग्रेऽर्कतो बिन्दू कृत्वा वित्रिभसंज्ञकौ। प्राग्वद्दृक्सूत्रतश्चन्द्रवित्रिभस्य नतिर्नतिः। कक्षयोरन्तरं यत् स्याद्वित्रिभे सर्वतोऽपि तत्। याम्योत्तरं नतिः साऽतु दृक्क्षेपात् साध्यते ततः। यत्र तत्र नतादर्कादवचन्द्रावलम्बनम्। तद्दृग्वृत्तेऽन्तरं चन्द्रभान्वोः पूर्वापरं तु तत्। पूर्वापरं च याम्योदग्जातं तेनान्तरद्वयम्। अपमण्डलं प्राची तत्तिर्यग् दक्षिणोत्तरा। यत् पूर्वापरभावेन लम्बनाख्यं तदन्तरम्। यद्याम्योत्तरभावेन नतिश्च तदुच्यते। नतिलिप्ता भुजः कर्णो दृग्लम्बनकलास्तयोः। वर्गान्तरपदं कोटिः स्फुटलम्बनलिप्तिका। परलम्बनलिप्ता ४८/४६ घ्नी त्रिज्या २४३८ हृता रविदृग्ज्यका। दृग्लम्बनकलास्ता स्युरेव दृक्क्षेपयोर्नतिः। गत्यन्तरस्य ७३१/२७ तिथ्यंश ४८/४६ परलम्बनलिप्तिका गतियोजन ११८५८/४५ तिथ्यंश ७९०/२५ कुदलस्य यतो मितिः। स्युर्लम्बनकला नाड्यो गत्यन्तरहृतोद्धृताः। प्राग्गतो रवेश्चन्द्रः पश्चात् पृष्ठेऽवलम्बितः। शीघ्रेऽग्रगे युतिर्जाता गम्या पृष्ठगते यतः। प्राग्ऋणं तद्धनं पश्चात् क्रियते लम्बनं तिथौ। याम्योत्तरं यदस्ताद्यदन्तरं शशिसूर्ययोः। नतिस्तस्यास्तया तस्मात् स स्फुटः स्यात् स्फुटः शरः" प्रमि॰।

इदानीं प्रकारान्तरेण लम्बनमाह। "त्रिभोनलग्नस्य नरस्त्रिभू १३ घ्नो दन्तै २२ विभक्तः परसंज्ञकः स्यात्। लग्नार्कयोरन्तरकोटिदोर्ज्ये विधाय दोर्ज्यापरयोर्वियोगात्। खगाद्युतात् कोटिगुणस्य कृत्या मूलं श्रुतिः कोटिगुणात् परघ्नात्। श्रुत्या हृताल्लब्धधनुःकलाद्यास्ता वाऽसवो लम्बनजा भवन्ति" सि॰शि॰। "त्रिभोनलग्नस्य यः शङ्कुः स त्रयोदशगुणो द्वाविंशतिभक्तः फलं परसंज्ञं भवति। दर्शान्तकाले यल्लग्नं तस्मादर्कोनाद्भुजकोटिज्ये साध्ये। तत्र दोर्ज्यायाः परस्य च यो वियोगस्तस्माद्वर्गीकृतात् कोटिज्यावर्गेण युताद्यत् पदं स कर्णः। कोटिज्यापरयोर्घातात् तेन कर्णेन भक्ताद्यत् फलं तस्य चापे यावत्यः कलास्तावन्तो लम्बनासव षड्‌भक्ते भवेयुः। अत्रोपपत्तिः। यदि त्रिज्यातुल्ये १२० वित्रिभलग्नशङ्कौ परमलम्बनज्यातुल्यगुणकेन त्रिज्या हरस्तदा त्रयोदशगुणकेन कः। फलं द्वाविंशतिः। तस्य परसंज्ञा कृता। अथोऽधःस्थयोरपि चन्द्रार्कयोः क्रियोपसंहारश्चेमन्यथा कल्पितं लम्बनज्ञानम्। तत्र

ज्याकोट्यो विधुदृक्क्षेपस्तदा द्विगुण पञ्चभक्त क इति फलं स्वषष्ठ्ययुक्तं स्फुटैवावनतिर्भवेत् । अत्रोपपत्तिः । तत्र स्वल्पान्तरत्वाच्छशिदृक्क्षेपतुल्यमर्कदृक्क्षेपं परिकल्प्य भुक्त्यन्तरपञ्चदशांशेनानुपातः । यदि त्रिज्यातुल्ये दृक्क्षेपे भुक्त्यन्तरपञ्चदशांशमिता स्फुटा नतिर्लभ्यते तदाऽभीष्टेऽस्मिन् किमिति । अत्र भुक्त्यन्तरपञ्चदशांशो गुणस्त्रिज्या हरः । गुणकहरौ गुणकांशेनापवर्तितौ । जातं गुणकस्थाने द्वयं २ हरस्थाने छिन्द्राः १४१ । एवं द्वद्भ्यन्नकाभिः । लघुज्याकाभिस्तु गुणकस्थाने द्वय २ हरस्थाने किञ्चिदूना पञ्च ४ । ५५ । ते सुखार्थं पञ्च कृता ५। अतस्तत् फलं स्वषष्ठ्यंशयुतं कृतम्" प्रमि०

इदानीं स्थूले लम्बनावनती सुखार्थमाह । "त्रिभोनलग्नस्य दिनार्धजाते नतोन्नतज्ये यदि वा सुखार्थम् । दृक्क्षेपशङ्कू परिकल्प्य साध्यं स्वल्पान्तरं लम्बनकं नतिश्च" मि० । "त्रिभोनलग्नं चन्द्रं प्रकल्प्य तस्य क्रान्तिः शरश्च साध्यः । तेन शरेण क्रान्तिः संस्कार्या । सा तस्य स्फुटा क्रान्तिः । पलावलम्बावपमेन संस्कृताविप्यादिना नतांशा उन्नतांशाश्च कार्याः । तज्ज्ये त्रिभोनलग्नस्य दिनार्धजाते नतोन्नतज्ये । अतो नतज्यां वित्रिभलग्नशङ्कुं नतज्यां चन्द्रदृक्क्षेपं च परिकल्प्योक्तवल्लम्बनं स्वल्पान्तरमवनतिश्च सुखार्थं साध्या । अत्रोपपत्तिः । वित्रिभलग्न मध्योराशय एव दिनार्धशङ्कुस्तद्दृग्ज्यासन्नो दृक्क्षेप "प्रमि०।

इदानीं नते. प्रयोजनमाह ।

"स्पष्टोऽत्र बाणो नतिसंस्कृतोऽस्मात् प्राग्वत् प्रसाध्ये स्थितिमर्दखण्डे" मि० । "अत्र सूर्यग्रहणे यः पूर्ववच्छर आगच्छति । असौ नत्या संस्कृतः सन् स्फुटो भवति । अत्रैतदुक्तं भवति । गणितागतो दर्शान्तकालो लम्बनेनासकृत् स्फुटीकृतः स किल ग्रहमध्यकालः । तत्र तात्कालिकं सपातं चन्द्रं कृत्वा विक्षेपः साध्यः । अथ स्थिरलम्बनकाले यद्वित्रिभलग्नं तस्मादवनतिः साध्या । तया स विक्षेपः संस्कृतः । स मध्यग्रहणविक्षेपः स्फुटो भवतीत्यवगन्तव्यम् । ततो मानार्धयोगान्तरयोः कृतिभ्याम्" इत्यादिना स्थितिमर्दखण्डे साध्ये । अत्रोपपत्तिः । चन्द्रस्थाने क्रान्तिमण्डलविमण्डलयोरन्तरालं विक्षेपः । चन्द्रो विमण्डले, रविः क्रान्तिमण्डलेऽतस्तयोर्विक्षेपो याम्योत्तरमन्तरम् । परं यदि भूगर्भस्थो द्रष्टा । यदा तु कर्षेणोच्छ्रितो भूपृष्ठस्थस्तदा रविकक्षामण्डलाच्चन्द्रकक्षामण्डलं मधो दृक्क्षेपस्यात्लम्बितं भवति । तद्याम्योत्तरभावेन या-

वता लम्बितं तावतो नतिस्तद्ग्राहकरोऽतस्तया शरे संस्कृते स्फुटसर्केन्द्वोरन्तरं भवति स एव स्फुटशरः । यथोक्तं गोले "याम्योत्तरं शरस्तावदन्तरं शशिसूर्ययोः । नतिस्तथा तया तस्मात् संस्कृतः स्यात् स्फुटः शरः" मि०।

इदानीं स्पर्शसम्मीलनोन्मीलनादिकालार्थमाह ।"तिथ्यन्ताद्गणितागतात् स्थितिदलेनोनाधिकाल्लम्बनं तत्कालोत्थमतोऽसकृत्संस्कृतिभवस्थित्यर्धहीनाधिके । दर्शान्ते गणितागते धनमृणं वा तद्विधायासकृत् स्पर्शमोक्षौ प्रग्रहमोक्षसंज्ञसमयावेवं क्रमात् प्रस्फुटौ । तन्मध्यकालान्तरयोः समाने स्तः भवेतां स्थितिखण्डके च । दर्शान्ततो मर्दवियोगयुक्तात् सम्मीलनोन्मीलनकाल एवम् । एतत्प्रकारेण विलम्बनं चेत् तत्स्फुटौ मग्नोन्मीलनकालौ । किंत्वत्र बाणावनती पुनश्च तात्कालिकाभ्यां विधुवित्रिभाभ्याम्" मि०। "प्रथमं यो गणितागततिथ्यन्तस्तस्मात् स्थितिदलेनोनाधिकाल्लम्बनं साध्यम् । स्पर्शे स्थितिदलेनोनात्,मोक्षेऽधिकादित्यर्थः । अत्र किल स्पर्शकालः साध्यते । तत्र गणितागततिथ्यन्तात् स्थित्यर्धमपास्य प्राग्वल्लम्बनमानीय तदन्तं स्थापयित्वा तद्गणितागते तिथ्यन्ते स्थितिदलेनोने धनमृणं वा कार्यम् । स स्थूलस्पर्शकालः । तन्मध्यकालयोरन्तरं स्थूलं स्थित्यर्धम् । तज्जनितफलोनात् समचन्द्रेन्दो. शरस्तत्कालनित्रिभकालजनितया नत्या संस्कृतः स्यात् । स्फुटविक्षेपात् पुनः स्थित्यर्धम् । तेन स्थित्यर्धेन गणितागते दर्शान्ते ऊने तल्लम्बनं धनमृणं वा कार्यम् । एवं कृते सति तावान् कालस्तावान् स्पर्शकालः । एवमसकृदिति । स्पर्शमध्यग्रहकालयोरन्तरं स्पार्शिकं स्थित्यर्धं ज्ञेयम् । स्पर्शकालात् पुनर्लम्बनमानीयावनतं स्थाप्यम् । अथ स्पार्शिकस्थित्यर्धघटीफलेन चन्द्रमूनीकृत्य शरः साध्यः । अन्तरातीतवित्रिभलग्नाच्चनतिः । तया स्फुटीकृताच्छरात् पुनः स्थित्यर्धम् । तेनोनिते गणितागते दर्शान्ते तल्लम्बनं धनमृणं वा कार्यम् । एवं स्फुटः स्पर्शकालः । असकृदिति यावदविशेषं मौक्षिकार्थं मध्यग्रहकालोत्थस्थिति समकालोत्थतिथ्यन्ते योज्या । तस्मादसकृल्लम्बनान्तरमवस्थित्या गणितागततिथ्यन्तो युतं सा मोक्षस्थितिरस्पष्टा । तल्लम्बनान्तरयुतोत्थस्थित्या वारं वारं पूर्वदयान्नोयोज्य । एवं स्थिरलम्बनान्तरयुतोत्थस्थिति मौक्षस्थितिर्ज्ञेया । सैव मौक्षिकम् । एवं स्थितिदलेनाढ्याद्गणितागतान्मोक्षकालोऽपि । तत्र चन्द्रपातौ तात्कालिकीकरणे फलं धनम् । एवं मोक्षमध्यग्रहकालयो-

"अमृतास्वादविशेषाच्छिन्नमपि शिरः किलासुरस्येदम् । प्राणैरपरित्यक्तं ग्रहतां यातं वदन्त्येके ॥ इन्द्वर्कमण्डलाकृतिरसितत्वात् किल न दृश्यते गगने । अन्यत्र पर्वकालाद् वरप्रदानात् कमलयोनेः ॥ मुखपुच्छविभक्ताङ्गं भुजङ्गमाकारमुपदिशन्त्यन्ये । कथयन्त्यमूर्त्तमपरे तमोमयं सैंहिकेयाख्यम् ॥ यदि मूर्त्तो भविचारी शिरोऽथवा भवति मण्डली राहुः । भगणार्द्धेनान्तरितो गृह्णाति कथं नियतचारः ॥ अनियतचारः खलु चेद् उपलब्धिः संख्यया कथं तस्य । पुच्छाननाभिधानोऽन्तरेण कस्मान्न गृह्णाति ॥ अथ तु भुजगेन्द्ररूपः पुच्छेन मुखेन वा न गृह्णाति । मुखपुच्छान्तरसंस्थं स्थगयति कस्मान्न भगणार्द्धम् ॥ राहुद्वयं यदि स्यात् ग्रस्तेऽस्तमितेऽथवोदिते चन्द्रे । तत्समगतिनान्येन ग्रस्तः सूर्य्योऽपि दृश्येत ॥ भूच्छायां स्वग्रहणे भास्करमर्कग्रहे प्रविशतीन्दुः । प्रग्रहणमतः पश्चान्नेन्दोर्भानोश्च पूर्व्वार्द्धात् ॥ वृक्षस्य स्वच्छाया यथैकपार्श्वे भवति दीर्घा च । निशि निशि तद्वद् भूमेरावरणवशाद्दिनेशस्य ॥ सूर्य्यात् सप्तमराशौ यदि चोदग्दक्षिणेन नातिगतः । चन्द्रः पूर्व्वाभिमुखश्छायामौर्वीं तदा विशति ॥ चन्द्रोऽधःस्थः स्थगयति रविमम्बुदवत् समागतः पश्चात् । प्रतिदेशमतश्चित्रं दृष्टिवशाद्भास्करस्य ग्रहणम् ॥ आवरणं महदिन्दोः कुण्ठविषाणस्ततोऽर्द्धग्रस्तः । स्वल्पं रवेर्यतोऽतस्तीक्ष्णविषाणो रविर्भवति ॥ एवमुपरागकारणमुक्तमिदं दिव्यदृग्भिराचार्य्यैः । राहुरकारणमस्मिन्नित्युक्तः शास्त्रसद्भावः ॥ योऽसावसुरो राहुस्तस्य वरो ब्रह्मणायमाज्ञप्तः । आप्यायनमुपरागे दत्तहुतांशेन ते भविता ॥ तस्मिन् काले सान्निध्यमस्य तेनोपचर्य्यते राहुः । याम्योत्तरा शशिगतिर्गणितेऽप्युपचर्य्यते तेन ॥ न कथञ्चिदपि निमित्तैर्ग्रहणं विज्ञायते निमित्तैस्तु । अन्यस्मिन्नपि काले भवन्त्यथोत्पातरूपाणि ॥ पञ्चग्रहसंयोगान्न किल ग्रहणस्य सम्भवो भवति । तैलं च जलेऽष्टम्यां न विचिन्त्यमिदं विपश्चिद्भिः ॥ अवनत्यार्कमासौ दिग्ग्राह्या वलनयावनत्या च" अथ वेलाभेदे फलम् । "तिथ्यवसानाद्वेला करणे कथितानि तानि मया । षण्मासोत्तरवृद्ध्या पर्व्वेशाः सप्त देवताः क्रमशः । ब्रह्मशशीन्द्रकुवेरा वरुणाग्नियमाश्च विज्ञेयाः ॥ ब्राह्मे द्विजपशुवृद्धिक्षेमारोग्याणि सस्यसम्पच्च । तद्वत् सौम्ये तस्मिन् पीड़ा विदुषामवृष्टिश्च ॥ ऐन्द्रे भूपविरोधः शारदसस्यक्षयो न च क्षेमम् । कौवेरेऽर्थपतीनामर्थविनाशः सुभिक्षं च ॥ वारुणमवनीशाशुभमन्येषां क्षेममस्यवृद्धिकरम् । आग्नेयं मित्राख्यं सस्यारोग्याभयाम्बुकरम् ॥ याम्यं करोत्यवृष्टिं दुर्भिक्षं संक्षयं च सस्यानाम् । यदतः परं तदशुभं क्ष्माराष्ट्रहितं पर्व ॥ वेलाहीने पर्व्वणि गर्भविपत्तिश्च शस्त्रकोपश्च ॥ अतिवेले कुसुमफलक्षयो भयं सस्यनाशश्च ॥ हीनातिरिक्तकाले फलमुक्तं पूर्व्वशास्त्रदृष्टत्वात्" ।

अथ एकमासे ग्रहणद्वयस्य ग्रासभेदस्य च फलम् । "स्फुटगणितविदः कालः कथञ्चिदपि नान्यथा भवति । यद्येकस्मिन् मासे ग्रहणं रविसोमयोस्तदा क्षितिपाः ॥ स्वबलक्षोभैः संक्षयमायान्त्यतिशस्त्रकोपैश्च । ग्रस्तावुदितास्तमितौ शारदधान्यावनीश्वरक्षयदौ । सर्व्वग्रस्तौ दुर्भिक्षमरकदौ पापसंदृष्टौ" अथ दिनाद्यंशभेदे ग्रासफलम् ।

"अर्द्धोदितोपरक्तो नैकृतिकान् हन्ति सर्व्वयज्ञांश्च । अग्न्युपजीविगुणाधिपविप्राश्रमिणोऽयुगाभ्युदितः ॥ कर्षकपाषण्डिवणिक्क्षत्रियबलनायकान् द्वितीयेंऽशे । कारुकशूद्रम्लेच्छान् तृतीयांशे समन्त्रिजनान् । मध्याह्ने नरपतिमध्यदेशहा शोभनश्च धान्यार्घः । तृणभुगमात्यान्तःपुरवैश्यघ्नः पञ्चमे खांशे । स्त्रीशूद्रान् षष्ठेऽशे दस्युप्रत्यन्तान् हन्त्यस्तमयकाले । यस्मिन् खांशे मोक्षस्तत्प्रोक्तानां शिवं भवति" ।

अथायनादिभेदे फलम् "द्विजनृपतीनुदगयने विट्शूद्रान् दक्षिणायने हन्ति । राहुरुदगादिदृष्टः प्रदक्षिणं हन्ति विप्रादीन् ॥ म्लेच्छान् विदिक्स्थितोऽध्वयायिनश्च हन्त्या हुताशकांश्च । सलिलचरदन्तिघाती याम्येनोदग्गवामशुभः । पूर्व्वेण सलिलपूर्णां करोति वसुधां समागतो दैत्यः । पश्चात्कर्षकसेवकबीजविनाशाय निर्द्दिष्टः । प्राक्कालकलिङ्गशूरसेनाः काश्मीरोदकिरातयक्षवार्त्ताः" ।

अथ मेषादिराशौ ग्रासफलम् । "जीवन्ति च ये कृतानलवृत्त्या ते पीड़ामुपयान्ति मेषसंस्थे । गोपाः पशवोऽथ गोमिनो मनुजा ये च महत्त्वमागताः ॥ पीड़ामुपयान्ति भास्करे ग्रस्ते शीतकरेऽथवा वृषे । मिथुने प्रवराङ्गना नृपा नृपमात्रा बलिनः कलाविदः । यमुनातटजाः सवाह्लिकाः मत्स्याः सुह्मजनैः समन्विताः ॥ आभीराञ्छबरान् सपह्लवान् सह मल्लान् मत्स्यकुरूंश्च कानपि । पाञ्चालान् विकलांश्च पीड़यत्यन्नं चापि निहन्ति कर्कटे । सिंहे पुलिन्दगणमेकलसत्त्वयुक्तान् राजोपमांश्च नरपतीन् वनगोचरांश्च । षष्ठे तु सस्यकविलेखकगेयसक्तान् हन्त्यश्मकत्रिपुरशालियुतांश्च देशान् । तुलाधरेऽवन्त्यपरा

ग्रहणं च खरागे स्थानभेदेन शुभादिसूचकं यथाह ज्योतिषे । "त्रिषड्दशायोपगतं नराणां शुभप्रदं स्याद्ग्रहणं रवीन्द्वोः । द्विसप्तनन्देषु च मध्यमं स्याच्छेषेष्वनिष्टं कथितं मुनीन्द्रैरिति" । पृथ्वीचन्द्रोदये विष्णुधर्मे । "यज्जन्मनक्षत्रगतो राहुर्ग्रसते शशिभास्करौ तज्जातानां भवेत्पीडा ये नराः शान्तिवर्ज्जिताः" तत्रैव पुरा० "सूर्य्यस्य सङ्क्रमोऽपि ग्रहणं चन्द्रसूर्य्ययोः । यस्य त्रिजन्मनक्षत्रे तस्य रोगोऽथवा मृतिः । तस्य दानं च होमं च देवार्च्चनजपौ तथा । उपरागाभिषेकं च कुर्य्याच्छान्तिर्भविष्यति । स्वर्णेन वाथ पिष्टेन कृत्वा सर्पस्य चाकृतिम् । ब्राह्मणाय दद्देत्तस्य न रोगादिश्च तत्कृतः" । त्रिजन्मनक्षत्रम् जन्मदशमैकोनविंशति तारा इति । सर्पस्य तदाकारस्य राहोरित्यर्थः । अत्र तत्रान्तरे भार्गवः । "यस्य राज्यस्य नक्षत्रे स्वर्भानुरुपरज्यते । राज्यभङ्गं सुहृन्नाशं मरणं चात्र निर्द्दिशेत्" तच्छान्तिश्च निर्णयसिन्धौ दर्शिता तत एवावगम्या ।

चन्द्रार्कयोर्ग्रहणे यस्य पुंसो दर्शनं न पर्य्युदस्तं तस्यैव स्नानाद्यधिकार इति ति०त० रघुनन्दनेन समर्थितं यथा "ननु ज्योतिःशास्त्रादुक्तनिषेधो हिंसावदुवाहच्छिकपरोऽस्तु न तु वैधपरः नैवम् "राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु । स्नानदानादिकं कुर्य्युर्निशि काम्यव्रतेषु च" इति देवलवचने दर्शनपदश्रवणाद्दर्शने सति स्नानादेः फलाभ्युदयहेतुत्वाद्दर्शनमपि विधेयम् । तथा च सम्वत्सरप्रदीपे मार्कण्डेयः । "एकरात्रमुपोष्यैव राहुं दृष्ट्वा च यो नरः । पुण्यमाप्नोति कृत्वा च दानं श्राद्धं विधानतः" । ततश्च तस्यैव प्रकृतत्वेनोपस्थितस्य वैधदर्शनस्य पर्य्युदासो न तु रागप्राप्तदर्शनस्य निषेधोऽप्रकृतत्वेनानुपस्थितेः । एवञ्च पदार्थान्तरसाकाङ्क्षविशेषविधिसमपहाय तद्भिन्नत्र सामान्यमन्वेतीति सर्व्वत्र पदार्थवर्णनादौ सामान्यस्य विशेषेतरपरत्वे बीजम् । यथा "अहरहर्दद्यात्" इति "दीक्षितो न ददातीति प्रतिषेधात् दीक्षितेतरपरं न रागप्राप्तनिषेधकम् । तदुक्तं "त्रिविधं न्यायतः कर्त्ता विशेषेण प्रतिक्रियम् । योग्यत्वं प्रतिषिद्धत्वं विशेषणप्रदानयोः" "यजमानः पठतीति श्रुत्या तद्योग्योऽविद्वान्, दीक्षितो न ददातीति प्रतिषेधाद्दीक्षितेतरः "स्वर्गकामोऽग्निष्टोमेन यजेत" इत्यत्र विशेषणात् स्वर्गकामः कर्त्तेति तेन सप्तमचन्द्रादीतरो राहुं दृष्ट्वा स्नायादिति लभ्यते । एवं वैधदर्शनपर्य्युदासेऽपि निन्दाप्रायश्चित्तयोः श्रवणाद्रागप्राप्तदर्शनस्य प्रसज्यप्रतिषेधः ऋत्वभिगमननियमे पर्व्वणः पर्य्युदस्तत्वेऽपि तत्र रागप्राप्तगमनस्य प्रसज्यप्रतिषेधवदिति' तदेतन्निर्णयसिन्धुकृता निराकृतं यथा 'केचिद्गौड़ास्तु दृष्ट्या राहुग्रहणस्य निमित्तत्वेन तद्विषयस्य प्रयोजकत्वात् ज्योतिःशास्त्रादिना आप्तस्य स्नानस्य निमित्तत्वे प्राप्तेऽपि "स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने । चन्द्रसूर्य्योपरागे तु यावद्दर्शनगोचरः" इति जाबाल्यादिवचनेषु दृशिप्रयोगाच्चाक्षुषज्ञानस्यैवोपसंहारन्यायेन निमित्तत्वम् । अन्यथा दृशौ लक्षणा स्यात् । तेन मेघाच्छादनेऽन्धादीनां, जन्मर्क्षाद्येत्यादिनिषिद्धदर्शनानां च स्नानश्राद्धादौ नाधिकार' इति । कल्पतरुश्चाह । "दर्शनशब्देन चाक्षुषज्ञानं लक्ष्यते । न ज्ञानमात्रम् अज्ञातस्य निमित्तत्वासम्भवान्निमित्तमहिम्नैव ज्ञानलाभेन दर्शनपदवैयर्थ्यापत्तेः । तेन चाक्षुषधीयोग्यकालः पुण्यः । योग्यत्वं च प्रयत्नानपनेयचाक्षुषज्ञानप्रतिबन्धकराहित्यं तेन मेघच्छन्ने योग्यताभावान्न स्नानादीति" निर्णयामृतेऽप्येवम् । तदेतत्तुच्छम् । यदि चाक्षुषज्ञानं निमित्तं स्यात्तदा "सूर्य्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचिदिति" वाक्यं व्यर्थं स्यात् । चाक्षुषज्ञानाभावेन प्राप्त्यभावात् तत्पूर्व्वकत्वाच्च निषेधस्य । न चेदं ग्रस्तास्तपरम् रविचन्द्रयोरस्तानन्तरं रात्रिदिवाग्रहत्वादिति वाच्यम् तत्रपदस्य ग्रहपरत्वेऽधिकरणत्वायोगान्निमित्तपरत्वे च तन्निमित्तकस्नानादेरस्तात्प्रागप्यभावापत्तेः । अथ तत्रेति रात्रिदिने उच्येते वैश्वदेवीतिवद्गुणभूते अपि तत्र तादृशमन्त्रलिङ्गाभावात् । तयोर्निमित्तत्वेऽधिकरणत्वे वाऽन्यप्रयुक्तस्नानाद्यभावापत्तेश्च । किञ्च "नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसो गतमिति" मनुवचनं बाध्येत 'दृष्टोऽरिष्टप्रदो राहुरित्यादि च । न चात्र विहिते दर्शने निषेधाप्रवृत्तिः पर्य्युदसनीयतापि न युक्तेति वाच्यम् दर्शनस्यानुवादेन विधेयत्वाभावात् । एतच्चाग्रे वक्ष्याम । तन्त्रे वा विरुद्धत्रिकद्वयापत्तेः अस्तु सकृद्दर्शनविधानेन सङ्कोच इति चेत् न 'मुक्तिं दृष्ट्वा ततः स्नायादिति' मुक्तिस्नानेऽपि चाक्षुषज्ञानस्य निमित्तत्वापत्तेः अस्तु किं नश्छिन्नमिति चेत् न ग्रस्तास्ते 'तयोः परेद्युरुदये दृष्ट्वाभ्युक्ष्य वै भुञ्जीरन्निति' दर्शनोत्तरं भोजनविधानादन्धस्य सर्व्वनिषेधः, न च यावद्दर्शनं भोजननिषेधापत्तिः मध्येऽस्तं भूतस्य सुतरां यावज्जन्म प्राप्तुपवासप्रसङ्गश्च ।

अथान्नलोलुपतया तत्र स्नानमात्रं विवक्ष्येत तत् मत्पूर्वमपि निर्लज्जेन स्वीक्रियताम्। एतेन यत्तु कैश्चिदुक्तं स्पर्शस्नाने मुक्तिस्नाने च यस्य दर्शनं विहितं तेनैव कार्यं नान्येन क्त्वाप्रत्ययेन समानकर्तृत्वावगतेरिति तन्निरस्तम्। का तर्हि तस्य गतिः द्वयोरुद्देश्यविशेषणत्वाद्ग्रहैकत्वबद्विवक्षयार्थत सिद्धस्नानमात्रानुवादत्वे सर्वं सुस्थम्। अङ्गत्वाद्यनादेश्यग्रहव्याप्त्यै वा दर्शनस्यार्थवत्त्वम्। न चोक्तयोग्यतापि वाच्या दर्शनोत्तरं मेघच्छन्ने योग्यताभावापत्त्या दानाद्यभावापत्तेः। तेन तत्तद्देशावच्छेदेन ज्योतिःशास्त्रावेद्यत्वमेव योग्यता। किञ्च "रजोदर्शने नारी त्रिरात्रमशुचिर्भवेत्" इत्यत्राप्यन्धस्त्रीणामाशौचाभावप्रसङ्गः। यत्तु वर्द्धमानेनोक्तम् "स्नानोत्तरं ह्यधिकारो न स्नानकाले, स्नानकाले स्नानाभावात्। एवं दर्शनोत्तरं मुक्तिपर्य्यन्तमस्यैव योग्यतेति" तदपि प्रतिज्ञामात्रम्। किञ्च ग्रस्तास्ते "तयोः परेद्युरुदये स्नात्वाऽभ्यवहरेत्सुधीरित्यादि" वाक्यवैयर्थ्यापत्तिः। चाक्षुषज्ञानान्यथानुपपत्त्यैवार्थादुदये स्नानसिद्धेः नतु मुक्तिस्नाने शास्त्रीयमेव स्नानं निमित्तं न चाक्षुषम् "चन्द्रसूर्य्यग्रहे नाद्यात् तस्मिन्नहनि पूर्वतः। राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनमिति" वृद्धगौतमेन विज्ञायेति ज्ञानमात्रोक्तेः। यत्तु "मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परमिति" तदपि ज्ञानमात्रपरम्। "मेघमालादिदोषेण यदि मुक्तिर्न दृश्यते। व्याकलय्य तु तं कालं स्नात्वा भुञ्जीत वाग्यतः"। इति गौडनिबन्धे दर्शनात्" नैवम् अज्ञानस्य निमित्तत्वाभावेन निमित्तमहिम्नैव ज्ञानलाभे वाक्यवैयर्थ्यात्। ग्रस्तास्तेऽपि तदापत्तेश्च। किञ्च, दर्शनं पुंसोविशेषणमुपलक्षणं वा, नाद्यः दर्शनाविच्छेदे कार्ये ज्ञानतद्वादेर्बाधात्। दर्शनविच्छेदे कृतमपि स्नानादि न ग्रहणनिमित्तं स्यात्। नान्त्यः, "यावद्दर्शनगोचर" इति यावत्पदवैयर्थ्यप्रसङ्गात् दृष्टग्रहणोत्तरमपि स्नानाद्यापत्तेश्च। स्नानपक्षेऽप्येष दोषस्तुल्य इति चेत्। मूर्खोऽसि। यदि स्नानवाचकं पदं श्रूयेत ततस्तस्यान्वयो विचार्य्येत। इयत्तु श्रूयत इति वैषम्यात् कथं तर्हि स्नानं लभ्यते। सङ्क्रान्तौ स्नायादिति वदर्थादित्यवेहि। अश्रुतत्वादेवनोद्देश्यविशेषणविचारस्ततो वाक्यभेदोऽपि। अस्तु तर्हि दृष्टग्रहणं निमित्तमिति चेत्। ग्रस्तास्तेऽस्तोत्तरं स्नानापत्तेः। विशिष्टोद्देशे वाक्यभेदाच्च तथाप्येतत्तुल्यमिति चेत् "यावद्दर्शनगोचर" इति वचनेन तन्निषेधात्।

तत्र त्वन्यपक्ष इव ग्रस्तास्तेऽपि स्यात्। किञ्च, दर्शनस्य विधिरनुवादो वा। आद्ये ग्रहणोद्देशेन दर्शनविधिरुत दर्शनविशिष्टस्नानविधिः। नाद्यः, ग्रहोद्देशेन स्नानविधाने दर्शनविधाने च वाक्यभेदात्। एतेन द्वितीयोऽपि परास्तः दर्शनस्य निमित्तत्वेनाविधेयत्वात् स्नानस्याप्राप्तेः। अन्यथा होमश्रमणादौ प्रसङ्गमविधिः केन वार्य्येत। अथ नानावाक्येषु कश्चिद्दर्शनविशिष्टस्नानविधिः। कश्चिच्च प्राप्तदर्शननिमित्तोत्तस्नानमात्रविधिः। तन्न, स्नानस्य प्रधानस्य प्राप्तौ तदङ्गदर्शनप्राप्तिः, तस्यां च निमित्ते सति स्नानमित्यन्योन्याश्रयात्। एवं दर्शनविधौ सति तन्निमित्तकस्नानविधिः सति च प्रधानस्नानविधौ तदङ्गदर्शनविधिः। एवमधिकारे प्रयोजकत्वे च योज्यम्। स्नानपूर्वकालत्वविधौ चासे च वाक्यभेदः। अन्यथा स्नानोत्तरमपि दर्शनमङ्गं स्यात्। न द्वितीयः। तत्रापि दर्शनग्रहणयोर्निमित्तत्वे स्नानद्वयापत्तेः दर्शनावृत्तौ नैमित्तिकावृत्तिप्रसङ्गात्। दर्शनविशिष्टग्रहणस्य विशिष्टस्यानुवादे वाक्यभेदापत्तेः। न च रुधिरार्त्तिवद्विशिष्टं निमित्तमिति वाच्यं आर्त्तिमात्रस्य हि निमित्तत्वे निमेषाद्यार्त्तैरपि तत्प्राप्तेर्नैमित्तिकत्वभङ्गाद्युक्तं विशिष्टोद्देश्यत्वम्। इह तु ग्रहणमात्रस्य निमित्तत्वे न काचित् क्षतिः। तस्माद्दर्शनवाक्यानां मुक्ताज्ञविषयत्वात् अनादेश्यग्रहणपरत्वाद्वा स्नानस्य वार्त्ततः प्राप्तेस्तदेव निमित्तम्। तेन मेघाच्छादनेऽप्यादेव स्नानादि भवत्येतत्त्वं वेदवाक्यैः सन्तापेन"।

"मानुक्तमतवचनेनोपरक्त दिवाकरदर्शननिषेध साक्षाद्दर्शनपर.। अतएव ब्रह्मसिद्धान्ते "सर्वं पटस्थितं वीक्ष्यं सच्छतैलाम्बुदर्पणैः। ग्रहणं गुर्विणी जातु न पश्येत्तु पटं विना" पटादिस्थतयैव ग्रहणदर्शनमुक्तम्।

अत्र पूर्वापरवेध हेमाद्रौ दर्शितो यथा "त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम्। माङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः"। प्रकारान्तरं तत्रैवोक्तम्। "द्वादश्यादितृतीयान्तो वेध इन्दुग्रहे स्मृतः। एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्त्तितः "इदं च पूर्णमासे "त्र्यहं ग्रस्तग्रहे तयोरिति" तत्रैवोक्तेः इदञ्च "ग्रस्तास्ते त्रिदिनं पूर्वमिति नारदेन ग्रस्तास्ते विशेषोक्तेर्ग्रस्तास्तभिन्नग्रहणपरम्। ज्योतिर्निबन्धे च्यवनः ग्रहणोत्पातभं त्याज्यं मङ्गलेषु ऋतुत्रयम्। यावच्च रविणा मुक्तं भुक्तं भं दग्धकाष्ठवत्"

चन्द्रार्कग्रहणस्य भूच्छायाचन्द्राभ्यामावरणरूपस्याऽपि अमावास्यासंक्रान्तिकालवत् तत्र स्नानदानादौ बहुपुण्यसाधनत्वं स्मृत्यादिषु प्रसिद्धम् तत्रादौ कालमाधवीये यथा निर्णीत तत् प्रदर्श्यते वृद्धगार्ग्य "पूर्णिमाप्रतिपत्सन्धौ राहोः सम्पूर्णमण्डलम् । ग्रसते चन्द्रमर्कञ्च दर्शप्रतिपदन्तरे" इति तत्र पर्वणोऽन्तिमोभाग स्पर्शकालः प्रतिपद आद्योभागोमोक्षकाल तदुक्तं ब्रह्मसिद्धान्ते "यावत्कालः पर्वणोऽन्ते तावानुप्रतिपदादिष । रवीन्दुग्रहणानेहाः स पुण्योमिश्रणात्क्षयेदिति" ग्रहणानेहा राहुगृहणकाल तत्र कर्त्तव्यमाह वृद्धवसिष्ठ "गङ्गातोये च सम्प्राप्ते इन्द्रौ कोटी रवेर्दश । गवाङ्कोटिप्रदानेन सम्यग्दत्तेन यत् फलम् । गङ्गास्नाने तत् फल स्याद्राहुग्रस्ते निशाकरे । दिवाकरे पुनस्तत्र दशसङ्ख्यमुदाहृतमिति' अस्य श्लोकद्वयस्य प्रथमार्द्धमपेक्षितपदाध्याहारेण योजनीय इन्दोर्ग्रहणे सम्प्राप्ते सति गङ्गातोये अवगाहन गोकोटिदानसमं भवति रवेर्ग्रहणे ततो दशगुण फलम् अयमेवार्थ उपरितनेनार्द्धत्रयेण स्पष्टीकृत । व्यासोऽपि "इन्दोर्लक्षगुणं पुण्य रवेर्दशगुणं तत । गङ्गातोये तु सम्प्राप्ते इन्दो कोटीरवेर्दश । गवाङ्कोटिसहस्रस्य यत् फलं लभते नरः । तत् फल जाह्नवीस्नाने राहुग्रस्ते निशाकरे । दिवाकरे तु स्नानस्य दशसङ्ख्यमुदाहृतम् चन्द्रसूर्यग्रहे चैव योऽवगाहेत जाह्नवीम् । स स्नात सर्वतीर्थेषु किमर्थमटते महीमिति" गङ्गाव्यतिरिक्तमहानदीतोये लक्षगुणदशलक्षगुणत्व गङ्गातोये तु कोटिगुणदशकोटिगुणत्वम्। ब्रह्मपुराणेऽपि "तिस्रोनद्यो महापुण्या वेणा गोदा च जाह्नवी। या हरीशाद्रिमकात् प्राप्ता गङ्गा इति हि कीर्त्तिता" हरेः पादादीश्वरस्य शिरसश्च गाम्भूमिं प्राप्ता गङ्गा । यद्यपि जाह्नव्येव तादृशी न तु वेणागोदे तथापि छत्रिणो गच्छन्तीति न्यायेन जाह्नव्या सह निर्दिष्टयोस्तयोरपि गङ्गात्वमविरुद्ध यद्वा जाह्नवीजलमेव केनचिन्निमित्तेन ब्रह्मगिरिवायुगिर्योरुद्भूतमिति कृत्वा तयोरपि मुख्यमेव गङ्गात्वन्तासु गङ्गासु स्नान मुख्यं तदसम्भवे नद्यन्तरेषु स्नायात् तदुक्तं महाभारते "गङ्गास्नान तु कुर्वीत ग्रहणे चन्द्रसूर्ययो महानदीषु चान्यासु स्नान कुर्याद्यथाविधीति" महानद्यो ब्रह्मपुराणे दर्शिता "गोदावरी भीमरथी तुङ्गभद्रा च वेणिका । तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्त्तिता' । भागीरथी नर्मदा च यमुना च सरस्वती । विशोका च वितस्ता च विन्ध्यस्योत्तरतश्चेति" महानद्यसम्भवे जलान्तराण्याह शङ्खः "वापीकूपतडागेषु गिरिप्रस्रवणेऽपि च । नद्यान्नदे देवखाते सरसीषूद्धृताम्बुनि । उष्णोदकेन वा स्नायात् ग्रहणे चन्द्रसूर्ययोरिति" एतत् सर्वमभिप्रेत्याह व्यास "सर्वे गङ्गासमन्तोय सर्वे ब्रह्मसमो द्विज । सर्वं भूमिसम दान ग्रहणे चन्द्रसूर्ययोरिति" उष्णोदकस्यातुरविषयत्वमाह व्यास "आदित्यकिरणैः पूत पुन पूत च वह्निना । अतोव्याध्यातुर स्नायाद्ग्रहणेऽप्युष्णवारिणेति" गङ्गातोयमारभ्योष्णोदकान्ते पूर्वपूर्वस्योत्तरोत्तरस्मादुत्कृष्टत्वमुक्तम् । एतदेवाभिप्रेत्योष्णोदकादिषु सङ्गृहीतजलान्ते पूर्वपूर्वस्य प्राशस्त्यमाह मार्कण्डेय "शीतमुष्णोदकात् पुण्यमपारक्य परोदकात् । भूमिष्ठमुद्धृतात् पुण्यं तत प्रस्रवणोदकम् । ततोऽपि सारस पुण्य तत पुण्यं नदीजलम् । तीर्थतोय तत पुण्य महानद्यम्बुपावनम् । ततस्ततोऽपि गङ्गाम्बु पुण्य पुण्यस्ततोऽम्बुधिरिति" मासविशेषेण ग्रहणे नदीविशेषो देवीपुराणेऽभिहित "कार्त्तिके ग्रहण श्रेष्ठं गङ्गायमुनसङ्गमे । मार्गे तु ग्रहण प्रोक्तं देविकायां महामुने । पौषे तु नर्मदा पुण्या माघे सन्निहिता शुभा । फाल्गुने वरुणा पुण्या चैत्रे पुण्या सरस्वती। वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा । ज्यैष्ठे तु कौशिकी पुण्या आषाढे तापिका नदी । श्रावणे सिन्धुनामा तु तथा भाद्रे तु चन्द्रिका । आश्विने सरयू श्रेष्ठा तथा पुण्या तु नर्मदेति" ग्रहणविशेषे नदीविशेषस्तत्रैवाभिहित । "गोदावरी महापुण्या चन्द्रे राहुसमन्विते। सूर्ये च राहुणा ग्रस्ते तमोभूते महामुने । । नर्मदातोयसंस्पर्शे कृतकृत्या भवन्ति हीति" स्नानवत् क्षेत्रादिष्वपि पुण्यमाह "शताश्वमेधफल दृष्टा सर्वपापनाशनम् । स्पृष्टा गोमेधपुण्य तु पीत्वा सौत्रामणेर्लभेत् । स्नात्वा वाजिमखे पुण्य प्राप्नुयादविचारत रविचन्द्रोपरागे च अयने चोत्तरे तथेति" । क्षेत्रविशेषमाह । "गङ्गा कनखल पुण्यं प्रयाग पुष्कर तथा । कुरुक्षेत्र महापुण्यं राहुग्रस्ते दिवाकरे" इति ग्रहणे श्राद्धं विहित लिङ्गपुराणे "व्यतीपातस्तथो याम्यांचन्द्रसूर्यग्रहस्तथा । गजच्छाया तु सा प्रोक्ता पितृणां दत्तमक्षयम्" इति महाभारतेऽपि "सर्वस्वेनापि कर्त्तव्य श्राद्धं वै राहुदर्शने । अकुर्वाणस्तु नास्तिक्यात्पङ्के गौरिव सीदतीति" । शातातपोऽपि "चन्द्रसूर्यग्रहे यस्तु श्राद्ध विधिवदाचरेत् । तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे" इति । विष्णुरपि "राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् । गुणवत् सर्वकामीय पितॄणा-

मुपतिष्ठते” इति ग्रहणे रात्रावपि स्नानादेर्न निषेधः। तथा च शातातपः “स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने। आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्ज्जयेदिति” देवलः “यथा स्नानं च दानं च सूर्य्यस्य ग्रहणे दिवा। सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते” श्राद्धं प्रकृत्य कूर्म्मपुराणे “नैमित्तिकं तु कर्त्तव्यं ग्रहणे चन्द्रसूर्य्ययोः। बान्धवानां तु मरणे नारकी स्यादतोऽन्यथा। काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु” । वारविशेषे योगफलातिशयमाह व्यासः “रविग्रहः सूर्य्यवारे सोमे सोमग्रहस्तथा। चूडामणिरिति ख्यातस्तत्र दत्तमनन्तकम्। वारेष्वन्येषु यत् पुण्यं ग्रहणे चन्द्रसूर्य्ययोः। तत्पुण्यं कोटिगुणितं ग्रासे चूडामणौ स्मृतमिति” अतिथिप्राप्त्यादिवद्ग्रहणस्यापि श्राद्धकालत्वमाह मार्कण्डेयः “विशिष्टे ब्राह्मणे प्राप्ते सूर्य्येन्दुग्रहणे दिने। जन्मर्क्षग्रहपीडासु श्राद्धं कुर्य्यात् तथेच्छयेति” । अत्र च श्राद्धं नान्नेन किन्तु हेमादिना तदाह बौधायनः “अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि। हेमश्राद्धं सग्रहे च कुर्य्याच्छूद्रः सदैव हीति” शातातपोऽपि “आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा। आमश्राद्धं प्रकुर्व्वीत हेमश्राद्धमथापि वेति” आशौचिनोऽपि ग्रहणे स्नानादि न निषिद्धं तथा च वृद्धवशिष्ठः “सूतके मृतके चैव न दोषो राहुदर्शने। तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते” इति इयञ्च शुद्धिः सर्व्वस्मार्त्तकर्मविषया अविशेषोक्तेः एतदेवाभिप्रेत्य व्याघ्रपादः “स्मार्त्तकर्म्मपरित्यागो राहोरन्यत्र सूतके। श्रौते कर्म्मणि तत्कालस्नातः शुद्धिमवाप्नुयादिति” यत्तु ग्रहणनिमित्तमाशौचं तत्स्नानेन निवर्त्त्यं तदुक्तं ब्रह्मपुराणे “आशौचं जायते नृणां ग्रहणे चन्द्रसूर्य्ययोः। राहुस्पर्शे तयोः स्नात्वा दानादौ कल्पते नरः” इति मदनपारिजातेऽपि “सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने। स्नात्वा कर्म्माणि कुर्व्वीत शृतमन्नं विवर्ज्जयेदिति” ग्रहणस्य आद्यन्तयोः स्नानं विहितं स्मृत्यन्तरे “ग्रस्यमाने भवेत् स्नानं ग्रस्ते होमो विधीयते। मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते” होमदानवद्देवार्चनमपि स्नानद्वयमध्ये कार्य्यं तदुक्तं ब्रह्मवैवर्त्ते “स्नानं स्यादुपरागादौ मध्ये होमः सुरार्चनमिति” तत्काले स्वापादिकं न कुर्य्यात् तदुक्तं भविष्यत्पुराणे (?) “सूर्य्येन्दुग्रहणं यावत् तावत् कुर्य्याज्जपादिकम्। न स्वपेच्च न भुञ्जीत

स्नात्वा भुञ्जीत मुक्तयोरिति” भोजनानन्तरभावि यत् स्नानं तस्य शुद्ध्यर्थतया तत् सचेलं विधेयं तदाह वृद्धवशिष्ठः “सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने। सचेलं तु भवेत् स्नानं सूतकान्नञ्च वर्ज्जयेदिति” ग्रहणकाले ततः पूर्वं वा यावत् पक्वं तत् सूतकान्नं तत्तु पश्चादपि न भुञ्जीत” । अत्र विशेषोऽमरुशतस्थे २८०पृ० उक्तस्तत्रावसेयः “आदिमध्यावसानेषु यद्यद्विहितं तस्य फलातिशय उक्तो ब्रह्मपुराणे “उपमर्द्दे लक्षगुणं ग्रहणे चन्द्रसूर्य्ययोः। पुण्यं कोटिगुणं मध्ये मुक्तिकाले त्वनन्तकमिति” अत्र ग्रहणे यद्दानं तत् सत्पात्रे कर्त्तव्यं तदुक्तं महाभारते। “अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः। पात्रभूताय विप्राय भूमिं दद्यात् सदक्षिणामिति” पात्रलक्षणमाह याज्ञवल्क्यः “न विद्यया केवलया तपसा वापि पात्रता। यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्त्तितमिति” पात्रे असत्यानुकल्पमाह बौधायनः “श्रोत्रियोऽश्रोत्रियो वापि पात्रं वाऽपात्रमेव वा। विप्रब्रुवोऽपि वा विप्रो ग्रहणे दानमर्हतीति” । यद्वि सूर्य्यग्रहणं निशि चन्द्रग्रहणमिति हि प्रसिद्धिः सर्व्वजनीना, तादृशे ग्रहणे यत्कर्त्तव्यं तदुक्तं यत्तु कालविपर्य्यासेन ग्राह्यमानं ज्योतिःशास्त्रमात्रप्रसिद्धं ग्रहणं तत्र स्नानादिकं न कर्त्तव्यं तदुक्तं निगमे “सूर्य्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा। तत्र स्नानं न कुर्व्वीत दद्याद्दानं न च क्वचिदिति” । अस्तासमये जाबालिराह “संक्रान्तौ पुण्यकालस्तु षोड़शोभयतः कलाः। चन्द्रसूर्य्योपरागे तु यावद्दर्शनगोचर” इति अस्तसमयपर्य्यन्तं दर्शनगोचरत्वात् तावत् पुण्यकालो भवति ग्रहणे भोजनव्यवस्थामाह मनुः। चन्द्रसूर्य्यग्रहे नाद्यादद्यात् स्नात्वा विमुक्तयोः। अमुक्तयोरस्तगयोर्दृष्ट्वा स्नात्वा परेऽहनीति” ग्रहे ग्रहणकाले स्पर्शमारभ्य मोक्षपर्य्यन्तो ग्रहणकालः तस्मिन् काले न भुञ्जीत किन्तु राहुणा चन्द्रसूर्य्ययोर्मुक्तयोः सतोः पश्चात् स्नात्वा भुञ्जीत यदा तु अस्तसमयस्तदा परेद्युस्तौ विमुक्तौ दृष्ट्वा स्नात्वा भुञ्जीत। न केवलं ग्रहणकाल एव भोजनाभावः किन्तु ग्रहणात् प्रागपि तदाह व्यासः “नाद्यात् सूर्य्यग्रहात् पूर्वं अह्नि सायं शशिग्रहात्। ग्रहकाले च नाश्नीयात् स्नात्वाश्नीयाद्विमुक्तयोः। मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा। अमुक्तयोरस्तगयोरद्यात् दृष्ट्वा परेऽहनीति” । पूर्वकाले भोजननिषेधे विशेषः अमरुशतस्थे २८०पृ० उक्तस्तत्रावसेयः। “असमर्थस्य भोजने प्रायश्चित्तमुक्तं कात्यायनेन “चन्द्रसूर्य्य-

हे भुक्त्वा प्राजापत्येन शुध्यति"। ग्रस्तास्तसमये विशेषमाह व्यासः "ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि। परेद्युरुदये स्नात्वा स्नात्वाऽभ्यवहरेन्नरः" इति वृद्धगार्ग्योऽपि "सन्ध्याकाले यदा राहुर्ग्रसते शशिभास्करौ। तदहर्नैव भुञ्जीत रात्रावपि कदाचनेति"। विष्णुधर्मोत्तरेऽपि "अहोरात्रं न भोक्तव्यं चन्द्रसूर्य्यग्रहो यदा। मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परमिति" ननु मेघाद्यन्तर्धाने चाक्षुषदर्शनं न सम्भवतीति न दर्शनयत्नेन शास्त्रीयज्ञानस्य विवक्षितत्वात् तदाह वृद्धगौतमः "चन्द्रसूर्य्यग्रहे नाद्यात्त्र्यहमहनि पूर्वतः। तयोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनमिति" एवं तर्हि परेद्युरुदयात् प्रागपि शास्त्रीयज्ञानसम्भवात्तदैव भोजनं प्रसज्येतेति चेन्न "परेद्युरुदये स्नात्वा स्नात्वाऽभ्यवहरेन्नरः" "अहोरात्रं न भोक्तव्यमिति" वचनद्वयेन तदप्रसक्तेः यत्तु "स्कन्दपुराणे" "यदा चन्द्रग्रहस्तात निशीथात्परतो भवेत्। भोक्तव्यं तत्र पूर्वाह्णे नापराह्णे कथञ्चन। पूर्वं निशीथाद्ग्रहणं यदा चन्द्रस्य वै भवेत्। तदा दिवि न कर्त्तव्यं भोजनं शिखिवाहनेति" तदिदं यामत्रयाभिप्रायं "चन्द्रग्रहे तु यामांस्त्रीनिति" विशेषस्य वृद्धगौतमेनाभिधानात्। पापक्षयकामो ग्रहणदिने उपवसेत् तदाह दक्षः "अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः। अहोरात्रोषितः स्नात्वा सर्वपापैः प्रमुच्यत" इति पुत्री तु नोपवसेत् तदाह नारदः "संक्रान्त्यामुपवासं च कृष्णैकादशिकादिने। चन्द्रसूर्य्यग्रहे चैव न कुर्यात् पुत्रवान् गृहीति" ग्रस्तास्तसमये तु पुत्रिणोऽप्युपवास एव "अहोरात्रं न भोक्तव्यमिति,भोजनप्रतिषेधात्"। कालमा०।

ग्रहणश्राद्धे विशेषः नि० सि० "सैंहिकेयो यदा सूर्यं ग्रसते पर्वसन्धिषु। गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्पयेत्। हस्तेन भोजयेद्विप्रान् घृतं भूमौ समुत्सृजेत्" इति वायुपु० विज्ञानेश्वरोऽप्याह "ग्रहणश्राद्धे भोक्तुर्दोषो दातुस्त्वभ्युदय इति। "सूतके मृतके भुक्ते गृहीते शशिभास्करे। छायायां हस्तिनश्चैव न भूयः पुरुषो भवेत्" इत्यापस्तम्बेन भोजननिषेधात् अयं च निषेधः श्राद्धभोक्तुः। अत्र ग्रहणनिमित्तकश्राद्धे नैवामावास्यान्त्यादिनिमित्तकाना सिद्धिः"। प्रागुक्तवचनैराशौचाभ्यन्तरेऽपि स्नानादिकर्मविधानात् "स्नानमात्रं प्रकुर्वीत दानश्राद्धविवर्जितमिति" निर्मूलं वदन्तो गौडाः परास्ताः नि० सि०। अशौचिनां ग्रहणकाले शुद्धिरशेषामन्त्रदीक्षापुरश्चर्यादिसर्वसार्त्तकर्मविषया मदनरत्नेऽप्येवम्। रजस्वलायास्तु मार्त्तण्डदीपिकायाम् भेदः। "न सूतकादि दोषोऽस्ति यद्धे होमजपादिषु। यद्वे स्नायादुदक्यापि तीर्थाद्धृतवारिणेति" अत्र "स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला। पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत्"। इत्यादि मिताक्षरोक्तो विशेषो ज्ञेय" नि० सि०।

ग्रहणदिने वार्षिकं श्राद्धं हेमाद्रिणा कार्य्यम् यथाह प्रयोगपारिजाते गोभिलः। "दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम्। अन्नेनासम्भवे हेम्ना कुर्यादामेन वा सुत" इति। अत्र दर्शरविग्रहस्तु गङ्गा प्रदर्शनार्थो न्यायसाम्यात्। तेन चन्द्रग्रहेऽपि सपिण्डादि वार्षिकमन्नादिना तद्दिन एव कार्य्यमिति" मदनपारिजाते व्याख्यातम्। एवं चन्द्रोदयेऽप्येवं तेन यानि "आमश्राद्धं तु कुर्वीत माससंवत्सरादृते" इति। "अन्नेनैवाब्दिकं कुर्याद्धेम्ना वाऽऽमेन न क्वचिदिति" मरीचिलौगाक्ष्यादिवचनानि तानि ग्रहणदिनातिरिक्तविषयाणि निर्णयामृतेऽप्येवम्। यानि तु "ग्रहणात्तु द्वितीयेऽह्नि रजोदोषात्तु पञ्चमे"। तथा "ग्रस्तावेवास्तमानन्तु रवीन्दू प्राप्नुतो यदि। प्रत्यब्दं तु तदा कार्य्यं परेऽहन्येव सर्वदा"। "चन्द्रसूर्य्योपरागे च तथा श्राद्धं परेऽहनि" इत्यादीनि वचनानि तानि महानिबन्धेषु क्वाप्यनुपलम्भान्निर्मूलानि। प्रत्युत पूर्वोक्तवचनेऽप्येतद्दिन एव श्राद्धमुक्तमित्युक्तम्" नि० सि०।

"ग्रहणादिषष्ठदिनपर्य्यन्तमागमे दीक्षोक्ता विशारदेन चन्द्रिकायां प्राणार्णवे। "मन्त्राद्यारम्भणं कुर्याद्ग्रहणे चन्द्रसूर्ययोः। ग्रहणाद्यपि देवेशि कालः सप्तदिनावधीति"। रुद्रयामले "सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणि। मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन्न शोधयेत्" अत्र सूर्य्यग्रहणमेव मुख्यम्। "सूर्य्यग्रहणकाले तु नान्यदन्वेषितं भवेत्। सूर्य्यग्रहणकालेन समो नान्यः कदाचन। न मासतिथिवारादिशोधनं सूर्य्यपर्वणीति" तत्रैव कालोत्तरवचनात्। "चन्द्रग्रहे तु या दीक्षा या दीक्षा व्रतचारिणाम्। वनस्थस्य च या दीक्षा दारिद्र्यं सप्तजन्मसु" इति तत्रैव योगिनीतन्त्रे निषेधाच्च" नि० सि०

पुरश्चरणचन्द्रिकायाम्। "चन्द्रसूर्य्योपरागे च स्नात्वा प्रयतमानसः। स्पर्शादिमोक्षपर्यन्तं जपेन्मन्त्रं समाहितः। जपाद्दशांशतो होमस्तथा होमात्तु तर्पणम्। तर्पणस्य दशांशेन मार्ज्जनं कथितं किल। मार्ज्जनस्य दशांशेन ब्राह्मणानपि भोजयेत्। जपादिपूर्वको होमस्तर्पणञ्चाभिषेचनम्। भूदेवपूजनं पञ्चप्रकारोक्ता पुरस्क्रिया। होमाद्यशक्तौ जपं कुर्याद्धोमसंख्याचतुर्गुणम्"। ४विशेषणतया सम्बन्धमात्रे च।

ल्युट्। स्वस्य स्वान्यस्य च अजहत्स्वार्थया लक्षणया बोधके शब्दे यथा काकेभ्योदधि रक्ष्यतामित्यत्र काकपदं स्वस्य स्वान्यस्य श्वादेश्च बोधकम्। तल्लक्षणञ्च स्वप्रतिपादकत्वे सति स्वेतरप्रतिपादकत्वम्। भवति चोक्तोदाहरणे उपघातकत्वेन काकाकाकोभयवृत्तित्वं काकशब्दस्येति तथात्वम् तत्र शक्यतावच्छेदकधर्मपरित्यागेन स्वेतर धर्मरूपेण स्वस्वेतरबोधकं हि पदमुपलक्षणं भवति "म-न्त्रपदश्च ब्राह्मणस्याप्युपलक्षणम्" सि०कौ०। उप+लक्ष-भा वे ल्युट्। २साहचर्यज्ञाने। "मन्त्रपदश्च मियो-गोपलक्षणार्थम्" सि०कौ०। ३मृगभेदे राजनि०।

**उपलधिप्रिय** पु० वालधिः प्रियोऽस्य पृषो०। चमरनाम-

**उपलब्ध** त्रि० उप+लभ-क्त। १प्राप्ते, २ज्ञाते च। "आख्या-यिकोपलब्धार्था" अमर। क्तवतु। उपलब्धवत् प्राप्तरि ज्ञातरि च स्त्रियां ङीप् "उपलब्धवती दिवश्च्युतम्" रघुः।

**उपलब्धि** स्त्री उप+लभ-क्तिन्। १प्राप्तौ "तथा हि मे स्यात् स्वपदोपलब्धि" रघु। २प्रत्यक्षादिज्ञाने च। "नाभाव उपलब्धेः" शा०सू०। योग्यानुपलब्धिः "अनपायिपदो-पलब्धये" रघु।

**उपलब्धृ** त्रि०उप+लभ-तृच् स्त्रियां ङीप्। १प्राप्तरि २ज्ञातरि ज्ञानाश्रये ३आत्मनि पु०। [पाषाणभेदे वृक्षे राजनि०।

**उपलभेदिन्** पु० उपलं भिनत्ति भिद-णिनि ६त०। पा-

**उपलभ्य** त्रि०उप+लभ-कर्म्मणि यत्। १प्राप्ये "आरम्भसिद्धौ समयोपलभ्यम्" रघु। २ज्ञेये च प्रशंसायां मुम् उपलम्भ्यः

**उपलम्भ** पु० उप+लभ-घञ मुम् च। १लाभे, २ज्ञाने च। "कर्तृता तदुपलम्भतोऽभवत्" माघ। "प्राप्तौ सुतस्पर्श-सुखोपलम्भात्" रघुः।

**उपलिङ्ग** न० उपमित लिङ्गेन अ०त०स०। लोकनिष्ठसाधन-भावेन लिङ्गेनानुमापकेन सदृशे अलौकिकसाधनभावके अरिष्टसूचके भूकम्पादौ उपद्रवे।

**उपलेप** पु०उप+लिप-घञ्। १गोमयादिना आलेपने"गात्रेषु सर्वेन्द्रियाणामुपलेपोऽवसादनमिति" सुश्रुतोक्ते २सर्वेन्द्रि यावसादने च। "कासोपलेपस्वरभेदनिद्रातन्द्रास्यदौ-र्गन्ध्यविषोपसर्गा!" श्वादोपलेपबलकृत्"सुश्रु०। भावे ल्युट् उपलेपन गोमयादिना आलेपने न० "मण्डलालेपनादिकं कर्म समाधापयति" मलम०।

**उपवक्तृ** पु० उपवक्ति उपदिशति उपपद्यति वा उप+वच तृच्। यज्ञे कृताकृतावेक्षके ऋत्विग्भेदे १ब्रह्मणि २सदस्ये च "मेषि अध्वरीयतामुपवक्ता जनानाम्" ऋ०४,९,५,

"उपवक्ताऽध्वर्युप्रभृतीनां सर्वेषां कर्मणामनुज्ञार्थमियं प्रणयेत्यादिरूपस्य वाक्यस्य वक्ता सन् ब्रह्मासि, सर्वेषां कर्म-णामवैकल्यार्थमुपद्रष्टा सदस्यो वासि" भा०

**उपवङ्ग** पु०उपगतोवङ्गम् अत्या०स०। वङ्गदेशसमीपस्थे देशभेदे देशशब्दे विवृतिः। [वृक्षे राजनि०

**उपवट** पु०उपमितो वटेन अ०त०स०। वटवृक्षसदृशे प्रियाल

**उपवन** न०उपमितं वनेन अ०त०स०। वनतुल्ये कृत्रिमे आरो-पितवृक्षसमूहे १उद्याने। "पाण्डुच्छायोपवनवृतय केतकैः सूचिभिन्नैः" मेघ०"साकेतमालोपवना बृहन्ति" रघुः आरामशब्दे पृ० ८०१ विवृतिः वनस्य सामीप्यम् वने वा अव्ययी०। २वनसामीप्ये ३वने इत्यर्थे च अव्य० "कुसुम-वन् फलिनीरलिनीरवैर्मदविकारिभिरापि्हितद्युतिः। उपवनं निरभर्त्सयत प्रियान्" माघः।

**उपवर्णन** न० उप+वर्ण-ल्युट्। सम्यक्कीर्त्तने स्वरूपलक्षण-गुणादिभिः प्रतिपादने"अतिशयोपवर्णनं व्याख्यानम्"सुश्रु०

**उपवर्त्तन** न०उपेत्य वर्त्तन्तेऽत्र उप+वृत-आधारे ल्युट्। जनपदे १विषये "तत्रोपवर्त्तनेऽप्येको न श्रुतो गोत्रभित् क्वचित्"काशी० तदेकदेशे २सलजनस्थे भरतः।

**उपवर्ष** पु० पाणिनिकात्यायनव्याडिप्रभृतीनामध्यापके ऋषिभेदे तत्कथा बृहत्कथायाम् दृष्टव्या "वर्षा एव तु भगवानुपवर्ष" शा०सू०

**उपवर्ह** पु० उप+वृह-उद्यमने करणे घञ्। शिरोधाने (बालिश) हेम०तत्र हि स्थापयित्वा शिर उद्यम्यते इति तस्य तथात्वम्। ल्युट्। उपवर्हणमप्यत्र न०[राजनि०।

**उपवल्लिका** स्त्री उप उत्कर्षे प्रादिस०। अमृतस्रवलतायाम्

**उपवल्ह** पु० उप+वल्ह-प्राधान्ये घञ्। प्राधान्ये उत्कर्षे "तत् पूर्वेषां हतानां धारयतामेव धनमुपाह्रितं भवत्युपव ल्हाय क्रियताम्" शत०ब्रा०१,४,२,१।

**उपवसथ** पु० उपेत्य वसत्यत्र उप+वस-आधारे अथ। १ग्रामे हेमच०। "यद्याहिताग्निरुपवसथे म्रियते कथमस्य यज्ञ स्यात्"ऐत०"यजमानमस्य समीपे वसन्ति देवा अस्मिन्निति आधारे अथ। २यागपूर्व्व दिवसे। तन्निर्वचनादिकं शत० ब्रा० १,११,१,७,२, दर्शितं यथा

"अथातोऽशनानशनस्यैव। तदुहाषाढः सावयसोऽनशन मेव व्रतं मेने मनोह्वै देवा मनुष्यस्याजानन्ति तत् एन-मेतद्व्रतमुपयन्तं विदुः प्रातर्नो यक्ष्यत इति तेऽस्य विश्वे देवा गृहानागच्छन्ति तेऽस्य गृहेषूपवसन्ति स उपवस-थः। तस्वेवानवक्लृप्तम्। यो मनुष्येष्वनश्नत्सु पूर्वोऽ-

कामो वै यत्र सङ्कल्पसम्भवाः। व्रतनियमधर्म्माश्च सर्व्वे सङ्कल्पजाः स्मृताः"। अनेन कर्म्मणा इदमिष्टं फलं साध्यते इत्येवंविषया बुद्धिः सङ्कल्पस्तदनन्तरमिष्टसाधनतया अवगते तस्मिन् इच्छा जायते ततस्तदर्थं प्रयत्नं कुर्वीतेत्येवं यथा सङ्कल्पसम्भवा। व्रतनियमरूपाधर्म्माश्चतुर्थाध्याये वक्ष्यमाणाः। सर्व्वे इत्यनेन अन्येऽपि शास्त्रार्थाः सङ्कल्पादेव जायन्त इति कल्लूकभट्टः। सङ्कल्पमाह वराहपुराणम्। "प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिकम्। नापराह्णे न मध्याह्ने पित्र्यौ कालौ हि तौ स्मृतौ' अत्र सकलोव्रतारम्भः"। तत्र भोजनाभावश्च अहोरात्रकालावच्छिन्नः। यथोक्तं स्मृतौ "तपनोदयमारभ्य यामाष्टकमभोजनम्। उपवासः स विज्ञेयः प्रायश्चित्ते विधीयते" प्रायश्चित्ते इत्युपलक्षणम्। प्राजापत्यादौ त्रिरात्राद्युपोषणस्यैवाहत्या बोध्यम्। उपवासस्य निरुक्तिर्भवि० पु० दर्शिता यथा "उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह। उपवासः स विज्ञेयः सर्व्वभोगविवर्ज्जितः" वैधोपवासस्य यथा निवृत्तिरूपयत्नपरतया भावरूपत्वं तथा एका० त० समर्थितम् यथा एवञ्च सङ्कल्पविषयस्य अनन्तं पूजयेद्धरिमित्यादौ भावत्वं, नैवेतोऽनन्तमाराधितादौ चाभावरूपत्वम्। ननु तर्हि व्रतस्य कर्त्तव्यभावरूपत्वात् "निषेधः कालमात्रके" इत्यस्यैव विषयत्वं स्यादिति चेन्न तस्य केवलनिषेधविषयकत्वात् अस्य तु सङ्कल्पादीतिकर्त्तव्यतायोगित्वेन भावघटितत्वात् "तत्र पूज्यो विधेः स्थितिः" इत्यस्यैव विषयत्वमिति। जीमूतवाहनेनापि "एकादश्यां भोजने दोषं दर्शयन्नुपवासं नियमयति। न चायं निषेधः इतिकर्त्तव्यताविधानात् निषेधे चेतिकर्त्तव्यताविरहात् तत्पदाप्रयोगाच्च" इत्युक्तम्। यत्तु निषेधप्रकरणस्थदेवलवचने "न शङ्खेन पिबेत्तोयं न खादेत् कूर्म्मशूकरौ। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि" इत्यत्र नञो निषेधे मुख्यत्वाद्भोजनाभावः प्रतीयते नत्वभोजनसङ्कल्परूपं व्रतं लक्षणाप्रसङ्गात्। मत्स्यपुराणे "दशम्यां नियताहारो मांसमैथुनवर्ज्जितः। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि" इति दशमीनियमपूर्व्वकं व्रतमभिधाय 'रटन्तीह पुराणानि भूयोभूयो वरानने।। न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे" इत्यादिविधेरनन्यगतिकतया निषेधकत्वमवश्यं वाच्यम्। तथाच निषिद्धे भोजने दोषश्रवणं निषेधातिक्रमजन्यतयैवोपपद्यमानं न फलवत्तया काम्यतया नित्यस्य व्रतस्य नित्यत्वे प्रमाण-

मिति तच्चिन्त्यं न खलु "न शङ्खेन पिबेत्तोयमित्यादिभिः" प्रतिपन्ननिषेधभावे साहचर्य्येणैकादशीभोजननिषेधकमात्रमुत्तरार्द्धं किन्तु "एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। वनस्थयतिधर्म्मोऽयं शुक्लामेव सदा गृही" इति गोभिलवचने धर्म्मपदसमभिव्याहारेणैकादश्यामुपवसेदित्यनेनैकवाक्यतया चोपवासविधायकमपि नहि निषिद्धानां ब्रह्महत्यादीनां त्यागेन कश्चिद्धर्म्मो जायते किन्तु भावरूपाद्धानुष्ठानोऽनिषिद्धो धर्म्मो भवेदिति, वैधोपवासे च "उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह। उपवासः स विज्ञेयः सर्व्वभोगविवर्ज्जितः" इति भविष्यपुराणवचनेन भोगमात्रस्यैव वर्जने प्राप्ते वचनान्तरादहोरात्राभोजनस्यैव पापनिवृत्तगुणवासयुक्तस्य प्राधान्यमन्यभोगवर्जनस्याङ्गत्वम्। तथाच "स्नातको स्नातको चैव प्रणम्य मनसा हरिम्। एकादश्यां न भुञ्जीत व्रतमेतद्धि वैष्णवम्"। अत्र एकादश्यामुपवासमात्रस्य व्रतत्वमुक्तम् एकादश्यां न भुञ्जीतेत्यस्य व्रतपरत्वेन नाभोजनपरता तस्याश्च पूर्व्वं दूषितत्वात्। ततश्च यथा एकादश्यां न भुञ्जीत इत्यत्र वचनान्तरादुपवासरूपव्रतपरत्वं तथा न भोक्तव्यमित्यत्रापि। वस्तुतस्तु वराहपुराणे एकादशीव्रतसन्दर्भमध्ये "न शङ्खेन पिबेत्तोयमिति" न भोक्तव्यं न भोक्तव्यमिति वचनद्वयमभिधाय व्रताकरणे प्रत्यवाय उक्तः। नच पौनरुक्त्यभिया तस्य निषेधकत्वमिति वाच्यम् तथात्वे एतद्वचन एव न भोक्तव्यमिति पुनरुपादानं व्यर्थं स्यात् किन्तु वीप्सया तस्यैव व्रतस्य नित्यत्वख्यापनमिति। अन्यथा "निषेधः कालमात्रकः" इत्यनेनैव एकादशीकाल एव भोजननिषेधः स्यात्"। "एकादश्यां प्रकुर्वन्ति उपवासं मनीषिणः" इति भविष्यपुराणे उपवासपदान्निराहारपदं नैकादशीकालमात्राभोजनपरम् किन्तु तद्युक्ताहोरात्राभोजनपरम्। तत्रैवोपवासपदव्यवहारात्। नच वैपरीत्यम् उपवासपदस्याहाराभावमात्रपरत्वे लक्षणाप्रसङ्गात्। निराहारपदस्योपवासपरत्वे तु न लक्षणा सामान्यशास्त्रस्य विशेषतात्पर्य्यकत्वात्। तथाच कात्यायनः "नित्योपवासी यो मर्त्यः सायं प्रातर्भुजिक्रियाम्। सन्त्यजेन्मतिमान् विप्रः सम्प्राप्ते हरिवासरे"। सायं प्रातरिति रात्रिदिनोपलक्षणम् "मुनिभिर्द्विरशनमुक्तं विप्राणां मर्त्यवासिनां नित्यम्। अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः" इति छन्दोगपरिशिष्टैकवाक्यत्वात्। अतएव स्वरूपतिथेरहोरात्रकीर्त्तनम् अहोरात्रसाध्यकर्म्माङ्गत्वार्थम्। तथाच

नुकल्पपक्षेऽधिकदोषाय । अतएव "अन्ने तु धान्य संभूत गिरिजे भुवि जायते । धान्यानि विविधानीह जगत्या शृणु यत्नत । श्यामाकमकुराय धान्यकोद्रव सर्षपा' यवगोधूम मुद्गाश्च तिलकङ्कणसयकाः' इत्यादीन्य ष्टादश धान्यान्युक्त्वा "एतैरेव समुद्भूतमन्न भवति शोभने ! । अन्नपाने व्रते भक्ष्ये नैतान्येव विवर्ज्जयेदिति' ब्रह्मोत्तर खण्डे धान्यमात्रस्य भूमात्रस्य निषेधात् । अतएव भक्तं हविष्यान्नमोदनं चेत्यनेन अन्नोदनपदेन सिद्धान्नमात्रभिन्नस्यानुकल्पतोक्ता ।

एकादश्युपवासेऽधिकारित्व एकादशीशब्दे वक्ष्यते । सभर्तृकायान्तु भर्त्तुरनुमतिं विनोपवासे नाधिकारः । "नास्ति स्त्रीणां पृथग् यज्ञो न व्रतं नाप्युपोषणम् । पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते' मनूक्ते सावित्रीव्रतादौ विशेषविधानात् भर्त्रनुज्ञयाऽधिकारः । अतएव शङ्खेन सामान्यत उक्तम् "कामं भर्त्रनुज्ञया व्रतोपवासनियमेज्यादीनाम भ्यासः स्त्रीधर्म्मः" "पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत् । आयुः संहरते पत्युः सा नारी नरकं व्रजेत्" इति विष्णुवाक्यन्तु अनुमत्यभावविषयकम् ।

स च उपवासः नित्यः काम्यः नैमित्तिकश्चेति त्रिधा तत्रैकादशीशिवरात्र्याद्युपवासो नित्यः । एकादशीशब्दे शिवरात्र्यादिशब्दे च तत्प्रमाणं द्रष्टव्यम् । काम्यस्तु "अमावस्या द्वादशी च संक्रान्तिश्च विशेषतः । एताः प्रशस्तास्तिथयो भानुवारस्तथैव च । अत्र स्नानं जपो होमो देवतानाञ्च पूजनम् । उपवासस्तथा दानमेकैकं पावनं स्मृतम्" भ० "सप्त वारानुपोष्यैवं सप्तधा संयतेन्द्रियः । सप्तजन्मकृतं पापं तत्क्षणादेव नाशयेत्" स०प्रदी० "नित्यं द्वयोरयनयोर्नित्यं विषुवतोर्द्वयोः । चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु । अहोरात्रोषितः स्नानं दानं होमं तथा जपम् । यः करोति महात्मा तस्य स्यादक्षयञ्च तत्" मत्स्यपु० इत्यादौ विहितः तत्कामनविषयत्वात्तन्नित्य इति भेदः । नैमित्तिकः प्रायश्चित्तरूपः "त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् । त्र्यहं परञ्च नाश्नीयात् प्राजापत्यं चरन् द्विजः" मन्वादिविहितः एवमन्यान्यपि प्रायश्चित्तविधायकानि वाक्यानि स्मृतितोऽन्वेष्याणि

तत्र काम्ये सर्वाङ्गयुक्तिमानधिकारी भवतीत्युक्तेः सर्वाङ्गोपेतस्यैवाधिकारः । नित्ये तु यथाकथञ्चिदनुष्ठानमिति हरचितम् एका०त० "एवञ्चैकादशीव्रतस्य नित्यत्वात् शिरोदर्शवत्तस्येऽपि प्रधानोपवासादेराचरणं यावज्जीवाधिकरणन्यायात् । स च न्यायो यथा 'यावज्जीवमग्निहोत्रं जुहुयादिति श्रूयते तत्र किं सर्वाङ्गोपसंहारेणैवाधिकारः उत यावज्जीवपदेन यावन्ति शक्नोत्युपसंहर्त्तुं यदा तदा तावद्भिरङ्गैरुपेतं प्रधानं कर्मस्वधिकरोतीति संशयः । तत्राद्यः सर्वाङ्गोपेतस्य प्रधानस्य फलसाधनत्वादङ्गवैकल्ये फलानुदयात् सर्वाङ्गोपसंहार इति पूर्वपक्षः तत्र सिद्धान्तः "सायं प्रातर्जुहोतीति" श्रुतेः सायं प्रातः कालावच्छिन्नं जीवनमग्निहोत्रस्य निमित्ततया श्रूयते तत्सत्त्वात्, सति निमित्ते नैमित्तिकमवश्यं भावि अन्यथा निमित्तत्वासम्भवात् । अतोऽशक्याङ्गपरित्यागेन प्रधानं कर्त्तव्यम् तावतैव शास्त्रार्थात् फलसिद्धिरिति अतएव नैमित्तिकाधिकारे श्रीधरस्वामिधृता श्रुतिः "यथा शक्नुयात्तथा कुर्यादिति" । बौधायनोऽपि आह । "यथा कथञ्चिद्वि तन्त्राणि यावद्वस्तुनिरूपतः । येन केनापि कार्याणि नैव नित्यानि लोपयेत्" ।

असमर्थस्यानुकल्पेनाप्याचरणम् अनुकल्पश्च कर्तृद्रव्यादिषु प्रतिनिधिरूपः तत्राह मनुः । "विश्वैश्च देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः । आपत्सु मरणाद्भीतैर्विधेः प्रतिनिधिः कृतः । प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते । न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्" । अनापत्प्रतिनिध्यनुकल्पानां पर्यायता । कालविवेकधृतवराहपुराणे "उपवासासमर्थस्तु किञ्चिद्भक्ष्यं प्रयोजयेत्" तथा एकादशीमधिकृत्य स्मृतिः "एकभक्तेन नक्तेन अयाच्य वृद्धातुरः क्षिपेत्" नारदीये "अनुकल्पोऽन्यथा प्रोक्तः क्षीणानां वरवर्णिनि ! । मूलं फलं पयस्तोयमुपभोग्यं भवेच्छुभम् । नत्वेवं भोजनं कैश्चिदेकादश्यां प्रकीर्त्तितम्" । एवमनुकल्पासामर्थ्ये ब्रह्मवैवर्त्ते । "उपवासासमर्थश्चेदेकं विप्रन्तु भोजयेत् । तावद्धनानि वा दद्यात् यद्भक्ताद्विगुणं भवेत् । सहस्रसम्मितां देवीं जपेद्वा प्राणसंयमान् । कुर्य्याद्द्वादशसंख्याकान् यथाशक्ति व्रते नरः" । देवीं गायत्रीम् । वायुपुराणे "उपवासनिषेधे तु किञ्चिद्भक्ष्यं प्रकल्पयेत् । न दुष्यत्युपवासेन उपवासफलं भवेत् । नक्तं हविष्यान्नमोदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यम् । यत् पञ्चगव्यं यदि वाथ वायुः प्रशस्तमत्रोत्तरमुत्तरञ्च" । उपवासनिषेधे तु अशक्तत्वं हविष्यादिरनुकल्पः । तानि च "अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः । हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्" बौधायन । एकादश्यतिरिक्तोपवासे अनुकल्पपक्षे विशेषः नि०सि० । "निश-

स्नायी मिताहारो गुरुदेवद्विजार्चकः । क्षारं क्षौद्रञ्च लवणम् मधुमांसानि वर्जयेत्” इत्यौच० अग्निपु० । क्षाराश्च तत्रैवोक्ताः “तिलमुद्गादृते शिम्बाः शस्ये गोधूमकोद्रवौ । धन्याकं देवधान्यञ्च शमीधान्यं तथैव च । शिम्बधान्यं तथा पण्यं मूलं क्षारगणाः स्मृताः” गोधूमस्य क्षारत्वेऽपि उपवासानुकल्पे प्रतिप्रसवस्तत्रैव “व्रीहिषष्टिकमुद्गाश्च कलायाः सतिलं पयः । श्यामाकश्चैव नीवारा गोधूमाद्या व्रते हिताः” । कुष्माण्डालाबुवार्त्ताकुपालङ्कीज्योत्स्निकाः त्यजेत् । चरुभैक्ष्यं सक्तुकणाः शाकं दधि घृतं मधु । श्यामाकशालिनीवारा यावकं मूलतण्डुलम् । हविष्यं व्रतनक्तादावग्निकार्यादिके हितम् । मधुमांसं विहायान्यव्रते वा हितमीरितम्” । “चरुभैक्ष्यसक्तुकणायावकशाकपयोदधिघृतमूलफलोदकानि हवींष्युत्तरोत्तरं प्रशस्तानि” मिता० गौत० । निर्णया० सम० । स्तेनद्विंसकयोः सख्यम् कृत्वा स्त्रैन्यञ्च हिंसनम् । प्रायश्चित्तं व्रती कुर्यात् उपवासमतन्द्रितम् । मिथ्यावादे दिवास्वापे बहुशोऽम्बुनिषेवणे । अष्टाक्षरं व्रती जप्त्वा शतमष्टोत्तरं शुचि” । अतएव समर्थस्य किञ्चिद्भक्षणमपि भक्त्या निषिद्धम् । “उपवासो यदा राम । श्राद्धं नैमित्तिकं भवेत् । उपवासं तदा कुर्यादाघ्राय पितृसेवित मिति” कात्या० ।

अथ कर्त्तृप्रतिनिधिः स्वयमशक्तौ प्रतिनिधिनाऽपि उपवासादिव्रत कार्य्यमित्याह स्कन्दपु० । “पुत्रञ्च विनयोपेतं भगिनीं भ्रातरन्तथा । एषामभाव एवान्यं ब्राह्मणं विनियोजयेत्” गरुड़पुरा० । “भार्य्या भर्त्तुर्व्रतं कुर्य्याद्भार्य्यायाश्च पतिस्तथा । असामर्थ्ये द्वयोस्ताभ्यां व्रतभङ्गो न जायते” । वराहपुराणे “पितृमातृपतिभ्रातृश्वश्रूगुर्वादिभूभुजाम् । उद्दिश्यार्थमुपोष्यैव स्वयञ्च फलभाग्भवेत्” ।
अत्र नि० सि० निकायखण्डने विशेषः “काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः । काम्येऽप्युपक्रमादूर्द्ध्वं केचित् प्रतिनिधिं विदुः । न स्यात् प्रतिनिधिर्मन्त्रस्वामिदेवाग्निकर्म्मसु । न देशकालयोर्नास्ति भार्य्यायोरग्निरेव सा । नापि प्रतिनिधातव्यं निषिद्धं वस्तु कुत्रचित्” । ततश्च शक्तौ उपोषणादिकमनुकल्पादिना कार्य्यं पूजादिकं तु स्वयमसामर्थ्ये अन्येन कारयेदिति एका० त० रघु० ।

नित्यकाम्ययोरुपवासयोरयं भेदः “उपवासफलं प्रेप्सुस्त्यजेत् भक्तचतुष्टयमिति” कालमा० भारतम् “जह्यात् भक्तद्वयं नित्ये काम्ये भक्तचतुष्टयम् । सायमाद्यन्तयोर्भक्तमेकैकं मध्यमे द्वयम्” एका० त० स्मृतिः । अत्र सायमित्यस्य एकभोजनमात्रपरत्वम् तेन दैवात् पूर्व्वदिने दिवसाऽभोजने रात्रिभोजनेऽपि न फलाप्राप्तिः “अह्नोराद्यन्तयोरुक्तमेकैकं मध्यतो द्वयम् । उपवासफलं प्रेप्सोर्वर्ज्यं भक्तचतुष्टयमिति” वाराहात् ।

उपवासव्रतस्य वैधतया तत्तत्तिथेः पूर्व्वखण्डएव कर्त्तव्यता तन्निरूपणाय प्रतिपदमारभ्य खण्डविशेषनियमनं कालमा० दर्शितं तत्रादौ प्रतिपत्प्रकरणे यथोक्तं तदुच्यते ततो “मार्गशिरे मासि प्रतिपद्यपरेऽहनि । दत्त्वा गुरुञ्चोपवसेन्महादेव ! चरन्नुचुरिति” । ननु पूर्व्वविद्धायां शुक्लप्रतिपदि योऽयदुपवासो विहितस्तस्य संकल्पं किं प्रातः कार्य्यः किं वा परत्र, नाद्य प्रातस्तदभावेन सकल्पायोगात् । अतएव बौधायन “योयस्य विहित कालः कर्म्मणस्तमुपक्रमे । तिथिर्याऽभिमता सा तु कार्य्या नोपक्रमोज्झितेति” स्कन्दपुराणेऽपि “योयस्य विहित काल कर्म्मणस्तदुपक्रमे । विद्यमानो भवेदङ्गं नोज्झितोपक्रमेण तु”(सन्धिरार्ष )। न द्वितीयः प्रात कालस्यैव सकल्पाङ्गत्वात् तथा च स्मर्यते “प्रातः संकल्पयेद्विद्वानुपवासव्रतादिकमिति”। तथा “प्रातरारभ्य मतिमान् कुर्य्यान्नक्तव्रतादिकम् । नापराह्णे न मध्याह्ने पित्र्यौ कालौ हि तौ स्मृतावि”ति । अत्रोच्यते यथोक्तवचनबलात् प्रातरेव संकल्पं कार्य्यं तदानीं ज्योतिःशास्त्रप्रसिद्धप्रतिपदभावेऽपि स्मृतिभिरापादितायाः प्रतिपदः सत्त्वात् अतएव देवल “यान्तिथिं समनुप्राप्य अस्तं याति दिवाकरः । तिथिं सा सकला ज्ञेया दानाध्ययनकर्म्मस्विति” अत्र दानाध्ययनयोरुपवासादिनिखिलदैवोपलक्षणार्थत्वविवक्षया कर्म्मस्विति बहुवचनं निर्द्दिष्टम् । अत्रास्तमयात् पूर्व्वं मुहूर्त्तत्रयव्यापिनीं तिथिं समनुप्राप्येति व्याख्येयम् । न तु ततोऽल्पव्याप्तिर्विवक्षिता तथा सति पूर्व्वोत्तरवैधाभावेनोत्तरतिथेरेव ग्राह्यत्वप्रसङ्गात् तथा च त्रिमुहूर्त्तव्याप्तिः स्कन्दपुराणे दर्शिता । “यान्तिथिं समनुप्राप्य यात्यस्तं पद्मिनीप्रियः । सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्त्ता यदा भवेदिति” । शिवरहस्यसौरपुराणयोरपि “यां प्राप्यास्तमुपैत्यर्कः सा चेत् स्यात्त्रिमुहूर्त्तिका । धर्म्मकृत्येषु सर्व्वेषु सम्पूर्णां तां विदुर्बुधाः” इति । वृद्धवशिष्ठोऽपि “यस्यान्तिथावस्तमियात् सूर्य्यस्तु त्रिमुहूर्त्तकैः । यागदानजपादिभ्यस्तामेवोपक्रमेत् तिथिमिति” । ननु सायन्तनत्रिमुहूर्त्तशुक्लप्रतिपदुपेतायां तिथौ प्रातरेव संकल्प्य प्रतिपदुपवासः कार्य्य इति युग्मादिवचनमाश्रित्य निर्णीतं तत्तिथिद्वये तथाऽस्तु श्रावणयोस्तु खर्व्वादि

प्रतिपच्चमी चैव कर्त्तव्या साम्मुखी तिथिः”। पैठी०उक्तेः “साम्मुख्यं नाम सायाह्नव्यापिनी दृश्यते यदा” इतिस्कन्दपुराणोक्तसाम्मुख्ययुक्तायाः प्रतिपदोग्राह्यता सायाह्नव्याप्तिश्च मुहूर्त्तान्यूनत्वेन ग्राह्यमिति। उभयदिने तत्प्राप्तौ त्रिसन्ध्यव्यापिन्येव तु परैवोपोष्या “त्रिसन्ध्यव्यापिनी या तु सैव पूज्या सदा तिथिः। न तत्र युग्मादरणमन्यत्र हरिवासरादिति” पराशरवाक्येन तदपवाद एतच्च जयन्तीशिवरात्र्यादि विशेषेतरपरमिति ति०त०तेनोक्तम्। अत्र प्रागुक्तविशेषवचनानुसारिमाधवमतमेव न्याय्यं। गौडाहतमपि रघुनन्दनमतन्तु सामान्यशास्त्रानुसारित्वात् दुर्बलमिति सुधीभिरपक्षपातिभिर्विवेच्यम्।

अन्यासु तिथिषु व्यवस्था तु तत एवावगन्तव्या दिङ्मात्रमिह दर्शितम् तिथिशब्दे विवृतिः। उपवासे दीयते कार्य्यं वा व्युष्टा० अण्। औपवास तत्र देये तत्र कार्य्ये च त्रि०। तस्मै प्रभवति विमुक्ता०ठञ्। औपवासिक तस्मै पर्य्याप्ते त्रि०।

**उपवासक** त्रि० उप+वस–ण्वुल्। १अनाहारकारिणि। उपवासे हितम् कन्। २व्रतभेदे त्रि० “नैव यज्ञक्रिया काचिन्न श्राद्धं नोपवासकम्” भा० २०४ अ०।

**उपवासन** न० उप+वास–उपसेवायाम् भावे ल्युट्। उपसेवने। “यदा सन्ध्यामुपाधाने यद्दोपवासने कृतम्” अथ० १४,२,६३।

**उपवासिन्** त्रि० उप+वस–णिनि। अनाहारकर्त्तरि “दिनोपवासी तु निशाभिपायी जटाधरः सन् कुलटाभिलाषी” हास्यार्णव “विमानैर्हंससंयुक्तैर्यान्ति मासोपवासिनः” भा० अ० १०६ अ०।

**उपवाहन** न० उप+वह–णिच्-भावे ल्युट्। समीपनयने।

**उपवाह्य** पु० उप उत्कर्षे प्रा०स०। राजवाह्यहस्तिनि हेम०

**उपविद्** स्त्री उप+विन्दते: वेत्तेर्वा सम्प० क्विप्। १उपलम्भे प्राप्तौ २ज्ञाने च “उपविदा वह्निर्विन्दते वसु” ऋ० ८,२३,३। “उपविदा उपवेदनेनैते हवींषि देवार्थं न प्रयच्छन्तीत्येतज्ज्ञानेन” भा०। कर्त्तरि क्विप्। ३प्रापके ४वोद्धरि च त्रि०।

**उपविन्दु** पु० उपगतो विन्दुम् अत्या०स०। राजभेदे तस्यापत्यम् बाह्वा० इञ्। औपविन्दवि तदपत्ये पुंस्त्री०।

**उपविष** पु० उपमितं विषेण अत्या०स०। “अर्कक्षीरं स्नुहीक्षीरं तथैव कलिहारिका। धत्तूरः करवीरश्च पञ्च चोपविषाः स्मृताः” इत्युक्तेषु १अर्कक्षीरादिषु २कृत्रिमविषे० हेम०। ३अतिविषायां (आतइच्) स्त्री।

**उपविष्ट** त्रि० उप+विश–कर्त्तरि क्त। कृतोपवेशने “उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतय” कात्या० १,२,७,।

**उपवीणि** सं०णया उपगायति उप+वीणा+णिच् नामधातुः सक०उभ०सेट्। उपवीणयति ते उपाविवीणत् त। उपवीणयाम् बभूव आस चकार चक्रे उपवीणित “श्रितगोकर्णनिकेतमीश्वरम् उपवीणयितु ययौ रवेरुदयावृत्तिपथेन नारदः” रघु०।

**उपवीत** न० उप+व्ये–क्त सं०प्र०। वह्निर्भूतदक्षिणहस्ततया वामांसस्थापिते कार्पासादि यज्ञसूत्रे। तच्च त्रिगुणीकृतस्य सूत्रस्य पुनस्त्रिगुणत्वे भवति यथाह छन्दो०प० “ऊर्द्ध्वं तु त्रिवृतं कार्य्यं तन्तुत्रयमधोवृतम्। त्रिवृतञ्चोपवीतं स्यात् तस्यैकोग्रन्थिरिष्यते”। तथा च प्रथमं ऊर्द्ध्ववर्त्तनेन सूत्रत्रयमेकीकृत्य पुनस्तथाभूतसूत्रत्रयस्याधआवर्त्तनेन नवसूत्रात्मकमेकत्र पिण्डीकृतं भवति तच्च पुनस्त्रिवृतमसंहतरूपेण पिण्डीकृतमेकग्रन्थियुक्तमेकमुपवीतं भवति। व्यक्तमाह देवलः “यज्ञोपवीतकं कुर्य्यात् सूत्राणि नव तन्तवः” इति। तद्द्वयमेव सर्व्वदा धार्य्यम् उत्तरीयवस्त्राभावे तु तत्त्रिकं धार्य्यम् “यज्ञोपवीते द्वे धार्य्ये श्रौते स्मार्त्ते च कर्म्मणि। तृतीयमुत्तरीयार्थं वस्त्राभावेऽतिदिश्यते” आ०त० स्मृतेः। तद्ग्रन्थ्यश्च सावित्रीमन्त्रेण कार्य्यः “सावित्रीग्रन्थिसंयुक्तमुपवीतं तवाच्युत” विष्णुपूजने ब्रह्मपुराणात् “लौकिकास्तु सावित्रीग्रन्थिःप्रवरसङ्ख्यायैरितग्रन्थिरित्याहुः” आ०त० रघु०। अत्र सावित्रीग्रन्थिरित्युक्तेः देवपूजादौ सावित्रीग्रन्थिः, देवान्यत्र सावित्रीग्रन्थि ब्रह्मग्रन्थिर्वेति शाखिभेदाद्व्यवस्था। तत्सूत्रभेदश्च मनुना वर्णभेदेन उक्तः “कार्पासमुपवीतं स्यात् विप्रस्योर्द्ध्ववृतं त्रिवृत्। शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम्”। “ऊर्द्ध्ववृतं दक्षिणावर्त्तितम्” कुल्लू०। इदञ्चोपनयनकाले उत्तरकाले तु सर्वेषामेव कार्पासमयमिति भेदः। क्षत्रियाणान्तु यथेच्छसूत्रमयम् अत एव माघे “विहङ्गराजाङ्गरुहैरिवायतैर्हिरण्मयोर्वीरुहवल्लितन्तुभिः। कृतोपवीतं हिमशुभ्रमुच्चकै” “मुक्तायज्ञोपवीतानि बिभ्रतो हैमवल्कलाः” कुमारे च वर्णितम्।

यद्यप्युपनयनप्रकरणे उपवीतधारणं गृह्यसूत्रादौ न विहित तथापि प्रागुक्तमनुवचने “मेखलामजिनं दण्डमुपवीतं कमण्डलुम्। अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्” इति मनुवचने समन्त्रकधारणविधानात् “सदोपवीतिना भाव्य

मिति स्मृतेः "दण्डाजिनोपवीतञ्च मेखलाञ्चैव धारयेत्" याज्ञ० वाक्यात् "पवित्रं वाससी प्रयच्छतीति" आप्तू-कर्मवाक्यात् तदाहरणमवश्यं कार्य्यमिति गम्यते। किञ्च सूत्रकारेणापि कर्मविशेषे यज्ञोपवीतधारण-नियमोऽभिहितः "यज्ञोपवीतशौचे च" आश्व० सू० १, १, १० "मातुषपैत्र्यव्यतिरिक्ते कर्ममात्रे उपवीतधारणनियम" ना० वृ०। "यज्ञोपवीतिना आचान्तेन कार्य्यमिति" गोभिल सूत्रे च तथा नियम्यते। "यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामि" भट्टभाष्यधृतमन्त्रलिङ्गात् "यज्ञो-पवीतिना कुर्य्यादिति" शाङ्ख्यायनसूत्राच्च "वैणवीं धार-येद्यष्टिं सोदकञ्च कमण्डलुम्। यज्ञोपवीतं वेदञ्च शुभे रौक्मे च कुण्डले" इति मानवाच्च तद्धारणविधिः। "यज्ञोपवीतं परमं पवित्रं बृहस्पतेर्यत् सहजं पुरस्तात्। आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः" इति मन्त्रोक्तफलमेव तद्धारणे ज्ञेयम्। तथाष्टते २यक्षे च

न केवलं यज्ञसूत्रस्यैव तथात्वं तथाविनिवेशितस्य वस्त्र-स्यापि तथात्वम् "दक्षिणं बाहुमुद्धृत्य शिरोऽव-धाय सव्येऽंसे प्रतिष्ठापयति दक्षिणं कक्षमवलम्बनं भवति एवं यज्ञोपवीती भवति सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेऽंसे प्रतिष्ठापयति सव्यं कक्षमवलम्बनं भवत्येवं प्राचीनावीती भवति, निवीती कण्ठसज्जन इति" गोभिलेन सामान्यतोऽभिधानात् "शिरोऽवधाय दक्षिणादिपाणाव-दुद्धृते कण्ठादेव सज्जने ऋजु प्राकम्बे यज्ञसूत्रे वस्त्रे च निवीती भवति" कुल्लू०उक्ते मनुना "उद्धृते दक्षिणे पाणा-वुपवीत्युच्यते द्विजः। सव्ये तु प्राचीनावीती निवीती कण्ठसज्जने" इति सामान्यतोऽभिधानाच्च। उपवीतमस्या-स्तीति इनि। उपवीतिन् तथासन्निवेशितसूत्रवस्त्रधारिणि। उपवीतस्य वस्त्रादिषु निवेशविशेषरूपस्य प्राकरणिकाङ्गता मीमांसाया ३अ० १पादे निर्णीता यथा "दर्शपौर्णमा-सयोः ७। दशाम्नातन्त्र कयो सामधेन्य उक्ता नवमे निविदः दशमे काम्या सामधेनीकल्पाः, एकादशे यज्ञोप-वीतमाम्नातम्। "उपव्ययते देवलक्ष्मैव तत् कुरुते" इति श्रुतिवाक्यार्थस्य उपवीतं सामधेनीनां प्रकरणे निविष्टेऽ-निविष्टं वा इति सन्देहे सामधेनीप्रकरणमधिकृत्य तत्र उपवीतं समाम्नातमिति कुतः? काम्यानां सामधेनीक-ल्पानामानन्तर्य्यवचनात् हृदयमनुविपरिवर्त्तमानाः सामधेनीषु उपवीतमाम्नमन्ति कर्त्तुं च वाससो विन्यासमात्रं गुणो भवति उपवीतं नाम, किं कुर्वता तत्कर्त्तव्यमिति?

भवति तत्र पदार्थाकाङ्क्षा तत्र बुद्धौ सन्निहितेनाविप्र-कृष्टेन सामधेनीवाक्येन एकवाक्यतामुपगम्य सामधेनीषु उपवीतम् उपव्ययते इति शब्दोऽभिदधाति इति गम्यते इति पूर्व्वपक्षः। सिद्धान्ते तु निविदा व्यवधानात् बुद्ध्या विप्रकृष्टत्वाच्च वाक्यभेदभिया च न सामधेनीभिः सहैकवा-क्यतोपवीतस्य, तस्मात् दर्शादिप्रकरणे यदनुष्ठेयं तदुप-वीतिना कार्य्यम् इति"। श्रुतौ उपव्ययते इति श्रवणात् उपपूर्व्वकात् व्येञ एव रूपमुपवीतमिति तु न्याय्यमित्यन्य दुपेक्षितम्। वजधातुरूपोक्तिः शब्ददर्शनात् प्रामादिकी।

उपबृंहित त्रि० उप+बृन्ह–णिच्–कर्म्मणि क्त। १वर्द्धिते बहुलं करोति बहुल+णिच्–बृ ह्रादेशे क्त। २बहुलीकृते अन्नार्थे वर्ण्यमादिरयमिति भेदः।

उपवेणा स्त्री उपगता वेणाम् अत्या० स०। नदीभेदे "वेणोप-वेणा भीमा च बडवा चैव भारत" भा० व० २२१ अ०।

उपवेद पु० उपमितः वेदेन अवा० स०। वेदसदृशे आयुर्वे-दादौ। स च वेदभेदेन चतुर्द्धा "तत्रर्ग्वेदस्यायुर्वेद उपवेदः, यजुर्वेदस्य धनुर्वेदः, सामवेदस्य गान्धर्ववेदः, अथर्ववेदस्य शस्त्रशास्त्राणीति" शौनकोक्तचरणव्यूहोक्तादिवाक्यैः। भा-वप्रकाशमते तु "विधाताथर्वसर्वस्वमायुर्वेदं प्रकाशयन्" इ-त्युक्तेः अथर्ववेदोपवेदत्वमायुर्वेदस्येति भेदः। अतएव सुश्रुते "इह खल्वायुर्वेदो नाम यदुपाङ्गमथर्ववेदस्येत्युक्तम्"

उपवेश पु० उप+विश–भावे घञ्। (वसा) १स्थितौ "प्रातः स वने जुहोति सवेशायोपवेशाय गायत्र्यै छन्दसेऽभिभूत्यै स्वाहा" कात्या० २५, ४ १६, उपमितो वेशेन अवा० स०। आहार्य्यरूपवेशसदृशे २वेशे। तेन जीवति वेतनादि० ठञ्। औपवेशिक तेनोपजीविनि त्रि० स्त्रियां ङीप्।

उपवेशन न० उप+विश–भावे ल्युट्। (वसा) १आसने "प्रा योपवेशनमतिर्न्नृपतिर्बभूव" रघु। "अन्वासितमरुन्धत्या" रघुव्या० "पश्चादुपवेशनेनोपसेवितम्" मल्लि०। "प्राये-णोपवेशने" आश्व० श्रौ० ४, ८, १, "मन्त्रोपवेशने विनि-योगः" भवदेव० णिच्–भावे ल्युट्। निवेशने २स्थापने च

उपवेशि पु० उप+विश–इन्। यजुर्वेदसम्प्रदायप्रवर्त्तके ऋ-षिभेदे "अरुणादरुण उपवेशेरुपवेशि" शत० ब्रा० १४, ९, ४, ३३, वंशवर्णने उक्तम्। [प्रविष्टे।

उपवेशिन् त्रि० उप+विश–णिनि। उपवेशनकर्त्तरि उ-

उपवेष पु० उप+विष–करणे घञ्। अङ्गारविभजनार्थे काष्ठे "स उपवेषमादत्ते धृष्टिरसीति" शत० ब्रा० १, २, १२, अङ्गा-रविभजनार्थे काष्ठविशेष उपवेषः" भा० अङ्गारान्निमाला प्रा-

देशमात्रो वा तत्करणप्रकारः "मूलादुपवेषं करोति" का० ४,१,१२, दर्शितः "प्रथमं तु यां शाखामूलमरत्निप्रमाणाधिकप्रमाणं छित्त्वा पृथक् कार्यं ततस्तत्वादुपवेषं करोति उपवेषशारत्निमात्रं प्रादेशमात्रो वा पराशरोक्तः" कर्कः । स च हस्ताकृतिः "पृथिवीत्युपवेषमादायाघात्य इत्यङ्गारान् प्राच करोति" कात्या० २,४,२६, व्या० उपवेषोऽङ्गारापोहनसमर्थः हस्ताकृति काष्ठम्' कर्कोक्तः "धृष्टासि ब्रह्मना त्वा इत्यभिवासयति भस्मना वेदेनोपवेषेण वा" कात्या० २,५,२५,

**उपवैणव** न० उपवेणु—अण् उत्तरपदवृद्धिः । त्रिसन्ध्ये हेम०

**उपव्याख्यान** न० उप+वि+आ+ख्या—ल्युट् । फलमाहात्म्योपासनप्रकारादिकथने । "ओमित्येतदायति तस्योपव्याख्यानम्" छा०उ० 'तस्याक्षरस्योपव्याख्यानम् एवमुपासनम्, एव विभूतिः, एव फलमित्यादिकथनम्" शा०भा० । "आदित्या ब्रह्मेत्यादेशस्तस्योपव्याख्यानम्" "ओमित्ये तदक्षर सर्वं तस्योपव्याख्यानम्" इति च छा०उ० ।

**उपव्याघ्र** पु० उपमितो व्याघ्रेण अव्या०स०।१व्याघ्रतुल्ये मृगान्तके (चितावाघ)चित्रकाख्ये पशुभेदे । सामीप्ये अव्ययी०। २व्याघ्रसमीपे अव्य० ।

**उपव्युषस** अव्य०विगता उषाः व्युषा प्रा०स० ततः विभक्त्यर्थे सामीप्ये वा अव्ययी०अच् समा०। विगतायामुषसीत्यर्थे "उपव्युषसं सपत्नीका दक्षिणा गच्छन्ति" कात्या० २१,३,११, "उपसि विगच्छन्त्याम्" कर्कः । २विगच्छत्या उषसः समीपे च ।

**उपशम** पु० उप+शम—घञ् अवृद्धिः । १इन्द्रियाणां निग्रहे २तृष्णाभावे, ३रोगोपद्रवशान्तौ च । "तेषां पैत्तिकानां व्याधीनामुपशमो हेमन्ते, श्लैष्मिकाणां, निदाघे वातिकानां घनात्यये स्वभावत एव त एते सञ्चयप्रकोपोपशमाः" "तत्कालमेव चातोऽम्लः मद्यस्तस्योपशमार्थम्" इति च सुश्रु० । ४निवृत्तौ "जगत्युपशमं याते भद्द्वगोत्रसमाकुले" भा०व०२०अ०।

**उपशमन** न०उप+शम—भावे ल्युट् । उपशमार्थे "व्याधीनामुपशमनार्थम्" सुश्रु० । उप+शम—णिच्—ल्युट् । अवृद्धि २निवारणे । तस्मै हितम् छ । उपशमनीय रोगशान्तिहेतौ आयुर्वेदे । कर्मणि अनीयर् । निवारणीये । "कटुकौषधशमनीयस्य" सा०द० ।

**उपशय** पु० उप+शी—अच् । १समीपशयने ।"हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम् । औषधान्नविहाराणामुपयोगं सुखावहम् । विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः" इति निदानोक्ते व्याधिहेतुविपरीतौषधादिना २सुखावहोपयोगे। शयः हस्तः तस्मिन् ततसामीप्ये वा अव्ययी० । ३हस्ते इत्यर्थे ४हस्तसमीपे च अव्य० ।

**उपशरद्** अव्य० विभक्त्यर्थे सामीप्ये वा अव्ययी० अच् समा० । १शरदि इत्यर्थे २शरत्समीपे च

**उपशल्य** न०उपगतं शल्यम् अस्थिस्याभं (भागाड़) अत्या०स०। ग्रामान्ते "अम च विशालोपशल्ये कमप्याक्रीडमास द्य" दशकुमा० । "उपशल्यनिविष्टैस्तैः" "अथोपशल्ये रिपुमग्नशल्य," रघुः । उपचारात् २प्रान्तभागे च । "ग्रामोपशल्यमिपतद्दृथनेमिधारा" इति माघः ।

**उपशान्ति** स्त्री उप+शम—क्तिन् । निवृत्तौ उपशमे । "बलमार्त्तभयोपशान्तये" रघुः "वेदनोपशान्तिरस्रक्प्रसादोमार्दवञ्च" सुश्रु० । ["निर्योपशाय कर्त्तव्य" भट्टिः ।

**उपशाय** पु०उप+शी-घञ् । यामिकभटानां पर्यायेण शयने ।

**उपशायिन्** त्रि० उप+शी-णिनि । समीपशयनशीले "ब्रह्मचार्यग्निमित्यधारी क्षीरहोत्युग्निमुपशायी द्वादशरात्रं यद्वा त्रिरात्रमन्वत" कात्या०४,१०,१६,अग्निमुपशायी अग्निसमीप एव भूमौशयः" कर्कः । शीलार्थत्वात् नात्र कर्मणि षष्ठी । "आहूताध्यायी गुरुकर्मस्वचोद्यः पूर्वोत्थायी चरमं चोपशायी । मृदुर्दान्तो धृतिमानप्रमत्तः स्वाध्यायशीलः सिध्यति ब्रह्मचारी" भा० आ० अ०

**उपशिक्षा** स्त्री उप+शिक्ष—अ । सम्यक्शिक्षणे "उपशिक्षाया अभिप्रश्निनम्" यजु०३०,१० ल्युट् । उपशिक्षण तत्रार्थे न०

**उपशिङ्घन** न० उप+शिघि—आघ्राणे ल्युट् । १आघ्राणे । णिच्-ल्युट् ।२आघ्रापणव्यापारे च ।(शोंकान)"तीक्ष्णाञ्जनावपीडाभ्यां तीक्ष्णगन्धोपशिङ्घनैः । वर्त्तिप्रयोगैरथ वा व्रणगन्धं प्रवर्त्तयेत्"सुश्रु०। तत्र शिङ्घनैः शिङ्घनैरिति वा पाठः प्रामादिकः गणपाठे शिघिधातोरेव पाठात् सिघिधातोर्दन्त्यशिङ्घधातोश्चाभावाच्च ।

**उपशिष्य** पु० उपगतः शिष्यम् अत्या०स० । शिष्यशिष्ये "स्वतःप्रमाणं परतः प्रमाणं शुकाङ्गना यत्र संगिरन्ति । शिष्योपशिष्यैरुपगीयमानमवेहि तन्मण्डनमिश्रधाम उद्भ०

**उपशुन** अव्य०शुनि, तस्य समीपे वा अव्ययी०अच् समा० । १कुक्कुर इत्यर्थे २कुक्कुरस्य सामीप्ये वा ।

**उपशोभ** स्त्री उपगता शोभां सादृश्येन अत्या०स०। आरोपितशोभायाम् "विहितोपशोभमुपयाति माधवे" माघः ।

**उपशोषण** न०उप+शुष—णिच्—ल्युट् । १शोषणसाधने व्यापारे । उपशोषयति कर्त्तरि ल्यु । २तत्कारके त्रि०

पर्य्यङ्के शोपसंग्रहे' भा० वि० १७अ०। भावे अच्। २सम्यक् संग्रहे "ग्लानामुपसंग्रह" रामा०

**उपसं(सङ्ग्र)ग्रहण** न० उप+सम्+ग्रह–आधारे ल्युट् वा ङ०। पादग्रहणपूर्वकप्रणामे "उपसंग्रहणं कृत्वा द्रोणाय स विशांपते।" भा०द्रो०७४अ० "व्यत्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरो" मनु। २सम्यक् संग्रहणे च।

**उपसं(सङ्ग्रा)ग्राह्य** त्रि० उप+सम्+ग्रह–कर्म्मणि ण्यत् वा ङ०। पादग्रहणेन अभिवाद्ये "भ्रातुर्भार्य्योपसंग्राह्या सवर्णाऽहन्यहन्यपि। विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः" मनुः। [२सम्यग्नियमे ३बन्धने च।

**उपसंयम** पु० उप+सम्+यम–घञ् अवृद्धिः। १उपसंहारे।

**उपसंयमन** न० उप+सम्+यम-णिच् ल्युट्। १सम्यग्बन्धने करणे ल्युट्। २तत्साधने।

**उपसंयोग** पु० सामीप्येन संयोगः। समीपसंबन्धे। "नामाख्यातयोस्तु कर्म्मोपसंयोगद्योतका भवन्ति उपसर्गाः" व्या०

**उपसंरोह** पु० उपगत संरोहः प्रा०स०। समीपप्ररोहे "मध्यमार्गानुपसंरोह" सुश्रु०।

**उपसंवाद** पु० उपेत्य अङ्गीकृत्य संवादो वदनम्। पणबन्धे माङ्गीकारपूर्व्वककथने "उपसंवादाशङ्कयोश्च" पा०। "उपसंवादः पणबन्धः" सि०कौ०। स च "यदि भवानिदं कुर्य्यात् तर्हि इदमहं ते दास्यामीत्येवं वाक्यरूपः।

**उपसंव्यान** न० उपसंवीयतेऽनेन उप+सम्+व्येञ्–संवृतौ करणे ल्युट्। परिधानवस्त्रे "अन्तरं बहिर्योगोपसंव्यानयो" पा०।

**उपसंहार** पु० उप+सम्+हृ–घञ्। १समाप्तौ, स च यत्तात्पर्य्यावधारकलिङ्गभेदः "उपक्रमोपसंहारौ–इत्युक्तात्पर्य्यनिर्णये, इत्युक्तेः। तत्रोभयोरेव तद्वैसत्त्वं न तु मध्ये-कस्येत्युक्तमुपक्रमशब्दे। २संग्रहे च। ३सम्यग्हरणे ४एकत्र श्रुतार्थस्यान्यत्रान्ययार्थमुपक्षेपे यथा गुणोपसंहार। तच्छब्दे विवृतिः। ५साकल्येन सम्बन्धे "सर्वोपसंहारवत्त्वाव्याप्तेर्दुर्ग्राह्यत्वात्" सर्व०स०।

**उपसंहारिन्** त्रि० उप+सम्+हृ–णिनि। १उपसंहारके साकल्येन सम्बन्धेन व्याप्ते अनुपसंहारिशब्दे उदा०।

**उपसंख्यान** न० उपरि सूत्रोक्तादतिरिक्तार्थः संख्यायते अनेन उप+सम्+ख्या–करणे–ल्युट्। सूत्रानुक्तार्थस्य वार्त्तिकादिभिः कथने वाक्यभेदे। "प्रकृत्यादिभ्य उपसंख्यानमित्यादि" वार्त्तिके सूरिप्रयोगः। "इत्युपसंख्यानेऽप्येके च" २,११२,माघव्या० मल्लिनाथः।

**उपसत्ति** स्त्री उप+सद्–भावे क्तिन्। १नैकट्येन सम्बन्धे २अनुगत्ये ३सत्वम्पयाने च। करणे क्तिन्। ४सेवायाम् मेदि०।

**उपसत्तृ** त्रि० उप+सद्-तृच्। १आसन्ने निकटस्थिते २अनुगते ३सेवके च। "मा च रिषदुपसत्ता ते अग्ने।" "घृतं भग्ने तवयमस्तु तुभ्यमुपसत्ता" यजु०२७ २,४, उपसत्ता सेवक वेददी०।

**उपसद्** त्रि० उपसीदति उप+सद्–क्विप्। १समीपस्थिते। "प्रकामोद्यायोपसदम्" यजु०३०,६,करणे क्विप्। २इष्टिभेदे स्त्री। सा चेष्टिः "अथोपसदः" कात्या०श्रौ०४,८,१, आरभ्य पाचयोत्योपसदः"इत्यन्तेषु। सूत्रेषु उक्ता द्रष्टव्या। "अथोपसद्भिः प्रचरति""यदोपसद्भिः प्रचरति अथैतानि हवींषि निर्वपति आग्नेयमष्टाकपालं पुरोडाशं सौम्यं चरुं वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा तेन यथेष्टमेवं यजते। तद्गु तथा न कुर्य्यात् ह्वरति वा एष यो यज्ञपथादेत्येति वा एष यज्ञपथाद्य उपसत्पथादेति तस्मादुपसत्पथादेव नेयात्" शत०५,४,५,१६, "अथ दशपेये तं प्रह्वग्रहे स्थापितं सोममाहृत्याछन्दामासद्यातिप्यव-प्रचरेयुः तदनन्तरमुपसद्यागः तत्राग्निसोमविष्णुदेवताकोपसत्प्रतिनिधित्वेन मंस्त्रयागसम्बन्धिनामुत्तमानां त्रयाणामाग्नेयसौम्यवैष्णवानामेव निर्वापं पूर्वपक्षयति यदोपसद्भिरिति। तेन यथेष्टीति एकैकोपसत्स्थाने तेन एकेन हविषा यथेष्टि इष्टितन्त्रेण कुर्यात् उपसत्त्रयार्थमेतद्धविस्त्रयं कर्त्तव्यमिति शाखान्तरीयः पक्षः तमिमं निराकरोति तद्गु तथेति। नेयात् न प्रच्युतोभवेत् तत उपसदः पृथक् कुर्य्यात् तदन्त एतानि सद्यस्पामन्तिमानि त्रीणि हवींषि इष्टितन्त्रेण पृथक् कुर्य्यात् स एष दशपेयः क्रतुः सप्तदशस्तोमसाध्योऽग्निष्टोमसंस्थोभवति" भा०। "उपसद्भिश्चरित्वा मासमेकमग्निहोत्रं जुहोति" श्रुतिः। "रूपमुपसदामेतत्तिस्रोरात्री यजु० १९,१४, "उपसत्सु रौहिणौ कुर्य्यात्" कात्या०४,६,४४,"उपांशूपसद। ७,२,२२,। ज्योतिष्टोमे ३प्रवर्ग्याङ्गदक्षिणायामिष्टौ ४गार्हपत्यादिभिन्नेऽग्नौ च। "गार्हपत्योदक्षिणाग्निस्तथैवा हवनीयक। एतेऽग्नयस्त्रयो मुख्याः शेषाश्चोपसदस्त्रय"अग्नि पु०गणभेदनामाध्याये। उपसद् तच्छब्दोऽस्त्यस्मिन् विशक्ता०अण्। औपसद तच्छब्दयुक्ते स्वाध्याये अनुवाके च पु०।

**उपसद** पु० उपसीदत्यस्मिन् उप+सद–भेदे वा० घञर्थे क। उपसद्यामे "यद् अदश्नाति यद् पिबति यद्रमते तदुपसदै

रेति" छा॰ उ॰ । "यद्रमते रतिञ्चानुभवति इत्यादि संयोगात्तदुपसदैः समानतामेति उपसदाश्च पयोव्रतनिमित्त सुखमस्ति अल्पभोजनीयानि चाहानि आसन्नानीति मन्वाशोऽनशनादीनामुपसदाञ्च सामान्यम्" शा॰ भा॰। "पयोव्रतत्व पयोभक्षणमात्रत्वम् यज्ञे याम्यहान्यभोजनीयानि तानि प्रसिद्धानि उपसत्सु क्रियमाणासु मन्वास स्वास्थ्यविशेषः अनशनादिषु सोऽस्तीति परिसङ्ख्यानक्षणनिमित्तत्व कोपपत्तेस्तस्य सामान्यम्" आ॰ गि॰

**उपसदन** न॰ उप+सद–ल्युट् । १सेवायामुपसेवने २व्यानुगत्यादिना प्राप्तौ "तत्रोपसदनं चक्रे द्रोणस्य पुस्तकर्म्मणि" भा॰ स॰ ३०८ अ॰ "प्रतिगृह्य च तान् सर्वान् द्रोणश्चैव समब्रवीत् । रहस्येकः प्रतीतात्मा कृतोपसदनास्तथा" भा॰ १३२अ॰ सामीप्ये अव्ययी॰। ३गृहसमीपे अव्य॰ । "धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गव । यच्छोपसदनं ब्रह्मन् प्राप्तोऽसि मुनिभिः सह" रामा॰ । अत्राव्ययीभावस्यापि यत्नेन समासः कार्यः ।

**उपसदी** स्त्री उप+सद–घञर्थे क गौ॰ ङीप् । सन्ततौ धारायाम् । "स्वष्टेऽस्योपसद्या मा च्छैत्सीत् प्रजाता च पशुभिर्वाचितम्" शत॰ १४,९,४,२१ । "अस्य यजमानस्य उपसद्यां सन्ततौ" भा॰ । सन्ततिश्च द्वेधा कालिकी दैशिकी च । तत्र समानानेककालिककार्य्यमात्रधर्मत्वं कालिकसन्ततित्वम् । विभिन्नकालीनघटपटादिकार्य्यमात्रवृत्तिधर्मघटत्वादौ सन्ततित्ववारणाय समानेति सामान्यस्यान्वयितावच्छेदकधर्मेण । तेन सत्त्वद्रव्यत्वादिना घटपटयोः समत्वेऽपि न क्षतिः । सत्त्वद्रव्यत्वादिकमादाय तद्वारणाय कार्य्यमात्रेति । एककालोत्पन्नेषु बहुषु घटेषु तद्वारणाय अनेककालिकेति । दैशिकसन्ततित्वञ्च समानानेकदेशवृत्ति कार्य्यमात्रधर्मत्वमिति भेदः । तत्र कालिकसन्ततेः प्रवाहादिपदेन व्यपदेशः यथा ग्रामप्रवाहः, दुःखप्रवाहः इत्यादि दैशिकसन्ततौ तु श्रेणिप्रभृतिशब्दव्यवहारः यथा वृक्षश्रेणी वृक्षपङ्क्तिरित्यादि । उभयसन्ततौ तु सन्ततिधारादिशब्दप्रयोगः यथा ज्ञानधारा सुखधारा दुःखसन्ततिरित्यादि एवं जलधारा तैलधारा तैलसन्ततिरित्यादि । तादृशधर्मश्च सुखत्वदुःखत्वज्ञानत्वादिकं जलत्वतैलत्वादिकञ्च । उभयविधापि सन्ततिः पुनर्द्विविधा अविच्छिन्ना विच्छिन्ना च देशकालयोरव्यवधानेऽविच्छिन्ना यथा धारावाहिक स्थले ज्ञानादिधारा । तयोर्व्यवधाने विच्छिन्ना यथा विच्छिद्य विच्छिद्य जायमानदुःखानाम् । विच्छिन्नसन्ततिमादायैव संसारप्रवाहः । सुखदुःखसन्ततिरित्यादिव्यवहारः ।

**उपसद्य** त्रि॰ उपसदं सेवामर्हति यत् उप+सद–कर्म्मणि वा॰ यत् वा । १सेवनीये २नैकट्येन प्राप्ये च "भरेषु हव्यो नमसोपसद्यो गन्ता" ऋ॰ २,२३,१३ । "उपसद्याय मीढुषे आस्ये जुहुता हविः" ऋ॰ ७,१५,१ ।

**उपसद्वन्** त्रि॰ उप+सद–क्वनिप् स्त्रियां ङीप् वान्तादेश । १उपसन्ने २सेवके च । कर्म्मणि क्वनिप् । ३सेव्ये च । "नमस्ते अस्तु मीढुषे नमस्त उपसद्वने" आ॰ श्रौ॰ २,५,९ ।

**उपसद्व्रत** न॰ उपसत्सु विहितं व्रतम् । उपसद्विहिते पयोव्रते । "आपूर्य्यमाणपक्षस्य द्वादशाहम् उपसद्व्रती भूत्वा" छा॰ उ॰ । "उपसत्सु व्रतमुपसद्व्रतम् उपसदः प्रसिद्धाः ज्योतिष्टोमे । तत्र स्तनोपचयापचयद्वारेण पयोभक्षणं व्रतं तत्र च तत्कर्मानुपस्थारात् केवलमितिकर्त्तव्यताशून्यं पयोभक्षणमात्रमुपादीयते । उपसद्व्रती पयोव्रती सन्नित्यर्थः" शा॰ भा॰ ।

**उपसन्न** त्रि॰ उप+सद–क्त । १उपस्थिते, २निकटागते ३उपसेवके च ४आनुगुण्येन नैकट्यमाप्ते "अधीहि भगवांस्त्वम् उपसन्नोऽस्म्यधीहि भोः" भा॰ शा॰ २८९ अ॰ । "भगवन्नुदधौ मृत्युजन्मजले सुखदुःखझषे पतितं व्यथितम् । कृपया शरणागतमुद्धर मामनुशाध्युपसन्नमनन्यगतिम्" "तस्मै स विद्वानुपसन्नाय–प्रोवाच तत्त्वतो ब्रह्मविद्याम्" श्रुतिः ।

**उपसमाधान** न॰ उप+सम–आ–धा–ल्युट् । राशीकरणे, "निवासचितिशरीरोपसमाधानेत्यादि" पा॰ । "उपसमाधानं राशीकरणम्" सि॰ कौ॰ । २समिधः प्रक्षिप्य ज्वालने । "विवाहाग्निमुपसमाधाय पश्चादस्य" आश्व॰ गृ॰ १,८,९, "उपसमाधाय समिधं प्रक्षिप्य प्रज्वाल्य" मा॰ वृ॰ । अग्निमुपसमाधाय" गो॰ सू॰ "उपसमाधाय ज्वालयित्वेति सं तत्त्वे च समापूर्व्वधाञ्धातोस्तथार्थदर्शनात् तथार्थत्वम् ।

**उपसमिध(धम्)** अव्य॰ समिधः समीपे अव्ययी॰ वा अच्समा॰ । समिधः समीपे ।

**उपसम्पत्ति** स्त्री उप+सम्+पद–क्तिन् । अभिनवत्वेन सम्पत्तौ । "प्रथमोऽचिरोपसम्पत्तौ" पा॰ "अचिरसम्पत्तौ अभिनवत्वे" सि॰ कौ॰ । सम्पत्तिश्चात्र तद्रूपात्मभावः सि॰ कौ॰

**उपसम्पन्न** त्रि॰ उप+सम्–पद+क्त । १प्राप्ते २मृते च हेम॰ । "श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्" मनुः ।

**उपसम्भाषा** स्त्री उप+सम्+भाष–भावे अ । उपसान्त्वने । "भासनोपसम्भाषाज्ञानयत्नेत्यादि" पा॰ "उपसम्भाषा उपसान्त्वनम्" सि॰ कौ॰ ।

**उपसर** पु० उप+सृ "प्रजने सर्त्तेः" पा० अप्। गर्भग्रहणार्थं स्त्रीपशुषु पुंपशुगमने। "प्रजननं प्रथमगर्भग्रहणम्। गवामुपसरः" सि० कौ०। उपचारात् २नैरन्तर्य्येण निर्गमने "धीनामुपसरं ददर्श" भट्टिः "धीनामुपसरं नैरन्तर्य्येण निर्गमनम् ददर्श उपसर इव उपसरः, नैरन्तर्य्यमात्रेणोपलक्षितत्वात् उपसरो हि स्त्रीगवीषु पुंगवानामभिगमनमुच्यते स च नैरन्तर्य्येण भवति" जयमङ्गलः।

**उपसरण** न० उप+सृ—ल्युट्। १उपसरार्थे २समीपगमने च। "यस्तूर्द्धभागो वा भेषजवेग प्रवृत्तमस्त्वा हि निहन्ति तस्योपसरणं छर्द्दिं कुर्वन्ति दोषाः" "परिस्राव प्रवाहिका हृदयोपसरणं विबन्धः" सुश्रु०। कर्मणि ल्युट्। ३उपसर्त्तव्ये उपगम्ये च। "अथ खल्वायो सर्वाण्युपसरणानीत्युपासीत" छा० उ०। "उपसरणानि उपसर्त्तव्यानि उपगन्तव्यानि ध्येयानि" भा०।

**उपसर्ग** पु० उप+सृज—घञ्। १रोगविकारे २उपद्रवे, शुभाशुभसूचके ३दिव्यादिविकाररूपे उत्पाते, व्याकरणोक्तेषु "निपाताश्चादयो ज्ञेयाः प्रादयस्तूपसर्गकाः। द्योतकत्वात् क्रियायोगे लोकादवगता इमे" इत्युक्तलक्षणेषु क्रियायोगे ४प्रादिषु च। "उपसर्गाः क्रियायोगे" पा०। "अत्र प्रादीनामन्वयस्तु प्रत्येकमुपसर्गसंज्ञेतिद्योतनाय योगग्रहणम्। तेन निर्गतः सेवको यस्मादिति वाक्ये निःसेवक इत्यादौ न षत्वम्" शब्देन्दु०। ते च द्वाविंशतिविधा यथा, प्र, परा अप, सम्, अनु, अव, निस्, निर् दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप एते प्रादयः। निस् दुस् इति सान्तौ "निसस्तपतावनासेवने" पा० सूत्रे निस इति निर्देशात्। निष्कृत दुष्कृतमित्युदाहृत्य इदुदुपधस्य रो विसर्जनीय" इति भाष्योक्तेश्च 'निर कुष इति' "सहरोरधिकरणे" इति च पा० निर्देशात् रान्तावपि" मनो०। निर्दुरोरभेदारोपेण क्वचिद्विंशतिवाकथनं द्रष्टव्यम्। "तस्य त्रिधा प्रवृत्तिः "धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते। तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा। क्रमेणोदाहरणानि यथा। आदत्ते प्रस्तुते प्रणमतीति। अपि च। "उपसर्गेण धात्वर्थो बलादन्यत्र नीयते। प्रहाराहारसंहारविहारपरिहारवत्"। "विभाषोपसर्गे" "द्व्यन्तरुपसर्गेभ्योऽप ईत्" पा०।

प्रादयस्तूपसर्गा न वाचकाः, वाचकाश्च चादयो निपाता वाचकत्वात् उपसर्गास्तु न तथा किन्तु द्योतका इति नैयायिकाः। वैयाकरणास्तु उभयेऽपि द्योतका इति मेनिरे तदेतत् वै० भू० दर्शितम् "प्रादयो द्योतकाश्चादयो वाचका इति नैयायिकमतमयुक्तम् वैषम्ये बीजाभावादिति ध्वनयन्निपातानां द्योतकत्वं समर्थयते। 'द्योतकाः प्रादयो येन निपाताश्चादयस्तथा। उपास्येते हरिहरौ लकारो दृश्यते यथा' येन हेतुना प्रादयो द्योतकास्तेनैव हेतुना चादयो निपातास्तथा द्योतका इत्यर्थः। अयं भावः। ईश्वरमनुभवतीत्यादावनुभवादिः प्रतीयमानो न धात्वर्थो भवतीत्यत्राप्यापत्तेः। नोपसर्गार्थः तथा सत्यप्रकृत्यर्थतया तत्राख्यातार्थान्वयापत्तेः प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः अनुगच्छतीत्यादौ अनुभवादिप्रत्ययापत्तेश्च। न विशिष्टार्थः गौरवात्। तथा च धातोरेव विद्यमानत्वादिवाचकस्य सतस्तथा उपसर्गस्तात्पर्य्यग्राहक इत्यस्तु। तथा च तात्पर्य्यग्राहकत्वमेव द्योतकत्वमिति। तच्च चादिष्वपि तुल्यम् चैत्रमिव पश्यतीत्यादौ सादृश्यविशिष्टे चैत्रपदलक्षणम् इवशब्दस्तात्पर्य्यग्राहक इत्यस्य सुवचत्वादिति। स्वयं युक्त्यन्तरमाह। उपास्येते इति। अत्र ह्युपासना किमुपसर्गार्थः? विशिष्टस्य? धातुमात्रस्य? वा। नाद्यः, तथा सति स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्मकत्वस्याऽऽस्धातोरुपासनारूपफलवाचकत्वेनाभावादकर्मकत्वापत्तेस्तत्र कर्मणि लकारो न स्यात्। न द्वितीयः गौरवात्। तृतीये स्वागतं द्योतकस्य तात्पर्य्यग्राहकत्वलाभात् इति भावः। दृश्यते इत्यत्र कर्मणीति शेषः। तच्चादिष्वपि तुल्यमित्याह। "तथान्यत्र निपातेऽपि लकारः कर्मवाचकः। विशेषणाद्ययोगोऽपि प्रादिवच्चादिके समः"। (अन्यत्र) साक्षात्क्रियते अलङ्क्रियते उरीक्रियते शिव इत्यादौ। अत्रापि धातोस्तत्तदर्थे कर्मणि लकारसिद्ध्यर्थं तत्तदर्थवाचकत्वं वाच्यमित्युपसर्गवद्द्योतकत्वममीषामपीत्यर्थः। यद्यपि कृधातोः सकर्मकत्वमस्त्येव तथाप्यर्थेषु सकर्मकता न स्यात्। अन्यथा वायुर्विकुरुते सैन्धवा विकुर्वत इत्यत्रापि स्यादिति भावः। अथोपासनासाक्षात्कारादि निपातार्थोऽस्तु "साक्षात्प्रत्यक्षतुल्ययोरिति" कोषस्वरसात् तदनुकूलो व्यापार एव धात्वर्थोऽस्तु स्वस्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवत्त्वं सकर्मकत्वमपि सुवचमिति दृष्टान्तदार्ष्टान्तिकावयुक्ताविति नेदं साधकमिति चेन्न नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयासम्भवेन निपातधात्वर्थयोरन्वयासम्भवात्। अन्यथा तण्डुलः पचतीत्यत्रापि कर्म्मतया तण्डुलानां धात्वर्थेऽन्वयापत्तेरिति। किञ्च प्रादीनां वाचकत्वे भूयान् प्रकर्षः कोऽयो निश्चय इतिबहु-

यान् न, कोऽर्थोनिरर्थोऽपि स्यात्। अथ सम्मते प्रादेरनर्थकत्वात् तदन्वय इत्यत एव द्योतकता तेषां स्यादिति। साधकान्तरमभिप्रेत्याह। विशेषणेति। शोभन सहस्र योद्रष्टव्य इति वक्तोभनय द्रष्टव्य इत्यन्यान्वयापत्तेस्तुल्यसमाधेयत्वादिति भावः। अपि च निपातानां वाचकत्वे प्रातिपदिकार्थयोर्विना षष्ठ्यादिकं भेदेनान्वयासम्भवः। अन्यथा राजा पुरुष इत्यस्य राजसम्बन्धी पुरुष इत्यर्थापत्तेरित्यभिप्रेत्याह धवादीति। धवखदिरयोः समुच्चय इति धवस्य च खदिरस्य चैक्येन स्यादिति भावः। ननु प्रातिपदिकार्थयोरभेदान्वयबोधे विभक्तिजन्योपस्थितिर्हेतुरिति कार्य्यकारणभावो निपातातिरिक्तविषय एवेति नोक्तदोष इत्याशङ्क्याह। "पदार्थः सदृशार्थेति विभागेन कदा च न। निपातेतरसङ्कीर्णे प्रमाणं किं विभावय"। (सदृशा) सदृशेन समानाधिकरणेनेति यावत्। (अन्वेति)अभेदेनेति शेषः। (विभागेन) असदृशेन असमानाधिकरणेनेति यावत्। अयमर्थः समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तिर्निपातातिरिक्तविषयेति कल्पने मानाभावो गौरवञ्च। अस्माकं निपातानां द्योतकत्वादन्वय एव नास्तीति नायं दोषः अतएव घटो नास्तीत्यादौ घटपदं तत्प्रतियोगिके लाक्षणिकमिति नैयायिकाः। अपि च निपातानां वाचकत्वे काव्यादावन्वयो न स्यादिति साधकान्तरमाह। "घटैरस्तैरिवोदीच्यान् उद्धरिष्यन् रसानिव। इत्यादावन्वयो न स्यात् पार्श्व च बत तत"। अस्यार्थः घटैः रसवत्तास्तदीच्यानुद्धरिष्यन्नित्यर्थः। अवश्योत्थादिपक्षाणां तत्सदृशपरत्वे इववत्स्य द्योतकत्वे च सङ्गच्छते। अन्यथा प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिविरोधः। तथाहि। घटैरिति करणे तृतीया। न चोक्तोऽन्त करणम् इत्यर्थकसम्बन्धस्य करणत्वेऽपि तस्य करणत्वं नानेन बोधयितुं शक्यम् अप्रकृत्यर्थत्वात्। इववत्स्य वाचकत्वार्थकतया तदुत्तरतृतीयाया असम्भवात्। सम्भवे वा अयथाप्रसङ्गात्। उत्तरपदोत्तरतृतीयान्वयप्रसङ्गाच्चेत्याह। सुपां चेति। सुपां त्र्यणस्वेत्यर्थः। चकाराडुत्तरपदोत्तरतृतीयान्वय सङ्गच्छते इत्यादाविव्यादिपदात् "वागर्थाविव सम्पृक्तौ वन्दे पार्वतीपरमेश्वरौ" इत्यत्र वागर्थयोर्वन्दिकर्मत्वाभावात्तदुत्तरद्वितीयाया अनन्वयः इवार्थस्य कर्मत्वान्वयबोधासम्भव इत्यस्तूयते। यदि च विशेषणविभक्तिरभेदार्था साधुत्वमात्रार्था वा तदापि इववत्स्य वाचकत्वेऽन्वय एव उपमानपदानां समानाधिकरणपदोपस्थाप्यतया भेदेनान्वयायोगात्। बाधादभेदेनापि न च। नञ्जुत्याभिन्नसदृशाभिन्नः नर इत्यर्थ एष्टव्यः"।

उत्पातरूप उपसर्गश्च त्रिविधः "अतिलोभादसत्याद्वा नास्तिक्याद्वाऽप्यधर्मतः। नरापचारान्नियतमुपसर्गः प्रवर्त्तते। ततोऽपचारान्नियतमपवर्ज्जन्ति देवताः। ता सृजन्त्यद्भुतांस्तांस्तु दिव्यनाभसभूमिजान्। तएव त्रिविधा लोके उत्पाता देवनिर्म्मिताः। विचरन्ति विनाशाय रूपैः सम्भावयन्ति च" गर्गः। "उपसर्गस्ततो चैव सद्यः योच विशीयते" पराश०। उपद्रवरोगक्रतायोपसर्गां सुश्रु०उक्ता "दैवबलप्रवृत्ता ये देवद्रोहादभिशस्तका अथर्वकृता उपसर्गकृताश्च तेऽपि द्विविधा विद्युदशनिकृताः पिशाचादिकृताश्च पुनश्च द्विविधा संसर्गजा आकस्मिकाश्च" "उपसर्गादयोरोगा ये चाप्यागन्तवः स्मृताः" चीर्णं द्रव्यञ्चोपसर्गा प्रसूताः" सुश्रुतः उपद्रवशब्दे विवृतिः। "उपसर्गानशेषांस्तु महामारीसमुद्भवान्। तथा त्रिविधमुत्पातं माहात्म्यञ्च शमयेन्मम" देवीमा०। तत्र भवति सन्तापाः तेन निर्वृत्तम् वा ठञ्। औपसर्गिक तत्र पर्याप्ते तेन निर्वृत्ते च त्रि०। औपसर्गिकात्यन्तमरकपीडायाम् शु०त०।

**उपसर्ज्जन** त्रि० उप+सृज–ल्युट्। १दैवाद्युपद्रवे "निमीते भूमिचलने ज्योतिषाञ्चोपसर्ज्जने" मनु। २अप्रधाने गौणे विशेषणे "गोपसर्ज्जनस्य" "गोस्त्रियोरुपसर्ज्जनस्य" पा०। "उपसर्ज्जनं प्रधानस्य धर्मतो नोपपद्यते" मनु "उपसर्ज्जनमप्रधानम्" कुल्लू०। "अनुपसर्ज्जनात्" "आचार्योपसर्ज्जनश्चान्तेवासी" पा०उपसृजत्वनेन करणे ल्युट्। ३समार्गसाधने त्रि०स्त्रियां ङीप्। "अथैत उपसर्ज्जनीभिरेभि" शत०१२,२,२, "पितृसमार्जनार्थाश्च अपः पितृसमार्ज्जनार्थश्चोपसर्ग साधनानि उपसर्जन्य" भा० "प्रथमानिर्दिष्टमुपसर्ज्जनम्" पा०उक्ते। समासविधायकशास्त्रे ४प्रथमान्तपदनिर्दिष्टे। "एकविभक्ति चापूर्वनिपाते" विग्रहवाक्ये अनियतविभक्तिकं तदुपसर्जनसञ्ज्ञम् इत्यर्थक पाणिनिसूत्रोक्ते ५शब्दभेदे च "उपसर्ज्जनं पूर्वम्"पा० समासे उपसर्ज्जनस्य पूर्वप्रयोग यथा "द्वितीया श्रितेत्यादि" पा०सूत्रे द्वितीयेति प्रथमान्तम् पदं तदेव प्राक्प्रयोज्यम् यथा कष्टं श्रित इत्यादिवाक्ये कष्टश्रित इत्यादि।

**उपसर्पण** न० उप+सृप–भावे ल्युट्। समीपगमने "न तावदयमुपसर्पणकाल" विक्र०। "अभिकोपसर्पणमावसथिनामादि" उत्त०।

**उपसर्पिन्** त्रि० उप+सृप–गतौ णिनि। समीपगन्तरि

"एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम्" मनुः। "युक्तं मातास्त तेषां परपीडोपसर्पिणाम् भा०अ०२०अ०।

**उपसर्य्या** स्त्री उपसृय्यतेऽसौ सृ–कर्मणि यत्। गर्भग्रहणयोग्यायाम् ऋतुमत्यां स्त्रीगव्यादौ। अप्रजनार्थे तु ण्यत् उपसार्य्य प्राप्ये त्रि०।

**उपसि** अव्य०उप+सो बा०कि। समोपस्थाने "आसीन ऊर्ध्वामुपसि क्षिणाति" ऋ०१०,२७,१३। 'उपसि समोपस्थाने' भा०"पिबन्ति मे पुत्र उपसि प्रेष्ठे" ऋ०५,४२,७।

**उपसीर** अव्य० सीरे हले तत्सामीप्ये वा अव्य०। १हले इत्यर्थे २हलसमीपे वा। ततो भवार्थे परिमुखा० ञ्य। उपसीर्य्य तत्रभवे त्रि० व्या०स०। हलोपगते त्रि० ततोभवार्थेऽप्येव। औपसीर तद्भवे त्रि०

**उपसुन्द** पु० दैत्यभेदे तत्कथा भा० आ० "महासुरस्यान्वाये हिरण्यकशिपोः पुरा। निकुम्भो नाम दैत्येन्द्रस्तेजस्वी बलवानभूत्। तस्य पुत्रौ महावीर्य्यौ जातौ भीमपराक्रमौ। सुन्दोपसुन्दौ दैत्येन्द्रौ दारुणौ क्रूरमानसौ। तावेकनिश्चयौ दैत्यावेककार्य्यार्थसम्मतौ। निरन्तरमवर्त्तेतां समदुःखसुखावुभौ। विनान्योन्यं न भुञ्जाते विनान्योन्यं न गच्छतः। अन्योन्यस्य प्रियकरावन्योन्यस्य प्रियंवदौ। एकशीलसमाचारौ द्विधैवैकं यथा कृतौ। तौ विवृद्धौ महावीर्य्यौ कार्य्येष्वप्येकनिश्चयौ। त्रैलोक्यविजयार्थाय समाधायैकनिश्चयौ। दीक्षां कृत्वा गतौ विन्ध्यं तावुग्रं तेपतुस्तपः। तौ तु दीर्घेण कालेन तपोयुक्तौ बभूवतुः। क्षुत्पिपासापरिश्रान्तौ जटावल्कलधारिणौ। मलोपचितसर्वाङ्गौ वायुभक्षौ बभूवतुः। आत्ममांसानि जुह्वन्तौ पादाङ्गुष्ठाग्रधिष्ठितौ। ऊर्द्ध्वबाहू चानिमिषौ दीर्घकालं धृतव्रतौ। तयोस्तपःप्रभावेण दीर्घकालं प्रतापितः। धूमं प्रमुमुचे विन्ध्यस्तदद्भुतमिवाभवत्। ततो देवा भयं जग्मुरुग्रं दृष्ट्वा तयोस्तपः। तपोविघातार्थमथो देवा विघ्नानि चक्रिरे। रत्नैः प्रलोभयामासुः स्त्रीभिश्चोभौ पुनः पुनः। न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ। अथ मायां पुनर्देवास्तयोश्चक्रुर्महात्मनोः। भगिन्यो मातरो भार्य्यास्तयोश्चात्मजनस्तथा। प्रपात्यमाना वित्रस्ता शूलहस्तेन रक्षसा। भ्रष्टाभरणकेशान्ता भ्रष्टाभरणवाससः। अभिभाष्य ततः सर्वास्तौ त्राहीति विचुक्रुशुः। न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ। यदा क्षोभं नोपयाति नार्त्तिमन्यतरस्तयोः।" ततः स्त्रियस्ता भूतञ्च सर्वमन्तरधीयत। ततः पितामहः साक्षादभिगम्य महासुरौ। वरेणच्छन्दयामास सर्वलोकहितः प्रभुः। ततः सुन्दोपसुन्दौ तौ भ्रातरौ दृढविक्रमौ। दृष्ट्वा पितामहं देवं तस्थतुः प्राञ्जली तदा। ऊचतुश्च प्रभुं देवं ततस्तौ सहितौ तदा। आवयोस्तपसाऽनेन यदि प्रीतः पितामह!। मायाविदावस्त्रविदौ बलिनौ कामरूपिणौ। उभावप्यमरौ स्याव प्रसन्नो यदि नौ प्रभुः। ब्रह्मोवाच। ऋतेऽमरत्वं युवयोः सर्वमुक्तं भविष्यति। अन्यद्वृणीतं मृत्योश्च विधानममरैः समम्। प्रभविष्याव इति यन्महदभ्युद्यतं तपः। युवयोर्हेतुमानेन नामरत्वं विधीयते। त्रैलोक्यविजयार्थाय भवद्भ्यामास्थितं तपः। हेतुनानेन दैत्येन्द्रौ न वां कामं करोम्यहम्। सुन्दोपसुन्दावूचतुः। त्रिषु लोकेषु यद्भूतं किञ्चित् स्थावरजङ्गमम्। सर्वस्मान्नौ भयं न स्यादृतेऽन्योन्यं पितामह!। पितामह उवाच। यत्प्रार्थितं यथोक्तञ्च काममेतं ददानि वाम्। मृत्योर्विधानमेतच्च यथावद्वां भविष्यति। नारद उवाच। ततः पितामहो दत्त्वा वरमेतत्तदा तयोः। निवर्त्य तपसस्तौ च ब्रह्मलोकं जगाम ह। लब्ध्वा वराणि दैत्येन्द्रावथ तौ भ्रातरावुभौ। अवध्यौ सर्वलोकस्य स्वमेव भवनं गतौ" २११ अ०

"तावन्तरोत्सुमुत्सृज्य दैत्यौ कामगमावुभौ। देवानामेव भवनं जग्मतुर्युद्धदुर्मदौ। तयोरागमनं ज्ञात्वा वरदानञ्च तत्प्रभो। हित्वा त्रिपिष्टपं जग्मुर्ब्रह्मलोकं ततः सुराः। ताविन्द्रलोकं निर्ज्जित्य यक्षरक्षोगणांस्तथा। खेचराण्यपि भूतानि जग्मतुस्तीव्रविक्रमौ। अन्तर्भूमिगतान् नागान् जित्वा तौ च महारथौ। समुद्रवासिनो सर्वा म्लेच्छजातीर्विनिर्ज्जितुः। ततः सर्वां महीं जेतुमारब्धावुग्रशासनौ। सैनिकांश्च समाहूय सुतीक्ष्णं वाक्यमूचतुः। राजर्षयो महायज्ञैर्हव्यकव्यैर्द्विजातयः। तेजो बलञ्च देवानां वर्द्धयन्ति श्रियं तथा। तेषामेवं प्रवृत्तानां सर्वेषामसुरद्विषाम्। सम्भूय सर्वैरस्माभिः कार्य्यः सर्वात्मना वधः। एवं सर्वान् समादिश्य पूर्वतीरे महोदधेः। क्रूरां मतिं समास्थाय जग्मतुः सर्वतोमुखौ। यज्ञैर्यजन्ति ये केचिद्याजयन्ति च ये द्विजाः। तान् सर्वान् प्रसभं हत्वा बलिनौ जग्मतुस्ततः। आश्रमेष्वग्निहोत्राणि मुनीनां भावितात्मनाम्। गृहीत्वा प्रक्षिपन्त्यप्सु विस्रब्धं सैनिकास्तयोः। तपोधनैश्च ये क्रुद्धैः शापा उक्ता महात्मभिः। नाक्रामन्त तयोस्तेऽपि वरदाननिराकृताः। नाक्रामन्त यदा शापा बाणा मुक्ताः शिलास्विव। नियमान् सम्परित्यज्य व्यद्रवन्त द्विजातयः। पृथिव्यां ये

तप स्थिता दान्ताः शमपरायणाः । तयोर्भयाद्द्रुतं सर्वे वैनतेय दिशोरगाः । मथितैराश्रमैर्भग्नैर्विकीर्णकलशस्रुवैः । शून्यमासीत् जगत् सर्वं कालेनेव हतं तदा । ततो राजन्नदृश्यद्भिर्ऋषिविभिद्य महासुरौ । उभौ विनिश्चय कृत्वा विकुर्वाते वधैषिणौ । प्रभिन्नकरटौ मत्तौ भूत्वा कुञ्जररूपिणौ । संलीनमपि दुर्गेषु निन्यतुर्यमसादनम् । सिंहौ भूत्वा पुनर्व्याघ्रौ पुनश्चान्तर्हितावुभौ । तैस्तैरुपायैस्तौ क्रूरावृषीन् दृष्ट्वा निजघ्नतुः । निवृत्तयज्ञस्वाध्याया प्रणष्टनृपतिद्विजा । उत्सन्नोत्सवयज्ञा च बभूव वसुधा तदा । हाहाभूता भयार्त्ता च निवृत्तविपणापणा । निवृत्तदेवकार्य्या च पुण्योद्वाहविवर्ज्जिता । निवृत्तकृषिगोरक्षा विध्वस्तनगराश्रमा । अस्थिकङ्कालसङ्कीर्णा भूर्बभूवोग्रदर्शना । निवृत्तपितृकार्य्यञ्च निर्वषट्कारमङ्गलम् । जगत् प्रति भयाकारं दुष्प्रेक्ष्यमभवत्तदा । चन्द्रादित्यौ ग्रहास्तारा नक्षत्राणि दिवौकसः । जग्मुर्विषादं तत्कर्म्म दृष्ट्वा सुन्दोपसुन्दयोः । एवं सर्वा दिशो दैत्यौ जित्वा क्रूरेण कर्म्मणा । निःसपत्नौ कुरुक्षेत्रे निवेशमभिचक्रतुः" २११अ० । ततस्तिलोत्तमासृष्टिमुपवर्ण्य तस्यास्तत्समीपयानं तयोस्तदासक्तत्वमुक्त्वा तत्रान्योन्ययुद्धेनान्योन्यवधः २१२अ०उक्तः यथा "ततस्तिलोत्तमा तत्र वने पुष्पाणि चिन्वती । वेषमाक्षिप्तमाधाय रक्तेनैकेन वाससा । नदीतीरेषु जातान् सा कर्णिकारान् प्रचिन्वती । शनैर्जगाम तं देशं यत्रास्तां तौ महासुरौ । तौ तु पीत्वा वरं पानं मदरक्तान्तलोचनौ । दृष्ट्वैव तां वरारोहां व्यथितौ सम्बभूवतुः । तावुत्पत्यासनं हित्वा जग्मतुर्यत्र सा स्थिता । उभौ च कामसम्मत्तावुभौ प्रार्थयतश्च ताम् । दक्षिणे तां करे सुभ्रूं सुन्दो जग्राह पाणिना । उपसुन्दोऽपि जग्राह वामे पाणौ तिलोत्तमाम् । वरप्रदानमत्तौ तावौरसेन बलेन च । धनरत्नमदाभ्याञ्च सुरापानमदेन च । सर्वैरेतैर्मदैर्मत्तावन्योन्यं भ्रुकुटीकृतौ । मदकामसमाविष्टौ परस्परमथोचतुः । मम भार्य्या तव गुरुरिति सुन्दोऽभ्यभाषत । मम भार्य्या तव वधूरुपसुन्दोऽभ्यभाषत । नैषा तव ममैषेति ततस्तौ मन्युराविशत् । तस्या रूपेण संमत्तौ विगतस्नेहसौहृदौ । तस्या हेतोर्गदे भीमे संप्रगृह्णीतामुभौ तदा । प्रगृह्य च गदे भीमे तस्यां तौ काममोहितौ । अहं पूर्वमहं पूर्वमित्यन्योन्यं निजघ्नतुः । तौ गदाभिहतौ भीमौ पेततुर्धरणीतले । रुधिरेणावलिप्ताङ्गौ द्वाविवार्कौ नभश्च्युतौ" । सुन्दोपसुन्दस्याख्या ।

**उपसूर्य्यक** न० उपगत सूर्य्यं चन्द्रं वा संज्ञायां कन् । चन्द्रार्कसमीपे मण्डलाकारे परिधौ ।

**उपसृष्ट** न० उप+सृज–क्त । १मैथुने । २व्याकरणोक्ते प्राद्युपसर्गयुक्ते, "क्रुधद्रुहोरुपसृष्टयोः" पा० । ३विसृष्टे ४उपद्रुते च त्रि० । ५राहुग्रस्ते चन्द्रेऽर्के पु० "नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्" मनुः ६बाधिते "उपसृष्टा इव क्षुद्राधिष्ठितभवना" काद० । ७व्याप्ते च "रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः" रघु ।

**उपसेक** पु० उप+सिच–भावे घञ् । जलादिसेचनेन आर्द्री[करणे ।

**उपसेचन** त्रि० उप+सिच–ल्यु । उपसेककर्त्तरि "नमः कोप्याय उपसेचनाय" ऋ०७,१०१,४,ऋच् । उपसेक्तृ, तत्रार्थे त्रि० "लोकेभ्य उपसेक्तारमवकृत्यै" यजु०३०, १२, स्त्रियां ङीप् । भावे ल्युट् । २उपसेके न० "दुहन्त्यूधरुपसेचनाय कम्" ऋ०१०,७६,७, "पर्य्यूहणाद्योपसेचनात् कृत्वा" कात्या०८,५,२६, भा० कर्त्तरि ल्युट् । ३उपसेचके त्रि० स्त्रियां ङीप् 'वेति त्वामुपसेचनी" ऋ०१०,२१,२, उपसेचनी उपरिक्षरणशीला आहुतिः भा० । करणे ल्युट् । ४तत्साधने

**उपसेवक** त्रि० उप+सेव–ण्वुल् । उपभोगादिना १सेवनासक्ते २भोगासक्ते । "अदत्तादाननिरतः परदारोपसेवकः" याज्ञ० ३उपेत्य सेवके च ।

**उपसेवन** न० उप+सेव–भावे ल्युट् । १उपभोगासक्तौ । "नहीदृशमनायुष्यं लोके किञ्चन विद्यते । यादृशं पुरुषस्येह परदारोपसेवनम्" मनुः २समीपस्थित्या सेवने च । "निरताहं सदा वत्से ! भर्त्तृणामुपसेवने" भा०व०२१२ अ० ३तत्तत्कर्म्मणि अत्यन्तासक्तौ "अतीवाध्ययनायासविवक्षाद्योपसेवनात्" "एवंविधानां द्रव्याणामन्येषाञ्चोपसेवनात्" सुश्रु० । भावे अ उपसेवा । तत्रार्थे स्त्री । "गोभिरश्वैश्च यानैश्च तथा राजोपसेवया" । "परदारोपसेवा च शारीरं त्रिविधं स्मृतम्" "विषयोपसेवा चाजस्रम्" मनुः ।

**उपसेविन्** त्रि० उप+सेव–णिनि । उपसेवके "अभिवादनशीलस्य नित्यं वृद्धोपसेविनः । तेषां सततमज्ञानां विषयानुपसेविनाम्" मनु । "ये हित वाक्यमवज्ञाय विपरीतोपसेविनः" सुश्रु० । "शुद्धात्मा प्रतिशयनान्नरोपसेवी" सुश्रु० । स्त्रियां ङीप् ।

**उपसोम** अ० उपगतः सोमम् अत्या०स० । सोमोपगते सोमयाजिनि । अत्र तत्पुरुषत्वात् द्वन्द्वत्वाद्व्ययीभावोदा-

स्तता । उपगत सोमोऽनेन प्रा० ब०। तत्रार्थे सामीप्ये अव्ययो०। २सोमसामीप्ये अव्य० एतयोर्मान्तोदात्ततेति भेदः

**उपस्कर** पु० उप+कृ–भावे अप् हिंसने सुट् । १हिंसने उपस्करोति उप+कृ–अच् भूषणे समवाये प्रतियत्ने विकारे अध्याहारे च सुट् । २भूषके कटकखण्डलादौ ३समर्दिते संहते । ४व्यञ्जनसंस्कारकपिष्टधन्याकादिद्रव्ये (वाटना) । गृहसंस्कारके ५संमार्ज्जन्यादौ । ६विकृते अध्याहारेण ७कथके च “पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः” । “सको भवति कृताग्निः पञ्चकारो ह्युपस्करम्” मनु ।

**उपस्करण** न० उप+कृ–भावे ल्युट् हिंसने सुट् । १हिंसने । उप+कृ–भावे ल्युट् उपस्करशब्दोक्तभूषणादौ सुट् । २भूषणे ३संघाते ४सतोगुणान्तराधानरूपसंस्कारे ५विकारे ६वाक्याध्याहारे च । उभाभ्यां करणे ल्युट् । उक्ततत्तदर्थेषु सुट् । ७हिंसासाधने ८भूषणादिसाधने कटकादौ च न० ।

**उपस्कार** पु० उप+कृ–भावे घञ् उपस्करशब्दोक्त भूषणादौ सुट् । १भूषणे २संघाते ३प्रतियत्नरूपसंस्कारे ४विकारे ५अध्याहारे च ।“साकाङ्क्षमनुपस्कारं विष्वग्गति निराकुलम्” किरा० ।

**उपस्कीर्ण** त्रि० उप+कॄ–क्त हिंसने सुट् । हिंसिते

**उपस्कृत** त्रि० उप+कृ–क्त उपस्कारशब्दोक्तभूषणादौ सुट् । १भूषिते २संहते ३संस्कृते ४विकृते ५अध्याहृते च । भावे क्तिन् उक्तार्थेषु सुट् । उपस्कृति उपस्कारशब्दार्थे स्त्री । उप+कॄ–भावे क्तिन् हिंसने सुट् । उपस्कीर्णि हिंसने स्त्री ।

**उप(ष्ट)स्तम्भ** पु० उप+स्तन्भ घञ् । पतनप्रतिरोधने अवलम्बने “मूषिकस्योपस्त(ष्ट)म्भे केनापि कारणेनात्र भवितव्यम्” हितो० । नि० षत्वम् । उपष्टम्भ १उपस्तम्भशब्दार्थे २आलम्बने ३स्थितौ ४सहकारे च “स्थानात् बीजादुपष्टम्भात् प्रस्यन्दात् निधनादपि” पात० भा० गाथा । भावे ल्युट् । उपस्तम्भन तत्रैवार्थे न० । करणे ल्युट् । तत्साधने शकटाद्याधारकाष्ठे च “यद्यस्योत्तम्भनमसीत्युपस्तम्भनेनोपस्तभ्नाति” शत० ब्रा० ३ ३,४,२५, “उपस्तभ्यते प्रतिरुध्यते इत्युपस्तम्भनं शकटाद्याधारकाष्ठम्” भा० “देवानामिन्द्युपस्तम्भनमस्य पद्यादीषाम्” कात्या० २,२,१४, “शकटस्य काष्ठमीषा तदग्रस्य भूमिस्पर्शो मा भूदिति तदाधारत्वेन स्थापितं काष्ठमुपस्तम्भनम्” वेददी० । ततो स्त्रुल् । उपस्त(ष्ट)म्भक वा नि० षत्वम् । उपस्त(ष्ट)म्भकर्तरि आधिक्याधायके त्रि० ।

**उपस्तरण** न० उप+स्तॄ–ल्युट् । १आस्तरणे (बिछान) २भूमेः समीकरणे च । “पुनर्निर्मीलत्य लेपनोपस्तरणैः” आ० गृ० २, ३ आधारे ल्युट् । ३आस्तरणाधारे “अमृतोपस्तरणमसि” भोजनस्यादौ जलपानमन्त्र “अथाचमनीयमाचामति अमृतोपस्तरणमसीति” आ० गृ० १ २४.११, । ‘स्तरणमाच्छादनम् उपस्तरणं भूमेः समीकरणम्’ ना०वृत्ति

**उपस्ति** पु० उप+स्त्यै–इन् नि० । दासे । “उपस्तिरस्तु सोऽस्माकम्” यजु० १७,१०१, “उपास्त्यायन्ति उपकारायोपद्रवनिराकरणाय च समीपे स हतास्तिष्ठन्तीत्युपस्तय इन् । वेददी० ।

**उपस्तिर्** त्रि० उप+स्तॄ–कर्म्मणि क्विप् । आस्तीर्यमाणे आस्तरणीये । “अभि शुक्रमुपस्तिरम्” ऋ० ९,६२,२८,

**उपस्तुत** त्रि० उप+स्तु–क्त । समीपस्तुते श्रवणयोग्यस्तवेन स्तुते “चोदद्राध उपस्तुतश्चिदर्वाक्” ऋ० ७,२७,३, “त्वं त्वमहयथा उपस्तुतः पूर्वेभिरिन्द्र” ऋ० १०,९६,५ ।

**उपस्तुति** स्त्री उप+स्तु–क्तिन् । समीपस्तवे श्रवणयोग्यस्तुतिवाक्ये “कर्मोपस्तुतिं भरमाणस्य” ऋ० १,१४८,२,

**उपस्तुत्य** त्रि० उप+स्तु–क्यप् । समीपे स्तवनीये । “उपस्तुत्यं महिजातं ते अर्वन्” ऋ० १,१६३,१,

**उपस्थ** पु० न० अर्द्धर्चादि । उप+स्था–क । १स्त्रीपुंसयोरिन्द्रियविशेषे तत्र पुमिन्द्रिये “स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः” याज्ञ० । स्त्रीन्द्रिये “दक्षिणेन पाणिना उपस्थमभिमृशेत् विष्णुर्योनिं कल्पयत्वित्येतयर्चा” गोभि० । “विततन्तां मातरस्या उपस्थान्नानारूपाः पशवो जायमानाः” अथ० १४ २, २५ । “मुखदघ्नं ब्राह्मणस्योपस्थदघ्नं स्त्रियाः” शत० १२,८,३,११ । उभयेन्द्रिये “हस्तौ पायुरुपस्थश्च वाक् पादौ चेति पञ्च वै । कर्मेन्द्रियाणि जानीयात्” याज्ञ० । “उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चकम्” मनु “सर्वेषामानन्दानामुपस्थ एकायनम्” शत० ब्रा० १४ ५,४ ११ । उपस्थश्च न तयोश्चिह्नस्थानमात्रं किन्तु तत्स्थानाश्रितं प्रजापतिदेवतानियमितशक्तिक आनन्दनव्यापारकारकं कर्मेन्द्रियभेदः । तत्र “प्रजेन्द्रोपेन्द्रमित्रकाः” इति शा० ति० तस्य कशब्द्याख्यप्रजापतिदेवताकत्वमुक्तम् शत० ब्रा० उक्तवाक्ये आनन्दनव्यापारस्याश्रयत्वमुक्तम् तस्यैयापाटवे क्लैव्यम् । इन्द्रियाणां भौतिकत्वमते तस्य पृथिवीरजोगुणोपादानकता आहङ्कारिकत्वमते गन्धतन्मात्रसहिताहङ्कारोपदानकता । स च सूक्ष्म

स्थाया" इति म भा० ४वेदाप्रयुक्ते, अनार्ये च । "अन्नु तद्‌दुपास्थते' पा०। उपस्थितोऽनार्ये' सि०कौ० "उद्‌ध्रम स्कारेण चित्ते उपगते५प्रते" "तौ जो गुरु योयमुपस्थिता" इ०र०उक्ते टगाजरपादके ६छन्दोभेदे स्त्री "उपस्थितमिदं ज्यौतमो य दि गकास्यात' इति इ० र० उक्ते तयोटगाज्ञरपादके 'छन्दोभेदे न० । ८सेविते त्रि० । भावे क्त ।सेवने ८उपस्थाने न० । तेन जीवति वेतना० ठक् । औपस्थितिक सेवनोपजीविनि त्रि०

**उपस्थिति** स्त्री उप+स्था-क्तिन् । १उपसेवने २उपगतौ ३स्मृतौ च 'आसत्तिरव्यवधानेन पदजन्यपदार्थोपस्थिति र्भा० प०आसत्तिशब्दे उपसर्गशब्दे च उदा० ।

**उपस्थूण** अव्य०स्थूणाया ततसमीप वा अव्ययी०। १स्थूणायामित्यर्थे २ततसमीपे च तत्र भव' परिमुखा०ञ्य। औपस्थूण्य तद्भवे त्रि०। उपगता स्थूणाम् अत्या०स०। ३तद्समीपगते त्रि० ततो भवार्थे अण्, न ञ्य इति भेद

**उपस्थेय** त्रि० उप+स्था-सेवार्थत्वात् कर्मणि यत् । उपसेव्ये 'वातस्य क्षत्रोपस्थेय' चेत्' कात्या० १७,१,२, "यदोष्ठ्यं. रुह विप्रैरुपस्थेयैरुपस्थित ' रामा० ।

**उपस्नेह** पु० उप+स्निह-घञ् । स्निग्धस्य नैकटस्थस्त्वेन क्लेदे "मूलयुक्त उपस्नेहात् प्रविश्य कुरुतेऽश्मरीम्" । "तस्य मातुराहाररसवीर्यमभिवहन्ति तेनोपस्नेहेनास्या निर्वृत्तिर्भवति" । "सर्वशरीरावयवानुसारिणीनां रसवहानां तिर्य्यग्गतानां धमनीनामुपस्नेहो जीवयति" सुश्रु०।

**उपस्पर्श** पु०उप+स्पृश-घञ् । १स्पर्शे, २स्नाने च । उपस्पृश्यन्ते इन्द्रियाण्यत्र आधारे घञ् । विधिना जलपानपूर्वकेमुखादिस्पर्शयुक्ते ३वैधाचमने तत्र हि "त्रि माश्यापोद्दिरन्मृज्य खान्येतानुपस्पृशेत् । आत्मनासाक्षि कर्णांश्च नाभिवक्ष शिरोऽंसकान्' छन्दो० आस्यनासिकादिस्पर्शो विहित इति तस्य तथात्वम्। 'तथेत्युपस्पृश्य पय' पवित्रम्" रघौ आचमनार्थे उपात्तस्य पते प्रयोगात् । भावे ल्युट् । उपस्पर्शनम् तत्रार्थे न० "अथात उपस्पर्शनम' कात्या० ५,१०, २०

**उपस्रवण** न० उप+स्रु-भावे ल्युट् । सम्यक्क्षरणे उपरत स्रवणम प्रा०स०। ५विरतस्रवणे क्षरणनिवृत्तौ "पत्न्युदक्या दोषाकूपाणि निधाय सिकतास्वासीतोपस्रवणात्" का०२५,११,१२,'ज्योतिष्टोमादौ दीक्षितस्य पत्नी रजस्वला दोषाकूपाणि गड्डुटोनि निधाय सिकतासु आसीत आ रजःस्रावविरमणात्" कर्क ।

**उपस्वत्व** न०उपगतमनूत्पत्तिकालेऽप्र प्राप्त स्वम्य यत्र । स्वत्वास्पदीभूतभूम्यादिभ्य उत्पन्नशस्यादिद्रव्ये । लोकव्यवहार' । अन्यस्य द्रव्यस्य तत्रिमित्तकार्जनाधीन स्वत्व न तु उत्पत्तिकालात् अस्य तु तन्मूलत्वे एव स्व स्वत्वेन तथात्वम् ।

**उपस्वावत्** पु० सत्राजितो न्पस्य पुत्रभेदे । 'सत्राजितोदृय तावत् भार्यास्तासां शत सुता । ख्यातिमन्तस्तयस्तेषां भङ्गकारश्च पूर्वजः । मारीशातपतिश्चैव उपस्वावांस्तथैव च' हरिव०३८अ०

**उपस्वेद** पु० उप+स्विद-करणे घञ् । १यज्ञादिसमीपस्थानात् जाते जम्र ण "तयोरच्छानि निदध प्रकृष्टा. परिचारिका । शोपस्वेदेषु भाण्डेषु पञ्च वर्ष शतानि च" भा० आ०१६अ०"सोपस्वेदेषु कम्पवत्सु तत्र त्वग्छानलम् धृणा योग्य पनोभवतीति"भा०क०"अलाबुमध्यात्तिरुक्त्य बीजं यत्नेन गोप्यताम् । सोपस्वेदेषु पात्रेषु घृतपूर्णेषु भागशः' भा०व०१०६अ०। भावे घञ् । २उपतापे

**उपहत** त्रि०उप+हन-क्त । १तिरस्कृते"करोत्यवलोपहत पृथगुजनम्" किरा०।"उपहत तिरस्कृतम्' मल्लि०। २दूषिते "क्लिमेभिरागोपहतात्मवृत्तिभि " कुमा० 'आगसा उपहता दूषिता' मल्लि० । ३विनाशिते ४उत्पातग्रस्ते अशुद्धद्रव्यसंयोगेन ५अशुद्धे च "शारीरैर्मलै सुराभिर्मद्यैर्वा यदुपहत तदत्यन्तोपहतम्' विष्णु । ६अभिभूते "मनु मुपहृत्य सहसा" किरा० ।

**उपहति** स्त्री उप+हन-क्तिन् । १उपघाते। २कार्यसामार्थ्य प्रयोजकापाटवे ३प्रतिहनने च ।

**उपहन्तृ** त्रि० उप+हन-तृच् । उपहन्तरि "मृग न भीममुपहत्नुमुग्रम्" ऋ०२,३३,११,

**उपहन्त्री** त्रि० उप+हन-तृच् स्त्रियां ङीप् । उपघातके ( कटुक ) "त्वन्यासुक्रमेदसामुपहन्त्री चेति" सुश्रु०।

**उपहरण** न०उप+हृ-ल्युट् । १परिवेषणे २उपायनदाने च

**उपहर्तृ** त्रि० उप+हृ-तृच् स्त्रियां ङीप। परिवेषणकर्त्तरि "अनुमन्ता विशसिता नियन्ता क्रयविक्रयी । संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः" मनु०। २उपायनदातरि च ।

**उपहव** पु०उप+ह्वे-अप् सम्प्र०गुण' । आह्वाने, 'सीमामुपसरं दृष्ट्वा तेऽन्योन्योपहवा गृहाम्" भट्टि । "अध्वर्य्युर्होतरुपहव्य काङ्क्षते' आ०श्रौ०५,७,४, 'प्रतिष्टस्योपहवमिदाऽवेक्षेत' ६ १२,१,

**उपहव्य** पु० उपहूयतेऽत्र उप+ह्वे-भा०आधारे यत् । सप्र-

दशस्तोमकेषु पञ्चसु क्रतुषु मध्ये क्रतुभेदे। ते च क्रतवः कात्या० २२, दर्शिता यथा। "सप्तदशः पञ्च' ६, "पञ्चमाद्या पञ्च क्रतवः सप्तदशस्तोमका भवन्तीत्यर्थ" कर्क। "उपहव्योऽनिरुक्तो ग्रामकामस्य" ७ "उपहव्य इति विशेषणता स ग्रामकामस्य भवति अनिरुक्तः" कर्क। "ऋतपेयेनाभिशस्यमानस्य" ८ 'अपर्णेनाभिशस्य मानस्याप्युपहव्यो भवति' कर्क "ग्रावोऽश्वो दक्षिणा न ब्रह्मणे ददाति" ६, इत्युपक्रम्यान्ये व्यापारेणाः दर्शिताः।

उपहसित न० उप+हस–भावे क्त। उपहासे (ठाट्टाकरा) निन्दासूचके हासभेदे। कर्मणि क्त। २हासेन लक्षित-निन्दे त्रि०।

उपहस्त पु० उपहस्ति–भावे अच्। हस्तेन ग्रहणे प्रतिपत्ते तेन जीवति वेतना० ठञ्। औपहस्तिक तदुपजीविनि त्रि०।

उपहस्ति हस्तेन उपस्थापयति उप+हस्त–णिच् नामधातुः उभ० सक० सेट्। उपहस्तयति ते उपा(अ)जीहस्तत् त।

उपहस्तिका स्त्री उपगता हस्तम् अत्या० स०। स्वार्थे कन् अत इत्वम्। (बेट्या) वस्त्रादिनिर्मिते ताम्बूलाद्याधार पात्रभेदे। "उपहस्तिकायास्ताम्बूलं कर्पूरसहितमहंय मह्यं दत्त्वा" दशकु०।

उपहार पु० उप+हृ–घञ्। (भेट) १उपढौकने उपायने "तत, सपर्यां सपश्चूपहाराम्" "रत्नप्रत्योहारेण छायस्मा-नर्यं पादयो" रघुः कर्मणि घञ्। २उपढौकनीये उपा-यनद्रव्ये "वस्तुनीत्या भवनशिखिभिर्दत्तनृत्योपहार" मेघ० उपगत हारम् अत्या० स०। ३हारसमीपस्थे तदु-पशोभके द्रव्ये। अव्ययी०। ४हारसमीपे अव्य०। उभयत्र "उरोभुवा कुम्भयुगेन जृम्भितं नवोपहारेण वयस्कृतेन किम्" नै०। "ज्योतिषा प्रतिबिम्बानि प्राप्नुवन्त्युप-हारताम्" कुमा०। [प्रथमोद्यत। कुन्तलदेशे हेम०।

उपहालक पु० हले प्रसृतः वा० वुण् उपगतो हालको यत्र-

उपहास पु० उप+हस भावे घञ्। निन्दासूचके हासे (ठाट्टा) "फलमस्योपहासस्य सद्यःप्राप्स्यसि पश्य माम्" रघुः

उपहास्य त्रि० उप+हस–कर्मणि ण्यत्। उपहासेन निन्दनीये "गमिष्याम्युपहास्यताम्" रघु.।

उपहित त्रि० उप+धा–क्त। १निहिते २अर्पिते ३समीप-स्थापिते ४आरोपिते च। "वलयपहितशोभा तूर्णमायाद ऽयोध्याम्" भट्टि। "शुष्य मनःकोपहित यदि स्यात्" कुमा०। ५उपाधिसङ्गते उपलक्षिते "अन्तःकरणो-पहितं चैतन्य जीवः, अज्ञानोपहितचैतन्यमीश्वर" वेदान्तप०।

उपहूत त्रि० उप+ह्वे–क्त संप्रसारणे दीर्घः। समाहूते आ-शितादित्वात्कतिपर्येयकाले ऽपि भावोदात्तता।

उपहूति स्त्री उप+ह्वे–क्तिन् संप्रसारणे दीर्घः। आह्वाने "पटहमथादधिहितोपहूतय" माघ।

उपहृत त्रि० उप+हृ–क्त। १उपढौकिते उपहारद्रूपेण दत्ते "उपहृतपशुरूप" सि० कौ०।

उपहोम पु० उपगत होम प्रधानहोमम् अत्या० स०। प्रधानयागसमीपे विहितत्वात् पूर्वं होतव्ये अग्निहोमादि-दशदेवताके प्रत्येकं दशाहुतिके दशदक्षिणाके होमभेदे। स च शत० ब्रा० ११.४,३.८, अवधि१७पर्यन्तेषु दर्शितः। "सैतानुपहोमाननपश्यत्" इत्युपक्रम्य "अग्निरन्नाद इत्या-दि१" "सोमो राजेत्यादि२" "वरुणः सम्राडिति३" "मित्रः क्षत्रमिति४" "इन्द्रो बलमिति५" "बृहस्पतिर्ब्रह्मेति६" "सविता राष्ट्रमिति७" "पूषा भगमिति८" "सरस्वती पुष्टि-मिति९" "त्वष्टा रूपाणीति१०" इत्येतैर्दश देवता उक्ता "तावत्यो दश देवता, दशैते दशाहुतयो दश, दश दक्षिणा" इति होमविशेषतया दर्शितः।

उपह्वर उप+ह्वृ–आधारे च। निर्जने रहसीपलकाधारे "उप-ह्वरे पुनरिन्द्रियविक्रम धर्मनिलम्" दशकु०। "यत्सीमुपह्वरे विदत्" ऋ० ८,६९,६, "धारस्तुपह्वरे नद्य" ऋ० ८,६६ १४। "उपह्वरे वसन्तगुह्यस्थाने" भा०। २अन्तिकस्थाने "अभीतरं मोक्ष्यावा समानीताम्पह्वरम्" भा० व० १०८अ०। ३भूप्रदेशमात्रे च "उपह्वरे बहुपरा आपिभन्" ऋ० १,६२,६, "कौटिल्यमव्यक्तिव्यक्ति गतमात्र चक्षते उपह्वरन्ति मकलत्विन् वः एतदुप-ह्वरोसूपदेशः" भा०। कर्मणि च। ४मन्त्रे "उपह्वरेषु यदचिध्वम् १,८७,२। "उपह्वरेषु मन्त्रेषु" भा० ५प्रान्तभागे। उपह्वरे गिरीणां सङ्गथे च" ऋ० ८,६,२८ "उपह्वरे प्रान्तभागे" भा०।

उपह्वान न० उप+ह्वे–ल्युट्। १आह्वाने २मन्त्रोच्चारणे आह्वाने च "द्यावापृथिव्योरुपह्वाने बहवस्तम्" कात्या० ३,४,१९, "आग्नीध्रे भक्षण वषट्कारोपह्वानाभ्याम्" १०,६,२२,

उपांशु अव्य० उप+अन्शु–उ। १निर्जने "परिवेष्टरुपांशु भार-श्याम्" रघुः। "उपांशु विजने" भट्टि०। २अप्रकाशे च। "जिह्वोष्ठौ चालयेत् किञ्चिद् देवतागतमानसः। निजश्रवणयोग्यः स्यादुपांशु स जप स्मृतः इत्युक्तलक्षणे ३मन्त्रादेर्जपभेदे पु०। जपोहि त्रिविध. नरसिंह पु० उक्तः।

"त्रिविधो जपयज्ञः स्यात् तस्य भेदान् निबोधत । वाचिकश्च उपांशुश्च मानसश्च त्रिधा मतः । त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः । यन्नीचोच्चस्वरितैः स्पष्टशब्दवदक्षरैः । मन्त्रमुच्चारयेद्व्यक्तं जपयज्ञः स वाचिकः । शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयेत् । किञ्चिच्छब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः । धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात् पदम् । शब्दार्थमानसाभ्यासः स उक्तो मानसो जपः" । तेन स्वरादिस्पष्टव्यक्तवर्णोच्चारणवान् वाचिकः स्वयम्ग्रहणयोग्यः किञ्चिच्छब्दवान् उपांशुः । जिह्वोष्ठचालनमन्तरेण वर्णार्थानुध्यानवान् मानसः" व्या०त० । हारीतः "यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः । मन्त्रमुच्चारयेत् वाचा जपयज्ञस्तु वाचिकः । शनैरुच्चारयेन्मन्त्रं किञ्चिदोष्ठौ प्रचालयेत् । किञ्चिच्छ्रवणयोग्यः स्यात् स उपांशुर्जपः स्मृतः । धिया पदाक्षरश्रेण्या अवर्णमपदाक्षरम् । शब्दार्थचिन्तनाभ्यासः तदुक्तं मानसं स्मृतम्" "तेषामुत्तरोत्तरफलतारतम्यमाह" मनुः "विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः । उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः" "उपांशुदेवता यजत्यनिरुक्तं वा उपांशु इति शत० ब्रा०३ ३, ५,२, उक्तेः ४ अनिरुक्तभाषे ५ मौने । "उपांशु वै रेतः सिच्यते" शत० ६ २,२,२, मैथुनकाले मौनविधानात् तस्योपांशुत्वम् । ६ निगूढे च "अस्य त्वेकमुपांशु व्रतम्" भा० आ० २अ० । परग्रहणायोग्यतया निगूढमित्यर्थः नील०क० ।

**उपांशुयाज** पु० यज–घञ् यज्ञाङ्गत्वात् प्रयाजादिवत् न कुत्वम् । उपांशु अनुष्ठेयो याजः । यज्ञभेदे तच्च शत० ब्रा०१,६,३ ६३ दर्शयित्वा "एतेन वै देवाः उपांशुयाजेन च वसुराणामकामयन्त तमुपत्सर्य्य वज्रेण वषट्कारेणाघ्नन् एवमेव एतेनोपांशुयाजेन पाप्मानं द्विषन्तं भ्रातृव्यमुपत्सर्य्य वज्रेण वषट्कारेण हन्ति तस्मादुपांशुयाजं यजते" तत्फलमुक्तम् । "उपांशुयाजमन्तरा यजति" प्रयाजादियागेतिकर्त्तव्यताया श्रुतिः ।

**उपाक** पु० उप+अक–अच् । १परस्परं समीपगते सन्निहिते "आसुष्वयन्ती यजते उपाके" यजु० २९,११, "उपाके परस्परसमीपगते" वेददी० । "आ भन्दमाने उपसा उपाके" ऋ०३,४,६, "आभन्दमाने उपाके" १,१४२,७, २अन्तिके च । "दूर उपाकवचसम्" ऋ०८,६,२५, "उपाक इत्यन्तिकनाम" भा० ।

**उपाकरण** न० उप+आ+कृ–ल्युट् । १उपावर्त्तध्वमित्यनेन स्तोत्र प्रैषे "नापव्याहरेदोपाकरणादुपावर्त्तध्वमित्येवाध्वर्युवचनाद्भ्य" शत० ब्रा० १,५,२,१२, "यदा उद्गातारः स्तोत्रमारभेरन् तावदध्वर्युग्रहणादनन्तरं नापव्याहरेत्" भा० "प्राग्वा च प्रसादतो प्रातरनुवाकोपाकरणम्" कात्या० ९,१,१०, । "सोमे च यत्र प्रत्यात्वोपकरणात्" २,१,१७, "उपावर्त्तध्वमित्यय स्तोत्रप्रैषः उपाकरणशब्देनोच्यते" कर्कः । तथा प्रैषणे हि स्तोत्रस्यारम्भणात्तस्य तथात्वम् । २यज्ञियपशुसंस्कारविशेषे च "गौतमस्तोमः प्रथमं द्वितीयस्याह्नः पशोरुपाकरणकालेऽसमाप्तोय वह्निर्वैद्यास्तानेवाश्वापयेयः" आश्व०श्रौ०१०,८ २ । "तमवस्थितमुपाकरणाय यदक्रन्दत्यैकादशभि स्तौम्य प्रणुवन्" ५, "पशुकल्पेन पशुं सन्नाप्य प्रोक्षणोपाकरणवर्ज्जं वपामुत्खिद्य जुहुयात्" आश्व०गृ० २,४,१५, ३आरम्भे च । "अथातोऽध्यायोपाकरणम्" आश्व०गृ० ३ ५,२, "उपाकरणमारम्भः" ना०ना० । उपाकर्म्मशब्दार्थे च तत्प्रकारकालादिकं वक्ष्यते

**उपाकर्म्मन्** न० उप+आ+कृ-करणे मनिन् । येन कर्म्मविशेषेण वर्षान्ते पुनर्वेदः पठितुमारभ्यते तादृशे, कर्म्मभेदे तच्च "अथातोऽध्यायोपाकरणम् इत्युपक्रम्य आश्व०गृ०दर्शितम् तत्कालकर्त्तव्यतादि च तत्र वोक्तं विशेषस्तु नि०सि०उक्तो यथा "तत्र यजुःशाखिनां प्रयोगपारिजाते गौतमः ।"अथात श्रावणे मासि श्रवणर्क्षयुते दिने । श्रावण्यां श्रावणे मासि पञ्चम्यां हस्तसंयुते । दिवसे विदधीतैतदुपाकर्म यथोदितम् । स्वाध्यायोपाकृतिं कुर्य्यात्तत्रोपासनवह्निना" अत्र पौर्णमासी उपसंहारन्यायेन यजुर्वेदपरेति हेमाद्रिः । अत्र हस्तयुक्ता पञ्चम्युक्ता कारिकयाऽपि "तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते" इति । केवलपञ्चम्यां हस्तयुतेऽन्यस्मिन् वा दिने इति तु हेमाद्रिः । उपासनवह्निनेति तु "कर्मद्वयमिदं केचिल्लौकिकाग्नौ प्रकुर्वते" इति कारिकोक्तलौकिकाग्निना विकल्प्यते । तत्र "अध्याय्यत्वारभ्य" इति स्मृतेः सर्वाधिकारित्वेन तदधिकारित्वात् ब्रह्मचार्य्यग्नौ "नाप्यस्याग्नि स्वन्योऽजुयादिति" निषेधाल्लौकिक एव । तदभावे स्मार्त्त इति निर्णयः । यदपि दीपिकायाम् । "वेदोपाकृतिरोषधिप्रजनने पक्षे सिते श्रावणे" इति शुक्लपक्षेऽपि सर्वेषां मुख्यकालत्वेनोक्तं । वक्ष्यमाणगार्ग्यवचनेन छन्दोगान् प्रति विहितस्य तस्याविरोधिता सर्वान् प्रति निरुपित । तथापि श्रावणमासस्य मुख्यत्वोक्तत्वात् कृष्णपक्षेऽपि कार्य्यमिति वृद्धाः । तथा च आश्व०

इत्यौ परा'कार्या वर्जयित्वा तु पैतृकमिति" ज्योति परा-
शरेऽपि "उत्कर्षे कालवृद्धौ स्यादुप.कर्मादिकर्माणि ।
अभिषेकादिवृद्धौ न तूत्कर्षो युगादिष्विति" कात्यायनो
क्तेश्च । यत्तु "उपाकर्म्मेऽपि चोत्सर्गे ह्येतद्दिष्टं एयादित"
इति च्छन्दोगपरिशिष्टं तत्सामगविषयम् तेषां सिंहार्के प्रयो-
क्तेः। एतच्चापराह्णे कार्य्यम् । "उपाकर्मापराह्णे स्यादुत्सर्गं
प्रातरेव त्विति" "अध्यायानामुपाकर्म्म कुर्य्यात्तत् चेऽपराह्ण-
के। पूर्व्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुरिति"
हेमाद्रौ गोभिलोक्तेः । वस्तुतस्तु 'भवेदपाकृति पौर्णमा-
स्यां पूर्व्वाह्ण एव त्विति" प्रचेतोवचनात् पूर्व्वं वाक्यं सामग
विषयम् । तेषामपराह्णे एवोक्तेरित्यनुपदं वक्ष्यते ।
दीपिकापि । "अस्य तु विधि पूर्व्वाह्णकाल स्मृत" इति ।
याजुषास्तु पर्व्वणि कुर्युः । तत्रापस्तम्बैरौदयिकं ग्रा-
ह्यम् । अन्यैस्तु पूर्वम् । "पर्व्वण्यौदयिके कुर्युः श्रावण्यां तै-
त्तिरीयकाः । बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रान्तिवर्जिते"
इति गर्गोक्तेः "स प्राप्नवान् स्तुतीर्नेह्या पर्व्वण्यौदयिके
पुन । अतो भूतदिने तस्मिन्नोपाकरणमिष्यते" इति
कालिकापुराणात् । "अथ चेद्दोषसंयुक्तं पर्व्वणि स्यादु-
पाक्रिया । दुःखशोकामयप्रस्तारात् तस्मिन् द्विजातय "
इति मदनरत्ने गर्गोक्तेः । अत्र विद्धाभट्टीये विशेष ।
'अत्र श्रावणं पर्व संक्रान्त्युग्यदा भवेत् । तदैवौदयिकं
कार्यं नान्यदौदयिकं भवेत्" । पराशरमाधवीयेऽपि गार्ग्य
"श्रावणी पौर्णमासी तु संक्रान्तरतो यदि । तदैवौदयि-
की ग्राह्या नान्यदौदयिकी भवेत्" । कर्मकालमात् कात्या-
यनैः निगमः । "श्रावण्यां प्रौष्ठपद्यां वा प्रतिपत् वस्तु-
पूर्वकैः । विद्धा स्याच्छन्दसां तत्रोपाकर्मोत्सर्जनं भवेत्" ।
अत्र पौर्णमासी श्रवणद्वयोरुपलक्षण तेन तावपि संक्र-
मवर्जौ ग्राह्यौ । "उदये मडघटीमर्शे भित्ते पर्वणि नाकभे ।
कुर्युर्मैस्युपाकर्म ऋग्यजुःसामगाः क्रमात्" इति पृथ्वी
चन्द्र । "विष्णूक्ते घटिकाद्वयमिति" पूर्वोक्तविरोधात् सा-
मान्यवाक्यादौदयिकी कर्मण्यर्याप्ता ग्राह्या न पूर्वा । स-
क्रमनिमित्तपूर्वविद्धापवादाभावात् भाद्रादौ कालान्तरे
वास्तु, न तु निषिद्धम् । न हि मोह्यलाभे निषिद्धमा
चमचव युक्तम् । अतएव परेद्युः सङ्गवव्याप्तौ पूर्व-
निषेध । तदभावे तु नेति मूर्षव्यवस्थाप्यपास्ता विधि-
वैयर्थ्यात् माघनिषेधे तथापत्तेश्च । पूर्वविद्धावचन-
मप्येवं हि वा युज्यते । एवं श्रवणेऽपि ज्ञेयम् । एतच्च -
शाखिकपरं तेन यथाग्निहोत्रादौ सायं प्रातः काल-
लाभे सामान्यस्य प्रोक्षमात्रच्छिन्नकालदर्शादेरनुष्ठानम् ।
यथा मोक्षप्रवणकादाभावे यागाग्निप्राशनिषिद्धान्यद्रव्येण
तथात्र संक्रमाभावेऽनिषिद्धान्यकर्मपर्याप्तौदयिके का-
लान्तरे वानुष्ठानं न तु कदापि निषिद्धे अपवादाभावे
उत्सर्गस्यैव प्राप्तेः । कात्यायनादीनान्तु दिनद्वये पूर्वाह्ण-
व्याप्तौ एकदेशस्पर्शे वा पूर्वैवेति हेमाद्रिः । घटिका-
द्वयमिति पूर्वोक्तविरोधात् तेन प्राथम्यमात्रपरमि-
दम् । यदपि "श्रावणी दौर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनमिति" ब्रह्मवैवर्त्तम्
तदृग्वेदपरिशिष्टविषयमिति हेमाद्रिः । मदनपारिजाते-
ऽपि पूर्वविद्धायां श्रावण्यां वाजसनेयिनामुपाकर्मो-
क्तम् मदनरत्नेऽपि "पर्वण्यौदयिके कुर्युः श्राव-
ण्यां तैत्तिरीयकाः" इति बह्वृचपरिशिष्टाद्बह्वृचान् प्रति
कर्मविधानार्थं प्रवृत्ते तत्र तैत्तिरीयककर्म्मविध्ययोगात्
पूर्वोक्तकालिकापुराणादौ सामान्यत औदयिकपर्वप्राप्ते-
स्तन्निषेधे न बह्वृचानां श्रवणविधानात्तैत्तिरीयकपदम्
अनुवादत्वात्तस्य च प्राधान्याधीनत्वात् प्राप्तेश्च यजुर्वेदमा-
त्रपरत्वात् सर्वयजुर्वेद्युपलक्षणार्थम् । अवयुत्यनुवादो
वा । न तु विधायकम् । तेन विशेषविधिना उपसं-
हार स्यात् । अनुवादत्वाल्लक्षणा न दोष । अन्यथौ-
दयिकपर्वविशिष्टोपाकर्मोद्देशेन कर्तृविधौ कर्तृविशिष्टे
वौदयिकपर्वविधौ वाक्यभेदापत्ते । तस्मात्तैत्तिरीयक
पदाविवक्षया सर्वयजुर्वेदिनामौदयिकमेव पर्व्वोक्तम् ।
तत्र न तावत्परिशिष्टे बह्वृचान् प्रत्येव विधि । धनिष्ठा
प्रतिपद्युक्तत्वात् 'स्याद्भवनसमन्वितमित्यादि तददाहृते
एव परिशिष्टे वेदान्तरधर्म्मविधीनां दर्शनात् । नाप्यनुवादोऽ
यम् कालिकापुराणाद्बह्वृचादीनामपि तदापत्ते कु-
र्युरित्यस्य विधित्वेन तस्यैवार्थवादत्वेनैतत्प्राप्त्यनुवादि-
त्वाच्च । न च तैत्तिरीयकाणां दृष्ट्वा तद्विधिरस्ति येना-
नुवाद स्यात् । न च वाक्यभेद । तैत्तिरीयकपद-
मात्रस्य कर्म्ममात्रस्य वा उद्देश्यत्वायोगेन "इविरार्त्ति य-
दृच्छ्ये ब्राह्मणमुपनयीतेतिवन्नागत्या विशिष्टोद्देश्यत्वात् ।
अन्यथोत्तरार्द्धे बह्वृचपदस्याऽप्यविवक्षापत्त्या श्रावणस्य सर्व-
साधारण्यापत्ते । तस्मात् हेमाद्रिमतमेव युक्तमिति दिक् ।
इदं च । शिष्यानध्यापयत आवश्यकेऽग्नौ अनध्यापयतो-
नाधिकार इति कर्क । श्रावण्यामपि ग्रहणादिदुष्टायां
कातीयभिन्नैः प्रौष्ठपद्यां कार्यं तैस्तु श्रावणपञ्चम्याम् ।
"संक्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत् । उपा-

कतिस्तु पञ्चम्या कार्या वाजसनेयिभिरिति” स्मृतिमहार्णवे वाजसनेयिपरत्वादिति हेमाद्रिः। इदं सकलोक्त कालपरत्वात् बह्वृचपरमपि। गाग्र्यायणैस्तु हस्ते कार्यम्। आपस्तम्बैराथर्वणैश्च प्रौष्ठपद्याम्। यत्तु बौधायनः “श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्येत्युक्ते। तत् प्रौष्ठपद्यामपि दोषे आषाढ्यां कार्यमित्येवमर्थम्। तच्छाखीयविषयं वा। सामगास्तु श्रावणे हस्ते कुर्युः। “बह्वृचाः श्रावणे चैव हस्तर्क्षे सामवेदिनः” इति निर्णयामृते गोभिलोक्तेः। सोऽप्युत्तरः “धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रर्क्षसमन्वितम्। श्रावणं कर्म कुर्वीरन् ऋग्यजुःसामपाठकाः” इति मदनरत्ने परिशिष्टोक्तेः। गर्गोऽपि “सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णेऽविरते बहिः। छन्दोगानिखिलाः कुर्युरुत्सर्गं सहच्छन्दसाम्। शुक्लपक्षे तु हस्तेन उपाकर्मापराह्णिकमिति”। पुष्यर्क्षे पूर्वाह्णे उत्सर्गं आपराह्णिकमुपाकर्मेत्यन्वयः। अविरते वर्षादिदोषरहिते। अन्योऽपि विशेषः पूर्वमुक्तः। प्रयोगपारिजाते गोभिलः “उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते। धारणाध्ययनाङ्गत्वाद्गृहस्थब्रह्मचारिणाम्। उत्सर्जनं च वेदानामुपाकरणकर्म च। अकृत्वा वेदजप्येन फलं नाप्नोति मानवः”। सर्वथा लोपे तु मनुः उपवासं “वेदोदितानां नित्यानामिति” मनुनाऽभोजनोक्तेः। एवमुत्सर्गेऽपि।

अथ मलमासादनैरोत्सर्जनमुच्यते। तत्र पौषमासि रोहिण्यां तत्कृष्णाष्टम्यां वा कार्यम्। “पौषमासस्य रोहिण्यामष्टकायामथापि वा। जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिरिति” याज्ञ० उक्तेः। श्रावण्यां प्रौष्ठपद्यां चोपाकृतौ क्रमेण पौषशुक्लमतिपदि, माघशुक्लमतिपदि च कार्यम् “अर्द्धपञ्चमासानधीयीतेति” तेनैवोक्तेः। यत्तु हारीतः “अर्द्धपञ्चमान्मासानधीत्योर्द्ध्वमुत्सृजेत् पञ्चार्द्धषष्ठान्वेति”। तदापाढ्युपाकर्मविषयम्। बौधायनमते पौष्यां माध्यां वा कुर्युः। “पौष्यां माघ्यां वोत्सृजेदिति” तत्सूत्रात्। तैत्तिरीयैस्तु तैष्यां कार्यं “तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेदिति” तत्सूत्रात्। बह्वृचैस्तु माघ्यां कार्यम् “अध्यायोत्सर्जनं माघ्यां पौर्णमास्यां विधीयते” इति कारिकोक्तेः। कातीयास्तु भाद्रपदे कुर्युः। “उत्सर्गश्च तदा तिष्यतिथ्यां प्रौष्ठपदेऽपि वेति” कात्यायनोक्तेः। सामगास्तु सिंहार्के पुष्ये कुर्युः। तथा च सिंहे रवौ चेति गार्ग्यवचनं पूर्वमुक्तम्। स वैरुपाकर्मदिने वा कार्यम्। “पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथ वेति” हेमाद्रौ कात्यायनोक्तेः। यदा सिंहस्थे सूर्ये सति तन्मध्यस्थहस्तनक्षत्राभावात् पुनः सिंहो भवति तदा तस्मिन् पुष्ये उत्सर्गं कृत्वा तदनन्तरहस्ते उपाकर्म सामगाः कुर्युः। “भाद्रे प्रौष्ठपदे हस्तात् पुष्यः पूर्वो भवेद्यदि। तदा तु श्रावणे कुर्यादुत्सर्गं छन्दसां द्विजः” इति तत्रैव परिशिष्टोक्तेः। अत्र द्वावपि सौरौ मासौ ज्ञेयौ तेषां सौरत्वैकोक्तेः। अत्र विशेषमाह कार्ष्णाजिनिः। “उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च। अम्भोऽन्तर्भवनात् कृत्वा पूजयेत्तर्पयेत्ततः। अप्राप्ते श्रावणस्यान्ते पौषे माघ्यां दिनोदये। स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः। उपाकर्मादिकं प्रोक्तमृषोणां चैव तर्पणम्। शूद्राणां मन्त्ररहितं स्नानं दानं प्रशस्यते”। “उपाकर्मण्युत्सर्गे च त्रिरात्रं पक्षिणीमहोरात्रं वाऽनध्याय” इति मिताक्षरायामुक्तम्। अत्र नदीनां रजोदोषो नास्ति। “उपाकर्मणि चोत्सर्गे रजोदोषो न विद्यते इति” गर्गोक्तेः। “उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च। चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते” छन्दो० उक्तेश्च उपाकर्मणि चोत्सर्गे युगादौ मन्वन्तरे। निषेधेऽपि दिने कुर्यात्सर्वं च तिलमिश्रितम्” स्मृतिः। “नवोदकस्यादितो वर्ज्यं दिनानां नवकं ध्रुवम्। मकरस्थे न घटके चन्द्रसूर्ययोरिति” सामान्यतो मलदिननवकनिषेधस्तु अनियतकालीनकर्मपरं न तु नियतकालीनकर्मपरम्। ‘नित्ये नैमित्तिके जप्ये होमे यज्ञक्रियासु च। उपाकर्मणि चोत्सर्गे ग्रहदोषो न विद्यते इति नि० सि० धृतवचनेनोपाकर्मणि ग्रहवेधदोषः। आषाढ्यामपि उपाकर्मविधानात् आषाढीप्रयोजनकत्वात् दण्डाषाढनामता वेदग्रहणस्य दण्डपूर्वकत्वात् तथात्वमिति बोध्यम्। करणे क्तिन् उपाकृतिरप्यत्र स्त्री कर्मकरणयोरभेदोपचारात् उपाक्रियाप्यत्र स्त्री।

उपाकृत त्रि० उप+आ+कृ—क्त। यज्ञे हननार्थं १मन्त्रसंस्कारे पशौ, “अनुपाकृतमांसानि देवान्नानि हवींषि च” अमरः। “पशुयागादौ मन्त्रकलापेन पशो रुपनस्पाकरणं तद्विहितपशुरनुपाकृत” कुल्लू०। “पशुश्चेदुपाकृत पलायेत वायवे तमनुदिश्य तदर्थं तद्वयसमालभेत” कात्या० २५,८,१ ३कोलम्भमेण प्रेषिते च “उपाकृत उद्गातार आक्रोशतमभात्” कात्या० ३,३,१८। ४आरब्धे च। भावे क्त। ५उपाकरणे दैयश्चिवपशुसंस्कारे ७आरब्धे च न०। तत. इदा० करीर इनि। उपाकृतिन् उपा-

व्याधारे क्लि । ६ धर्मचिन्तायाम् ७ व्यभिचारोन्नायके न्यायमतसिद्धे पदार्थभेदे च । "सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता" भाषा० उपाधिपदार्थनिरूपणग्रन्थस्य प्रायेण बङ्गदेशे पठनपाठनाभावेन लुप्तप्रायतया प्रचारो नास्तीति अनुमानचिन्तामणिकृता यथा उपाधिवादे तन्निरूपितं यथा च तस्य दूषकताया बीजं निरूपितं तदत्र प्रदर्श्यते ।

"तत्रोपाधिः साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकः । अनौपाधिकत्वज्ञानञ्च न व्याप्तिज्ञाने हेतुरतो व्यापकत्वादिज्ञानेन नान्योऽन्याश्रयः । यद्वा व्यापकत्वं तन्निष्ठात्यन्ताभावाप्रतियोगित्वं तत्प्रतियोगित्वञ्चाव्यापकत्वं प्रतियोगित्वञ्च तदधिकरणानधिकरणत्वमिति वदन्ति तन्न साधनपक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यव्याप्तेः न च तयोरनुपाधित्वं दूषकताबीजसाम्यात् मित्रातनयत्वेन श्यामत्वसाधने शाकपाकजत्वस्य, प्रत्यक्षस्पर्शाश्रयत्वेन वायोः प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वस्य च शाकेऽप्रयोजकत्वेनोपाधित्वस्वीकारात् पक्षेतरेऽतिव्याप्तेश्च । न च व्यतिरेके पर्वतेतरान्यत्वादित्यत्र इतरान्यत्वासिद्धिवारणार्थं पर्वतपदं विशेषणमिति व्यतिरेके व्यर्थविशेषणत्वाच्च स उपाधिः, बाधोन्नीतस्याप्यनुपाधितापत्तेः । न चेष्टापत्तिः इतरान्यत्वस्यापसिद्धौ विशेषणं विना व्याप्त्यग्रहेण तत्सार्थकत्वात् । वस्तुगत्या साध्यव्यापक पक्षेतर उपाधिरिति चेत् अस्तु तथा तथापि पक्षातिरिक्ते साध्यव्यापकताग्रहादुपाधेर्दूषकत्वं तच्च तत्राप्यस्ति अन्यथा पक्षे साध्यसन्देहादनुपाधित्वे उपाधिमात्रमुच्छिद्येत विपक्षाव्यावर्त्तकविशेषणशून्यत्वं विशेषणं तेन बाधोन्नीतपक्षेतरस्य परिग्रहः तत्र पक्षस्यैव विपक्षत्वात् न तु पर्वतेतरत्वादेरिति चेत् न हि वस्तु विपक्षाव्यावर्त्तकविशेषणशून्यत्वं केवलान्वयिनि प्रमेयत्वादेः सत्त्वात् तत्रोपात्तेति विशेषणे सिद्धासिद्धव्याघात तथापि च साध्यव्यापकत्वसाधनाव्यापकत्वे तत्र स्त इति तद्व्यावृत्त्या पक्षे साध्यव्यावृत्तिरतो हेतोर्व्यभिचार एव व्यभिचारे चावश्यमुपाधिरिति पक्षेतर एव तत्रोपाधिः स्यात् तावन्मात्रस्यैव दूषकत्वाच्च व्यर्थं विशेषणम् । अत एवानुमानमात्रोच्छेदकतया जातित्वाच्च पक्षेतर उपाधिरित्यपास्तम् दूषणसमर्थत्वेन जातित्वाभावात् । एतेन पक्षेतरव्यावृत्त्यर्थं प्रकारान्तरमपि निरस्तम्, उपाधित्वाभावेऽपि दूषणसमर्थत्वात् । पक्षेतरोपाधिः स्वव्यतिरेकेण सत्प्रतिपक्षोत्थापकतया दूषणं, पक्षेतरस्य व्यतिरेकश्च न साध्याभावसाधकोऽसाधारण्यात् न तु व्यभिचारोन्नायकतया दूषणं यथा हि साध्यव्यापकोपाधिव्याप्यतया हेतोः साध्यव्याप्यत्वं तथा साध्यव्याप्यहेतुव्यापकतयोपाधेर्न साध्यव्यापकत्वमपि सिध्येत् व्याप्तिग्राहकस्योभयत्रापि साम्येन विनिगमकविरहात् । तथा यथा साध्यव्याप्येन हेतुना साध्यं साधनीयं तथा साध्यव्यापकोपाधिव्यावृत्त्या साध्याभावोऽपि साधनीयो व्याप्तिग्राहकतौल्यादिति दूषकताबीजं सोऽयं सत्प्रतिपक्ष एवेति चेत् न एवं हि सत्प्रतिपक्ष उपाध्युद्भावनं न स्यात् सत्प्रतिपक्षान्तरवत् । किञ्चैवं बाधोन्नीतोऽपि पक्षेतरो नोपाधिः स्यात् व्यतिरेकेऽसाधारण्यात् । ननु बाधे नोपाधिनियमः धूमेन ह्रदे वह्निसाधने तदभावात् । न च हेतुमति पक्षे बाधे पक्षेतरोपाधिनियमः प्रत्यक्षे वह्नौ तत्काले नानुष्णत्वे साध्येऽतेजस्त्वादेरुपाधित्वसम्भवादिति चेत् न तेजोमात्रपक्षत्वेऽतेजस्त्वविभान्यस्य उपाधेरभावात् । किञ्च पर्वतावयववृत्त्यन्यत्व पर्वतेतरद्रव्यत्व ह्रदपर्वतसंयोगानाधारत्व ह्रदपर्वतान्यत्वादिकमुपाधिः स्यादेव व्यतिरेकेऽसाधारण्याभावात् व्यतिरेकिणा सत्प्रतिपक्षसम्भवाच्च । न चासाधारणस्य, तस्यापि सत्प्रतिपक्षोत्थापकतया दोषत्वात् न तूभयोरपि व्याप्तिग्राहकसाम्ये विरोधान्न व्याप्तिनिश्चय किन्तूभयत्र व्यभिचारसंशय तथा च व्यभिचारसंशयाधायकत्वेनोपाधेर्दूषकत्वं तच्च पक्षेतरेऽप्यस्ति तदुक्तमुपाधेरेव व्यभिचारसङ्गेति । भवतु वा क्लृप्तन्यायेन सकलानुमानभङ्गभिया पक्षेतरोऽनुपाधिः तथापि लक्षणमतिव्यापकम् । नापि साध्यसमव्याप्तत्वे सति साधनाव्यापकत्वमुपाधित्वं दूषकताबीजस्य व्यभिचारोन्नयनस्य सत्प्रतिपक्षस्य वा साम्येन विषमव्याप्तस्याप्युपाधित्वात् तथा दूषकताया साध्यव्याप्यत्वस्याप्रयोजकत्वाच्च । अथ साध्यप्रयोजकोऽयमर्थ उपाधिः प्रयोजकत्वञ्च न न्यूनाधिकदेशवृत्ते तस्मिन् सत्यनन्तरं तेन विनापि भवतस्तदप्रयोजकत्वात् अन्यथा पक्षेतरस्याप्युपाधित्वप्रसङ्ग इति चेत् न दूषणौपयिकं हि प्रयोजकत्वमिह विवक्षितं तच्च साध्यव्यापकत्वे सति साधनाव्यापकत्वमेवेति तदेव प्रयोजकं तत्त्वधिकं व्यर्थत्वात् ।

अन्योपाधिः स उच्यते यद्धर्मोऽन्यत्र प्रतिबिम्बते यथा जवाकुसुमं स्फटिकलौहित्ये उपाधिः तथा सोपाधिरसि व्यापकं हेतुव्याभिमते चकास्ति तेनायमुपाधिः न च व्याप्यत्वमात्रेण दूषकत्वमिति साध्यव्यापकतापीष्यते तत्र च समव्याप्त एवोपाधिरिति चेत् तत् किं विषमव्याप्तस्य

प्रबो०। सप्तम्यर्थे त्रल् अयच्। उभयत्र द्वयोरित्यर्थे अव्य० "उभयत्रचरो मुनीन्द्राः" जातकप० "द्वौ दैवे पितृकार्य्ये त्रीनेकैकमुभयत्र वा" छन्दो०। अह्नि द्युस् एद्युस् वा-अयच्। उभयद्युस् उभयेद्युस् च द्वयोरह्नोरित्यर्थे अव्य०। "यो अन्येद्युरुभयद्युरभ्येति" अथ० १,२५,४। "उभयेद्युस्तथा प्राप्तौ परोपोष्या मनोषिभिः" स्मृति।

**उभय** त्रि० उभ+अयच्। द्व्यवयवे द्वित्वविशिष्टे अस्य द्वित्वबोधकत्वेऽपि एकबहुवचनान्ततयैव प्रयोगः न द्विवचनप्रयोगः। सि० कौ०। "उभयमानशिरे वसुधाधिपाः" रघुः। सर्वादि० सर्वनामकार्य्यम्। उभयस्मै उभयेषाम्। "अथा न उभयेषाममृत मर्त्यानाम्" ऋ० १,२६,६। जसि वा शी। उभये उभयाः। "परेऽवर उभया अमित्राः" ऋ० २,१२, १८। "ये जना उभये भुञ्जते विशः" २,२४,१०। "किं तत्साध्यं यदुभये साधयेयुर्न सङ्गताः" रघु०। स्त्रियां गौरा० ङीप्। "उभयीं सिद्धिमुभाववापतुः" रघु।

**उभय(त्र)चर** पु स्त्री० उभयत्र उभयोर्वा चरति चर–ट। भूम्यन्तरिक्षचरे पक्षिभेदे स्त्रियां ङीप्। सूर्य्याक्रान्तराशेर्द्वादशद्वितीयस्थग्रहयोगभेदे स्त्री "सूर्य्याद्व्ययेऽपि च धने च तयोभयत्र सस्यैर्विना विधुमुशन्ति खगैस्तु योगान्। वेशीं च वोशिमुभयत्रचरीं मुनीन्द्राः स्पष्टं फलानि विविधानि वदन्ति तेषाम्" "समो राशोभयचरीप्रभवो बहुकृत्यभाक्" जातकपद्धतिः।

**उभयतोदत्(न्त)** पु स्त्री उभयतोदन्तः दन्तपङ्क्तिरस्य वा दत्रादेशः। उभयदन्तपङ्क्तियुक्ते मनुष्यादौ। "पशून् मृगान् मनुष्यांश्च व्यालांश्चोभयतोदतः" मनु। स्त्रियां ङीप्। दत्रादेशाभावपक्षे तत्रैवार्थे स्त्रियां वा ङीप्। "उभयतोदन्ताः प्रजाः प्रजायन्ते" शत० ब्रा० १,६,३,२,

**उभयतोमुख** त्रि० उभयतो मुखे यस्य। द्विमुखे गृहादौ "उभयतोमुखाभ्यां पात्राभ्याम्" शत० ब्रा० ४,७,१,७, स्त्रियां स्वाङ्गत्वाभावे टाप् स्वाङ्गे तु ङीप्। उभयतोमुखी धेनुः। "सवत्सा रोमतुल्यानि युगान्युभयतोमुखी। दातास्याः स्वर्गमाप्नोति पूर्व्वेण विधिना ददत्। यावद्वत्सस्य पादौ द्वौ मुखं योनौ च दृश्यते। तावद् गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति" याज्ञ० उक्ते धेनुभेदे। अन्यत्र स्वयमेव उत्क्रान्तिसंप्रयोक्ता। "उत्क्रान्तौ तु प्रमत्तस्य यथोत्क्रान्तिसमन्वये। मन्त्रं समददे नाम्ना गायत्रमुत्क्रान्तिसंज्ञिताम्" विधा० पा० ब्रह्मानमन्त्रः।

**उभयतश्शीर्ष्णी** स्त्री उभयतः शीर्षे यस्याः शीर्षन्नादेशः ङीप् अल्लोपः विसर्गस्य वा शः। उभयतःशीर्षतुल्यप्रायणोयादियुक्तायां गवि "अदितिरस्युभयतश्शीर्ष्णी" यजु० ४,१९, "उभयतः शीर्षे यस्याः ज्योतिष्टोमस्याद्यन्तयोः प्रायणीयोदयनीययोः शीर्षत्वम् "द्वे शीर्षे प्रायणीयोदयनीये" यास्कोक्तेः" वेददी०।

**उभयवेतन** पु० उभयोः भेद्ये स्वामिनि च वेतनं यस्य अयच्। दूतभेदे यो हि स्वामिसकाशात् प्रच्छन्नं भृतिं गृहीत्वा तद्भेद्यराजसकाशे तदीयदासत्वेनात्मानं ख्यापयित्वा तत्सकाशात् भृतिं गृह्णन्नपि पूर्वस्वामिनोगृहीतभृतिनिष्क्रयार्थमुत्तरस्य सचिवादिभेदं जनयति स उभयवेतन इत्युच्यते। "अज्ञातदोषैर्दोषज्ञैरुद्दूष्योभयवेतनैः। भेद्याः शत्रोरभिव्यक्तशासनैः सामवायिकाः" माघ। तादृशदूताश्च मुद्राराक्षसे चाणक्यप्रेषिता बहवो वर्णिताः ते च मलयकेतौ प्रधानसचिवादीन् राक्षसादीन् ततो विभिद्य चाणक्यकार्य्यं साधितवन्तः तच्च तत एवावसेयं विस्तरभयान्नोक्तम्।

**उभयादन्ति** अव्य० उभौ दन्तौ प्रहरणं यत्र युद्धे द्विदण्ड्या० इच् समा० अयच्। उभयदन्तसाध्ये युद्धे एवम् उभयाञ्जलि उभयाबाहु उभयाहस्ति उभयाकर्णि इत्यादयोऽपि नि० साध्याः तत्तत्साधनयुद्धे। उभाहस्ति उभाकर्णि उभाबाहु उभादन्ति इत्यादयः नि० साध्याः तत्र नायच्। तेऽपि तत्तदर्थेषु।

**उम्** अव्य० उ–बा० डुमि। १रोषे, २स्वीकारे, ३प्रश्ने च।

**उमा** स्त्री वो शिवस्य मा लक्ष्मीरिव उ शिवं माति मन्यते पतित्वेन मा+क वा। शिवपत्न्याम् १दुर्गायाम् "उ मेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगामेति" कुमारे निरुक्तायां २पार्वत्याम्। "यदाह तपसे पुत्रीं वनं गन्तुञ्च मेनका। उ मेति,तेन सोमेति नाम प्राप तदा सती" कालि० पु०। "मात्रा निषिद्धा तपसे यदा सा ययावुमाख्यां भवभक्तिभाविनी" शिवपु० अत्र पक्षे उ मेति शब्दः नामहेतुत्वेनास्त्यस्याः अर्श आ० अच् "यस्येति" पा० आलोपे टाप्। "उमामुखे बिम्बफलाधरोष्ठे" "उमामुखन्तु प्रतिपद्य लोला" "उमारूपेण ते यूयम्" "उमा वधूर्भवान् दाता" इति च कुमा०। "नियोजयितुकामस्तु उमाया चन्द्रशेखरम्" शि०पु० उमामाहेश्वरव्रतम्। व्रतशब्दे वक्ष्यते। वे–बा० मक् संप्रसारणम्। ३हरिद्रायाम् ४अतसीवृक्षे (मसिना) उमाकटः उम्यः औमीनः ।५कीर्त्तौ ६कान्तौ, ७शान्तौ च।

उमाकट पु० उमाया अतस्या हरिद्राया वा रजः कटच् । अतस्या हरिद्रायाश्च रजसि ।

उमागुरु पु० ६त० । हिमालये तस्य उमायाजनकत्वा त्तथात्वम् । उमाजनकादयोऽप्यत्र । तस्याश्च तदुत्पत्ति कथा शिवपु० दृश्या ।

उमाचतुर्थी स्त्री उमायाजन्मदिनम् चतुर्थी । ज्यैष्ठशुक्लच तुर्थ्याम् "ज्यैष्ठशुक्लचतुर्थ्यान्तु जाता पूर्व्वमुमा सती । तस्मात् सा तत्र सम्पूज्य स्त्रीभिः सौभाग्यवृद्धये" म०पु०

उमापति पु० ६त० । महादेवे । स च यथा तामुपयेमे तत्कथा शिवपु० दृश्या तन्मूलकं कुमारे च वर्णितं ता एवमन्यत्रापि पुराणे दृश्या । "मेना यावत् सती प्राप्य हिमाचलपतिव्रताम् । उमरूपा हि तपसा पतिं प्राप पिनाकिनम्" । काशीख० उमाधवादयोऽप्यत्र

उमावन न० उमाप्रीतये वनमत्र । पुरभेदे शोणितपुरे हेम०

उमासहाय पु० ६त० । महादेवे दुर्गासहायतत्सह- चरादयोऽप्यत्र

उमासुत पु० ६त० । कार्त्तिकेये । तत्कथा अग्निकुमारशब्दे ५५ पृ० शिवपुराणे च दृश्या । उमातनयपार्वतीसुतादयोऽप्यत्र

उम्बर पु० उमित्यव्यक्तशब्दं वृणाति वृ अच् । १द्वारोर्द्धकाष्ठे, २गन्धर्व्वभेदे च । "उम्बरस्तुम्बुरुश्चैव अगुरम्ये च मह- गणान्" हरि० १२८अ० ।

उम्बी स्त्री उम्+बा—क गौरा० ङीष् पृषो० वस्य म । "मञ्जरी त्वर्द्धपक्वा या यवगोधूमयोर्भवेत् । तृणानलेन सम्भृष्टा बुधैरुम्बीति सा स्मृता" इति भा० प्र० उक्तायाम् अर्द्धपक्व- यवगोधूमयोर्मञ्जर्य्याम् । "उम्बी कफप्रदा बल्या लघ्वी पित्तानिलापहा" भा० प्र० ।

उम्बुर पु० उम्+वृ—क उत् रपर । द्वारोर्द्धकाष्ठे ।

उम्भि त्रि० उम्भ—इन् । *पूरके । ततः कच्छा० जातादार्थे ठञ् । औम्भेयक तज्जातादौ त्रि०

उम्य न० उमाया अतस्या भवन क्षेत्रम् वा यत् । अतसीभ- वनक्षेत्रे पक्षे अञ् औमीन तत्रार्थे न०

उम्लोचा स्त्री अप्सरोभेदे । "घृताची च विश्वाची पूर्व्वचित्तिरपि । उम्लोचेति च विख्याता" भा० आ० १२२अ०

उर गतौ सौ० पर० सक० सेट् । ओरति औरीत् उवोर उरतुः

उर पु स्त्री उर—क । १मेषे स्त्रियाम् अजा० टाप् । "आला वि नेमिरेषामुराम्" ८, ३४, ३, "उरा मेथीम्" भा० २गन्तरि त्रि० । "उरामथिरा मयुनेषु" ऋ० ८, ६६, ८ ।

उरःसूत्रिका स्त्री ७त० । मुक्ताहारे अमर ।

उरग पु स्त्री० उरसा गच्छति उरस्+गम—ड सलोपश्च । १सर्पे, स्त्रियां जातित्वात् ङीष् पादशून्यतया उरसैव तेषां हि गमनम । "भित्त्वोत्थितं भूमिमिवोरगाणाम्" "भिन्नमध्या- विवोरगौ" "अङ्गुलीवोरगक्षता" रघु । २तद्देवताके अश्लेषानक्षत्रे । "उरगाधिपयतास्ये मघरीमाघवारे" ज्यो० त० । ४सीसके तस्य नागशब्दवाच्यत्वेनाऽभेदोपचा- रात्तथात्वम् । अहिशब्दे ५८१ पृ० विवृतिः ।

उरगभूषण पु० उरगोभूषणमस्य । सर्पभूषणे महादेवे

उरगराज पु० ६त० टच् समा० । १सर्पराजे वासुकौ । उरगोराजेव उपमि० स० । २महासर्पे च । "प्रकृत्तुरैवो- रगराजदण्डम्" माघ उरगेश्वरदिन्द्रादयोऽप्युभयत्र । "उरगेन्द्रमूर्द्धरुहरत्नसन्निधे" माघ । [तथात्वम् ।

उरगस्थान न० ६त० । पाताले तेषां तत्रस्थितत्वात् पातालत्व

उरगाशन पु० उरगानश्नाति अश—ल्यु ६त० । सर्पभक्षके १गरुडे च २मयूरे उरगभक्षादयोऽप्यत्र । "स्वाधास्वभाग मुरगाशनकेतुयष्ट्या" माघः ।

उरङ्ग पु स्त्री उरसा गच्छति उरस्+गम—ड नि० । सर्पे स्त्रियां जातित्वात् ङीष् । [ सर्पे स्त्रियां जातित्वात् ङीष् ]

उरङ्गम पुं स्त्री उरसा गच्छति उरस्+गम—खच् सलोपः ।

उरण पुं स्त्री ऋ—क्यु, धातोरुच्च रपर । १मेषे स्त्रियां जाति- त्वात् ङीष् । "वृकोऽरण्यमासाद्य श्वशुरादाव गच्छति" भा० शा० ६५ अ० । "य उरणं जघान नव चख्वांसं नवतिं च बाहून्" ऋ० २, १४, ४, २दद्रुघ्नवृक्षे पु० स्वामी ।

उरणाक्ष पु० उरणस्य मेषस्य अक्षीव अक्षि पुष्पं यस्य । दद्रुघ्ने (दादमर्दन) वृक्षे । स्वामी तु उरणाख्यस्तमर्थं इत्याह । तन्मते उरणसाख्या आख्या यस्येति विग्रहः

उरभ्र पुं स्त्री उरु उत्कटं भ्रमति भ्रम—ड पृषो० उलोप । १मेषे स्त्रियां जातित्वात् ङीष् २दद्रुघ्नवृक्षे पु० स्वामी । तस्येदम् अण् । औरभ्र मेषमांसादौ "हविषाऽहिमे मासं मायसेन च सप्तरम् । मासद्वहारिणौरभ्रमाकुमच्छाग- पार्षतैः । ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् । मासाभिव- र्द्धा तृप्यन्ति दत्तेनेह पितामहाः" याज्ञ० । "दर्पिता श्चाक्रुश्यक्रगाक्रमर्दिमौरभ्रककुरा" सुश्रुते पशुषु उरभ्र दर्पितत्वमुक्तम् स च पाल्यपशुः "अश्वाश्वतरगो खरोष्ट्रवस्तोरभ्रमेद पुरुषप्रभृतयो प्राम्या" सुश्रु० तन्मां सगुणास्तत्रैव "प्राम्या वातहराः सर्वे वृंहणा कफपि- त्तलाः । मधुरा रसपाकाभ्यां दीपना बलवर्द्धनाः" "वृंहणं मांसमौरभ्रं पित्तश्लेष्मावहं गुरु" ।

अच् ६त० । भगवतोऽष्टमावतारे २ऋषभदेवे च । "अष्टमे मेरुदेव्यान्तु नाभेर्जात उरुक्रमः । दर्शयन् वर्त्म धीराणां सर्व्वाश्रमनमस्कृतम्" भा० १स्क० ३अ० ऋषभभक्त्ये विवृतिर्द्रष्टव्या ।

उरुगाय पु० उरुभिः श्रेष्ठैर्गीयते गम्यते वा गै–गाने गाङ् गतौ वा कर्म्मणि घञ् । परमेश्वरे वासुदेवे "त्रीण्येक उरुगाय । विक्रमे" ऋ० ८,२९,७, "उरुभिर्बहुभिर्गातव्य बहुषु देशेषु गन्ता महाकीर्त्तिर्वा" भा० महाकीर्त्तिरिति पक्षे गीयते गाय कीर्त्तिरित्यर्थः "अत्राह तदुरुगायस्य विष्णोः" यजु० ६,३, "विष्णा उरुगायैष" यजु० ८,१, "य पार्थिवानि त्रिभिरिद्वि गामभिरुरु क्रमिष्टोरुगायाय जीवसे" ऋ० १ १५५,४, "उरु गायाय उरुगातव्याय" भा० । गाङ् गतौ भावे घञ् गायो गति कर्म० । २विस्तीर्णायां गतौ "सोममहदुरुगाय प्रतिष्ठां दृष्ट्वा" कठवल्ली । "उरुगाय विस्तीर्णां गतिम्" शा० भा० "असम्बाधानुरुगायवतोऽभिध्यायत" छा० उ० "उरुगायवतो विस्तीर्णगतीन्" गै गाने घञ् कर्म्म० । ३बहुकीर्त्तने । "प्राणस्य माता योरुगायं कुरुते" शत० ब्रा० ,१,२,१४,

उरुचक्षस् त्रि० उरु यथा स्यात् तथा चष्टे चक्ष–असुन् । १महादर्शने "वर्षिष्ठक्षत्रा उरुचक्षसा नरा" ऋ० ८, १०१,२, सर्व्वद्रष्टृत्वात् २सूर्य्ये पु० "नमोभिरुरुचक्षो नृन्विद्वान्" ६,५१,९, "य मः सूर्य उरुचक्षा उदेति" ७,३५,८

उरुज्मन् त्रि० उर्व्वी ज्मा क्षितिर्यस्य । बहुभूमियुक्ते "उरुण्या, य उरुज्मन्नयुक्षन्" अथ० ६,४,२,

उरुज्रयस् त्रि० ज्रि–अभिभवे करणे असुन् उरु ज्रयोवेगोऽस्य विस्तीर्णवेगे । वेगेन हि सर्व्वाभिभवात् ज्रयसस्तथात्वम् । "उरुज्रयसमिन्दुभिः" ऋ० ८,६,२७, "उरुज्रयसम् विस्तीर्णवेगम्" भा० । "उरुज्रय एतयोमिमाक्षुतम्" ५,८,६, सेशानः पूतना उरु ज्रय" ८,२६,१, इत्यत्र ज्रयसोवेगार्थकस्याप्यन्ततया प्रयोगात् तस्या दन्तत्वम् प्रमादिकम् ।

उरुज्रि त्रि० उरु यथा तथा जूयति ज्रि क्विप् वेदे नि० न वृक् । जृ–वा० क्विप् वा । प्रभूतगतियुक्ते । "अर्वाक्पथ उरुज्रयः कृणुध्वम्" ऋ० ७,१९,२, "उरुज्रय प्रभूतगमना" भा० ।

उरुण्ड पु० उपद्रावके असुरभेदे । "अलसा यक्षधूमया उरुण्डा ये च मट्मटाः । कुम्भमुष्का अयाशवः । तानस्या ब्रह्मणस्पते प्रतिबोधेन नाशय" अथ० ८,६,१५,

उरुबिल त्रि० उरु वृहत् बिलमस्य । वृहच्छिद्रयुक्ते पात्रे स्थाल्यां स्त्री गौरा० ङीप् । "यद्युपोखा भिद्येत वाऽभिन्ना नश्या स्थाल्युरुबिली स्यात्तस्यामिमं पर्य्यावपेत्" शत० ब्रा० १,६, ४,८,

उरुज पु० उरुभ्योऽद्भ्यो जायते जनयति अन्तर्भूतण्यर्थे जन–ड पृषो० अल्लोप । प्रभूतप्रयोजनके । "गवाशुरुजमभ्यर्षति व्रजम्" ऋ० ९,७७,४, "उरुज प्रभूतानामपां जनकम्" भा०

उररी अव्य० उरु राति रा–बा० की । १अङ्गीकारे २विस्तारे च ।

उरुलोक न० उरु यथा तथा लोक्यते लोक–कर्म्मणि घञ् । १अन्तरिक्षे तस्य सर्व्वलोकेभ्यो महत्त्वेन ज्ञानात् तथात्वम् । "कालयात्मदिशा सर्व्वगतत्वं परम महत्" भाषोक्तेस्तस्य परममहत्त्वम् । "समान्तरिक्षमुरुलोकमस्तु" ऋ० १०,१२८,२ । कर्म्म० । २श्रेष्ठलोके पु० ।

उरुवु पु० उरु वायति वै शोषणे कु । एरण्डवृक्षे "यस्माकोरुबुवपीमूशालिगर्भाभिषाच्छदं" सुश्रु० स्वार्थे कन् तत्रैव । रायमुकुटस्तु उरुबुकस्थाने उरुवकइत्यङ्गीचकार पृषो० साधु ।

उरुवूक पु० उरु वायति वै शोषणे "उलूकादयश्च" उणा० नि० । रक्तैरण्डे "पुनर्नवावारुणतर्कार्य्युरुवूकवत्सादनीविल्वयाकप्रभृतीनि उष्णानि स्वादुतिक्तानि वातप्रशमनानि च" सुश्रु० । "पटोलसारिवाकुकारवेल्लकटुरोहिणीकेवुकोरुवूकपर्पटककिराततिक्तकर्कोटकारिष्टकोषातकीवेतकरीराटरूषार्कपुष्पप्रभृतीनि रक्तपित्तहराण्याङ्कृद्यानि रुचदूनि कुष्ठमेहज्वरश्वासकासारुचिहराणि च" सुश्रुत ।

उरुव्यचस् त्रि० उरु विचति व्यच–व्याजे (विशेषव्याप्तौ) असुन् अतिव्यापके । "आरुव्यचा पृथताम्" ऋ० २,५०१ । "उरुव्यचा प्रभूतव्याप्ति" भा० । २विस्तीर्णे "उरुव्यचसे महिने" ऋ० ७,३१,११ । "उरुव्यचसा विस्तीर्णे" भा० । "महद्रुरुव्यचा अदितिः" ५,४६,६ । "उरुव्यचसोधाम्ना पत्यमाना" यजु० २७,१६,

उरुषा त्रि० उरु सनोति सन–विट् ङा वेदे षत्वम् । बहुदातरि "मघीमयभ्यमुरुषामुरुज्रयः" ऋ० ५,४४, ६ । "उरुषा बहुदातारम्" भा० ।

उरुष्य रक्षणे पर० सक० सेट् । उरुष्यति औरुष्यीत् । "उरुष्य राय एषो यजस्व" यजु० ७,४, अस्य व्याख्याने "उरुष्य रक्ष उरुष्यतीरक्षणकर्म्मा" वेददी० । "उरुष्यदग्निं पितोरुपस्थे" ऋ० २,५,८ । अरक्षत् रक्षत" भा० । "गोपीथे न उरुष्यतम्" ऋ० ५,६५,६ ।

**उरुष्या** स्त्री उरुष्य रक्षणमिच्छति क्यच् अ यलोपः रक्षणेच्छायाम्। "उरुष्या पायुरभवत् सखिभ्यः" ऋ० ६,४४,७। "उरुष्या रक्षणेच्छया" भा० तृतीयाया लुक्। तत उ। "उरुष्यु रक्षणेच्छावति "इमे मा पीता यशस उरुष्यवोरथम्" ऋ० ८,४८,५। "उरुष्यवः रक्षाकामाः" भा०।

**उरूची** स्त्री उरु अञ्चति क्विप् ङीप् अलोपे पूर्व्वाणो दीर्घः। अतिव्याप्तिन्यां स्त्रियाम्। "उरूची विश्वे यजते निपातम्" ऋ० ४,५६,४। "स न उरूची भवतु स्वधाभिः" ऋ० ७,३५,२ 'विप्रथमाणो अमतिमुरूचीम्' ऋ० ७,१५,१ "या ते जिह्वा मधुमती सुमेधा अग्ने देवेषूच्यत उरूची" ऋ० ३,५७,५। स्त्रीभिन्ने उरु अच् तदर्थे प्रसादावपि उरूच उरूचा इत्यादि।

**उरूणस्** त्रि० उरु दीर्घं नासिके तस्य नसादेशः वेदे नि० णत्वं दीर्घश्च। दीर्घनासिकायुक्ते "उरूणसावसुतृपा" ऋ० १०,१४,१२।

**उरोज** पु० उरसि जायते जन–ड "ले विभाषा" पा० सप्तम्या लुक्। स्तने "दधदुरोजद्वयमुर्व्वशीतलम्" "रेजाते रुचिरद्वयामुरोजकुम्भौ" माघ स्तनादिक सूक्ष्मरूपेण जन्मकाले उत्पन्नमपि यौवने उद्भिद्यते। यथाह भावप्रका०। "बालानां सूक्ष्मरूपेण किन्तु यौवनागमे दृश्यते। तेषां तदैव तारुण्ये पुष्पमाह्र क्रमेष्यति। कुसुमानां प्रफुल्लानां गन्ध प्रादुर्भवेद्यथा। रोमराज्यादय पुंसां नारीणामपि यौवने। तावन्ते तत्त्वोर्भेदो ज्ञेयो व्याख्यानतः स च"। तथा च पुंसां रोमराजीश्मश्रुप्रभृतय नारीणां तु रोमराजीस्तनस्तन्यार्त्तवप्रभृतय."। आर्त्तवस्तनोद्भेदकालश्च एकादशवर्षादुत्तरं स्मृतावुक्त। "अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी। दशमे कन्यका प्रोक्ता तत ऊर्द्ध्वं रजस्वला" उ०त० स्मृतिः। इदमपि सम्भावितविषयम् चातुर्भेदेन तत उत्तरमपि भवतीति लोके दृश्यते सम्भावनाभिया दशमाब्दादर्वाक् देयेति तत्त्वम्। उच्यते तु द्वादशवर्षोपरि रज सम्भव उक्त। "द्वादशेन रज स्त्रीणाम् मासि मासि त्र्यहं स्रवेत्। तद्वर्षाद्द्वादशादूर्द्ध्वं याति पञ्चाशतः क्षयम्" रजःप्रद स्तनोद्भेदस्याप्युपलक्षणम्। गर्भिण्याः पीनस्तनत्वे दुग्धवत्त्वे च कारणमुक्तम् भा०प्र०। "रसप्रीतगर्भाणां स्त्रीणामार्त्तव वहानां स्रोतसां गर्भेणावरोधादार्त्तवं न स्रवति तदेव प्रतिहतमूर्द्ध्वमागतमुपचीयमानमपरा भवति शेषञ्चोर्द्ध्व नरमागतं पयोधरौ याति तस्माद् गर्भिण्याः पीनोन्नतौ पयोधरौ भवतः" इति। उरोभूषभृतयोऽप्यत्र "उरोभुवा कुम्भयुगेन जृम्भितम्" नैष०।

**उरोभूषण** न० उरो भूष्यतेऽनेन भूष–करणे ल्युट् ६त०। १वक्षोऽलङ्कारे हारे। उरो भूषयति ल्यु। २तदर्थे त्रि०।

**उरोबृहती** स्त्री वैदिके छन्दोभेदे। "बृहती जागतस्त्रयश्च गायत्राः। पथ्या पूर्वश्चेत्तृतीय। न्यङ्कुसारिणी द्वितीय। स्कन्धग्रीवी क्रौष्टुकेः। उरोबृहती यास्कस्य" कात्या० उक्ते यास्कमते द्वितीयचरणस्य जागतात्मकत्वे अन्येषां त्रयाणां गायत्रात्मकत्वे च सा भवतीत्यर्थः।

**उरोहस्त** न० उरसि हस्तचपेटाघातोऽत्र। बाहुयुद्धभेदे बाहुयुद्धप्रकार भा०स०२२अ० दर्शितः यथा "करग्रहणपूर्वन्तु कृत्वा पादाभिवादनम्। कक्षैः कक्ष्या विधुन्वानावास्फोटं तत्र चक्रतुः। स्कन्धे दोर्भ्यां समाहत्य निहत्य च मुहुर्मुहुः। अङ्गमङ्गैः समाश्लिष्य पुनरास्फालनं विभो।। चित्रहस्तादिकं कृत्वा कक्षाबन्धं च चक्रतुः। गलगण्डाभिघातेन सस्फुलिङ्गेन चाशनिम्। बाहुपाशादिकं कृत्वा पादाहतशिरावुभौ। उरोहस्तं ततश्चक्रे पूर्णकुम्भौ प्रयुज्य तौ। करसम्पीडनं कृत्वा गर्जन्तौ वारणाविव। नर्दन्तौ मेघसङ्काशौ बाहुप्रहरणावुभौ। तलेनाहन्यमानौ तु अन्योन्यं कृतवीक्षणौ। सिंहाविव सुसंक्रुद्धावाकृष्याकृष्य युध्यताम्। अङ्गेनाङ्गं समापीड्य बाहुभ्यामुभयोरपि। आवृत्य बाहुभिश्चापि उदरं च प्रचक्रतुः। उभौ कट्यां सुपार्श्वे तु तक्षवन्तौ च शिक्षितौ। अधोहस्तं स्वकण्ठे तूदरस्योरसि चाक्षिपत्। सर्वातिक्रान्तमर्यादं पृष्ठभङ्गं च चक्रतुः। सम्पूर्णमूर्च्छां बाहुभ्यां पूर्णकुम्भं प्रचक्रतुः। तृणपीडं यथाकामं पूर्णयोगं समुष्टिकम्। एवमादीनि युद्धानि प्रकुर्वन्तौ परस्परम्"। व्याख्यातञ्चैतत् नीलकण्ठेन "कक्षे दोर्मूले. कक्ष्या प्रकोष्ठगतां रज्जुं धुन्वानौ। यत तत्र कक्षं आस्फोटं चक्रतुः बाहुमूलास्फालनेन अङ्गदवत्सरज्जुयेयं कम्पयन्तावित्यर्थः। चित्रहस्तादिकं हस्तस्यातिवेगेन आकुञ्चनप्रसारणोपर्यधश्चालनमुष्टीकरणानि चित्रहस्ता आदिपदात् पादस्याप्याकुञ्चनादि। कक्ष्याबन्ध परस्परकक्षायां हस्तौ कृत्वा बन्धनम् नखेन नखरेण भास्करेणेवाभिघातकेन पादद्वयाङ्गुष्ठाग्रयोरभिघातेन विस्फुलिङ्गोत्पत्त्याऽशनि वज्रमिव सह्यजहरिमंस्यं। बाहुपाशादिकं चरणशाम आदिशब्दार्थः। पादाभ्याम् आहता

बुधपुत्रे पुरूरवसि नृपे उर्वशीवल्लभादयोऽप्यत्र ।

**उर्वारु** पु० उरु-यथा तथा ऋच्छति ऋ—उण् । कर्कट्याम् । स्वार्थे कन् अत्रैव । "उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्" ऋ० ७,५९, १२, । यजु० ३,६, "उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः" ३,७, अस्य स्त्रीत्वमपि अप्राणिजातिवचनत्वात् ऊङ् । उर्वारू तदर्थे "छिन्ध्यस्य बन्धनं मूलमुर्वार्वा इव" अथ० ६,१४,१,

**उर्वी** स्त्री उरु+गुणवचनत्वात् स्त्रियां वा ङीप् । १वृहत्त्वयुक्तायां स्त्रियाम् "उर्वीं ऋजम्" उरुशब्दे उदा० २पृथिव्यां च तस्यावृहत्त्वात् तथात्वम् । "तैरुर्वीनिहितचलत्पदं प्रचेले माघ । "अनन्यशासनामुर्वीं शशासैकपुरीमिव" "स्थित सर्वोन्नतेनोर्वीम्" रघुः वेदे "सुपांसुलुगित्यादिना" पा० सर्वविभक्तौ डियजादेशः "विष्णुर्नोद उर्विया व्यश्वैत्" ऋ० १,९२,१२, "उर्विया महती" भा० "प्रतीची चक्षुरुर्विया विभाति" १,९२,९ । ३नद्याम् निरु० ।

**उर्वीधर** पु० उर्वीं धरति धृ—अच् ६त० । पर्वते तेषां कीलकरूपेण अवष्टम्भनेन पृथिव्याधारकत्वात् तथात्वम् भूधरादयोऽप्यत्र "गर्भोऽभवत् भूधरराजपत्न्याः" कुमा०

**उर्वीधव** पु० ६त० । पृथिवीनाथे राजनि । उर्वीशोर्वीश्वरनाथादयोऽप्यत्र

**उर्वीभृत्** पु० उर्वीं बिभर्त्ति धारयति पालयति वा भृ-क्विप् तुक् ६त० । १पर्वते २राजनि च एवं पृथिवीभृद्धरणीभृदादयोऽप्यत्र । "उदयति च तदद्रु तमालिभिर्धरणीभृद्भुवि तत्र विलम्ब्य यत् । अनुमितोऽपि हि बाष्पनिरीक्षणात् व्यभिचचार न तापकरोऽनलः" नैष० तत्र धरणीभृत् राजा पर्वतश्च अत्र व्यभिचारश्च साधनसमानाधिकरणाभावप्रतियोगित्वरूप तेन साध्ये तत्सम्भवः तादृशव्यभिचारस्य उपाधिवादे चिन्तामणौ अङ्गीकृत तच्च उपाधिशब्दे दर्शितम्

**उर्वीरुह** पु० उर्व्यां रोहति रुह-क ७त० । वृक्षे "चिरमसयोर्वीरुहश्लिष्टतन्तुभिः" माघ

**उर्व्या** स्त्री उरोर्भावः ब० व्यत् उलोपश्च । महत्त्वे "रुद्राणामुर्व्यायां स्वादित्याः" शत० ब्रा० १,५,१,१७, "उर्व्यायां महत्त्वे" भा०

**उल** दाहे (सौत्रः) पर० सक० सेट् । ओलति औलीत्

**उल** पु० उल—दाहे कर्मणि घञर्थे क । मृगभेदे "उलो हलिक्ष्णो वृषदंशस्ते धात्रे" यजु० २४,३१ । "उलो मृगभेदः" वेददी० । तत्र चतुरर्थ्यां बला० य । उल्य तत्कर्षनिर्वृत्तदेशादौ त्रि० ।

**उ(ओ)लड** उत्क्षेपे इदित् वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् । उ(ओ)लण्डयति ते उ(ओ)लण्डति औलिलण्डत् त औलण्डीत् अयं लडि औदित् इत्येके ।

**उलन्द्र(न्द)** पु० राजभेदे तेन निर्वृत्तम् अरी० इणादि० वुञ् । औलिन्द(न्द्र)क तन्निर्मितपुरादौ त्रि०

**उलप** पु० न० वल—कपच् सम्प्रसारणम् । १शाखापलाशचययुतायां लतायाम् २कोमले तृणभेदे न० (उलुखड) । "नवोलपालङ्कृतसैकताभ." "उत्तीर्णभारलघुनाप्यलघूलपौघसौहित्य नि:सहतरेण तयोरधस्तात्" माघ ।

**उलप्य** पु० उलपे भवः यत् । रुद्रभेदे । "नमोलोप्याय चोलप्याय" यजु० १६,४५, रुद्राध्याय

**उलिन्द** पु० वल-बा० किन्दच् सम्प्र० । देशभेदे उणादिकोष ।

**उलु** त्रि० उरु रस्य लः । १वृहति २वृद्धियुक्तशब्दे च विवाहादौ स्त्रीभिरुच्चार्य्ये शब्दभेदे "प्रकारे गुणवचनस्य" पा० प्रकारे द्वित्वम् । उलूलु उरुप्रकारे । "उच्चैरुलूलुध्वनिरुच्चचार" नैष० "यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन् सर्व्वाणि च भूतानि सर्वे च कामास्तस्मात्तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनुतिष्ठन्ति" छा० उ० । "उलूलवः उरुरवा विस्तीर्णरवा " शा० भा० ।

**उलुप** पु० उरु पाप्यते रक्ष्यते अस्मात् पा रक्षणे—अपादाने घञर्थे क रस्य ल । उलपतृणे । "दृष्टोलुपपुञ्जकपिञ्जलतुमेयैर्जरत्कान्तारकूपैरिव" काद०

**उलुलि** पु० उल—उलि । हर्षसूचकशब्दे । "पृथग् घोषा उलुलयः केतुमन्त उदीरताम्" अथ० ४,१९,६,

**उलूक** पु० वल—संवरणे ऊक सम्प्रसारणम् । १पेचके, जातित्वात् स्त्रियां ङीप् उलूकी सा च ताम्रायाः कन्यायाः शुक्यां कन्या "षट् सुतास्तु महासत्त्वास्ताम्रायाः परिकीर्तिता" इत्युपक्रम्य "शुकी शुकानजनयदुलूकी प्रत्युलूककान्" विष्णुपु० । २इन्द्रे, कैतव्ये ३दुर्योधनदूतभेदे ४तृणभेदे । (उलुखड़) "त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः" माघ "श्वगोधोलूककाकांश्च स्मृद्रहत्यावतं चरेत्" मनुः "यदुलूको वदति मोघमेतत्" ऋ० १०,१६५,४, "विविधास्त्वेव सम्भोज्याः काकोलूकैश्च भक्ष्यम्" मनुः । अत्र काकोलूकैरित्युक्ते काकोलूकमित्यादि विरोधे समाहारैकत्वविधानं प्रायिकमिति गम्यते । "उलूकान् सुषुवे काकी श्येनी श्येनान् व्यजायत" भा० आ० ६२ । उलूकनामा दूतश्च युधिष्ठिरादीनां समीपे दुर्योधनेन प्रेषितः यथा "आहूयोपह्वरे

राजन् उलूकमिदमब्रवीत् । उलूक ! गच्छ कैतव्य ! पाण्डवान् सहसोमकान्' इत्यादिना भा० उ० ५०१अ० । उलूकस्य कैतव्य कितवस्यापत्यम् । तदागमनमधिकृत्यैव उलूकदूतागमनपर्व उद्योगपर्वान्तर्गतं पर्व । 8देशभेदे । "उलूकवासिन राजन् इहन्तमुपजग्मिवान्" । "उलूकानुत्तरांश्चैव तांश्च राज्ञः समानयत्" भा० स०अ० । अयञ्च देश "प्रययावुत्तरां तस्मादिशं धनदपालिताम्" इत्युपक्रम्य तस्य कौन्तेयात् धनञ्जयस्य उत्तरदिग्विजय एव तस्य उलूकदेशस्य वर्णनाच्च उत्तरदेशस्तीति गम्यते । ५तद्देशमपे च "उत्तरं पर्वतोद्देश ये ते दुर्गसहा तथा । आरोहन्तु विमर्द्दन्तो वत्समतिमगौरवा । उलूककैतवेयवं"हरिव०९८।

उलूकयातु पु० उलूकरूपेण याति या—तुन् । असुरभेदे । "उलूकयातुं शुशुलूकयातुं जहि" ऋ० ७,१०४,२२ । "उलूकरूपेण यातमुलूकयातुम्" भा० ।

उलूखल न० ऊर्द्ध्वं खम् उलूख पृषो० तत् लाति क्षिपति ला—क । धान्यादिकण्डनसाधने काष्ठमये पात्रे (उखरी) तच्च यज्ञियपात्रभेद । तल्लक्षणमुक्तम् "उलूखलमुखले अरत्निमात्रे औडुम्बरे मादेयमात्रे चतुरस्रमुलूखल मध्यसंगृहीतमूर्द्ध्वं वृत्तम्, उपलं दक्षिणमुलूखलात्" कात्या०१७,१,२ । तदुत्तरम् अन्येऽपि उदा० । "वनस्पतिभ्य इत्येव मुषलोलूखले हरेत्" मनु: 'स्त्राम्नूपस्कटानाञ्च मुषलोलूखलस्य च । अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम्" तस्य मनुक्तायोक्त प्रोयम् उलूखलशब्दस्य यास्केनान्यथा निरुक्तिर्दर्शिता यथा । "उलूखलमुरुकरं वोर्करं वोर्द्ध्व वोर मे कुर्विलमवोद्गदूखलमभयात्कर वै तदुलूखलमित्याचक्षते परोक्षेण" । स्वार्थे वन् तलार्थे 'यत्र ग्रावा उलूखलके' ऋ० १,१२८,५ । तदस्य साधनत्वेनास्त्यस्य ठन् । उलूखलिक । तत्साधनके जने'दन्तोलूखलिकोऽपि वा"मनु ।२गुग्गुलौ पु० उलूखलसुत पु० ६त० । उलूखलेनाभिषुते सोमरसे "उलूखलसुतानामवेद्विन्द्र" ऋ० १,२८,१,२,१ ।

उलूत पु० उल—बा० ऊतच् । अजगरसर्पे त्रिका० ।

उलूपिन् पु० ऊलो वसो रूपमस्त्यस्य इनि रस्य ल: । शिशुमारे अमर । पु० लुप्तपाठोऽपि तत्रैव उलूपिनु इत्यपि पाठ: क्वचित् तत्रार्थे ।

उलूपी स्त्री कौरव्यनागकन्याभेदे तत्कथा भा०आ०२१४अ० । "उलूप्युवाच ऐरावतकुले जातः कौरव्यो नाम पन्नगः । तस्यास्मि दुहिता राजन् । उलूपी नाम पन्नगी । साऽहं त्वामभिषेकार्थमवतीर्णं समुद्रगाम् । दृष्ट्वैव पुरुषव्याघ्र ! कन्दर्पेणाभिमूर्च्छिता । तां मामनङ्गग्लपितां त्वत्कृते कुरुनन्दन ! । अनन्यां नन्दयस्वाद्य प्रदानेनात्मनोऽनघ ! । अर्जुन उवाच । ब्रह्मचर्यमिदं भद्रे ! मम द्वादशवार्षिकम् । धर्मराजेन चादिष्टं नाहमस्मि स्वयंवश । तव चापि प्रियं कर्त्तुमिच्छामि जलचारिणि ! । अनृतं नोक्तपूर्वञ्च मया किञ्चन कर्हिचित् । कथञ्च नानृतं मे स्यात्तव चापि प्रियं भवेत् । न च पीड्येत मे धर्मस्तथा कुर्य्यां भुजङ्गमि ! । उलूप्युवाच । जानाम्यहं पाण्डवेय ! यथा चरसि मेदिनीम् । यथा च ते ब्रह्मचर्यमिदमादिष्टवान् गुरु । परस्परं वर्त्तमानान् द्रुपदस्यात्मजां प्रति । यो नोऽनुप्रविशेन्मोहात्स वै द्वादशवार्षिकम् । वने चरेद्ब्रह्मचर्य्यमिति व समय कृत । तदिदं द्रौपदीहेतोरन्योऽन्यस्य प्रवासनम् । कृतवांस्तत्र धर्म्मार्थमत्र धर्मो न दुष्यति । परित्राणञ्च कर्त्तव्यमार्त्तानां पृथुलोचन ! । कृत्वा मम परित्राणं तव धर्मो न लुप्यते । यदि वाऽप्यस्य धर्मस्य सूक्ष्मोऽपि स्याद्व्यतिक्रमः । स च ते धर्म एव स्याद्दत्त्वा प्राणान्ममार्जुन ! । भक्ताञ्च भज मां पार्थ ! सतामेतन्मतं प्रभो ! । न करिष्यसि चेदेवं मृतां मामुपधारय । प्राणदानान्महाबाहो ! चर धर्ममनुत्तमम् । शरणञ्च प्रपन्नाऽस्मि त्वामद्य पुरुषोत्तम ! दीनाननाथान् कौन्तेय ! परिरक्षसि नित्यशः । साऽहं शरणमभ्येमि रोरवीमि च दुःखिता । याचे त्वां चाभिकामाऽहं तस्मात्कुरु मम प्रियम् । स त्वमात्मप्रदानेन सकामां कर्त्तुमर्हसि । वैशम्पायन उवाच । एवमुक्तस्तु कौन्तेय पन्नगेश्वरकन्यया । कृतवांस्तत्तथा सर्वं धर्ममुद्दिश्य कारणम् । स नागभवने रात्रिं तामुषित्वा प्रतापवान् । उदितेऽभ्युत्थित' सूर्य्ये कौरव्यस्य निवेशनात् । आगतस्तु पुनस्तत्र गङ्गाद्वारं तया सह । परित्यज्य गता साध्वी उलूपी निजमन्दिरम् । दत्त्वा वरमजेयत्वं जले सर्वत्र भारत ! । साध्या जलचराः सर्वे भविष्यन्ति न संशयः" ।

उल्का स्त्री उष-दाहे क निं षस्य लः । रेखाकारे गगनात् पतत्तेजःपुञ्जे । अम्बुरुपातशब्दे ६२पृष्ठे तत्स्वरूपमकादिकमुक्तम् । "बाधेतोल्कोल्कापितशरदीवाधभारौ दवाग्नि"मेघ० । "उल्कानिर्घातकेतूंश्च ज्योतींष्युच्चावचानि च" । "उल्कापाते दिशां दाहे गोमायुविरुते तथा" "विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे"मनुः । अम.र-

सज्जालति विधिपन्ननेषु" किरा०। उल्काकारधनु-
ष्कम् श्रीपतिना "यासां गतिर्दिवि भवेद्दधितेव गम्या ता-
स्तारकाः सकलखेचरतोऽतिदूरे। तिष्ठन्ति या अनि-
यतोद्गतयश्च ताराश्चन्द्रादधोऽपि नियसन्ति तदन्विताश्च।
शीतांशुरश्मिभयात्तपनात् स्फुरन्ति तापाश्च प्रवहमारु-
तवश्चिवस्था। पुण्यान्तिमे स्वमितभावमपागतेऽपि तारा:
पतन्ति कुर्हविह् हतायपेन"। (ब्वलनसटेरतुडा)
४गुप्रकम्पयस्कादिदीपिते (मशाल) इति प्रसिद्ध
५दीपभेदे च। "तुलाराशिं गते भानौ अमा-
वास्या नराधिप। स्नात्वा देवान् पितृन् भक्त्या संपू-
ज्याथ प्रणम्य च। कृत्वा तु पार्वणश्राद्धं दधिक्षीरगुडा-
दिभिः। ततोऽपराह्णसमये घोषयेन्नगरे नृप:। लक्ष्मीः
सपूज्यता लोका। उल्काभिर्वापि वेष्ट्यताम्"ति॰त॰ज्यो॰
उल्कादाने दर्शद्वैधे निर्णय। "तुलास्थे सहस्रांशौ
प्रदोषे भूतदर्शयो। उल्काहस्ता नराः कुर्युः पितृणां
मार्गदर्शनम्" ति॰त॰ज्यो॰वचनात् प्रदोषव्यापिदर्शे
कार्यम्। उभयत्र प्रदोषप्राप्तौ परदिने एव, युग्मादिशा-
स्त्रात्। "दण्डैकरजनीयोगोदर्शस्य स्यात् परेऽहनि।
तदा विहाय पूर्वेद्युः परेद्युः सुखरात्रिका' ज्योतिर्वचनाच्च।
उभयत्र प्रदोषाप्राप्तावपि उल्कादानं पूर्वोक्तपार्वणानुरो-
धात्, न पूर्वदिने भूताहे ये प्रकुर्वन्ति उल्कादानमचेतस:।
निराशाः पितरो यान्ति शापं दत्त्वा सुदारुणम्' ज्योतिर्व-
चनात्। उल्कादानादि पितृकृत्यत्वात् प्राचीनावी-
तिना दक्षिणाभिमुखेन कार्यम्। "प्राचीनावीतिना सम्यग-
पसव्यमतन्द्रिणा। पित्र्यमानिधनात् कार्यं विधिवद्दर्भपाणि-
ना" मनूक्तेः। तद्दानमन्त्रादि ति॰त॰द्रष्टव्यम्। ६ज्योति-
षोक्ते मासविरुदशाभेदे। "मङ्गला पिङ्गला धान्या
भ्रामरी भद्रिका तथा। उल्का सिद्धा सङ्कटा च ह्यष्टौ
ज्ञेया महादशा:"ज्यो॰। तद्दानयनञ्च "वङ्गिभाम्बीनमचला-
शन्मनीषिरभादय" इत्युक्तेः मतभेदेन कृत्तिकानक्षत्रात्
पूर्वभाद्रपदचतुर्थपादात् अश्लेषमाहाऽऽरभ्य एकैकास्ता-
स्त्रिराशस्था क्रमेण मङ्गलादिका दशा भवन्ति इत्येवं चतु-
र्विंशतिनक्षत्रैः त्रिराशस्था अष्टौ दशा ज्ञेया ततो-
ऽन्तिमत्रिभेषु मङ्गलाद्यास्तिस्रो भवन्ति। एतासामष्टानाम्।
तासां भोगकालश्च। "एकाब्दिकोत्तरा अष्टयोगिनीतत्त्वरा
मता: क्रमात्। मङ्गलायाः १एकोवर्षं पिङ्गलायाः २द्वौ,
धान्यायास्त्रय, भ्रामर्याः ४वर्षाः, भद्रिकायाः पञ्च,
उल्कायाः षट्, सिद्धायाः सप्त, सङ्कटाया अष्टौ वर्षाः,
तेषां योगेन ३६वर्षा मङ्गलाद्यानां भोगकाला, इत्येवं त्रिरा-
शस्था अष्टौ दशाः तासां भोगकाल। एतद्दशादिकं
योगिनीदशाशब्दे वक्ष्यते।

उल्काचक्र न० रुद्रयामलोक्ते मन्त्रस्य शुभाशुभज्ञापक
चक्रभेदे "उल्काचक्रं सर्वसारं मन्त्रदोषादिनिर्णयम्।
मत्स्याकारमूर्द्ध्वमुखं सर्वमन्त्रादिसिद्धिदम्। तत्कण्ठेचावधि
गाय। पुच्छपर्यन्तमेव च। अकाराद्यक्षरमारभ्य द्वादशा-
क्षरमात्रकम्। विलिखेत् पृष्ठदेशे तु शुभाशुभविवृत्तये।
त्रयोदशाक्षरादारभ्य एकविंशाक्षरान्तकम्। नेतव्य साध-
कैर्मन्त्रं पृष्ठस्य सम्पुटाकृतम्। तथा श्रीशुभदं मोक्षं क-
ण्ठादिडकारान्तकम्। द्वाविंशादि चतुस्त्रिंशदक्षरान्त
शुभं मनुम्। पुच्छस्थं नापि गृह्णीयाम् चास्य च तथा
मुखम्। शीर्षस्थञ्चापि गृह्णीयात् तदक्षरं शृणु
प्रभो!। पञ्चत्रिंशादि द्वाचत्वारिंशद्वर्णान्तमेव च। मस्त-
कस्थं शुभं मोक्षं सुलक्षणान् शृणु प्रभो। त्रिचत्वारिं-
शद्वर्णादि एकपञ्चाशदन्तकम्। मुखस्थमन्त्रं मन्त्री तु न
गृह्णीयात् कदाचन। पुच्छस्य शृणु यत्नेन निर्दिष्टमक्षरा-
दिदम्। भ्रमो नाशस्य पीडाभिर्देवता कुप्यतेऽनिशम्।
द्विपञ्चाशदक्षरादि एकषष्टिमात्रिकान्। वर्णान् पुच्छ-
स्थितान् मोक्षान् नेतव्यान् शृणु वल्लभ।। द्विषष्टितमव-
र्णादि चतुष्पञ्चशरान्तकम्। अङ्गं लोचममन्त्रस्तु त-
तोऽन्यत् स्वसमाश्रितम्। तत् सर्वं शुभदं मोक्षं एतदन्यतम
शृणु। वैष्णवानाञ्च शैवानां शाक्तानां मन्त्रशोधनम्।
अन्यदेवेषु भक्तानां भक्तिमुक्तिप्रदं स्मृतम्"। "एतच्च चतु-
र्दशस्वरादिवर्णां सम्भवतोमता। स्वराविंशतिरेकश्च
सर्वेषां पञ्चविंशति। यादयश्च स्मृता याष्टौ चत्वारश्च
शमास्तथा। अनुस्वारो विसर्गश्च+कँपौ चापि पराश्रितौ।
दुःस्पृष्टश्चेति विज्ञेयो ळकार: प्लुत एव च' इति शिक्षो-
क्तविभागाभिप्राय चतुःषष्टेरस्यकथनम् ऌकारस्य दीर्घ-
स्याभावेनेति बोध्यम्।

उल्काजिह्व पु० उल्केव जिह्वाऽस्य। रामा प्रसिद्धे राक्षसभेदे

उल्कामुख पु० उल्केव मुखमस्य। प्रेतभेदे "वान्ताश्युल्कामुखः
प्रेतो विप्रो धर्मात् स्वकात् च्युत" मनु (ज्वाला
मुखोयालि) इति प्रसिद्धे जन्तुभेदे स्त्री ङीष्।

उल्कुषी स्त्री उल्-दाहे क्विप् उला दाहेन कुष्णाति कुष—क
गौ॰ ङीप्। उल्कायाम्। "अवनिरिव प्रथमेऽनुयाज
ज्ञाद्गुनिर्हतीय उल्कुषी इतोय:"। "उल्कुष्यम्
ज्योति इतीयम्" 'उल्कुषीव नमनुयाज्योतिरन्ति' उप्

तस्य त्यागो विगर्हितः । यो हि कश्चिद्द्विजान् हन्याद्गां वा लोकस्य मातरम् । शरणागतञ्च त्यजते तुल्यं तेषां हि पातकम् । श्येन उवाच । आहारात् सर्व्वभूतानि सम्भवन्ति महीपते ! । आहारेण विवर्द्धन्ते तेन जीवन्ति जन्तवः । शक्यते दुस्त्यजेऽप्यर्थे चिररात्राय जीवितुम् । न तु भोजनमुत्सृज्य शक्यं वर्त्तयितुं चिरम् । भक्ष्याद्वियोजितस्याद्य मम प्राणा विशाम्पते ! । विसृज्य कायमेष्यन्ति पन्थानमकुतोभयम् । प्रमृते मयि धर्म्मात्मन् ! पुत्रदारं विनङ्क्ष्यति । रक्षमाणः कपोतं त्वं बहून् प्राणान्न रक्षसि । धर्म्मं यो बाधते धर्म्मो न स धर्म्मः कुधर्म्म तत् । अविरोधात्तु यो धर्म्मः स धर्म्मः सत्यविक्रम ! । विरोधिषु महीपाल ! निश्चित्य गुरुलाघवम् । न बाधा विद्यते यत्र तं धर्म्मं समुपाचरेत् । गुरुलाघवमादाय धर्म्माधर्म्मविनिश्चये । यतो भूयांस्ततो राजन् ! कुरुष्व धर्म्मनिश्चयम् । राजोवाच । बहुकल्याणसंयुक्तं भाषसे विहगोत्तम ! । सुपर्णः पक्षिराट् किं त्वं धर्म्मज्ञश्चास्यसंशयम् । तथा हि धर्म्मसंयुक्तं बहु चित्रञ्च भाषसे । न तेऽस्त्यविदितं किञ्चिदिति त्वां लक्षयाम्यहम् । शरणैषिपरित्यागं कथं साध्विति मन्यसे । आहारार्थं समारम्भस्तव चायं विहङ्गम ! । शक्यश्चाप्यन्यथा कर्त्तुमाहारोऽप्यधिकस्त्वया । गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा । त्वदर्थमद्य क्रियतां यच्चान्यदिह काङ्क्षसि । श्येन उवाच । न वराहं न चोक्षाणं न मृगान् विविधांस्तथा । भक्षयामि महाराज ! किं ममान्येन केनचित् । यस्तु मे दैवविहितो भक्षः क्षत्रियपुङ्गव ! । तमुत्सृज महीपाल ! कपोतमिममेव मे । श्येनः कपोतमत्तीति स्थितिरेषा सनातनी । मा राजन् ! सारमज्ञात्वा कदलीस्कन्धमाश्रयः । राजोवाच । राष्ट्रं शिवीनामृद्धं वै ददानि तव खेचर ! । यं वा कामयसे कामं श्येन ! सर्वं ददानि ते । विनेमं पक्षिणं श्येन ! शरणार्थिनमागतम् । येनेमं वर्जयेथास्त्वं कर्म्मणा पक्षिसत्तम ! । तदाचक्ष्व करिष्यामि न हि दास्ये कपोतकम् । श्येन उवाच । उशीनर ! कपोते ते यदि स्नेहो नराधिप ! । आत्मनो मांसमुत्कृत्य कपोततुलया धृतम् । यदा समं कपोतेन तव मांसं नृपोत्तम ! । तदा देयं तु तन्मह्यं सा मे तुष्टिर्भविष्यति । राजोवाच । अनुग्रहमिमं मन्ये श्येन ! यन्माभियाचसे । तस्मात्तेऽद्य प्रदास्यामि स्वमांसं तुलया धृतम् । लोमश उवाच । उत्कृत्य स स्वयं मांसं राजा परमधर्म्मवित् । तोलयामास कौन्तेय ! कपोतेन समं विभो ! । ध्रियमाणः कपोतस्तु मांसेनात्यतिरिच्यते । पुनश्चोत्कृत्य मांसानि राजा प्रादादुशीनरः । न विद्यते यदा मांसं कपोतेन समं धृतम् । तत उत्कृत्तमांसोऽसावारुरोह स्वयं तुलाम् । श्येन उवाच । इन्द्रोऽहमस्मि धर्म्मज्ञ ! कपोतो हव्यवाडयम् । जिज्ञासमानौ धर्म्मे त्वां यज्ञवाटमुपागतौ । यत्ते मांसानि गात्रेभ्य उत्कृत्तानि विशाम्पते ! । एषा ते भास्वरी कीर्त्तिर्लोकानभिभविष्यति । यावल्लोके मनुष्यास्त्वां कथयिष्यन्ति पार्थिव ! । तावत् कीर्त्तिश्च लोकाश्च स्थास्यन्ति तव शाश्वताः । इत्येवमुक्त्वा राजानमारुरोह दिवं पुनः । उशीनरोऽपि धर्म्मात्मा धर्म्मेणावृत्य रोदसी । विराजमानो वपुषा प्रारुरोह त्रिविष्टपम्” १३१ अ० । उशीपूरको वाञ्छापूरको नरो यत्र । ३ तदधिकृतदेशे जटाधरः ।

**उशीर** पु॰न॰ वश–ईरन् किच्च । वीरणमूले (खसखस्) तस्य गुणाः “उशीरं पाचनं शीतं स्तम्भनं लघु तिक्तकम् । मधुरं ज्वरहृद्वान्तिमदनुत् कफपित्तनुत् । तृष्णास्रविषवीसर्पदाहकृच्छ्रव्रणापहम्” भावप्र॰ “अगरुष्टकोशीरभद्रदारुकुङ्कुमानि पुन्नागकेशरञ्चेति” “चन्दनकुचन्दनह्रीबेरोशीरमञ्जिष्ठापयस्याविदारीशतावरीभिः” सुश्रु॰ स्वार्थे कन् तत्रैव । उशीरं पण्यमस्य किशरादि ष्ठन् । उशीरिक तद्विक्रेतरि स्त्रियां षित्त्वात् ङीष् । उशीनरस्यापत्यम् अण् । औशीनर तदपत्ये शिविप्रभृतौ ।

**उशीरबीज** पु॰ उशीरस्य वीरणमूलस्य बीजं योनिरत्र । उत्तरदिक्स्थे पर्वतभेदे “उशीरबीजं मैनाकं गिरिं श्वेतञ्च भारत ! । समतीतोऽसि कौन्तेय ! कालशैलञ्च पार्थिव !” इत्युपक्रम्य “श्वेतं गिरिं प्रवेक्ष्यामो मन्दरञ्चैव पर्वतम् । यत्र माणिचरो यक्षः कुवेरश्चैव यक्षराट्” भा॰व॰ १३९अ॰ उक्तेः अस्य उत्तरदिक्स्थत्वं मन्दरगिरिसन्निकटत्वञ्च “तुषारचयसङ्काशो मन्दरश्चैव पर्वतः । उशीरबीजश्च गिरीशश्रीपतः तथाविराट्” हरि॰ २२६अ॰ उक्तेः कैलासनिकटत्वमपि

**उशीरादि** न॰ चक्रदत्तेन ज्वरातिसाराधिकारोक्ते पाचनभेदे । “उशीरं बालकं मुस्तं धान्यकं विश्वभेषजम् । समङ्गाधातकी लोध्रं बिल्वं दीपनपाचनम् । हन्त्यरोचकपिच्छाम विबन्धं सातिवेदनम् । सशोणितमतीसारं सज्वरं वाथ विज्वरम्” ।

**उशेन्य** त्रि॰ वश–बा॰ केन्य सं॰प्र॰ । कमनीये । “आ मे मालोद्धयोन्योजनिष्ट” ऋ॰ ८,१,९, “उशेन्यः कमनीयः” भा॰

उष दाहे वधे च भ्वा० पर० सक० सेट् । ओषति औषीत् ओषाम् बभूव आस चकार उवोष ओषित्वा । ओषितः—उषित । उष्ट्वा । कर्मणि उष्यते ओषामासे उषे "ओषामासे मन्मथो तृपातवाताश्लिष्यद्दन्तच्छारदाम्" माघ । "हिरण्यमायु-रन्नञ्च भूर्गौश्चाप्योषतस्तनुम्" मनुः । "दण्डेनैव तमप्योषेत् स्वकाद्धर्माद्धि विच्युतम्" मनुः ओषाञ्चकार कामाग्नि-र्दशग्रीवमहर्निशम्" भट्टिः "चिरेव रामस्तमुखच्छ्रमोषाञ्चक्रे शुचेश्वर" भट्टि तस्य "मूलप्रतीघाताद्दुष्यते चूष्यते दह्यते पच्यते इव" सुश्रुत ।

उष दाहे वधे च भ्वा० पर० सेट् उदित् सक० सेट् । ओषति औषीत् ओषाम् बभूव–आस–चकार उवोष । उदित्त्वात् ओषित्वा उष्ट्वा वेट् । क्त । उष्ट । ओषण ।

अभि–सर्व्वतो दाहे । "येऽभ्युष्टमिश्र इव" शत० ब्रा० ११,२,७,२२ । अभित ओषण अभ्युष्ट सर्व्वतोदाह तेन-मिश्र इव' भा० । [ अन्नभेद अपूपादि० ।

अव–अध सन्तापनेन दाहे । अवोष अधोभागे दग्धो

उद्–आधिक्येन दाहे । "मा मोदोषिष्टम् मा मा हिंसिष्टम्' शत०ब्रा० १,५,१,२५ । "युवा मामुत्तप्टमाधिक्येन मा उदोषिष्ट' दाह कार्ष्टम्" भा० ।

उप–सामीप्येन दाहे । "अग्निना वा कक्षमुपोषेत्" आश्व० श्र० २,४,६ । तमग्निभिः समुपोष्येत्तदेनम्" शत० ब्रा० १२,५,१,१३ । उपवासे च उपोषणम् ।

प्रति–प्रतिदाहे । "स त्वमग्ने प्रतीकेन प्रत्योष' यातुधान्य" ऋ० १०,११८,८ । प्रत्येकदाहे च "प्रत्युष्टं रक्षः प्रत्युष्टा अरातय" यजु० १,७, "प्रत्युष्ट प्रत्येकं दग्धम्" वेददी० ।

उषस् प्रभातीभावे कण्ड्वा० पर०सक० सेट् । उषस्यति औ-षस्यीत् औषसीत् उषस्याम् साम् बभूव आस चकार ।

उष त्रि०उष–क । १दाहके २सन्ध्यात्रयसमये ३कामिनि ४गुग्गुलौ ।५रात्रिशेषे पु०मेदि० । रात्रिशेषश्च सूर्ष्या-स्तकाल' पञ्चपञ्चाशद्घटिकोत्तरसूर्य्योदयपर्य्यन्त काल' । ६दिवसे पु० ।

उषङ्गु पु०उष वा०अङ्गु । रुद्रे तस्य संहर्त्तृत्वात्तथात्वम् । "उषङ्गुश्च विधाता च मान्धाता भूतभावन"आ० अनु० १७

उषण न०उष–क्युन् । १मरिचे २पिप्पलीमूले च ३शुण्ठ्या, ४चव्यिके(चइ) पिप्पल्या च स्त्री । उषणशब्दे विवृति'

उषती स्त्री उष–शत–वा०ङीप् गुणाभावः रायमुकुट' । अक ल्याणवाचां वाचि । "ययाऽस्य वाचा पर उद्विजेत न तां वदेदुषतीं पापलोक्याम्"भा०अ०६ ४आ०८७अ० । शब्दे पु० उषन् शब्द' वाक्ये न०उषत् वाक्यं तेनास्य त्रिलिङ्गता

उषत् पु०यदुवंश्ये नृपभेदे । क्रोष्टुवंशवर्णने "अनन्तरं सुयज्ञस्तु सुयज्ञतनयोऽभवत् । उषन् यो यज्ञमखिल स्वधर्म्ममुपता-पर' । शिनेयुरभवत् पुत्र उषत: शत्रुतापन'" हरि० ३७

उषद्गु पु० यदुवंश्ये नृपभेदे । "स्वाहे पुत्रोऽभवद्राजा उषद्गु-र्वदतांवर । महाक्रतुभिरीजे यो विविधैर्भूरिदक्षिणै' । ततः प्रसूतिमिच्छन् वै उषद्गुःसोऽग्रमात्मजम्"हरि०३७

उषद्रथ पु० पौरवे नृपभेदे उशीनरस्य भ्रातृस्तितिक्षो सु-तभेदे । "तितिक्षोऽभवद्राजा पूर्व्वस्यां दिशि भारत । उष द्रथो महाराज । फेनस्तस्य सुतोऽभवत्" हरि० ३१अ० ।

उषप पु० उष–दाहे कपन । १वह्नौ २सूर्य्ये च तयोस्तापक-त्वात्तथात्वम् । ३चित्रकवृक्षे च ।

उषर्बुध् त्रि० उषसि बुध्यते बुध–क्विप् अहरादि० नित्यं र' । अग्निहोत्रकाले प्रबुद्धे । "मर्त्येषूषर्बुद्धुदतिथिर्जात वेदा" ऋ०६,४,२ । "आकाँ सूर्य्यस्य रोचनाद्विश्वान् देवानुषर्बुध' १,१४,६ "आ दाशुषे जातवेदो वहाद्या देवा उषर्बुध" ऋ० १,४४,१ ।

उषर्बुध त्रि० उषसि बुध्यते बुध–क अहरा० नित्य र' । अग्निहोत्रकाले प्रबुद्धे ।"इममू षु वो अतिथिमुषर्बुधम्" ऋ०६ १५,११२ अग्नौ पु०२चित्रकवृक्षे च अमर,।

उषस् न० ओषत्यन्धकारस् उष–असुन् किञ्च । १प्रत्यूषे, "उष उषो हि वसो अग्रमेषि" १०,८,४ । स च काल । "पञ्चपञ्च उषःकाल," स्मृते पञ्चपञ्चाशद्घटिकोत्तर । "आसीदासन्ननिर्वाण प्रदीपार्च्चिरिवोषसि" रघु । "पुन-रुषसि विविक्तैर्मातरिश्वावधूयर्" माघ २सन्ध्यात्रये स्त्री "इह सुरिन्द्राय पूर्व्वीरुषसोदुहाना' "ऋ०६,२८,१ । तेन उषा उषसौ–उषस इत्यादि भकारादौ परे वेदे सस्य द उषद्भिः सि० कौ० । "मिमुच उषसस्तकवीरिव" ऋ० १,१५१,५, ३तदभिमानिदेवताभेदे अस्य देव-ताद्वन्द्वे पूर्व्वापरयोः उषासादेश । "नक्तोषासा सु-पेशसा" ऋ० १,१४२,७ । तदभिमानिदेवताभेदाभिधा-यित्वेन देवताद्वन्द्व ।"जिगीपोषासामक्ता सुदुघेव धेनु" १,१८६४, । आदिपदलोपेऽपि उषासावश्विना" यजु० २१, ५० । नक्तोषासाविति प्राप्ते आदिपदलोप वेददी० । "उषासा वा सुहिरण्ये" यजु० २६,६ । नक्तोषासावित्यर्थे वेददी० । "साऽस्य देवता यत् । उषस तद्देवताके पश्वादौ"लप्याश्चिरल्लाश्चिर्स्ताश्चिस्त उषस्या:" यजु०२४,४,उषस्या उषादेवताकाश्चत्वये यूपे नियोज्याः"

वेददी० ४ब्राह्ममुहूर्त्ते "उषायै स्वाहा मेध्यस्य विद्यात्" ह०उ०। "उषा ब्राह्मो मुहूर्त्तकाल" श०भा०। ५दिवोदुहितृदेवतायाम् स्त्री प्रौढ़मनोरमा।

**उषसी** स्त्री उष तापकत्वात् दिवस स्यति सो—क गौरा० ङीष्। साय सन्ध्यायाम् मेदिनि।

**उषस्ति** पु० ऋषिभेदे "उषस्तिर्ह चाक्रायण" छा०उ०। उष स्तोऽप्यत्र "अथ हैनमुषस्तश्चाक्रायण पप्रच्छ" "ततो होषस्तश्चाक्रायण उपरराम" इति च शत०ब्रा०१४,६,५,१।

**उषा** स्त्री ओषत्यन्धकारम् उष+क। १प्रातरादिसन्ध्यासु "येमीरत्नमतमुषासिषः" ऋ०८,४१,२। तिस्र प्रात साय मध्याह्नरूपा उषा "भा०। "उषा विभातीरनु भासि पूर्वीः" ३,६,७, "तेन परिहानिरुषा भानोरर्द्धोदयं यावत्" ह० स० उक्ते २काले नक्षत्रप्रभाशय काल उषा। तेन पञ्च पञ्चाशद्घटिकोत्तरमारभ्य सूर्य्यार्द्धोदयपर्य्यन्त स काल। लग्नाद्यलाभे उषाकाले यात्रा शस्ता यथाह ज्यो० "प्रत्युषद्युतितारका स्फुटतटी प्राची भवेन्निर्म्मला स्वीयद्रक्षविलोहितान्तगदहा देशे सदा वाञ्छिता। नो वार न तिथि न योगकरण लग्नस्य नामेक्षते हत्वा दोषसहस्र सञ्चयमुषा नून करोत्युन्नतिमिति"। "तिथ्यादिषु निषिद्धेषु चन्द्रताराविलोमत। उषा गोधूलियोग वा स्वीकृत्य गमन चरेत्। प्राच्यामुषा प्रतीच्यास्तु गोधूलिं वर्जयेन्नृप।। दक्षिणेऽभिजित चैवमुत्तरे च निशा तथा"। "आरक्तबिम्बं रजनीविराम वदन्त्युषायोगमिह प्रवीणा। व्यास" "आहु प्रयातु सकलार्थसिद्धि सलभ्यते हस्तगतस्थितेव" ज्यो०त०व्यास। अन्धकारेण सन्तापकारिण्या ३रात्रौ मेदि० "अधिकरुचिरशेषामप्युषा जागरित्वा" माघ। ४क्षारभूमौ। तत कश्चित् गौरा० ङीष्। "अक्षम् स्रुत कुङ्कुराक्षमिवोषमुख्याम्" भाग० ५स्त्रीगव्यां हेम० ६उखायां शिख० ७स्यास्त्या रमाभाय। दशाबराजसुतायास्तु तत्र दीर्घादित्वमपि भारतादौ तथैव निर्द्दिष्टात्। तया च यथा अनिरुद्ध पतित्वेनाप्त तथा वर्णित भाग०१०स्क०६२अ०यथा (बाणस्य) "तस्योषा नाम दुहिता स्वप्ने प्राद्युम्निना रतिम्। कन्या लब्धतकान्तेन प्रागदृष्टश्रुतेन सा। सा तत्र तमपश्यन्ती क्वासि कान्तेति वादिनी। सखीनां मध्य उत्तस्थौ विह्वला व्रीडिता भृशम्। बाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा च तत्सुता। सख्यपृच्छत् सखीं भूयः कौतूहलसमन्विता। कं त्वं मृगयसे सुभ्रु। कीदृशस्ते मनोरथः। हस्तग्राह न तेऽद्यापि राजपुत्र्युपलक्षये। उषोवाच। दृष्टः कश्चिन्नर स्वप्ने श्याम कमललोचनः। पीतवासा वृहद्बाहुर्योषितां हृदयङ्गमः। तमह मृगये कान्त पाययित्वाऽधर मधु। क्वापि यात स्पृहयती क्षिप्त्वा मा वृजिनार्णवे। चित्रलेखोवाच। व्यसनमपकर्षामि त्रिलोक्यां यदि भाव्यते। तदानेष्ये नर। यस्ते मनोहर्त्ता तमादिश। इत्युक्त्वा देवगन्धर्व्वसिद्धचारणपन्नगान्। दैत्यविद्याधरान् यक्षान् मनुष्यांश्च तथाऽलिखत्। मनुजेषु च सा वृष्णीन् शूरमानकदुन्दुभिम्। व्यलिखत् रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता। अनिरुद्ध विलिखित वीक्ष्योषाऽवाङ्मुखी ह्रिया। सोऽसावसाविति प्राह स्मयमाना महीपते। चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी। ययौ विहायसा राजन्। द्वारकां कृष्णपालिताम्। तत्र सुप्तं सुपर्य्यङ्के प्राद्युम्निं योगमास्थिता। गृहीत्वा शोणितपुर सख्यै प्रियमदर्शयत्। सा च तं सुन्दरवर विलोक्य मुदितानना। दुष्प्रेक्ष्ये स्वगृहे पुंभी रेमे प्राद्युम्निना समम्। परार्द्ध्यवासःस्रग्गन्धधूपदीपासनादिभि। पानभोजनभक्ष्यैश्च वाक्यैः शुश्रूषयार्च्चित। गूढः कन्यापुरे शश्वत् प्रवृद्धस्नेहया तया। नाहर्गणान् स बुबुधे उषयोपहृतेन्द्रियः" विस्तरस्तु हरिव०१७६अ०। प्रातःकाले अव्य० मेदि० अव्ययत्वात् ततो भवार्थे ट्युल् तुट् च। उषातन तद्भवे त्रि० स्त्रियां ङीप्।

**उषाकल** पु० उषायां कलोरवो यस्य। कुक्कुटे।

**उषापति** पु० ६त०। कृष्णपौत्रे प्रद्युम्नपुत्रे यदुवंश्ये अनिरुद्धे तत्पतित्वप्राप्तिकथा उषाशब्दे उक्ता उषानायादयोऽप्यत्र, अमरे "अनिरुद्ध उषापतिरिति" ह्रस्वपाठः भारतादौ तु दीर्घपाठः।

**उषित** त्रि० वस क्त। १पर्य्युषिते २कृतवासे च। उष—दाहे क्त। ३दग्धे मेदि०। ४त्वरिते शरप्रि। भावे क्त। ५वासे न० "आयङ्कालेरुषित यत्र" कु०त० देवलः।

**उषीर** पुन० उष—कीरच्। वीरणमूले रावतुकुट:।

**उष्ट्र** पु० उष—सेचने ष्ट्रन् वेदे नेट्। १सस्यक्षेत्रे क्षेत्रे च चीवर्दे। तस्याप्योषधीत्वात् तथात्वम् "ओष्टारौ वा" काञ्चा० ५,११,१२। "ओष्टारौ महावलीवर्दौ" कर्कः। आ+सस्यक् उष्टारौ इति विग्रहः। "उष्टारेव फर्वरेषु श्रयेथे" ऋ० १५,१०६,२। लोके तु उष्ट्रिक इत्येव। क्षेत्रकारि त्रि० स्त्रियां ङीप्।

**उष्ट्र** पु स्त्री० उष+ष्ट्रन् किच्च। (उट) प्रसिद्धे पशुभेदे

स्त्रियां जातित्वात् ङीष् । "हस्तिगोऽश्वोष्ट्रदमकोनक्षत्रैर्यश्च जीवति" "नाधीयीताश्वमारूढो न रथं न च हस्तिनम् । न नावं न खरं नोष्ट्रं नेरिणस्थो न यानगः" मनु । तद्यान-निषेधमाह "उष्ट्रयानं समारुह्य खरयानं तु कामतः । स्नात्वा तु विप्रो दिग्वासाः प्राणायामेन शुध्यति" मनुः। कातन" इत्युक्त्या कर्मभेदे तद्याने न दोष इति सूचितम् अमए॰ 'उष्ट्रमारोक्ष्यन्नभिमन्त्रयते त्वाष्ट्रोऽसि" पार॰ गृ०सू० मन्त्रलिङ्गेन तद्यानं विहितम् । तस्य मांस न भक्ष्यम् "भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदत" मनूक्तेः । तेनास्य एकदन्तपङ्क्तियुक्तत्वम् । "गौरजो महिष कृष्णः सूकरो गवयोरुरुः"। द्विशफा पशवश्चेमे अविरुष्ट्रश्च सत्तम !"भाग॰ उक्ते गवादयः उष्ट्रान्ता द्विशफाः इति बोध्यम् । वृथा तद्वधाते दोषः "मनुष्यमारणे क्षिप्रं चौरवत् किल्बिष भवेत् । प्राणभृत्सु महत्स्वेषु गोगजोष्ट्रहयादिषु" मनूक्तेः । ब्रह्महत्याद्युपपापेन तज्जातिर्भवति यथाह मनुः "या यां योनिन्तु जीवोऽयं येन येनेह कर्म्मणा । क्रमशो याति लोकेऽस्मिंस्तत्तत् सर्वं निबोधत । बहून् वर्षगणान् घोरान्नरकान् प्राप्य दारुणान् । संसारान् प्रतिपद्यन्ते महापातकिनस्त्विमे । श्वसूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम् । चण्डालपुक्कसानाञ्च ब्रह्महा योनिमृच्छति"।यानहरणपापेऽप्युष्ट्रयोनिप्राप्तिमाह इत्येतदुक्तौ मनु "स्त्रीखच खोकक्षीवारि,यानान्युष्ट्र, पञ्चनखः।तद्वधे प्रायश्चित्तमाह "हत्वा खागाविकोष्ट्रेषु गर्द्दभेषु च मारणात् । माजापत्यार्द्धमेवेह प्रायश्चित्तं विधीयते" प्रा॰ वि॰ विष्णु । तद्भक्षणे प्रायश्चित्तमाह मुक्त्वेत्यनुवृत्तौ प्रा॰ वि॰ मनुः "ग्राम्यं कुञ्जरोष्ट्रौ च सर्वं पञ्चनखं तथा । क्रव्यादं कुक्कुटं ग्राम्यं कुर्य्यात् संवत्सरव्रतम्" "अथोष्ट्रवामीयतवाहितार्थ." रघुः । "इतिश्च तत्र कुर्व्वीत यावद्गोनाश्वलोकभेत्" मनुः । "अन्योन्यतः पथि वताविमीतामिभोष्ट्रौ"माघः । तन्मूत्रगुणाः सुस्रु॰ उक्ताः । "अथ मूत्राणि गोमहिषाजाविगजहयखरोष्ट्राणां तीक्ष्णानि कटून्युष्णानि तिक्तानि लवणानुरसानि लघूनि शोधनानि कफवातक्रिमिमेदोविषगुल्मार्शउदरकुष्ठशोफारोचकपाण्डुरोगहराणि हृद्यानि दीपनानि च सामान्यत । भवन्ति चात्र । तत्सर्वं कटु तीक्ष्णोष्णं लवणानुरसं लघु । शोधन कफवातघ्नं क्रिमिमेदोविषापहम् । अर्शोजठरगुल्मघ्नं शोफारोचकनाशनम् । पाण्डुरोगहरं भेदि हृद्यं दीपनपाचनम्"। सामान्यत उक्त्वा "अर्शोघ्नं कारभं मूत्रमिति" विशेषगुणा उक्ताः । तन्मांसगुणा सुश्रुते उक्ताः तच्च उरभ्रशब्दे दर्शितम् । तस्य ग्राम्यत्वं ततोक्तम् । तच्च उरभ्रशब्दे दर्शितम् । किन्तु तस्यारण्यत्वमपि अतएव "उष्ट्रमारण्य मनु ते दिशामि" यजु॰ १३ २४, तस्यारण्यत्वमुक्तम् । तस्य त्वष्टृदेवतार्थं अश्वमेधे देयतोक्ता "बृहस्पतये गवया त्वष्ट्र उष्ट्रान्"यजु॰ २४,२८,द्वित्वे गोयुगच् उष्ट्रगोयुग उष्ट्रद्वित्वे न॰ शालाया गोष्ठच् । उष्ट्रगोष्ठ उष्ट्रशालायां न॰ षट्के षड्गवच् । उष्ट्रषड्गव उष्ट्रषट्के न०। तस्येदमण् । औष्ट्र तत्सम्बन्धिमांसादौ त्रि०। "परं चौष्ट्रं नैव नरमहिषयोश्छागमपि वा" कर्पूरस्तव ।

उष्ट्रकर्णिक पु० उष्ट्रस्य कर्ण॰ भेदनम् कर्ण+भिदि—अच् । सोऽस्यास्तीति ठन् । दक्षिणस्थे यवनदेशभेदे तद्देशवासिभिर्हि भोजनार्थम् उष्ट्रभेदनात् तद्देशस्य तथात्वम् । सहदेवदक्षिणदिग्विजयवर्णने "अन्ध्रांस्तालवनांश्चैव कलिङ्गानुष्ट्रकर्णिकान् । आटवीं च पुरीं रम्यां यवनानां पुरीं तथा" भा॰स॰ २० अ॰ उष्ट्रतुल्यकर्णजनवत्त्वाद्वा तथात्वम् ।

उष्ट्रकाण्डी स्त्री उष्ट्र इव काण्डोऽस्य जातित्वात् ङीष् (उटाटी) पुष्पभेदे राजनि० ।

उष्ट्रग्रीव पु० उष्ट्रग्रीवा आकारत्वेनास्त्यस्य अर्श॰ अच् । सुश्रुतोक्ते पैत्तिके भगन्दररोगभेदे । तन्निदानस्वरूपादि तत्रोक्तं यथा "वातपित्तश्लेष्मसन्निपातागन्तुनिमित्ताः शतपोनकोष्ट्रग्रीवपरिस्राविशम्बूकावर्त्तोन्मार्गिणो यथासंख्यं पञ्च भगन्दरा भवन्ति । ते तु भगगुदवस्तिप्रदेशदारणाच्च भगन्दरा इत्युच्यन्ते। अपक्का पिडका पक्वास्तु भगन्दरा । तेषान्तु पूर्वरूपाणि कटीकपालवेदना गुदकण्डूर्दाह शोफश्च गुदस्य भवति" इत्युपक्रम्य । "पित्तन्तु प्रकुपितमनिलेनाधः प्रेरितं पूर्ववदवस्थितं रक्तां तन्वीमुच्छ्रितामुष्ट्रग्रीवाकारां पिडकां जनयति । साऽस्योषादीन्वेदनाविशेषान् जनयत्य प्रतिक्रियमाणा च पाकमुपैति वह्निक्षाराग्निदाहाभ्यामिव दह्यते दुर्गन्धमुष्णमास्रावं स्रवत्युपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति, तं भगन्दरमुष्ट्रग्रीवमित्याचक्षते । उष्ट्रशिरोधरोऽप्यत्र "प्रकोपणैः पित्तमतिप्रकोपितं करोति रक्तां पिडकां गुदागताम् । तदाशुपाकाहिमपूतिवाहिनीं भगन्दरं तूष्ट्रशिरोधरं वदेत्" निदानम् ।

उष्ट्रधूसरपुच्छी स्त्री उष्ट्रस्येव धूसरः पुच्छ इव मञ्जरी अस्याः जातित्वात् ङीष् । (विछाति) वृक्षभेदे रत्नमाला स्वार्थे कन् तत्र । तत्रार्थे ।

उष्ट्रपादिका स्त्री उष्ट्रस्य पाद इव पादो मूलमस्याः कपि अत इत्त्वम्। (मदनमाली) भूमिजतायाम् रत्नमा०

उष्ट्रस्थान न० ६ त०। उष्ट्रस्य शालायाम्। तत्र भवः अण्। स्थानान्तत्वात् तस्य लुक्। उष्ट्रस्थान तत्रभवे त्रि० तद्धित लक्षि विशेष्यलिङ्गत्वनियमात् त्रिलिङ्गत्वम्।

उष्ट्रासिका स्त्री आसनम् आसिका आस–भावे ण्वुच् उष्ट्र- स्येवासिका। उष्ट्रस्येव आसने। "उष्ट्रासिका आस्यन्ते" पा० भाष्यम् अत्र क्रियाविशेषणस्यापि यथा सङ्ख्यवचना- न्तताऽक्लीवता च तथाकारे समर्थितम् तच्च शब्दार्थरत्ने अस्माभिर्दर्शितम्।

उष्ट्रिका स्त्री उष्ट्रस्याकार पृष्ठावयव इव आकारोऽस्त्यस्या ठन्। मृण्मये मद्यभाण्डभेदे शिशु० "घूर्णद्भिर्विक्षेपविटारि तोष्ट्रिका" माघ। उष्ट्री+स्वार्थे कन्। उष्ट्रजातिस्त्रियाञ्च।

उष्ण पु० उष+नक्। १ग्रीष्मे, ऋतौ, २आतपे, ३पलाण्डौ ४नरकभेदे, ५शीतविरोधिस्पर्शे च। अर्श० अच। ६तद्वति, ७आलस्यरहिते दक्षे च त्रि०। "सूतके मृतके चैव न स्नायादुष्णवारिणा" स्मृति "आददे नातिशीतोष्णः नभ स्वानिव दक्षिणः" रघु "अभीष्टमुष्णैरपि तस्य सोऽभवत्" "स्नापयन्नभिमानोष्णैर्वनमाला सुखानिलैः" माघ, ८तापे पु० "मुष्णान्तमुष्णं ततिभिस्तरूणाम्" माघ "उष्णं तापम्" मल्लि०। तत्र ग्रीष्मस्य सूर्यतापाधिक्यवत्त्वात् उष्णत्वम् "ग्रीष्मातीव्रकरोभानुर्न हेमन्ते तथाविधः" इति मयप्रश्ने 'कथा सन्नतया तेन ग्रीष्मे तीव्राः करा रवेः। देवभागे- ऽसुराणान्तु हेमन्ते मन्दताऽन्यथा" सू० सि० तथैवोक्तेः। विवृतञ्चेदं रङ्गनाथेन "तेन उत्तरदक्षिणगोलयोः सूर्य- स्योत्तरदक्षिणसञ्चारस्वरूपकारणेनेत्यर्थः। देवभागे जम्बूद्वीपे अत्यासन्नतया सूर्यस्यात्यन्तनिकटस्थत्वेन ग्रीष्मे ग्रीष्मर्त्तौ सूर्यस्य तेजोगोलकस्य किरणास्तीक्ष्णा अत्युष्णाः। असु राणां देवभाग इत्यस्य सम्बन्धाद्दैत्यानां भागे समुद्रादृ- क्षिणप्रदेशे हेमन्ते हेमन्तर्त्तौ तुकारात् सूर्यस्यात्युष्णा किरणाः सूर्यस्यात्यासन्नत्वात्। अन्यथा सूर्यस्य दूर- स्थत्वे मन्दता किरणानामुष्णताभावः। देवभागे हेमन्तर्त्तौ कराणां मन्दता। अतएव तत्र शीताधिक्यम्, दैत्यभागे ग्रीष्मे कराणां मन्दता शीताधिक्यं च। तथाच देव- भागे दक्षिणगोले सूर्यस्य दूरस्थत्वमुत्तरगोले निकट- स्थत्व मध्यगतदेशानां क्रमेणाधिकाल्पत्वादीति भावः"। अतएवोक्तं "मिथुनकर्कटयोर्मध्ये गाढं तपति भास्करः" ति० त० पु०। एतच्च देवभाग एव भारतभागे, ग्रीष्म

ऋतुश्च ज्यैष्ठाषाढात्मकः। "मधुश्च माधवश्च वासन्तिकावृतू शुक्रश्च शुचिश्च ग्रैष्मावृतू" काश० मा० इष्टकोपधानमन्त्रोक्तेः। ततो भावे इमनिच। उष्णिमन् पु० तल् उष्णता स्त्री त्व उष्णत्व न० ष्यञ् औष्ण्य न०। उष्णस्पर्शे स्वार्थे कन् उष्णस्पर्शोऽप्यर्थे। उष्णस्पर्शस्तु तेजसोगुणः "स्पर्श उष्ण स्तेजसस्तु" भाषोक्तेः। जलादीनां तेजःसंयोगविशेषादौ- पाधिकः। देहस्य तथात्वे कारणभूतानुगच्छे बध्यते गुणव- चनत्वात् प्रकारे द्वित्वम् उष्णोष्ण उष्णप्रकारे। "उष्णो- ष्णशीकरस्तृज" माघ

उष्णक त्रि० उष्णमिव करोति कन्। १अनलसे, क्षिप्रकारिणि क्षिप्रकारी हि जाड्याधायकमालस्यमनादृत्य स्वकर्त्तव्ये व्याप्रियते इति तस्य तथात्वम्। उष्णं करोति उष्ण+ णिच्–ण्वुल्। २ज्वरे पु०।

उष्णकर पु० उष्णः करः किरणोऽस्य। १सूर्ये। उष्ण- किरणोष्णदीधिति प्रभृतयोऽप्यत्र। उष्णं करोति कृ–अच् ६त०। २उष्णकारके त्रि०

उष्णकाल पु० कर्म० ६त० वा। ग्रीष्मे ऋतौ। "तक्रं नैव दद्यात् नोष्णकाले न दुर्बले" सुश्रुत।

उष्णग पु० उष्णमुष्णस्पर्शं गच्छति यत्र गम–बा० आधारे ड। ग्रीष्मे काले "मातङ्गोन्यपतत् भूमौ नदीरोध इवोष्णगे" भा० उ० २२३श्लो०। आधारे घञ् उष्णगमोऽप्यत्र हेम०।

उष्णगु पु० उष्णागावः करा अस्य ह्रस्व। सूर्ये। उष्णर- श्म्यादयोऽप्यत्र "कुबेरगुप्तां दिशमुष्णरश्मौ" कुमा०।

उष्णाङ्करण न० ६त० करणे परे मुम्। उष्णसाधने।

उष्णनदी स्त्री कर्म०। "यमद्वारे महाघोरे तप्ता वैतरणी नदी" इत्युक्तायाम् तप्तायां वैतरण्याम् नद्याम्।

उष्णवारण न० उष्णं वारयति वृ–णिच्–ल्यु ६त०। आतपत्रे, छत्रे "यदर्थमम्भोजमिवोष्णवारणम्" कुमा० अस्योत्पत्त्या- दिकम् आतपत्रशब्दे ६४६ पृ० उक्तम्। तल्लक्षणं वृह० स० दर्शितं यथा "निचितं तु हंसपक्षैः कृकवाकु- मयूरसारसानां च। दौकूलेन नवेन तु समन्ततश्छादितं शुक्लम्। मुक्ताफलैरुपचितप्रलम्बमालाविलं स्फटिकमू लम्। षड्हस्तशुद्धहैमं नवपर्वनगैकदण्डं च। दण्डार्धं विस्तृतं तत् समावृतं रत्नविभूषितशुदयम्। नृपतेस्तदात पत्रं कल्याणकरं विजयदं च। युवराजनृपतिपत्न्याः सेनापतिदण्डनायकानां च। दण्डोऽर्धपञ्चहस्तः समपञ्च- कलार्धविस्तारः। अन्येषामुष्णघ्नं प्रसादपट्टैर्विभूषितशिर- स्कम्। व्याप्तविरत्नमालं कार्यं च मायूरम्।

अयेषा च नराणामातपवारण इव चतुरस्रम्। समष्टसदण्डयुक्तं छत्रं कार्य्यं तु विप्राणाम्" उष्णप्रादयोऽप्यत्र। तद्धारणे गुणाः सुश्रुते उक्ता यथा "वर्षानिलरजोघर्म्महिमादीनां निवारणम्। मल्यं चक्षुष्यमोजस्यं शङ्कर छत्रधारणम्"।

**उष्णवीर्य्य** पु० उष्णमुष्णं वीर्य्यमस्य। १शिशुमाराख्ये जलजन्तौ। २उष्णवीर्य्यवति त्रि० हेम०। उष्णवीर्य्यद्रव्याणि च सुश्रुते नानास्थाने उक्तानि तानि तत एवावगन्तव्यानि

**उष्णांशु** पु० उष्णा अंशवोयस्य। सूर्य्ये।

**उष्णागम** पु० उष्णम् आगम्यतेऽत्र गम+आधारे–अप्। निदाघकाले। उष्णाभिगमोऽप्यत्र शब्दच०।

**उष्णालु** त्रि० उष्णं न सहते आलु। उष्णाऽसहने। "उष्णालुः शिशिरे निषीदति तरोर्मूलालवाले शिखी" विक्रमो०।

**उष्णासह** पु० उष्णम् आसह्यतेऽत्र आ+सह–अच्। १हेमन्तर्त्तौ। उष्णं न सहते अच्। २असह्योष्णे त्रि०।

**उष्णिका** स्त्री अल्पमन्नमस्याम् अल्पार्थे कन् नि० अन्नस्य उष्णादेश। १यवागाम् (याउ)। उष्णकशब्दात् स्त्रियां टाप् अत इत्त्वम्। २दुःखायाम् स्त्रियाम्।

**उष्णिज** पु० उष–इजिक् वा० तुट्। उष्णस्पर्शयुक्ते तत प्रज्ञा० स्वार्थे अण्। औष्णिज तदर्थे।

**उष्णिह्** स्त्री उत्+स्निह्यति क्विन् नि० उदोऽन्त्यलोपे षत्वम्। सप्ताक्षरपादके १छन्दोभेदे। खादौ कु उष्णिक्। उष्णिग्भ्याम्। "गायत्र्युष्णिगनुष्टुप् च वृहती पङ्क्तिरेव च" इ० र०। "अथ छन्दांसि गायत्र्युष्णिगनुष्टुब् वृहती" इत्युपक्रम्य "द्वितीयस्तूष्णिक् त्रिपदान्त्योद्वादशक। आद्यश्चेत् पुरउष्णिक्, मध्यमश्चेत् ककुप्। त्रैष्टुभ जागतचतुष्का ककुबन्युष्णिरैकादशिनौ; परः षट्कस्त्रनुशिराः मध्ये चेत् पिपीलिका मध्याद्यमन्त्यकस्त्रयोऽष्टका अनुष्टुब्गर्भा अत सप्तकोष्णिगेव" सर्वानु० ५अ०। "एतमेवोष्णिह सवितारं धीवासनूके" इति सर्वानु० ४अ० उक्तेः तस्याः सवितृदेवताकत्वेन धीवासु अनूके च न्यास। तस्या उपधानप्रकार शत० ब्रा० ८,६,२,४, आदौ दर्शित तत एवावसेय। २तदभिमानिदेवभेदे च। अश्वमेधे "त्रिवत्सा अनुष्टुभे तुर्य्यवाह उष्णिहे" यजु० २५,१२१। पशुविशेषाणामुक्तदेवताविशेषोद्देशेन यूपादौ बन्धनमुक्तम्। अस्य हलन्तत्वेऽपि अजादि० टाप्। उष्णिहा "उष्णिहा छन्द इन्द्रियम्" यजु० २१,१२, "वृहत्युष्णिहा ककुप् सूचीभि मन्युत्वा २३,३३, "ग्रथ्नातु मोवाः म ष्ट्वा

मूष्णिहा इतस्येव शचीपति" अथर्ववेदे ६,१२४,१,

**उष्णीगङ्ग** न० उष्णीभूता गङ्गा नदीभेदो यत्र मध्यपदलोप। भृगुतुङ्गपर्वतस्थे तीर्थभेदे "अपां ह्रदं च पुण्याख्यं भृगुतुङ्गं च पर्वतम्। उष्णीगङ्गं च कौन्तेय! सामात्य समुपस्पृश" भा० व० १३५ अ०।

**उष्णीष** पु० न० उष्णमीषते हिनस्ति ईष–क शक० पररूपम्। १शिरोवेष्टनवस्त्रे(पागड़ि) २किरीटे च "अथास्मा अध्वर्युरुष्णीषं प्रयच्छति तदञ्जलिना प्रतिगृह्य त्रि प्रदक्षिणं शिरः सम्मुख वेष्टयित्वा" आ० श्रौ० सू० ६,७। "सन्नद्धा लोहितोष्णीषा निस्त्रिंशिनो याजयेयुः" आ० श्रौ० ६, ७,४। "लोहितोष्णीषा ऋत्विजश्चरन्तीति" श्रुतिः। समावर्त्तनकाले च तस्य धारणमाचार्य्याय दानं च विहितम्। "अथैतान्युपकल्पयीत समावर्त्तमाने मणिकुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुत्सादनमनुलेपनमाञ्जनमुष्णीषमित्यात्मने आचार्य्याय च"। "यद्युभयोर्न विन्देताचार्य्यायैव" आ० गृ० ३,८,१,२। तद्धारणगुण सुश्रु० उक्त "पवित्रं केश्यमुष्णीषं वातातपरजोऽपहम्। वर्षानिलरजोघर्म्महिमादीनां निवारणम्"।

**उष्णीषिन्** त्रि० उष्णीष+अस्त्यर्थे इनि। १उष्णीषधारिणि स्त्रियां ङीप्। २महादेवे पु०। "उष्णीषी च सुवक्त्रश्च उदग्रोविनतस्तथा" शिवस्तुतौ" भा० अनु० १७। "उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे" भा० अनु० ८।

**उष्णोदक** न० कर्म०। अग्निना तप्तजले काथ्यमानपादशेषार्द्धावशेषपादादिहीनके जले तद्गुणादि भावप्र० "अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा। अथवा क्वथनेनैव सिद्धमुष्णोदकं वदेत्"। तद्गुणा "श्लेष्मामवातमेदोघ्नं वस्तिशोधनदीपनम्। कासश्वासज्वरान् हन्ति पीतमुष्णोदकं निशि। काथ्यमानन्तु निर्वेगं निष्फेनं निर्मलन्तथा। अर्द्धावशिष्टं यत्तोयं तदुष्णोदकमुच्यते। ज्वरकासकफश्वासवातपित्तामसेदसाम्। नाशनं वस्तिशोधि पथ्यमुष्णोदकं सदा। त्रिपादशेषं सलिलं ग्रीष्मे शरदि शस्यते। हिमेऽर्द्धशेषं शिशिरे तथा वर्षावसन्तयोः" अन्ये तु "निदाघे स्वर्द्धपादोनं पादहीनन्तु शारदम्। शिशिरे च वसन्ते च हिमे चार्द्धावशेषितम्। अष्टमांशावशेषन्तु वारि वर्षासु शस्यते" केचित्तु "शिशिरवसन्तेषु शरदेव भेदेषु त्रिषु पक्षयोः। एकभागावशेषं स्यादम्बु वर्षादिषु क्रमात्"। अत्र दोषाणां यथोल्बणता हीनता वा तथा व्यवस्था कल्पनीया। "तत् पादहीनं पित्तघ्न-

# ऊ

ऊकार स्वरवर्णभेदः "ओष्ठजावुपू" इत्युक्तेः ओष्ठस्थानोच्चारणीयः स च उदात्तानुदात्तस्वरितभेदात् त्रिविधः दीर्घएव द्वाभ्यां मात्राकालाभ्यामुच्चार्यत्वात् तस्य प्लुतत्वोक्तिश्चिन्त्या त्रिमात्रकालस्यैव प्लुतत्वात् व्यञ्जकाकारभेदाच्च प्लुतस्य पार्श्वस्थत्र्यङ्कचिह्नितह्रस्वाकारेणैव लेखनसमाचारात्। त्रिविधोऽपि अनुनासिकाननुनासिकभेदात् द्विधा तेन षड्विधः तस्योच्चारणे विवार आन्तरप्रयत्नः "स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्" शिक्षोक्तेः विवृतञ्च जिह्वाग्रादेः स्पर्शाभावः। "अचोऽस्पृष्टायणस्त्वीषत्, नेमस्पृष्टाः शलः स्मृताः" इति शिक्षोक्तेः तस्य तन्त्रे शुक्लाद्याकारतया ध्येयतोक्ता यथा "शुक्लकुन्दसमाकारं ऊकारं परकुण्डली" कामधेनुतन्त्रम्। तस्य वामकर्णे सविन्दुकतया निर्विन्दुकतया वा मातृकान्यासे न्यासः। अतएव वामकर्णशब्देन तस्याभिधेयता "ईशानः सेन्दुवामश्रवणपरिगतो बीजमन्यन्महेशि।" कर्पूरस्तवे हूङ्कारमन्त्रोद्धारः। तत स्वरूपे कारप्रत्ययः। तप्रत्ययश्च। अधिकस्वरवर्णसमाप्तौ वक्ष्यते।

ऊ अव्य० वेञ् क्विप्। १सम्बोधने, २वाक्यारम्भे, ३दयायां, ४रक्षायाञ्च मेदि० उञ स्थाने इतौ परे अनुनासिक ऊँ इति आदेशे तदर्थे तस्य प्रगृह्यत्वादितौ न सन्धिः।

ऊ पु० अवतीति अव–क्विप् ऊठ्। १महादेवे २चन्द्रे च। ३पालके त्रि० शब्दरत्ना०

ऊढ़ पु० वह–प्रापणे ज्ञानार्थत्वात् १कर्त्तरि क्त। १कृतविवाहे पुंसि "परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात्" अमरः ज्ञातवत् ऊढवत् तत्रैव पु०। कर्मणि क्त। कृतविवाहायां स्त्रियाम् स्त्री। 'भार्यौढं तमवज्ञाय तस्थे सौमित्रयेऽसकौ' भट्टि "कन्या पितुर्धर्महरी यद्यनूढा भवेत्तदा" स्मृतिः "ऊढानूढासमवायेऽनूढैव प्रथमं धनहारिणी" दायक्र०। ऊढमाख्यत् इति वाक्ये औजढत् त सि०कौ०औजिढत् त इत्यन्ये। २कृतवहने धृते त्रि०। अस्य प्रपूर्वत्वे प्रा० स०वृद्धिः। प्रौढः "प्रौढकन्यायादोषदर्शनात्" रघु० "अवग्रहणे नार्थकस्येति" परिभाषया प्रौढवानित्यत्र न वृद्धिः

ऊढकङ्कट पु० ऊढो धृतः कङ्कटः कवचो येन। धृतकवचे वर्म्मिते।

ऊढि स्त्री वह–भावे क्तिन् सम्प्र०। १वहने २विवाहे च। प्र+ऊढि प्रा० स० वृद्धिः। प्रौढि। ऊढिमाख्यत् औजिढत् त सि०कौ० औजिढत् त इत्यन्ये।

ऊत त्रि० वेञ्–क्त सम्प्र० दीर्घ। १कृतवयने २ग्रथिते। ऊयी–तन्तुसन्ताने क्त। ३स्यूते "यस्मिन्नोतञ्च प्रोतञ्च" श्रुतिः। अव–क्त ऊठ्। ४रक्षिते त्रि०।

ऊति स्त्री अव–क्तिन् ऊठ्। १रक्षणे। 'देवस्य यन्त्यूतयो विविधा' ऋ० २,१४,६, "शतमस्माम् सहस्रमूतय." ४,३१,१०, कर्त्तरि क्तिच् ऊठ्। २रक्षितरि "उरुष्यन्तमूमाध्वोदस्मा न ऊती" ऋ० ४४,२, "ऊती ऊतय रक्षन्त" भा० ऊय–वेञ् वा क्तिन्। ३सीवने (सेलाइ) ४वयने ( वोना ) ५क्षरणे शब्दचि०। ६लीलायाम् "नचास्य कश्चिन्निपुणेन धातुरवैति जन्तुः कुमनीष ऊतीः" भा० १,५,३८, "ऊतीर्लीलाः" श्रीधरः वेञ्–कर्मणि कर्त्तरि वा क्तिन् क्तिच् वा। पुराणलक्षणमध्ये ७कर्म्मवासनारूपे तल्लक्षणभेदे। "तस्मादिदं भागवतं पुराणं दशलक्षणम्" इत्युक्त्वा "अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः। मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः" इति दश लक्षणान्युद्दिश्य तेषां लक्षणान्युक्तानि यथा "भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः। ब्रह्मणो गुणवैषम्यात् विसर्गः पौरुषः स्मृतः। स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः। मन्वन्तराणि सद्धर्म्म ऊतयः कर्म्मवासनाः। अवतारानुचरितं हरेश्चास्यानुवर्त्तिनाम्। पुंसामीशकथाः प्रोक्ता नानाख्यानोपबृंहिताः। निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः। मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः। आभासश्च निरोधश्च यतोऽस्त्यध्यवसीयते। स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते" भाग० २,१०,२,८ "कर्म्मणां वासनाः ऊयन्ते कर्मभिः सन्तन्यन्ते इत्यूतयः यद्वा वञ्धातुर्नात् संज्ञेयाप्याह्रा वयतेर्धातोरिदं रूपम्। ऊयन्ते कर्मभिर्बध्यन्ते सञ्चिन्वन्ते वा ऊतयः" श्रीधरः

ऊधन् न० ऊधस्+पृषो० सस्य नः। स्त्रीपशोः दुग्धाधारस्थाने (मेङ्) "वत्सो न मातुरुप सर्ज्यूधनि" ऋ० ९,६९,१। "यदा पीतासो अंशवो गावो न दुह्र ऊधभिः" ८,९,१९। "प्र धेनवः सिस्रते दुग्ध ऊधः" ऋ० ४,२२,६।

ऊधर न० ऊधस्+पृ० सस्य रः। स्त्रीगव्यादेः ऊधसि (मेङ) "ऊधर्लग्ना जरन्ते" ऋ० ८,२,१२।

ऊधस् न० उन्द–क्लेदने असुन् किच्च दीर्घ। स्त्रीगव्यादेः दुग्धाधारे स्थाने (मेङ) 'गवामूधश्च, वक्षणाः' ऋ० १०,४९,१०।

ऊर्व्यादि॰ ऊर्जि गतिसमासादि करोतिवत् द्रष्टव्यम्।

**ऊरु** पु॰ ऊर्णूयते आच्छाद्यते ऊर्णु-कर्मणि कु नुलोपश्च। जानूपरिभागे तस्य वस्त्रादिभिराच्छादनीयत्वात् तथात्वम्। "नितान्तनारीपरिधानधूननस्फुटागसाप्यूरुषु लोलचक्षुषः" "करभकरोरुभिरूरुभिर्दधाने" माघ। "कदली कदली, करभः करभः करिराजकरः करिराजकरः। भुवनत्रितये न बिभर्त्ति तुलामिदमूरुयुगं न चमूरुदृशः" प्रसन्नरा॰। "धात्रीकराभ्यां करभोपमोरुः" "भुजमूर्द्धोरुबाहुल्यादेकोऽपि धनदानुजः" रघु अस्य उपमानपूर्व्वकत्वे उत्तरपदस्थस्य बहु॰स॰ स्त्रियाम् ऊङ्। करभोरू "करभोरु! रतिमाद्ये द्वितीये पञ्चमेऽप्यहम्" विद्यासुन्द॰ संहितशफलक्षणवामपूर्वकस्यापि ऊङ्। संहितोरू सम्यग्हितोरुका इत्यर्थे शफाविव संश्लिष्टौ ऊरू यस्याः शफोरूः। लक्षणयुक्तावूरू यस्याः लक्षणोरू। वामौ मनोहरौ ऊरू यस्याः वामोरूः "त्रस्यन्ती चलशफरीविघट्टितोरूर्वामोरूरतिशयमाप विभ्रमस्य" किरा॰। सहितसहपूर्व्वकस्यापि तादृशस्य ऊङ्। सहितौ हितयुतौ ऊरू यस्याः सहितोरू। भारं सहेते सहावूरू यस्याः सहोरू। ऊरौ भवः शरीरावयवत्वात् यत्। ऊरव्य ऊरुभवे वैश्ये पुंस्त्री तद्भवमात्रे त्रि॰। स्वाङ्गतयाऽस्मात् निषान्तात् बहु॰स॰ स्त्रियां ङीष्। ऊरुभिन्नी।

**ऊरुग्राह** पु॰ ऊरू गृह्णाति स्तभ्नाति ग्रह-अण् उप॰स॰। ऊरुस्तम्भरोगे ऊरुस्तम्भशब्दे विवृतिः। "ऊरुग्राहगृहीताश्च केचित्तत्राभवन् भुवि" भा॰द्रो॰१४६ अ॰।

**ऊरुज** पुंस्त्री ऊरोर्जायते जन-ड। वैश्ये स्त्रियां जातित्वात् ङीप्। २ऊरुजातमात्रे त्रि॰ ऊरुजातोरुजन्मादयोऽप्यत्र। ३भृगुवंश्ये और्वे ऋषिभेदे पु॰ तस्य ऊरुतो जन्मकथा भा॰ आ॰१७८,७९ अ॰ "कृतवीर्य्य इति ख्यातो बभूव पृथिवीपतिः। याज्यो वेदविदां लोके भृगूणां पार्थिवर्षभ। स तानग्रभुजस्तात! धान्येन च धनेन च। सोमान्ते तर्पयामास विपुलेन विशाम्पते!। तस्मिन्नृपतिशार्दूले स्वर्यातेऽथ कथञ्चन। बभूव तत्कुलेयानां द्रव्यकार्य्यमुपस्थितम्। भृगूणान्तु धनं ज्ञात्वा राजानः सर्व्व एव ते। याचिष्णवोऽभिजग्मुस्तांस्ततो भार्गवसत्तमान्। भूमौ तु निदधुः केचित् भृगवो धनमक्षयम्। ददुः केचिद्द्विजातिभ्यो ज्ञात्वा क्षत्रियतो भयम्। भृगवस्तु ददुः केचित्तेषां वित्तं यथेप्सितम्। क्षत्रियाणां तदा तात! कारणान्तरदर्शनात्। ततो महीतलं तात! क्षत्रियेण यदृच्छया। खनताधिगतं वित्तं केनचिद्भृगुवेश्मनि। तद्वित्तं ददृशुः सर्व्वे समेताः क्षत्रियर्षभाः। अवमन्य ततः क्रोधाद्भृगूंस्तांश्छरणागतान्। निजघ्नुः परमेष्वासाः सर्वांस्तान्निशितैः शरैः। आगर्भादवकृन्तन्तश्चेरुः सर्वां वसुन्धराम्। तत उच्छिद्यमानेषु भृगुष्वेवं भयात्तदा। भृगुपत्न्यो गिरिं दुर्गं हिमवन्तं प्रपेदिरे। तासामन्यतमा गर्भं भयाद्दधे महौजसम्। ऊरुणैकेन वामोरुर्भर्त्तुः कुलविवृद्धये। तद्गर्भमुपलभ्याशु ब्राह्मण्यास्तु भयार्दिता। गत्वैका कथयामास क्षत्रियाणामुपह्वरे। ततस्ते क्षत्रिया जग्मुस्तं गर्भं हन्तुमुद्यताः। ददृशुर्ब्राह्मणीं तेऽथ दीप्यमानां स्वतेजसा। अथ गर्भः स भित्त्वोरुं ब्राह्मण्या निर्जगाम ह। मुष्णन् दृष्टीः क्षत्रियाणां मध्याह्न इव भास्करः। ततश्चक्षुर्विहीनास्ते गिरिदुर्गेषु बभ्रमुः। ततस्ते मोहमापन्ना राजानो नष्टदृष्टयः। ब्राह्मणीं शरणं जग्मुर्दृष्ट्यर्थं तामनिन्दिताम्। ऊचुश्चैनां महाभागां क्षत्रियास्ते विचेतसः। ज्योतिःप्रहीणा दुःखार्त्ताः शान्तार्च्चिष इवाग्नयः। भगवत्याः प्रसादेन गच्छेत् क्षत्रं सचक्षुषम्। उपरम्य च गच्छेम सहिताः पापकर्म्मिणः। सपुत्त्रा त्वं प्रसादं नः कर्त्तुमर्हसि शोभने!। पुनर्दृष्टिप्रदानेन राज्ञः सन्त्रातुमर्हसि। ब्राह्मण्युवाच। नाहं गृह्णामि वस्ताताः! दृष्टीर्नास्मि रुषान्विता। अयन्तु भार्गवो नूनमूरुजः कुपितोऽद्य वः। तेन चक्षूंषि वस्ताताः! व्यक्तं कोपान्महात्मना। स्मरता निहतान् बन्धूनादत्तानि न संशयः। गर्भानपि यदा यूयं भृगूणां घ्नत पुत्त्रकाः!। तदायमूरुणा गर्भो मया वर्षशतं धृतः। षडङ्गश्चाखिलो वेद इमं गर्भस्थमेव ह। विवेश भृगुवंशस्य भूयः प्रियचिकीर्षया। सोऽयं पितृवधाद्व्यक्तं क्रोधाद्वो हन्तुमिच्छति। तेजसा तस्य दिव्येन चक्षूंषि मुषितानि वः। तमिमं ताताः! याचध्वमौर्वं मम सुतोत्तमम्। अयं वः प्रणिपातेन तुष्टो दृष्टीः प्रमोक्ष्यति। वसिष्ठ उवाच। एवमुक्तास्ततः सर्व्वे राजानस्ते तमूरुजम्। ऊचुः प्रसीदेति तदा प्रसादञ्च चकार सः। अनेनैव च विख्यातो नाम्ना लोकेषु सत्तम!। स और्व इति विप्रर्षिरूरुं भित्त्वा व्यजायत। चक्षूंषि प्रतिलब्ध्वा च प्रतिजग्मुस्ततो नृपाः"।

**ऊरुदघ्न** त्रि॰ ऊरु+"प्रथमश्च द्वितीयश्च ऊर्द्ध्वमाने मतौ मम" वार्त्तिकोक्तेः ऊर्द्ध्वमाने दघ्नच्। ऊरुपर्य्यन्तोर्द्ध्वमानान्विते खातादौ। "यावादुदकाच्छःपुरुषस्तावद् खनितस्य

पुंयात् पञ्चदघ्नं ब्राह्मणस्योपस्थदघ्नं स्त्रिया ऊरुदघ्नं वैश्यस्याष्ठीवद्दघ्नं शूद्रस्यैवं वीर्य्याणि ह्येते" शत० ब्रा० १२,८,२,११। 'ऊरुदघ्नो द्वितीयो जानुदघ्नस्तृतीय' १२,२,१,२। प्रमाणार्थे द्वयसच् तत्परिमाणे उभयत्र स्त्रियां ङीप्।

ऊरुपर्व्वन् पु० ऊर्वोः पर्व्व। जानुनि (हाटु)।

ऊररी अव्य० ऊय-ररीक्। १अङ्गीकारे २विस्तारे च ऊर्यादि० गतित्वात् कृञि स०। ऊररीकृत्य। घञ्। ऊररीकार अङ्गीकारे विस्तारे च पु०। क्त। ऊररीकृत अङ्गीकृते विस्तीर्णे च त्रि०।

ऊरुस्तम्भ पु० ऊरू स्तम्भाति स्तन्भ–अण् उप० स०। रोगभेदे स च रोगः भावप्र० सनिदानपूर्व्वरूपादिर्दर्शितः यथा "शीतोष्णद्रवशुष्कगुरुस्निग्धैर्निषेवितैः। जीर्णाजीर्णे तथायासक्षोभस्वप्नप्रजागरैः। सश्लेष्ममेदः पवनमाममत्यर्थसञ्चितम्। अभिभूयेतरं दोषमूरू चेत् प्रतिपद्यते। सक्थ्यस्थिनी प्रपूर्य्यान्तः श्लेष्मणा स्तिमितेन च। तदा स्कभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ। परकीयाविव गुरू स्याता मतिशयव्यथौ। ध्यानाङ्गमर्दस्तैमित्यतन्द्राच्छर्द्द्यरुचिज्वरैः। संयुतौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः। तमूरुस्तम्भमित्याहुराढ्यवातमथापरे" "प्राग्रूपं तस्य निद्रातिध्यानं स्तिमितता ज्वरः। रोमहर्षोऽरुचिश्छर्द्दिर्जङ्घोर्व्वोः सदनं तथा। वातशङ्किभिरस्मिंस्तत्र स्यात् स्नेहनात् पुनः। पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा। जङ्घोरुग्लानिरत्यर्थं शश्वद्दाहश्च वेदना। पदं च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च। संस्थाने पीडने गत्यां चालने चाप्यनीश्वरः। अन्यनेयौ हि सम्भग्नावूरू पादौ च मन्यते। यदा दाहार्त्तितोदार्त्तो वेपनः पुरुषो भवेत्। ऊरुस्तम्भस्तदा हन्यात् साधयेदन्यथा नवम्" अन्यथा दाहाद्युपद्रवरहितं तमपि नवमुत्पन्नमात्रं साधयेत्। सात्त्विकभावेन २ऊर्व्वोः स्तम्भे च। "करिणीयोरुस्तम्भविष्टता" काद०।

ऊर्ज्ज बलाधाने जीवने च अद० चुरा० पक्षे भ्वा० अक० सत्करणे सक० सेट्। ऊर्ज्जयत्। "नाभयो वाजिनमूर्ज्जयन्ति" ऋ० ९,८६,४, "यो देवमात्मानमपि स प्राणिति तमूर्ज्जयति" शत० ब्रा० ७,५,१,१८, "तां वो देवाः सुमतिमूर्ज्जयन्तीमिषमश्याम" ऋ० ५,४१,१८।

ऊर्ज्ज् स्त्री ऊर्ज्ज–भावे क्विप्। १बले। करणे क्विप्। २अन्ने न०। ३अन्नतरसाभिधेयेऽन्नस्य अत्यन्तसारभूते रसभेदे स्त्री "विश्वे देवा वामूर्ज्जं मदन्ति" ऋ० ७,४९,४. "यास्त ऊर्ज्जस्तन्वः सम्बभूवुः" अथ० १२,१,१२, इह पृथिव्याः सम्बोधनेन तस्याः विकाराद्यन्नस्याग्रसमूर्ज्जत्वम्। "स ऊर्ज्जमुपजीवतीति" छा० उ० 'ऊर्ज्जं ह्यच्छिति' सूक्तम्" हरि० २,२०, "उर्गस्याङ्गिरस्यूर्णम्रदा ऊर्ज्जं मयि धेहि" यजु० ४,१०, "ऊर्क् अन्नरसरूपा" वेददी० ऊर्ज्जं बलं धेहि इत्यर्थः "अन्नमूर्ज्जं बलं तु साम्" इत्युक्तेः अन्नरसस्य बलाधायकत्वम्। "तम समूहालकतिमध्यपेयादूर्जं जयन्त प्रथितप्रकाशान्" भट्टि ऊर्ज्जा बलेन 'बलमूर्ज्जं च यच्छति' मनुः अत्र बलौजोभिः रौद्धिक्रमान्सुखाभ्यां शारीरिकबलमूर्क् इति बोध्यम्। ४जले स्त्री। "ऊर्ज्जो नपातं स हिनायमस्मयु" यजु० २७,४४, ऊर्क् शब्देनाप उच्यन्ते अद्भ्यो वृक्षा जायन्ते ततोऽग्निरित्यग्नेरप्पौत्रत्वम्। वेददी०। "ऊर्ज्जांपते पाहि" यजु० २७,४२।

ऊर्ज्ज पु० ऊर्ज्जति रसादिकं सोमोऽत्राधारे अच्। १कार्त्तिके मासि तस्य शरदृतोरुत्तरावयवत्वात् तत्र सोमेन रसवीर्य्याधिक्यवर्द्धनेन तथात्वम्। "इषोर्ज्जौ शरत्" इत्युपक्रम्य अयने विभज्य च "तयोर्दक्षिणं वर्षाशरद्धेमन्ताःतेषु भगवानाप्यायते सोमोऽम्ललवणमधुररसा बलवन्तो भवन्त्युत्तरोत्तरं च सर्व्वप्राणिनां बलमभिवर्द्धते" सुश्रुते शरदृतोरन्तिमस्य कार्त्तिकस्य उत्तरोत्तरबलाधिक्याभिधानेनास्य तथात्वम्। करणे अच् घञ् वा सेट्कत्वान्न कुत्वम्। २उत्साहे। भावे अच् घञ् वा। ३बले ४जीवने च। करणे अच् घञ् वा। ५जले न० "ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालम्" यजु० २,३४। जलस्यौजाधायकत्वात् अन्नस्य जलाधीनतयैव बलहेतुत्वात् तथात्वम् "ऊर्ज्जसन। ऊर्ज्जं धाः" ऋ० ६,४,४, 'ऊर्ज्जस्य सने। अन्नस्य दाने।" भा० "ऊर्ज्जाद उत यज्ञियासः" ऋ० १०,५३,४। ऊर्ज्जादः अन्नादाः भा० "अत्र ऊर्ज्जशब्दः अन्नगतं रसमभिधत्ते तेन तदाधायकत्वात् तथात्वम्। "तदक्षिसर्पणादेव उभेतोर्ज्जमयम्" सुश्रु० कर्त्तरि अच्। ६बलान्विते त्रि० "ततजगत्त्रयभूर्ज्जमतप्तजम्" माघ।

ऊर्ज्जयोनि पु० महर्षिभेदे "ऊर्ज्जयोनिरुदामेधो नारदोऽपि महातपाः" भा० अनु० ४अ०।

ऊर्ज्जव्य पु० राजभेदे "शिक्षेतु न ऊर्ज्जव्यस्य पुष्टेः" ऋ० ५,४१,२०, ऊर्ज्जव्यस्य एतन्नामकस्य राज्ञः" भा०।

ऊर्ज्जस् न० ऊर्ज्ज–असुन्। १उत्साहातिशयाधायके बले २अन्नरसभेदे च। ततोऽस्त्यर्थे विनि ऊर्ज्जस्विन्, मतुप् ऊ-

ऊर्ज्ज्वल, मतुप् मस्य वः। ऊर्ज्जस्वत्। तद्वति त्रि० तत्र विन्यन्तस्य मतुबन्तस्य च स्त्रियां ङीप्। "ऊर्ज्जस्वन्तं हविषोदत्त भागम्" ऋ०१०,५१,८, "ऊर्ज्जस्वती चासि पयस्वती च" यजु०१,२७, "ऊर्ज्जस्वन्तं मन्यमानम् आत्मानं भगवानज" भाग०३,२०,४२, "ऊर्ज्जस्वल हविर्हरस्य मेतत्" भट्टिः "भोङ्कारमूर्ज्जस्वलमात्मदेहम्" रघु "ऊर्ज्ज-स्विन्य ऊर्ज्जमेधाय यज्ञे" भा० अनु०७६ अ०। "अन्नमूर्ज्जस्कर लोके दत्त्वोर्ज्जस्वी भवेन्नर" भा०अनु० ११२अ०। ऊर्ज्जं करोति। ऊर्ज्जस्+कृ—अच् कृत०। बाधमानरथाधायके त्रि०। "ऊर्ज्जस्करान् हव्य वाहान्" भा०व०२२२अ०।

**ऊर्ज्जा** स्त्री भ्वा०ऊर्ज्ज—भावे अ। १बले २उत्साहे ३अन्नरस-विकारे ४वृद्धौ च। ५ऊर्ज्जास्त्यस्य मतुप् मस्य व। ऊर्ज्जावत् बलान्विते वृद्धिमति च त्रि० स्त्रियां ङीप्। "ऊर्ज्जावतीं महापुण्यां मधुमतीं त्रिवर्त्मगाम्" भा०अनु० २६ अ०।

**ऊर्ज्जित** त्रि०ऊर्ज्ज-कर्त्तरि क्त। १बलान्विते २वृद्धियुक्ते च। "मातङ्ग च मनुरूर्ज्जितं दधत्" रघु। "विनिहत्य बलमूर्ज्जितश्री" माघ। भावे क्त। ३बले ४सामर्थ्ये ५उत्साहे च न०। "उपपत्तिमदूर्ज्जिताश्रयम्" किरा० णिच् क्त। ततद्वृद्धौ ६वर्द्धिते त्रि०। "हिमकरोमकरोर्ज्जि-तकेतनम्" रघु।

**ऊर्ण** न० ऊर्णा अस्त्यस्य कारणत्वेन अर्श०अच्। मेषलोमर-चितवस्त्रादौ "ऊर्णञ्च राङ्कवं चैव कीटजं पट्टजं तथा। कुटीजन्तं तथैवान्यं कमलाभा सहस्रशः। श्लक्ष्णं वस्त्रमकार्पासमाविकं मृदु चाजिनम्" भा०स० ५०अ०। २मेषलोम्नि स्त्री। "माकुल्योर्णावलयिनि पुरः पावकस्योच्छिखस्य" रघु "कार्पासकीटजोर्णानां द्वि-शफैकशफस्य च" मनु। ३ललाटस्थचिह्नभेदे ऊर्णाशब्दे उदा०। स च चक्रवर्त्तिलक्षणक भ्रूद्वयमध्यगत मृणालतन्तुसूक्ष्मांशुनिभः प्रथमायतः। भरतजपशब्दे वक्ष्यते।

**ऊर्णनाभ** पु०ऊर्णं नाभवत्। (माकडसा) १लूतायाम् "यथोर्ण-नाभ इव तन्तुभि प्रधानजैः" श्वा०उ०। गोत्रप्रवर्त्तके २ऋषिभेदे ततः अपत्ये पिदा० अण्। और्णनाभ तदपत्ये पुंस्त्री। स्त्रियां ङीप्। तस्य परिपालितोदेशः राजन्या० वुञ्। और्णनाभक तत्पालितदेशे। समासान्तविधेरनित्य त्वात् क्वचित् अच् न। "नाधारेण विना सृष्टिरूर्णना-

भेरपीष्यते। न च नि साधनं कर्त्ता कश्चित् सृजति किञ्चन" शब्दा०धृतवाक्यम्। "यथोर्णनाभि सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति" मुण्डकोप०।

**ऊर्णम्रदस्** त्रि० ऊर्णमिव ऊर्णानिर्म्मितवस्त्रमिव म्रदीय अतिशयेन मृदु वेदे म्रदीयस्+मि० ईयसोरीयसोलोप। ऊर्णतुल्यातिमृदौ "ऊर्णम्रदा युवतिर्दक्षिणावत" ऋ०१०, १८,१०, "ऊर्णम्रदसं त्वा स्तृणामि" यजु०२,२, "ऊर्णम्रा-ङ्गिरस्यूर्णम्रदा ऊर्ज मयि धेहि ४,१०। अत्र मृदुत्वे-नोर्णाया उपमानतोक्तेः काश्मीरदेशजस्य (पशम) प्रसि-द्धस्य आविकलोमस्य एव ऊर्णत्वं तस्यैवातिमृदुत्वात्।

**ऊर्णवाभि** पु० ऊर्णनाभि पृ० परोक्षे वा नस्य वः। (माकडसा)। लूतायां "यथोर्णवाभिस्तन्तुनोच्चरेत्" शत० ब्रा० १४,५,१२१।

**ऊर्णामय** ऊर्णा+विकारे मयट्। मेषलोमविकारे वस्त्रादौ "ऊर्णामयं कौतुकहस्तसूत्रम्" कुमा०।

**ऊर्णायु** त्रि० ऊर्णा—अस्त्यर्थे युस् छिन्दत्वात् भत्वाभावेन न आतो लोपः। १ऊर्णाविशिष्टे "हवमूर्णायु वरुणस्य नाभिम्" यजु०१३,५० "ऊर्णायुमूर्णावन्तम्" वेददी०। २गन्धर्वभेदे "ऊर्णायुचित्रसेनश्च हाहा हूहूश्च भारत। हरिव० १२८ अ० "बहुभि सह गन्धर्वैं प्रागात्सह च तुम्बरु। महाश्रुतिचित्ररथो ऊर्णायुतनयस्तथा" भा० २६१ अ०। "सोमदा नाम गन्धर्वी ऊर्णायुदुहिताऽ-भवत्" रामाय०।

**ऊर्णावत** त्रि०ऊर्णा अस्त्यर्थे बा०वनच्। ऊर्णायुक्ते। "ऊ-र्णावेः हवमूर्णायुमित्यूर्णावतं नर्त्येतद्धरुणस्य नाभिम्" शत०ब्रा०७,५,२,२५।

**ऊर्णास्तुक** त्रि० अस्तीति विभक्तिप्रतिरूपकम् अव्ययम् ऊर्णास्यास्य बा० अक। ऊर्णायुक्ते "ऊर्णास्तुके केयप-शयोर्भवेद्भवत" आश्व० गृ० १,७,१७,।

**ऊर्णु** आच्छादने अदा०उभ०सक० सेट्। ऊर्णौति ऊर्णोति ऊर्णुत ऊर्णुवन्ति ऊर्णुते। ऊर्णुयात् ऊर्णुवीत। ऊर्णौतु ऊर्णोतु ऊर्णुहि ऊर्णुताम्। और्णौत् और्णोत्। औ-र्णुत। और्णवीत् और्णावीत् और्णुवीत् और्ण(र्णो)(र्णु) विष्ट ऊर्णुनाव ऊर्णुनुवतुः। ऊर्णुनुविरे। ऊर्णु(र्ण) विता। ऊर्णूयात् ऊर्णु(र्णु)विषीष्ट। ऊर्ण(र्णु)विष्यति ते और्णु(र्ण)विष्यत् त। ऊर्णुवन् ऊर्णुवानः ऊर्णुतः। "स ध्यामोर्णोदन्तरिक्षम्" ऋ०७,१,२, "ऊर्णुनाव दिशः यस्मै" "प्रह्णोर्णुवानान् ककुभो बलौघान्" भट्टि "ऊर्णुना-

भिर्यर्योर्णुते" भा० २,६,२७,। सनि ऊर्णुनूर्णाति ते ऊर्णुनुविषति ते ऊर्णुनविषति ते ।
अप+अपह्नतावरणे "अपीवृता अपोर्णुवन्तो अस्य" ऋ० १ १६०,६, "अपोर्णुवन्त अपगतमिरावरणवन्त" भा०।
अभि+आभिमुख्येन आच्छादने ।"अभ्यूर्णोति यन्नग्न भिषक्ति" ऋ० ८,७६,२, [७,१४२
आ— सम्यगाच्छादने । "इन्द्रं सोमैरोर्णुत जूर्णुवस्त्रैः"ऋ० प्र— प्रच्छादने । प्रौर्णुवन् शरवर्षेण तामपौहीश्रियाचर." । 'प्रोर्णुवन्त दिशोबाणै' भट्टि ।
वि—विगतावरणे प्रकाशने । 'सवितर्व्यूर्णुयेरतुर्घीना" ऋ०४, ५४,२, "व्यूर्णुते प्रकाशयति" भा०
ऊर्द्द ऊर्द्द धातुवत् ।
ऊर्द्द त्रि० ऊर्द्द—अच् । क्रीड़ायुक्ते स्त्रियां गौ० ङाप् ।
ऊर्द्दर न० ऊर्ज्जा बलेन दृणाति दृ—"ऊर्ज्जि दृणातेरलचौ पूर्व्वान्त्यलोपश्च" उणा० अल् अच् वा ऊर्ज्जोऽन्त्यलोपश्च श०त० । १शूरे २राक्षसे च उज्ज्वल० । उद्दीर्णम् भूर्णम् उद्+दृ—अच् पृषो० उद ऊरादेश । धान्याधारभेदे कुसूले माधव । "ऊर्द्दर पृणता यवेनेडम्" ऋ०२,१४,११। उद्दीर्णम् ऊर्द्दरं कुसूलम् भा०
ऊर्द्ध(र्द्ध्व) त्रि० उद्—हाङ्—ड पृषो०ऊरादेश । १उच्चे २उपरि ३उपरिस्थिते च "प्रबोधयत्यूर्द्धमुखैर्मयूखै" कुमा० 'नीलोर्द्धरेखावयवेन शंसन्" । "व्यक्तोर्द्धरेखाभ्रुकुटीर्वहन्ति," "गङ्गेवोर्द्धप्रवर्त्तिनी" रघु । ४उत्पाटिते ऊर्द्धकच हेम० । ५अनुपविष्टे दण्डायमाने 'आसीन ऊर्द्ध प्रह्वो वा नियमोयत्र नेदृशः" छन्दो० "ऊर्द्ध अनुपविष्ट" म्ना०त० रघु० । ६उत्कृष्टे 'ऊर्द्धग्रावाण' ऋ० ३,५४,१२ । ऊर्द्धग्रावाण, सोमाभिषवार्थमुद्धृतग्रावाणः भा० । भूयतेर्वा च तेन सत्कारत्वमपि तलार्थ
ऊर्द्ध(र्द्ध्व)क पु० ऊर्द्ध सन् कायति शब्दायते । मृदङ्गभेदे स च गोपुच्छवदाकारस्थिताङ्गपरिमित मुखेऽष्टाङ्गुल ऊर्द्धं कृत्वा वाद्यते । 'ऊर्द्धकोगोपुच्छसमस्थितालोऽष्टाङ्गुलो मुखे । कृत्वोर्द्धं वाद्यते"सङ्गीतार्णवोक्ते । "हरीतक्याकृतिस्त्वङ्कस्तथाविर्द्धगोयवाकृति, । ऊर्द्धकोदण्डकस्य स्यात् मृदङ्गाभेदतोमतः" सङ्गीतचि० ।
ऊर्द्ध(र्द्ध्व)कच त्रि० ऊर्द्धा उत्पाटिता कचा यस्य । विकचे हेम० स्त्रियां स्वाङ्गत्वात् वा ङीष् ।
ऊर्द्ध(र्द्ध्व)कण्ठ त्रि० ऊर्द्ध कण्ठोऽस्य । १उन्नतकण्ठे स्त्रिया वा ङीष् । २महाशतावरीलतायां स्त्री ङीष् राजनि० ।

ऊर्द्ध(र्द्ध्व)कर्मन् न० ऊर्द्धं ऊर्द्धदेशप्राप्त्यर्थं कर्म क्रिया । उत्थानक्रियायाम् टटोऽसूर्द्धकर्मणि' पा० । ऊर्द्धचेष्टोर्द्धक्रियादयोऽप्यत्र । मङ्गु०स० । तत्कर्मवति त्रि० स्त्रियां वा डाप् ।
ऊर्द्धकाय पु न० । ऊर्द्धं कायस्य एकदे श त० । देहस्योर्द्धभागे
ऊर्द्धकेतु त्रि० ऊर्द्ध उच्छ्रित केतुर्यस्य यत्र वा । १उच्छ्रितध्वजे राजादौ तथाभूतपुर्यां स्त्री । २जनकवंश्ये नृपभेदे पु० । "ऊर्द्धकेतु सनद्वाजादजोऽथ पुरजित्सुत" भाग० ६,१२,११ ।
ऊर्द्धकेश पु० ऊर्द्ध केश इव कुशाग्र यस्य । "ऊर्द्धकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टर "स्मृत्युक्ते कुशमयब्राह्मणे । उन्नतायकेशयुक्ते त्रि० स्त्रियां वा ङीप्
ऊर्द्धग त्रि०ऊर्द्ध गच्छति गम—ड । १उपरिगते ।"भुजा बहोश्राण्यमत्स्यदूर्द्धगम्" कुमा०मरात्रागीविषाकारानूर्द्धगान् दीप्ततेजसः" भा० व० २२अ० । ऊर्द्धगतदेहसवायुगते २रोगभेदे "ऊर्द्धगे रक्तपित्ते च पीतसम्प्र प्रशस्यते सुश्रु० "तस्योर्द्धगोऽनिल कासो दौर्बल्य पार्श्वगात्रता" सुश्रु० । सर्वेषामुपरिगतत्वात् ३परमेश्वरे पु० 'ऊर्द्धगः सत्पथाचार" विष्णुस० । 'सर्वेषामुपरि तिष्ठन्नूर्ध्ग" शा०भा० । ऊर्द्धगतिशालिनि ४धार्मिके त्रि० "धर्मेण गमनमूर्द्धमधस्ताद्भवत्यधर्मेण" सां०का० धर्मेणोर्द्धगत्यभिधानात् धार्मिकस्य तथात्वम् । ऊर्द्धगतादयोऽप्यत्र । ५ऊर्द्धगतियुक्ते उत्थायिनि त्रि० ।
ऊर्द्धगति स्त्री० ऊर्द्ध गति । १ऊर्द्धगमने । यथा ज्वलनादेः यथोक्त सुश्रु० "उष्णतीक्ष्णसूक्ष्मरूक्षखरलघुविशद रूपगुणबहुलमीषत्कषायं कटुकरसप्रायम् विशेषतश्चोर्द्धगतिस्वभाव मिति तैजसं समूहनपचनदारणतापप्रकाशनप्रभावर्णकरमिति" । ऊर्द्धज्वलनादयोऽप्यत्र । "गमन दैवम स्पन्दनोर्द्धज्वलनमेव च । तिर्य्यग्गमनमप्यत्र गमनादेव लभ्यते" भाषा० । "प्रसिद्धमूर्द्धज्वलनं हविर्भुज" माघ ऊर्द्धगतिश्च लाघवातिशयेन भवति सत्त्वस्य च लघुत्वामूर्द्धगतिहेतुत्वमुक्तम् 'सा०का० "सत्त्व लघु प्रकाशकमिष्टमुपष्टम्भकञ्चलञ्च रज ","तत्र कार्योर्द्धगमने हेतुर्लाघवं गौरवमतिहन्ति, यतोऽग्नेरूर्द्धज्वलनं भवति"सा०कौ०। २ऊर्द्धलोके स्वर्गादौ गमने च तद्धेतुश्च धर्म "धर्मेण गमनमूर्द्धमिति" सा०का०उक्ते "ऊर्द्धं गच्छन्ति सत्त्वस्था" इति गीतोक्तेश्च सात्त्विकभावमात्रस्यापि तद्धेतुत्वम् । ऊर्द्धम् देशाद् ३उत्क्रमणे । ऊर्द्ध गतिर्यस्य ४ऊर्द्धगामिनि त्रि ।

हि, जपकर्म्मणि "यथा श्मशानजं काष्ठमनर्हं सर्व्वकर्म्मसु । द्विजस्तु तप्तशङ्खादिलिङ्गाङ्किततनुस्तथा । सम्भाष्य रौरवं याति यावदिन्द्राश्चतुर्द्दश" इति पद्मपु० । "शिवकेशवयोरङ्कान् शूलचक्रादिकान् द्विज । न धारयेत मतिमान् वैदिके वर्त्मनि स्थितः" तत्र त्रिपुण्ड्रादिधारणविधायकवाक्यं वैदिकेतरद्विजविषयं शूद्रविषयञ्च । यदपि ब्राह्मणस्य तद्धारणविधानम् "अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा । ब्राह्मणस्य तथैवेह तप्तमुद्रादिधारणम्" पद्मपु० । "ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यदि वेतरः । शङ्खचक्राङ्किततनुस्तुलसीमञ्जरीधरः । गोपीचन्दनलिप्ताङ्गो दृष्टश्चेत्तदघं कुतः" काशी० । तदपि वैदिकेतरविप्रपरम् सर्व्वेषामङ्गत्वात् एव वस्त्वार्थे स्थितेऽपि कुलाचारात् तस्य-सर्व्वं कर्त्तव्यता । तथैव भारतटीकायां नीलकण्ठेन निर्णीतम् यथा

"श्रोणामेक उदकं गामवाजति माषमेकः पिंशति सूनया भृतम् आ निम्रुचः शकृदेको अपाभरत् किं स्वित् पुत्रेभ्यः पितरावुपावतुः" श्रुतिः । "अस्यार्थः हे ऋभवः । भवतां मध्ये एकः श्रोणां लक्षणां गां श्वेद गोपीचन्दनादिरूपां तीर्थनिकटस्थां मुख्यकर्म्मभूतां प्रति उदकं जलं गौणकर्म अवाजति आगमयति अन्तर्भावितण्यर्थोऽजति । श्रोणां गाम् उदकेन मिश्रयतीत्यर्थः श्रोणां गां रक्तचन्दनादिरूपां वा तथा । एकः सूनया हिंसया तत्कर्त्रा आभृतं आहृतं मांसं गोरोचनाख्यं पिंशति पिनष्टि उदकेन सह इति शेषः निम्रुचः नितरामस्तं गच्छतो दग्धेन्धनस्याग्नेः सम्बन्धि शकृत् गोमयं शुष्कगोमयोत्थं भस्मेति यावत् अपाभरत् अपाहृतवान् जलाप्युदकेन सहेति शेषः व्यवहिताश्चेति छन्दसि व्यवहितेनाप्युपसर्गेण क्रियाया सम्बन्धः । ह्रूपको भेन्छन्दसीति ह्रस्व भ । एतानि मन्त्रपदानि असम्पूर्णार्थत्वात् साकाङ्क्षाणि ब्राह्मणमपेक्षन्ते इषे त्वोर्जे त्वेत्यादिमन्त्रवत् तत्र यथा "इषे त्वेति शाखां छिनत्ति ऊर्ज्जे त्वेत्यनुमार्ष्टीति" ब्राह्मणानुसारात् हे शाखे त्वा त्वाम् इषे अन्नाय छिनद्मीति ऊर्ज्जे पशुभ्यः अनुमार्ज्मीति व्याख्यातम् एवमिहापि वासुदेवोपनिषद्ब्राह्मणतन्त्रपुराणोपबृंहणानुसारात् ऊर्द्ध्वपुण्ड्रार्थं लक्षणां श्वेद जलेन मिश्रयेदिति व्याख्येयं तथा कालाग्निरुद्रश्रुत्याबालाद्युपनिषद्ब्राह्मणतन्त्रपुराणोपबृंहणानुसारात् त्रिपुण्ड्रकर्त्तुः निम्रुचः शकृदपाभरदिति च व्याख्येयम् एवमितरस्यापि पदस्य ब्राह्मणमन्त्रलिङ्गाद्युपबृंहणे सतिव्यवस्थापकापूर्व-विधिश्चानुमेयः तथाच श्रोणामिति पदस्य रक्तामिति व्याख्याने सौरशाक्तगाणपत्यानां रक्तमेव पार्थिवं द्रव्यं पुण्ड्रार्थं तत्तत्तन्त्रे विधीयते वैष्णवानां पीतं शैवानां भस्मेति अनेन तत्तत्पुण्ड्रविशेषोपलक्षिततत्तद्देवताभजनेनापि देवताभावं प्राप्नुवन्तीति निर्णीयते । केवलवैदिकानां तु श्रोणां लक्षणामिति व्याख्यानेन त्रितयस्यापि समुच्चयः "स्नात्वा पुण्ड्रं मृदा कुर्य्यात् हुत्वा चैव तु भस्मना । देवान् विप्रान् समभ्यर्च्य चन्दनेन समाचरेदिति" स्मृतिभ्यः अत्र गोरोचनादिरूपं चन्दनाद्युदगन्धोपलक्षणार्थम् एतेषां विकल्पसमुच्चयपक्षाणां पितृपैतामहपरम्पराक्रमेण व्यवस्थामाह किं स्वित् पुत्रेभ्यः पितरा उपावतुरिति पुत्रहितार्थं यत्किञ्चिद्व्रतं पितरौ मातापितरौ पितृपितामहौ वा उपेत्य स्वीकृत्य अवतुः व्रतं सम्यक् परिपालयामासतुः तदेव तस्य श्रेयःसाधनमित्यर्थः एवं सति तीर्थानि यज्ञादयस्तन्त्रमार्गेण सर्व्वाद्यन्यतमोपास्तिः केवलवैदिकता चेति देवताभावप्राप्तिसाधनानि" इत्यन्तेन ।

श्राद्धकर्म्मणि तु त्रिपुण्ड्रादौ विधिनिषेधयोर्व्यवस्था नि० सि० उक्ता यथा ।

"जपे होमे तथा दाने स्वाध्याये पितृकर्म्मणि । तत्सर्व्वं नश्यति क्षिप्रमूर्द्ध्वपुण्ड्रं विना कृतमिति" हेमाद्र्युक्तेः । "यज्ञो दानं जपो होमः स्वाध्यायः पितृकर्म्म च । वृथा भवति विप्रेन्द्रा ऊर्द्ध्वपुण्ड्रं विना कृतमिति" वृद्धहारीतोक्तेः । "ऊर्द्ध्वञ्च तिलकं कुर्य्याद्दैवे पित्र्ये च कर्म्मणीति" ब्रह्मपुराणोक्तेश्च ऊर्द्ध्वपुण्ड्रधारणं पित्र्ये विहितम् । अन्ये तु "ऊर्द्ध्वपुण्ड्रो द्विजातीनामग्निहोत्रसमो विधिः । श्राद्धकाले च सम्प्राप्ते कर्त्ता भोक्ता च वर्जयेदिति" "वामहस्ते च ये दर्भा उदरे रक्तलिप्तता । ललाटे तिलकं दृष्ट्वा निराशाः पितरो गताः" इति सप्तर्षिोक्ते "ऊर्द्ध्वपुण्ड्रं त्रिपुण्ड्रं वा चन्द्राकारमथापि वा । श्राद्धकर्त्ता न कुर्व्वीत यावत् पिण्डान्न निर्व्वपेत्" इति विष्णुप्रकाशे वचनाच्च न धार्य्यमित्याहुः । अत्र कुलाचारादेव व्यवस्था । अत एव वृद्धहारीतोये "ऊर्द्ध्वपुण्ड्रञ्च तुलसीं श्राद्धे नेच्छन्ति केचन" इत्यत्र केचनेत्युक्तम् ऊर्द्ध्वपुण्ड्रविधिः श्राद्धभोक्तृपरः, निषेधः कर्त्तृपर इति पृथ्वीचन्द्रः । यत्तु हेमाद्रौ देवलः "ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे माल्यं तथैव च । निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिमिति"। तद्गन्धत्रिपुण्ड्रविषयम् । "प्राकिच-पकृद्दानात् गन्धाद्यैर्नासदुर्यात्तद्विषयकम्" इत्याद्याचमनोक्तेः

पुण्ड्, वर्त्तुलमित्यपरार्के मदनरत्ने च। पृथ्वीचन्द्रस्तु "पुण्ड्रं त्रिपुण्ड्रम् ऊर्द्ध्वं तिलकं कुर्य्याद्वा कुर्य्याद्धि त्रिपुण्ड्रकम्। निराशा पितरो यान्ति दृष्ट्वा चैव त्रिपुण्ड्रकमिति" इत्यपरार्करोक्तेः। भोक्तुस्तिर्य्यग्लपो भवत्येव। "वर्जयेत्तिलकं भाले श्राद्धकाले च सर्वदा। ऊर्द्ध्वपुण्ड्रं त्रिपुण्ड्रं वा धारयेत् प्रयत्नतः" इति व्यासोक्तेरित्याह"। पृथ्वीचन्द्रोदये मार्क्ण "सपूदर्भेण कृत्स्नेन कुर्य्यात्तिलकं बुधः। आचम्य न विशुध्येत दर्भत्यागेन चैव हि"।

ऊर्द्ध्वपृश्नि पु० ऊर्द्ध्वा पृश्नयोबिन्दवोऽस्य। पशुभेदे। अश्वमेधे तृतीययूपे बन्धनीयमारुतपशुकीर्त्तने "पृश्निस्तिरश्चीनपृश्निरूर्द्ध्वपृश्निस्ते मारुता" यजु० २४,४,

ऊर्द्ध्वबर्हिस् पु० ऊर्द्ध्वं प्रागग्रं बर्हिर्येषाम्। सोमपाख्ये पितृभेदे "स्वाहा पितृभ्य ऊर्द्ध्वबर्हिर्भ्यो घर्मपावभ्यः" यजु० २,१५, "ऊर्द्ध्वबर्हिर्भ्यः सोमपाभ्य" वेददी०

ऊर्द्ध्वबाहु पु० ऊर्द्ध्व उत्तोलितो बाहुः कर्म्म०। १ऊर्द्ध्वोत्तोलिते बाहौ "तद्यदेनमूर्द्ध्वबाहुमभिषिञ्चति" शत० ५,४,१,१०, बहु०। २प्रसारितबाहुके त्रि० ऊर्द्ध्वबाहुं मामु प्रतिक्राशयूर्द्ध्व उ षु ण इति" कात्या० १९,२,८, ऊर्द्ध्वबाहुः प्रसारितबाहु" कर्क "पञ्चमोरैवतो नाम मनुस्तामससोदर" इत्युपक्रम्य "हिरण्यरोमा वेदशिरा ऊर्द्ध्वबाह्वादयो द्विजा" इति" भाग० ८,५,२,लोकोक्ते रैवतमन्वन्तरीयसप्तर्षिभेदे ते च "वेदबाहुर्यदुध्रश्च मुनिर्वेदशिरास्तथा। हिरण्यरोमा पर्जन्य ऊर्द्ध्वबाहुश्च सोमजः। सत्यनेत्रस्तथाऽत्रेय एते सप्तर्षयोमता" हरिवं० ७अ० विशेषत उक्ता। ऊर्द्ध्वस्तत्क्षिप्तो बाहुर्येन। ४तपस्यार्थमूर्द्ध्वोत्क्षिप्तबाहौ तपस्विभेदे।

ऊर्द्ध्वबुध्न पु० ऊर्द्ध्वं बुध्नं शिरोऽस्य। ऊर्द्ध्वशिरस्के चमसे "अर्वाग्बिलश्चमस ऊर्द्ध्वबुध्नस्तस्मिन् यशोनिहितं विश्वरूपम्। तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेति" "अर्वाग्बिलश्चमस ऊर्द्ध्वबुध्न इति तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्द्ध्वबुध्नस्तस्मिन् यशोनिहितं विश्वरूपमिति प्राणा वै यशोनिहितं विश्वरूपं प्राणानेतदाह तस्यासत ऋषयः सप्त तीरे इति प्राणा वा ऋषयः प्राणानेतदाह" वृ० उ०। "देहस्य चमसरूपेण रूपकमिदम् अर्वाग्बिलश्चमस ऊर्द्ध्वबुध्नः इद तच्छिरः चमसाकारं हि तत् कथम्? एष ह्यर्वाग्बिल मुखस्य बिलरूपत्वात्, शिरसोबुध्नाकारत्वात् ऊर्द्ध्वबुध्नः, तस्मिन् यशोनिहितं विश्वरूपमिति यथा सोमश्चमसे एवं तस्मिन् शिरसि विश्वरूपं नानारूपं निहितं भवति, किं पुनस्तद्यशः? प्राणा वै यशोविश्वरूपम्। प्राणाः श्रोत्रादयः सप्त ऋषयः तीरा (श्रोत्रे द्वे नासिके द्वे नेत्रे द्वे रसना चैकेति सप्त) तेषां परिस्पन्दात्मकवाय्वादिज्ञानहेतुत्वात्"। ऋषिधातोर्गत्यर्थतया परिस्पन्दात्मकवृत्तिमत्त्वम् ज्ञानहेतुत्वेन धीरत्वमिति बोध्यम्।

ऊर्द्ध्वभाग पु० ऊर्द्ध्वः उपरिस्थोभाग एकदेशः कर्म्म०। उपरितनदेशे "तालादिषु सभागेषु ऊर्द्ध्वभागे निष्पन्नोऽनुदात्तः" सि० कौ०।

ऊर्द्ध्वभाज् त्रि० ऊर्द्ध्वं भजते भज–ण्वि। १उपरिभागस्थे २ऊर्द्ध्वदेशस्थे वह्निभेदे पु०। "ऊर्द्ध्वभागूर्द्ध्वभाङ् नाम कविः प्राणाश्रितस्तु यः" भा० व० २१८अ० वह्निनामतत्कर्म्मभेदकथने।

ऊर्द्ध्वम् अव्य० उद्–ह्वे अ ह्वस्य आदेः ऊरादेशश्च। ऊर्द्ध्वशब्दार्थे। "ऊर्द्ध्वं प्राणाह्युत्क्रामन्ति यूनः स्थविर आयति" "तिष्ठन्नूर्द्ध्वं रजः पिबेत्" मनुः "अधश्चोर्द्ध्वञ्च प्रसृतास्तस्य शाखाः" गीता।

ऊर्द्ध(र्द्ध्व)मन्थिन् पु० ऊर्द्ध्वं ब्रह्मचर्य्यादुत्तराश्रमं गार्हस्थ्यादि मथ्नाति मन्थ–णिनि ईत०। नैष्ठिकब्रह्मचारिणि स हि ब्रह्मचर्य्योत्तरगार्हस्थ्याद्याश्रमं त्यजतीति तस्य तथात्वम्। "धर्मान् प्रदर्शयितुकामोवातरशनानां श्रमणानामृषीणामूर्द्ध्वमन्थिनां शुक्लया तन्वाऽवततार" भाग० ५,३,२१,

ऊर्द्ध(र्द्ध्व)मान न० ऊर्द्ध्वमारोप्य मीयते येन मा-करणे ल्युट्। पलकर्षादिमिते पात्राधारौ(पाटखारा) तेन हि तुलादावारोपितेन स्वर्णादिगुरुत्वमुन्मीयते। भावे ल्युट्। २उच्चतापरिच्छेदकपरिमाणे च "ऊर्द्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः" व्या० का०। अयमर्थः। तुलादावारोपितस्य स्वर्णादेर्गुरुत्वमिति तुलापरकोटिदेशे कारोपादुर्द्ध्वमुन्मीयते तदुन्मानम्। प्रस्थादिना व्याप्ताभ्यामारोहपरिणाहाभ्यां व्रीह्यादेः सर्वतोमानात् परिमाणम्। आयामोदैर्घ्यं वस्त्रादेर्हस्तादिव मितिर्हस्तप्रादिना यत् मीयते तत् प्रमाणम्। सर्वत उन्मानादिमानत्रयाद्बाह्या बहिर्भूता संख्या द्वित्वादिरित्यर्थः। "प्रमाणे द्वयसज्दघ्नञ्मात्रच" पा० विहितौ द्वयसज्दघ्नचौ प्रत्ययौ ऊर्द्ध्वमानादेव "प्रथमस्य द्वितीयस्य ऊर्द्ध्वमाने मतौ मम" वार्त्तिकोक्तेः।

ऊर्द्ध्वमुख त्रि० ऊर्द्ध्वं मुखमस्य। १ऊर्द्ध्वनतप्रथमभगे "प्र-

**ऊर्द्धायन** त्रि॰ऊर्द्धमयनं यस्य । १ऊर्द्धगते प्लक्षद्वीपस्थे २दैत्य-धर्मस्थानीये पक्षिभेदे । प्लक्षद्वीपवर्णने अरुणादिसप्तनदी-रुक्त्वा "यासां जलोपस्पर्शनविधूतरजस्तमसो हंसपतङ्गोर्द्धायनसत्याङ्गसंज्ञाश्चत्वारो वर्णाः" भाग॰५,२०,७ । "हंसादयः पक्षिणः ब्राह्मणादिस्थानीयाः" श्रीधरः । ३ऊर्द्धगतौ न॰

**ऊर्द्धाम्नाय** पु॰ ऊर्द्धमाम्नायते आ+म्ना–कर्म्मणि घञ् । वेद-मार्गातिरिक्तबोधके तन्त्रभेदे

**ऊर्द्धावर्त्त** पु॰ ऊर्द्धमावर्त्ततेऽत्र आ+वृत आधारे घञ् । १अश्वहृदस्थाने त्रिका॰भावे घञ् ६त॰ । २दक्षिणावर्त्ते च

**ऊर्द्धासित** पु॰ऊर्द्धमुपरिभागे असितं कृष्णः असितो वा । १कारवेल्ले (करेला) त्रिका॰ २ऊर्द्धोपविष्टे त्रि॰ ।

**ऊर्द्धेह** पु॰ऊर्द्धमीहा चेष्टा । उत्थानानुकूलायामूर्द्धचेष्टायाम् "उदोऽनूर्द्धेहे" मुग्ध॰ऊर्द्धेहाप्यत्र स्त्री ।

**ऊर्म्मि** पुस्त्री॰ऋ–मि अर्त्तेरुच्च । १तरङ्गे, "व्योमगङ्गोर्म्मि-वायुभिः" रघु "महोर्म्मिभिर्व्याहतवाञ्छितार्थैः" २प्रकाशे, ३वेगे, ४वस्त्रसङ्कोचरेखायाम्, ५पीडायाम्, ६उत्कण्ठायाम्, ७बुभुक्षादिषु षट्सु देहमनःप्राणानां यथायथं धर्म्मेषु ते च "बुभुक्षा च पिपासा च प्राणस्य, मनसः स्मृतौ । शोकमोहौ, शरीरस्य जरामृत्यू षडूर्म्मयः" शा॰ ति॰ विभज्योक्ताः "षट्प्रोक्तानामस्थानां नमनोन्नमनाकृतिः । अतिवेगसमायुक्ता गतिरूर्म्मिरुदाहृता" वैजयन्त्युक्तलक्षणायाम् ८अश्वगतौ स्त्री "तुर्णं पयोधय इवोर्म्मिभिरापतन्तः" माघः "क्षिपद्भिरूर्मीनपरैरिवो-र्म्मिभिः" माघः "पक्षे ऊर्म्मिभिरश्वगतिभिरित्यर्थः ।

ऊर्म्मौ भवः यत् । ऊर्म्य ऊर्म्मिभवे त्रि॰रात्रौ स्त्री निरु॰ "तिरस्तमोदद्दश ऊर्म्यासु" ऋ॰६,४८,६, "ऊ-र्म्यासु रात्रिषु" भा॰ । रुद्रभेदे पु॰ "नम ऊर्म्याय चाव-र्त्याय च" यजु॰१६,३१ ।

**ऊर्म्मिका** स्त्री ऊर्म्मिरिव कायति कै–क । १तरङ्गवत् प्रकाश-माने अङ्गुरीयके । स्वार्थे कन् । २तरङ्गादौ च । ३उत्-कण्ठायाम् ४भृङ्गनादे ५वस्त्रभङ्गे च हेम॰

**ऊर्म्मिन्** त्रि॰ऊर्म्मिरस्त्यस्य बा॰ इनि । ऊर्म्मियुक्ते स्त्रियां ङीप् । "हम्र्यच्युतामृताधरोर्म्मिणा मधुमत्तमा" काठ्या॰ ४,२,२२, "प्रप्लापयन्त्यूर्म्मिणम्" ऋ॰ ९,९८,६, २समुद्रे पु॰ "तत सागरमासाद्य कुक्षौ तस्य महो-र्म्मिणः" भा॰व॰२०अ॰ ।

**ऊर्म्मिमत्** त्रि॰ ऊर्म्मिरिव वक्रतास्त्यस्य मतुप् यवा॰ मस्य नावः । १वक्रे । "दीर्घेषु नीलेष्वथ चोर्म्मिमत्सु जयाह केशेषु नरेन्द्रपत्नीम्" भा॰स॰६५अ॰ २तरङ्गवति च ।

**ऊर्म्मिमालिन्** पु॰ ऊर्म्मिमालाऽस्त्यस्य इनि । समुद्रे "चन्द्र प्रवृद्धोर्म्मिरिवोर्म्मिमाली" रघु

**ऊर्म्मिला** स्त्री लक्ष्मणपत्न्याम् जनकस्यौरस्यां कन्यायाम् "पार्थिवीमुदवहद्रघूद्वहो लक्ष्मणस्तदनुजामथोर्म्मिलाम्" रघुः

**ऊर्य्यादि** पु॰ पाणिन्युक्ते गतिसंज्ञानिमित्ते शब्दसमूहे-स च गणः ऊरी, उररी, तन्थी, ताली, आताली, वेताली, धूली, धूसी, शकला, संशकला, ध्वंसकला, भ्रंसकला, गुलुगुधा, सजूः, फल, फली, विक्ली, आ-लोष्ठी, केवाली, केवासी, पर्याली, शेवाली, वर्षालि, अत्यूमशा, वश्मसा, मस्मसा, मसमसा, श्रौषट्, वौषट् वषट्, स्वाहा, स्वधा, बन्धा, प्रादुस्, श्रत् आविस्, अत्र पाठान्तरम् उररी उरोति उरीत्यत्र ।

**ऊर्व** पु॰ऊरु कारणत्वेनास्त्यस्य अर्श॰अच् संज्ञापूर्वकविधेरनि-त्यत्वेन स्वायम्भुववत् न गुणः । १और्वे ऋषिभेदे उप-चारात् तज्जाते २वाडवानले "ऊर्व इव प्रपे" ऋ॰२,२,१९, "ऊर्वः वाडवानलः" भा॰३तद्वति समुद्रे "अपार ऊर्वेऽन्नत तुहाना" ऋ॰ २,१,१६, "समानमूर्वं नद्यः पृणन्ति" ऋ॰ २,३५,३, ऊर्वः साहश्येनास्त्यस्य अच् । वाड़वा-नलतुल्ये ४महति "दिव ऊर्ध्वर्वां अमितः" २,१२,७, "ऊर्वान् महतः" भा॰तत्तुल्ये ५विस्तृते च "महविदग्न एनसो अभीक ऊर्वात् ४,१२,५, "ऊर्वात् विस्तृतात्" भा॰ ।

**ऊर्वङ्ग** न॰ऊरुरिव अङ्गम् यस्य । छत्रिकायाम् शिलीन्ध्रे हारा॰

**ऊर्वष्ठी** स्त्री ऊरू नारायणोरू कारणत्वेनाप्नुते अश–अच् ६त॰गौरा॰ङीप् । उर्वश्याम् । पृ॰ अस्य दन्त्यसत्वमपि ।

**ऊर्वष्ठीव** न॰ऊरू च अष्ठीवन्तौ च समा॰ द्वन्द्वः नि॰ । ऊर्वो-रष्ठीवतोश्च समाहारे

**ऊर्वी** स्त्री ऊरु मध्यस्थत्वेनास्त्यस्य अर्श॰अच् स्वायम्भुववत् न गुण गौरा॰ङीप् । ऊरुमध्यस्थाने "ऊरुमध्ये ऊर्वी नाम तत्र शोणितक्षयात् सक्थिशोषः" "ऊर्व्यां ऊर्द्धम-धोवङ्क्षणसन्धेरुरुमूले लोहिताक्षमिति" लोहिताक्षाणि जान्वीं कूर्चौ विटकूर्परा" इति च सुश्रु॰ ।

**ऊर्व्य** पु॰ऊर्वे वाडवानले भवः यत् । अधिष्ठातृतया वाड़वानल-स्थिते रुद्रे "नम ऊर्व्याय च सूर्व्याय च" यजु॰१६,४,

**ऊर्षा** स्त्री उर–स नि॰ सेट् । देवताड़ग्णे शब्दच॰ ।

**ऊलुपिन्** पु॰उलुपिन्+पृ॰दीर्घ । १जलजन्तुभेदे २मत्स्यभेदे च

**ऊलूक** पुंस्त्री॰ उल–ऊकण् दीर्घश्च । पेचके स्त्रियां ङीप् ।

**ऊष** पु॰ रुजायाम् भ्वा॰पर॰सक॰सेट् । ऊषति औषीत्

ज्योतिःशब्देनाभिधीयते। तथा सति ब्रह्मणोऽपि चैतन्यस्वरूपस्य समस्तजगदवभासहेतुत्वादुपपन्नो ज्योतिःशब्दः "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"। "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इत्यादिश्रुतिभ्यश्च। यदप्युक्तं द्युमर्यादत्वं सर्वगतस्य ब्रह्मणो नोपपद्यते इति। अत्रोच्यते सर्वगतस्यापि ब्रह्मण उपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते। ननूक्तं निष्प्रदेशस्य ब्रह्मणः प्रदेशविशेषकल्पना नोपपद्यत इति। नायं दोषः निष्प्रदेशस्यापि ब्रह्मण उपाधिविशेषसम्बन्धात् प्रदेशविशेषकल्पनोपपत्तेः। तथा हि आदित्ये चक्षुषि हृदय इति प्रदेशविशेषसम्बन्धीनि ब्रह्मण उपासनानि श्रूयन्ते। एतेन "विश्वतः पृष्ठेषु" इत्याधारबहुत्वमुपपादितम्। यदप्येतदुक्तं औष्ण्यघोषाभ्यामनुमिते कौक्षेये कार्ये ज्योतिष्यध्यस्यमानत्वात् परमपि दिवः कार्यं ज्योतिरेवेति। तदप्ययुक्तं परस्यापि ब्रह्मणो नामादिप्रतीकत्ववत् कौक्षेयज्योतिःप्रतीकत्वोपपत्तेः। "दृष्टञ्च श्रुतञ्चेत्युपासीतेति" तु प्रतीकद्वारकं दृष्टत्वं श्रुतत्वञ्च भविष्यति। यदप्यल्पफलश्रवणान्न ब्रह्मेति तदप्यनुपपन्नम्। न हि इयते फलाय ब्रह्माश्रयणीयमियते नेति नियमे हेतुरस्ति। यत्र हि निरस्तसर्वविशेषसम्बन्धं परं ब्रह्मात्मत्वेनोपदिश्यते तत्रैकरूपमेव फलं मोक्ष इत्यवगम्यते यत्र तु गुणविशेषसम्बन्धं प्रतीकविशेषसम्बन्धं वा ब्रह्मोपदिश्यते तत्र संसारगोचराण्येवोच्चावचानि फलानि दृश्यन्ते "अन्नादो वसुदानो विन्दते वसु य एवं वेद" इत्याद्यासु श्रुतिषु। यद्यपि न स्ववाक्ये किञ्चित् ज्योतिषो ब्रह्मलिङ्गमस्ति तथापि पूर्वस्मिन् वाक्ये दृश्यमानं ग्रहीतव्यं भवति। तदुक्तं सूत्रकारेण ज्योतिश्चरणाभिधानादिति। कथं पुनर्वाक्यान्तरगतेन ब्रह्मसन्निधानेन ज्योतिःश्रुतिः स्वविषयात् प्रच्याव्य शक्या व्यावर्त्तयितुम्। नैष दोषः। "यदतः परो दिवो ज्योतिर्दीप्यते" इति प्रथमतरपठितेन यच्छब्देन सर्वनाम्ना द्युसम्बन्धात् प्रत्यभिज्ञायमाने पूर्ववाक्यनिर्दिष्टे ब्रह्मणि स्वसामर्थ्येन परामृष्टे सत्यर्थात् ज्योतिःशब्दस्यापि तद्विषयत्वोपपत्तेः। तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम्" भा०। श्रुत्यन्तरे तु कौक्षेयाग्निसम्बन्धात् देहस्यौष्ण्यमुक्तम्। तत्रापि कौक्षेऽग्नेरपि जीवस्थितिनियतत्वात् जीवाधीनत्वं कल्प्यमित्याकरे प्रपञ्चः।

**ऊह** वितर्के भ्वादि० आत्म० सक० वेट्। ऊहते औहिष्ट। ऊहां बभूव आस चक्रे। ऊहितः ऊहमानः ऊहितम् ऊहः। "औहिष्ट तान् पीतविषक्षमुद्धीन्" भट्टिः। कर्मणि ऊह्यते औहि विच्। ऊहयति ते औजिहत् त। "क्रमेण तावौजिहतां महिष्ठौ" भट्टिः अस्य ऊहशब्दे वक्ष्यमाणेऽर्थेऽपि वृत्तिः। परस्मैपदित्वमप्यस्य ऊहति, इत्यु-छेतद्धिदैत देविकेषु" कात्या० १०१,२,१,१७, आदौ उपसर्गात् परस्यादेर्ह्रस्व। समुह्यते

अति—एकदेशस्थितस्य तद्विपरीतदेशप्रेरणे "द्रोणकलशमत्यूह्य" कात्या० ८,२,१६। "अत्यूह्य प्राञ्चमेव प्रतीच्यां प्रेर्य" कर्क।

अधि+अध्यसने। "अग्निमग्नीत् संमड्ढीति यथाधुरमध्यूहेदेव तद्यत् पृषमाधार माधार यत्यध्युह्य हि धुरं युञ्जन्ति" शत० ब्रा० १,४,४,१२,

अप+निरसने दूरीकरणे। "अपोह्य बर्हींषि" कात्या० २,२,१७, "एतैर्द्विजैरपोहेत पापं संयतं द्विज" मनुः। "सर्वान् रसानपोहेत कृतान्नञ्च तिलैः सह" मनुः प्रतिकूलतर्केण प्रकृततर्कापनयने अपोह।

अप+वि+निवारणे "व्यपोहत पराक्रस्य सर्वानेव धनञ्जय" भा० द्रो० ४७०। [२८। "अभ्यूहति आच्छादयति" भा०।

अभि+आच्छादने। "अपाङ्गारैरभ्यूहति" शत० ब्रा० १,२,४,

उद्+उत्कर्षणे। "रशनामुदुह्य प्राच्याम्" कात्या० १,६,१। "उदुह्य उत्क्षिप्य" कर्क निरसने च। "तेन माषोऽङ्गारानुदूहति" शत० ब्रा० १,२,१,४। [१,२,५,१७।

प्रति+उद्+प्रक्षेपणे 'दक्षिणतः पुरीषं प्रत्यूहेत" शत० ब्रा०

वि+उद्+अन्ते विवर्द्धने। "चतकृ बलभमयतो बाह्यतो व्युदूहति" शत० ब्रा० १०२,१,४। व्युदूहति अन्ते विवर्द्धयति" भा०

उप+अधस्तात् प्रवेशने। "पश्चाच्चस्योपोहति" कात्या० २,५,४। "उपोहति अधस्तात् प्रवेशयति" कर्कः।

निर्+निष्काशय यजने पृथक्करणे च। गार्हपत्यादुष्णं भस्म निरूह्य" शत० ब्रा० १२,४,२,२। "शिरः श्रियमस्य निरौहत्" शत० ब्रा० १०,५,४। यथा तेऽमेधमध्वर्युः प्रेष्यति निरूहैव गर्भमिति" "निरूह्यमाणमभिमन्त्रयीत" कात्या० २५,१०,४,५। निरूह्यमाणं पृथक्क्रियमाणम् वेददी० निरूहणम्

परि+परितः स्थानपूरणे। "अरत्निमात्रे संस्रवे मोषदधाति पर्यूहति च" कात्या० ८,५,२९। पर्यूहति पांशुभिरन्नाद्यं परितः पूरयति" कर्कः। पर्यूहणम्।

प्र+देशान्तरनयने । "प्रोह्य स्रौणकलशम्" कात्या० ८,५,१४ । "प्रोह्य प्रेर्य्य" कर्क । पातने च "कृष्णाजिने प्रोहति" कात्या० २,५,७ । प्र+ऊहस्यादेर्वृद्धि प्रौह ।
प्रति+उपरिस्थापने । "दीक्षितोरौ दक्षिणे प्रत्यूह्य याच" कात्या० ७,८,२१ । "प्रत्यूह्य उपरि स्थापयित्वा" वेददी० निरासे च । "प्रत्यौहतमश्विनौ मृत्युमस्मात्" यजु० २७, "प्रत्यौहत न्यवर्त्तयताम्" वेददी० ।
वि+विपरीततया प्रेरणे "जुहूपभृतौ व्यूहति" कात्या० २,५,१७ । सैन्यानां सन्निवेशविशेषेण स्थापने च । व्यूह । "प्रहर्षयेद्बलं व्यूह्य तांश्च सम्यक् परीक्षयेत्" मनु । समवेतभवने । "योऽवस्त्रियते भूतशोऽस्य व्यूह्यन्ते" शत० ब्रा० ८,७,१२,११,
प्रति-वि प्रतिरूपव्यूहकरणे । "बार्हस्पत्यविधिं कृत्वा प्रतिव्यूह्य निशाचरम्" भा० व० २८४ अ० । विरोधाचरणे च प्रत्यूहः
सम्- समवेतभवने संहनने सम्यक्प्रापणे च । "यद्द्गच्छन्ता हा जना स्वर्यन्तां समूहसि" ऋ० १,१२१,२, समूहसि प्रापयसि भा० । सम्यक्पूरणे "अङ्गारैरभि समूहति" शत० ब्रा० ४,५,२,१८, समूह
उप+सम् समीपे सङ्घोचने "पश्चादुपसमूहन्ते" शत० ब्रा० १०,२,१,१, "समूहन्ते मध्यभागसमीपे सङ्घोचयन्ति" भा० ।
परि-सम्-समन्तात् परिमार्जने "वेदिं परिसमुह्य" कात्या० २,६,१२, "परिसमुह्य सम्मार्ज्य" कर्क । "अग्निं प्रतिष्ठाप्यान्वाधाय परिसमुह्य" आश्व० गृ० १,३,१, "परिसमूहनं नाम अग्नेः समन्तात् परिमार्जनम्" नारा० वृ० ।
समूढव्यूढमित्युदादिकमस्यैव रूपमाहुः केचित् । अस्य सेट्कत्वात् ऊहित इत्यादय एव तु । अतस्तानि उपसृष्टस्य वहतेरेव रूपाणीत्यन्ये । अस्यैव आङ्पूर्व्वकस्य ओहते इति रूपम् । न तु केवलस्य, दीर्घोपधत्वेन गुणाप्रसक्तेः ।
ऊह पु० ऊह-घञ् । १वितर्के आगमार्थाविरोधिना तर्केण आगमार्थस्य संशयपूर्व्वपक्षनिराकरणपूर्व्वकोत्तरपक्षव्यवस्थापनेन निर्णयरूपे २परीक्षणे, ३अनन्वितार्थकविभक्तिलिङ्गत्यागपूर्व्वकेऽन्वययोग्यविभक्त्यादिकल्पने, यथा पार्वणे सौम्यास इति बहुवचनमन्वितमपि एकोद्दिष्टे अनन्वितत्वात् सौम्य इत्येकवचनान्ततया कल्पनम् ।४पदान्तरेणाकाङ्क्षापूरणार्थे अध्याहारे च । "ऊहः सर्व्वोऽध्ययनं तु त्रिविधास्तस्य शक्तयः प्राप्तिः । दानञ्च सिद्धयोऽष्टौ सिद्धेः पूर्व्वोऽङ्कुशस्त्रिविधः" सा० का० उक्ते तारारूपे ५सिद्धिभेदे "ऊहस्तर्क आगमाविरोधिन्यायेनागमार्थपरीक्षणम् । संशयपूर्व्वपक्षनिराकरणेनोत्तरपक्षव्यवस्थापनं तदिदं मननमाचक्षते आगमिनः सा तृतीया सिद्धिस्तारमुच्यते" सा० कौ० "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" का० वार्त्ति० । "ऊहः खल्वपि न सर्व्वैर्लिङ्गैर्न च सर्व्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदितास्ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः तान्नावैयाकरणः शक्नोति विपरिणमयितुम् तस्मादध्येयं व्याकरणम्" महाभा० । "ऊहं खल्वपीति । इह यस्मिन् यागे इतिकर्त्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते सा प्रकृतिः येन चोपजीव्यते सा विकृतिः प्रकृतिवद्विकृतिः कर्त्तव्येति मीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणस्सम्यग्जानाति । तत्र अग्नेर्मन्त्रोऽस्ति "अग्नये त्वा जुष्टं निर्वपामीति" तत्र "सौर्य्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम" इति सौर्य्ये चरौ मन्त्र ऊह्यते सूर्य्याय त्वा जुष्टं निर्वपामीति । विस्तरेण भर्त्तृहरिणा प्रदर्शित ऊहः" कै० । "ऊहः खल्वपीत्यस्य प्रयोजनमिति शेषः । ननु यत्र प्रकरणे ये मन्त्राः पठितास्तत्र तेषां तथैव प्रयोग इष्ट इति नोहेन प्रयोजनमित्याशङ्क्य प्रकृतावूहाभावेऽपि विकृतावूह इति दर्शयितुम् प्रकृतिवद्वाक्यार्थं माह । इहेति । यस्मिन्नाग्नेयादौ । यागान्तरेण सौर्य्यादिना । प्रकृतिविकृत्यवगमश्च द्विदैवत्यस्यैकदेवत्यस्यादिसाम्येन बोध्यः । अन्यत्र पठितमन्त्राणामन्यत्र गमनमत आह प्रकृतिवदिति । यथा चोपकारा प्रकृतिरनुष्ठीयते तथा विकृतिरपीति तदर्थः तद्दर्शनेनोपकारातिदेशे तत् छन्दमानेन पदार्थो अभ्यतिदिश्यन्ते इतिकर्त्तव्यतायाश्चोपनायाश्चाकाङ्क्षत्वादेतन्मूलकमेव प्रकृतिवदितीति मीमांसकसरणिः । यागान्तर्गताश्च मन्त्राः । तत्र अग्निसम्बन्धिनिर्वापप्रकाशकमन्त्रस्याग्निपदस्य सूर्य्यसम्बन्धिनिर्वापप्रकाशनासमर्थत्वात्तदपहाय तत्स्थाने सूर्य्यायेत्यूह्यमित्याह तत्राग्नेरिति । मन्त्र ऊह्यत इति । यद्यप्यूहे न मन्त्रत्वं तथाप्येकदेशस्योहेऽपि अनेकपदसमुदाये मन्त्रत्वप्रत्यभिज्ञानात्तद्घटिते समुदाये मन्त्रत्वव्यवहारः, कर्म्मण आम्नातत्वेनेति बोध्यम । सोऽयमूहसूह्यः अन्येऽप्यूह्याः । ऊहस्य हि आर्त्विज्यलाभेन द्रव्यप्राप्तिद्वारा ऐहिकस्य सिद्धिः फलमिति बोध्यम् । भाष्ये लिङ्गपदं प्रकृत्यादेरुपलक्षणम् । यथायथमिति ।' अर्थप्रकाशनसामर्थ्यानतिक्रमेणेत्यर्थः" उद्योतः ।

सावशेषभेदस्तु अधिकरणमालादौ दृश्यः । द्रव्यप्रतिनिधौ तु नोहः । "तैल प्रतिनिधिं कुर्य्यात् घृतार्थे याज्ञिकोयदि । मत्स्यैव तदा होता ब्रूयात् घृतवतीमिति मीमा॰ कात्यायनसूत्रादौ प्रतिनिधिविषये ऊहाभावोदर्शितो यथा "अथेदं चिन्त्यते विहितद्रव्यस्याभावे द्रव्यान्तरे प्रतिनिधित्वेनोपात्ते छागाभावे मेषरूपे अनुयाचनप्रैषादौ किमूहं कृत्वा प्रतिनिहितद्रव्यशब्दस्य प्रयोगः कार्य्यः 'अग्नीषोमाभ्यां मेषस्य वपाया' इत्येवम् उत विहितद्रव्यशब्दस्यैव अग्नीषोमाभ्यां छागस्येत्येवमेवेति । तत्र मन्त्रेण द्रव्यमभिधेयम् न चानूहितः प्रतिनिहित द्रव्यं शक्नोत्यभिधातुम् तस्मादूहित्वा प्रतिनिहितद्रव्यवाचिशब्दस्य प्रयोगे प्राप्त आह" "शब्देऽविप्रतिपत्तिः" कात्या॰ १, ४, ६, "प्रतिनिधावुपात्तेऽपि विहितद्रव्यवाचिनि शब्दे अविप्रतिपत्तिरविपरिणामः अनूहो भवति अग्नीषोमाभ्यां छागस्य वपाया इत्यनूहितमेव मेषेऽपि प्रयोज्यम् न तु मेषस्येत्येव विपरिणतरूपमित्यर्थः कुतः ? प्रतिनिधिः श्रुतद्रव्यबुद्ध्या गृह्यते न तु द्रव्यान्तरबुद्ध्या अतश्छाग एवायमिति बुद्ध्या गृहीतत्वात्तच्छब्देनैवाभिधानम् । यद्यत्र मेषश्छागवत् साधनं भवेत्तत्तत्प्रकाशकम् मेषपदं प्रक्षिप्येत न त्वेवम्, किं तर्हि मेषगता ये छागावयवा एवात्र साधनम् ते च छागगता इव मेषगता अपि छागशब्देनैव प्रकाशयितुं शक्यन्त इत्यनूहेनैव प्रयोगः । यत्र तु द्रव्यान्तरं वचनेन विधीयते यथा "सारस्वतीं मेषीमिति" "ऐन्द्रं मेषमिति" "ऐन्द्रं औरभ्रं" इति तत्र द्रव्यान्तरबुद्धिर्भवति तत्र ऊहोऽपि भवति । नचात्रैवंविधं किमपि वचनमस्ति तस्माद्बहूनामवयवानां सामान्याच्छ्रुतद्रव्यमेवेदमिति बुद्ध्या मेषादिद्रव्यस्य छागादिप्रतिनिधित्वेनोपादानम् । तेन श्रुतद्रव्यशब्देनैवाभिधानं युक्तमिति साधूक्तम् शब्देऽविप्रतिपत्तिरिति । यत्र तु वचनेन द्रव्यान्तरं विधीयते तत्र ऊहो भवतीत्युक्तम् तेन सोमाभावे पूतीकानभिषुणुयादिति पूतीकानां वाचनिकत्वादूहो भविष्यतीत्याशङ्क्याह" कर्कः "सोमेन जात्यभावात्" का॰ सू॰ १॰ "सोमेनेति तृतीयैकवचनम् । सोमाभावे पूतीकेषूपात्तेषु सोमशब्देनैव पूतीकानामभिधानं कर्त्तव्यम् । "अंशुरंशुष्टे देव । सोम । प्यायतामित्येवम् न तु पूतीकाशब्देन । अथ वा सोमे इति सप्तम्येकवचनम् नेति निषेधः । सोमप्रतिनिधित्वेनोपात्तेषु अर्ज्जुनश्येनहृतपूतीकादिषु सोमे सोमशब्दे ऊहो न भवति कुतः जात्यभावात् जात्यन्तरबुद्ध्यभावात् नह्यत्र वचनेन द्रव्यान्तरं विधीयते किं तर्हि सोमाभावे यागस्यावश्यकर्त्तव्यत्वादनेकेषु कुशतृणेष्वोषधितृणेषु च प्राप्तेषु पूतीकादेर्नियमः क्रियते तेनैन्द्रमेषद्रतिवदू वाचनिकजात्यन्तराभावादतोऽप्यूहो न भवति' कर्कः ।

"छाग । त्व वपित्वपेणेत्यादिमन्त्रे च बहुपशुघाते न बहुत्वोहः । तदेतत् ति॰ त॰ "बहुपशुघातेऽपि मन्त्रे एकवचनान्त एव प्रयोज्यः न बहुवचनोहः' । "नर पशुत्वमागतम्" इत्यत्र भार्य्यां स्त्रीत्वोहाभाववत् अतएव सपत्नीकयजमानप्रयोगेऽपि "पत्नीं सन्नह्येति" मन्त्र एकवचनान्त एवेति । ऊह प्रकृत्य "प्रकृतावपूर्व्वत्वात्" कात्यायनेनोहस्य प्रकृतौ प्रतिषेधात् । विकृतावेवोहः' । "ऊहोऽपूर्व्वांतृप्तेक्षणमिति जै॰ तत्रत्वात् न चान्यथाच वैभक्तिकार्थापेक्षया प्राथमिकत्वेन बलवतः प्रातिपदिकार्थस्य समन्वितत्वेनाविरोधात् । एवञ्च प्रकृतौ नररूपवत्पशौ बहुवचनोहाभावात् छागादौ विकृतिभूतेऽपि न बहुवचनोहः किन्तु एकवचनमात्रमिति" वदता रघुनन्दनेन तथा समर्थितम् । संकल्पादिवाक्ये तु ऊह इति भेदः । ऋत्विगादिप्रयोगे च अस्मदादिपदघटिते "दातारोनोऽभिवर्द्धन्तामित्यादि" मन्त्रेऽपि नोहः तैस्तथा प्रयोगेऽपि यजमानगतानामेव तत्तत्फलानामवगम इत्याकरे प्रपञ्चः । तथाचासमवेतार्थस्य समन्वयाय मन्त्रे समवेतार्थकरणरूपमपूर्व्वं स्रोतमेवमूहः । ५आरोपे ६समूहने च । "इमे मनुष्या दृश्यन्ते ऊहापोहविशारदा " भा॰ अनु॰ १४५ अ॰ "ऊहापोहाभ्यां तत्त्वावधारणम्" मातङ्ग॰ भा॰ ।

ऊहगान न॰ सामगानग्रन्थभेदे ऊहगीतिरप्यत्र स्त्री ।

ऊहा स्त्री ऊह भ स्त्रीत्वात् टाप् । १अध्याहारे २ऊहशब्दार्थे

ऊहिनी स्त्री ऊह-णिनि । समवायाम् "अथात् परस्तस्यादेष्टि अक्षौहिणी सेना ।

ऊह्य त्रि॰ ऊह-यत् । १तर्कणीये २उन्नायनीये ३अध्याहार्य्ये ४मीमांसकोक्तोहविषये च । अनीयर् । ऊहनीय तदर्थे त्रि॰

ऊह्यगान न॰ सामगानग्रन्थभेदे ।

इति वाचस्पत्ये अकारादिशब्दार्थसङ्कलनम् ।

—ooo—

मर्णः, तज्जनको यदि विश्वस्तः मृतस्तदास्य पुत्रेण मूलमेव दातव्यं न वृद्धिरिति व्याख्येयम् । यत्र दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वा बन्धकमपि गृहीत्वा प्रतिभूर्जातः तत्पुत्रा अपि तस्मादेव बन्धकात् प्रातिभाव्यायातमृणं दद्युरेव । यथाह कात्यायनः "गृहीत्वा बन्धकं यत्र दर्शनेऽस्य स्थितो भवेत् । विना पित्रा धनात्तस्मात् दाप्यः स्यात् तदृणं सुतः" इति । दर्शनग्रहणं प्रत्ययोपलक्षणम् विना पित्रा पितरि प्रेते दूरदेशगते वेति । यत्रानेकप्रतिभूसम्भवस्तत्र कथं दातव्यमित्याह । "बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् । एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि" या० । यद्येकस्मिन् प्रयोगे द्वौ बहवो वा प्रतिभुवस्तदृणं विभज्य स्वांशेन दद्युः । एकच्छायाश्रितेषु प्रतिभूषु एकस्याधमर्णस्य छाया सादृश्यं तामाश्रिता एकच्छायाश्रिताः अधमर्णो यथा कृत्स्नद्रव्यदानाय स्थितस्तथा दानप्रतिभुवोऽपि प्रत्येकं कृत्स्नदानाय स्थिता एवं दर्शनप्रत्यये च तेष्वेकच्छायाश्रितेषु प्रतिभूषु सत्सु धनिकस्योत्तमर्णस्य यथारुचि यथाकामम् । अतश्च धनिको वित्ताद्यपेक्षया स्वार्थं यं प्रार्थयते स एव कृत्स्नं दद्यान्नांशतः । एकच्छायाश्रितेषु यदि कश्चिद्देशान्तरं गतस्तत्पुत्रश्च सन्निहितस्तदा धनिकेच्छया स सर्वं दाप्यः मृते तु कस्मिंश्चित् स्वपित्रंशमेवावृद्धिकं दाप्यः । यथाह कात्यायनः "एकच्छायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते । प्रोषिते तत्सुतः सर्वं पित्र्यंशं तु मृते सति" प्रातिभाव्यर्णदानविधिरुक्तः प्रतिभूदत्तस्य प्रतिक्रियाविधिमाह । "प्रतिभूर्दापितो यत्तु प्रकाशं धनिनो धनम् । द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत्" या० । यद्धनं प्रतिभूस्तत्पुत्रो वा धनिकेनोपपीडितः प्रकाशं सर्वजनसमक्षं राज्ञा धनिनो दापितो न पुनर्द्वैगुण्यलोभेन स्वयमेत्य दत्तम् । यथाह नारदः "यच्चर्णं प्रतिभूर्दद्याद्धनिकेनोपपीडितः । ऋणिकस्तु प्रतिभुवे द्विगुणं प्रतिदापयेदिति" । ऋणिकैरधमर्णैस्तस्य प्रतिभुवस्तद्द्रव्यं द्विगुणं प्रतिदातव्यं स्यात् । तच्च कालविशेषमनपेक्ष्य सद्य एव द्विगुणं दातव्यम् वचनारम्भसामर्थ्यात् । एतच्च हिरण्यविषयम् । ननु इदं वचनं द्वैगुण्यमात्रं प्रतिपादयति तच्च पूर्वोक्तकालकलाक्रमाबाधेनाप्युपपद्यते यथा जातेष्टिविधानं शुचित्वाबाधेन । अपि च सद्यः सवृद्धिकदानपक्षे पशुस्त्रीणां सद्यः सन्तत्यभावान्मूलदानमेव प्राप्नोतीति तदसत् "वस्त्रधान्यहिरण्यानां चतुस्त्रिद्वि-गुणा परा" इत्यनेनैव कालकलाक्रमेण द्वैगुण्यसिद्धेर्द्वैगुण्यमात्रविधाने इदं वचनमनर्थकं स्यात् । पशुस्त्रीणान्तु कालक्रमपक्षे सन्तत्यभावे स्वरूपदानमेव । यदा प्रतिभूरपि द्रव्यदानानन्तरं कियता कालेनाधमर्णेन संघटते तदा सन्ततिरपि सम्भवत्येव यद्वा पूर्व्वसिद्धसन्तत्या सह पशुस्त्रियो दास्यतीति न किञ्चिदेतत् । अथ प्रातिभाव्यं प्रीतिकृतमतश्च प्रतिभुवा दत्तं प्रीतिदत्तमेव न च प्रीतिदत्तस्य याचनात् प्राक् वृद्धिरस्ति यथाह "प्रीतिदत्तं तु यत्किञ्चिद्वर्द्धते न त्वयाचितम् । याच्यमानमदत्तञ्चेद्वर्द्धते पञ्चकं शतमिति" । अतश्च प्रीतिदत्तस्यायाचितस्यापि दानदिवसादारभ्य यावत् द्विगुणं कालक्रमेण वृद्धिरित्यनेन वचनेनोच्यत इति । तदप्यसत् अस्यार्थस्यास्माद्वचनादप्रतीतेः द्विगुणं प्रतिदातव्यमित्येतावदिह प्रतीयते तस्मात् कालक्रममनपेक्ष्यैव द्विगुणं प्रतिदातव्यं वचनारम्भसामर्थ्यादिति सूक्तम् । प्रतिभूदत्तस्य सर्वत्र द्वैगुण्ये प्राप्तेऽपवादमाह "सन्ततिः स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च । वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणस्तथा" या० । हिरण्यद्वैगुण्यवत् कालानादरेणैव स्त्रीपश्वादयः प्रतिपादितवृद्ध्या दाप्याः श्लोकस्तु व्याख्यातप्रायः यस्य द्रव्यस्य यावती वृद्धिः पराकाष्ठोक्ता तद्द्रव्यं प्रतिभूदत्तं खादकेन तया वृद्ध्या सह कालविशेषमनपेक्ष्य सद्यो दातव्यमिति तात्पर्यार्थः । यदा तु दर्शनप्रतिभूः सम्प्रतिपन्ने कालेऽधमर्णं दर्शयितुमसमर्थस्तदा तदन्वेषणाय तस्य पक्षत्रयं (अवधिभूतम्) दातव्यम् । तत्र यदि दर्शयति तदा मोक्तव्योऽन्यथा प्रस्तुतं धनं दाप्यः "नष्टस्यान्वेषणार्थन्तु देयं पक्षत्रयं परम् । यद्यसौ दर्शयेत् तत्र मोक्तव्यः प्रतिभूर्भवेत् । काले व्यतीते प्रतिभूर्यदि तं नैव दर्शयेत् । निबन्धं दापयेत्तन्तु प्रेते चैष विधिः स्मृतः" इति कात्यायनवचनात् । सज्जने विशेषनिषेधश्च तेनैवोक्तः । "न स्वामी न च वै शत्रुः स्वामिनाधिकृतस्तथा । निरुद्धो दण्डितश्चैव संदिग्धश्चैव न क्वचित् । नैव रिक्थी न मित्रञ्च नचैवात्यन्तवासिनः । राजकार्य्यनियुक्तश्च ये च प्रव्रजिता नराः । न शक्तो धनिने दातुं दण्डं राज्ञे च तत्समम् । जीवन्नापि पिता यस्य तथैवेच्छाप्रवर्त्तकः । नाविज्ञातो ग्रहीतव्यः प्रतिभूस्तत्क्रियां प्रतीति" सन्दिग्धोऽभियुक्तः । अत्यन्तवासिनो नैष्ठिकब्रह्मचारिणः । इति प्रतिभूविधिः । ऋणप्रयोगे द्वौ "विश्वासहेतू प्रतिभूराधिश्च यथाह नारदः । विश्रम्भहेतू द्वावत्र प्रतिभूराधिरेव चेति" । प्रतिभूर्निरूपितः " मिता०

साक्षिभ्यो देयद्रव्यमदर्शयित्वैव अधमर्णेन मया एतावती वृद्धिरियन्मूलमित्येवमङ्गीकारेण देयमृणं परिवर्त्तयेत् सवृद्धिकत्वेनाधिकतया अन्यथाभावमापादयेत् तदेव पत्रे साक्षिमल्लेख्यम् एतच्च यावतीं वृद्धिं तदा दातुं शक्नोति तावतीं दत्त्वा लेख्यं कार्य्यं तथाकृते सति द्विगुणातिक्रमेण वृद्धिर्भवतीत्यर्थः तथाकृते च वृद्धेरपि वृद्धिः तस्य सवृद्धिकस्य मूलस्थानीयत्वात् यथाह वृह० "पूर्णावधौ शान्तलाभमृणमुद्धाह्य चक्रमो। कारयेद्वा ऋणी लेख्यं चक्रवृद्धिव्यवस्थया। द्विगुणस्योपरि यथा चक्रवृद्धिः प्रवर्त्तते। भोगलाभस्तथा तत्र मूलं स्यात् सोदयमृणम्" ऋणग्रहणोपायाश्च मिता० उक्ताः उपायशब्दे च १२५५पृ० विस्तरेण दर्शिता। अवधिमध्ये सवृद्धिकसर्व्वदानासम्भवे क्रमेण दाने सलेख्यप्रयोगे लेख्यपृष्ठे लिखित्वैव दानप्रकारमाह याज्ञ०। "लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वादत्त्वर्णिको धनम्। धनी चोपगतं दद्यात् स्वहस्तपरिचिह्नितम्" उपगतशब्दे १२०१पृ० व्याख्यातम्। विष्णुः "अधमर्णदाने लेख्याभिधाने चोत्तमर्णः स्वलिखितं दद्यात्"(रर्हिद) प्रवेशपत्रादाने विशेषमाह नारद। "गृहीत्वोपगतं दद्यादृणिकायोदयं धनी। अददद्याच्यमानश्च शेषहानिमवाप्नुयात्" "उदयं प्राप्तम्। सर्व्वस्वदाने तु ऋणलेख्यच्छेदनमाह "दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै वान्यत्तु कारयेत्। साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकम्" या०।

तत्राशक्तौ विशेषमाह कात्या० "धनदानासहं बुद्ध्वा स्वाधीनं कर्म्म कारयेत्। अशक्तौ बन्धनागारे प्रवेश्यो ब्राह्मणादृते"। अशुभकर्म्मकारणं बन्धनागारप्रवेशनञ्च राजावेदनपूर्व्वकमेव कार्य्यमन्यथा दण्डमाह कात्या०। "यदि छद्मादनादिष्टमशुभं कर्म्म कारयेत्। प्राप्नुयात् साहसं पूर्व्वमृणान्मुच्येत चर्णिकः' अनादिष्टम् राज्ञाऽनिवेदितम्। ऋणदातृपुत्रं विशेषयति कात्या० "ऋणं तु दापयेत् पुत्रम् यदि स्यान्निरुपद्रवः। द्रविणार्हश्च धुर्य्यश्च नान्यथा दापयेत् सुतम्। व्यसनाभिप्लुते पुत्रे बाले वा यत् प्रदृश्यते। द्रव्यं तद्दापयेत्तु तस्याभावे पुरञ्जय!" कुटुम्बार्थे कृतर्णे विशेषमाह वृह० "पितृव्यभ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः। यत् गृहीतं कुटुम्बार्थे तद् गृही दातुमर्हति'। नारदः "शिष्यान्तेवासिदासस्त्रीप्रेष्यकर्म्मकरैश्च यत्। कुटुम्बहेतोरुत्क्षिप्तं दातव्यं तत् कुटुम्बिना" शिष्य. वेदशिष्यः अन्तेवासी शिल्पशिष्य।

'कुटुम्बार्थमृणं दर्शयति" कात्या० "कुटुम्बार्थेऽसमर्थे तु गृहीतं व्याधिते तथा। उपप्लवनिमित्तं च विद्यादापत्कृतन्तु तत्। कन्यावैवाहिके चैव प्रेतकार्य्येषु यत् कृतम्। एतत् सर्व्वं प्रदातव्यं कुटुम्बेन कृतं प्रभो"। पुत्रकृते विशेषमाह नार० "पितुरेव नियोगाद्वा कुटुम्बभरणाय वा। कृतं वा यदृणं कृच्छ्रे दद्यात् पुत्रस्य तत् पिता"। स्त्रियाः पतिकृतर्णदाने विशेषमाह कात्या० "भर्त्तुकामेन या भर्त्रा उक्ता देयमृणं त्वया। प्रतिपन्ना च सा दाप्या धनं यद्याश्रितं स्त्रियाम्"। नार० "दद्यादपुत्रा विधवा नियुक्ता या मुमूर्षुणा। या वा तद्रिक्थमादद्यात् यतो रिक्थमृणं ततः"। मातुर्निर्धनत्वेऽपि तत्कृतर्णं पुत्रेण देयमाह" नारदः "पुत्रिणी तु समुत्सृज्य पुत्रं स्त्री यान्यमाश्रयेत्। तस्या ऋणं हरेत् सर्व्वं निःस्वाया पुत्र एव तु"। सधनत्वे तामुद्वोढैव दद्यात्' यथाह कात्या० "बालपुत्राधिकार्थो स्यात् भर्त्तारं यान्यमाश्रिता। आश्रितस्तमृणं दद्यात् बालपुत्राविधिः स्मृतः"। अविभक्तर्णे विशेषमाह विष्णुः 'अविभक्तैः कृतमृणं यस्तिष्ठति स दद्यात्"। नारद० "पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम्। मात्रा वा यत् कुटुम्बार्थे दद्युस्तत् सर्व्वरिक्थिनः" अविभक्तकाले कुटुम्बार्थे कृतमृणं विभक्तैरपि देयमाह मनुः। "ग्रहीता यदि नष्टः स्यात् कुटुम्बार्थे कृतो व्ययः। दातव्यं बान्धवैस्तत् स्यात् प्रविभक्तैरपि स्वतः"। कामकृतर्णमाह कात्या०। "लिखितं सक्रकं वापि देयं यत्तु प्रतिश्रुतम्। परद्रव्यं स्त्रियै तत्तु विद्यात् कामकृतं ऋणम्" सक्रकं लेखरहितम्। अनेकधनिसमवाये विशेषमाह कात्या०। "नानर्णसमवाये तु यद्यत् पूर्व्वकृतं भवेत्। तत्तद्देयापतो देयं राज्ञः स्याच्छ्रोत्रियात् परम्। एकाहे लिखितं यत्र तत्र कुर्यादृणं समम्। ग्रहणं रक्षणं लाभमन्यथा तु यथाक्रमम्"। भिन्नदिवसे कृतं श्रोत्रियपूर्व्वकं देयम्। एकदिनकृतनानर्णसमवाये युगपद्देयम् धनाल्पत्वबहुत्वयोस्तु तदनुसारेण भागं परिकल्प्य देयमित्यर्थः। अत्र विशेषमाह कात्या० 'यस्य द्रव्येण यत्पण्यं साधितं यो विभावयेत्। तद्द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा" यदुत्तमर्णात् द्रव्यं गृहीत्वा वाणिज्यादिकं करोति तस्मात् लब्धधनं तस्मै एव देयं तत्सत्त्वे नान्यस्मै इत्यर्थः। पैतामहपितृर्णयोरपि देयतामाह वृह० "पित्र्यं पूर्व्वमृणं देयं पश्चादात्मीयमेव च। तयोः पैतामहं पूर्व्वं देयमेवमृणं

उपरेता भव कालो वामदेवो धृतव्रत" भाग० २,१२,१० ।

**ऋतनि** त्रि० ऋतं जलं यज्ञं वा नयति नी+क्विप् वेदे नि० ह्रस्व । आदित्ये तस्य जलदायकत्वेन उदयेन यज्ञप्रवर्त्तकत्वेन च तथात्वम् । "यो राजभ्य ऋतनिभ्यो ददाश" ऋ० २,२७,१२ । लोके तु ऋतनीरित्येव ।

**ऋतपर्ण** सूर्य्यवंश्ये नृपभेदे । "भगीरथसुतो राजा" इत्युपक्रम्य "अयुताजित्सुतस्त्वासीदृतपर्णो महायशाः । दिव्याक्षहृदयज्ञोऽयं राजा नलसखो बली । ऋतपर्णसुतस्त्वासीदार्त्तपर्णिर्महीपतिः" हरिवं० १५अ० । तस्य च नलेन सख्यमक्षहृदयज्ञत्वञ्च भा० व० ७२अ० दर्शितं यथा "एवमुक्तो नलेनाथ तदा भाङ्गासुरिर्नृप । आससाद वने राजन् ! फलवन्तं विभीतकम् । तं दृष्ट्वा बाहुकं राजा त्वरमाणोऽभ्यभाषत । ममापि सूत ! पश्य त्वं सङ्ख्याने परमं बलम् । सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन । नैकत्र परिनिष्ठास्ति ज्ञानस्य पुरुषे क्वचित् । वृक्षेऽस्मिन् यानि पर्णानि फलान्यपि च बाहुक ! । पतितान्यपि यान्यत्र तत्रैकमधिकं शतम् । एकपत्राधिकं पत्रं फलमेकञ्च बाहुक ! । पञ्चकोट्योऽथ पत्राणां द्वयोरपि च शाखयोः । प्रचिनुह्यस्य शाखे द्वे याश्चाप्यन्याः प्रशाखिकाः । आभ्यां फलसहस्रे द्वे पञ्चोनं शतमेव च । ततो रथमवस्थाप्य राजानं बाहुकोऽब्रवीत् । परोक्षमिव मे राजन् ! कत्थसे शत्रुकर्षण ! । प्रत्यक्षमेतत् कर्त्तास्मि शातयित्वा विभीतकम् । अथ ते गणिते राजन् ! विद्यते न परोक्षता । प्रत्यक्षं ते महाराज ! शातयिष्ये विभीतकम् । अहं हि नाभिजानामि भवेदेवं न वेति वा । सङ्ख्यास्यामि फलान्यस्य पश्यतस्ते जनाधिप ! । मुहूर्त्तमपि वार्ष्णेयो रश्मीन् यच्छतु वाजिनाम् । तमब्रवीन्नृपः सूत ! नायं कालो विलम्बितुम् । बाहुकस्त्वब्रवीदेनं परं यत्नं समास्थितः । प्रतीक्षस्व मुहूर्त्तं त्वमथ वा त्वरते भवान् । एष याति शिवः पन्था याहि वार्ष्णेयसारथिः । अब्रवीदृतुपर्णस्तु सान्त्वयन् कुरुनन्दन ! । त्वमेव यन्ता नान्योऽस्ति पृथिव्यामपि बाहुक ! । त्वत्कृते यातुमिच्छामि विदर्भान् हयकोविद ! । शरणं त्वां प्रपन्नोऽस्मि न विघ्नं कर्त्तुमर्हसि । कामञ्च ते करिष्यामि यन्मां वक्ष्यसि बाहुक ! । विदर्भान् यदि यात्वाद्य सूर्य्यं दर्शयितासि मे । अथाब्रवीद्बाहुकस्तं सङ्ख्याय च विभीतकम् । ततो विदर्भान् यास्यामि कुरुष्वैवं वचो मम । अकाम इव तं राजा गणयस्वेत्युवाच ह । सोऽवतीर्य्य रथात्तूर्णं शातयामास तं द्रुमम् । ततः स विस्मयाविष्टो राजानमिदमब्रवीत् । गणयित्वा यथोक्तानि तावन्त्येव फलानि च । अत्यद्भुतमिदं राजन् ! दृष्टवानस्मि ते बलम् । श्रोतुमिच्छामि तां विद्यां यथैतज्ज्ञायते नृप ! । तमुवाच ततो राजा त्वरितो गमने नृप । विद्ध्यक्षहृदयज्ञं मां सङ्ख्याने च विशारदम् । बाहुकस्तमुवाचाथ देहि विद्यामिमां मम । मत्तोऽपि चाश्वहृदयं गृहाण पुरुषर्षभ ! । ऋतुपर्णस्ततो राजा बाहुकं कार्य्यगौरवात् । हयज्ञानस्य लोभाच्च तं तथेत्यब्रवीद्वचः । यथोक्तं त्वं गृहाणेदमक्षाणां हृदयं परम् । निक्षेपो मेऽश्वहृदयं त्वयि तिष्ठतु बाहुक !" । नलस्य बाहुकच्छद्मरूपतामपगमय्य अन्ते, उक्तं यथा "ऋतुपर्णोऽपि शुश्राव बाहुकच्छद्मिनं नलम् । दमयन्त्या समायुक्तं जहृषे च नराधिप । समानाय्य नलं राजा क्षमयामास पार्थिवम् । स च तं क्षमयामास हेतुभिर्बुद्धिसम्मतः । स सत्कृतो महीपालो नैषधं विस्मिताननः । उवाच वाक्यं तत्त्वज्ञो नैषधं वदतां वरः । दिष्ट्या समेतो दारैः स्वैर्भवानित्यभ्यनन्दत । कच्चित्तु नापराधं ते कृतवानस्मि नैषध ! । अज्ञातवासं वसतो मद्गृहे वसुधाधिप ! । यदि वा बुद्धिपूर्वाणि यद्यबुद्धानि कानिचित् । मया कृतान्यकार्य्याणि तानि त्वं क्षन्तुमर्हसि । नल उवाच । न मेऽपराधं कृतवांस्त्वं स्वल्पमपि पार्थिव ! । कृतेऽपि च न मे कोपः क्षन्तव्यं हि मया तव । पूर्वं ह्यपि सखा मेऽसि सम्बन्धी च जनाधिप ! । अत ऊर्द्ध्वन्तु भूयस्त्वं प्रीतिमाहर्त्तुमर्हसि । सर्वकामैः सुविहितैः सुखमस्म्युषितस्त्वयि । न तथा स्वगृहे राजन् ! यथा तव गृहे सदा । इदञ्चैव हयज्ञानं त्वदीयं मयि तिष्ठति । तदुपाकर्त्तुमिच्छामि मन्यसे यदि पार्थिव ! । एवमुक्त्वा ददौ विद्यामृतुपर्णाय नैषधः । स च तां प्रतिजग्राह विधिदृष्टेन कर्म्मणा । गृहीत्वा चाश्वहृदयं राजन् ! भाङ्गासुरिर्नृप ! । निषधाधिपतेश्चापि दत्त्वाक्षहृदयं नृप !" । भा० व० ७५ अ० । "कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम्" भा० "ऋतपर्णमाहृतम्" भा० व० ।

**ऋतपेय** पु० ऋतं स्वर्गादिफलं पेयं भोग्यमस्मात् । एकाहे यागभेदे । "यः कामयेत मे विप्रुषः पाप्मन इयादिति स ऋतपेयेन यजेत" आ० श्रौ० ९,७,२५ । "नि ह वाव भावो मे विप्रुषम् य पाप्मनोऽनि, विप्रुषमिवा भक्ष्येयमिति कामयेत स ऋतपेयनामकेन एकाहेन यजेत ऋतमपि

पाप मयि मो तिष्ठेत् इति य कामयेत स ऋतपेशेन यजेतेत्यर्थः” नारा०ह०। सप्तदशस्तोमकेषु पञ्चसु क्रतुषु मध्ये स्वर्गकामकर्त्तव्ये २क्रतुभेदे च। “सप्तदशाः पञ्च” कात्या० २२ ८,६। इत्युपक्रम्य “स्वर्गकामस्यर्त्तपेयः” १० सूत्रे दर्शित।

**ऋतपेशस्** पु० ऋतमुदकं पेशोरूपमस्य। जलात्मके वरुणे “वरुणाय ऋतपेशसे दधीत” ऋ० ५,६६,१।

**ऋतपा** पु० ऋतं यज्ञियहविः पाति पा–वा० क्विप्। १यज्ञियहविर्भोजके देवे। ऋतं सत्यं सुरूपमस्येति। २सत्यस्वरूपे देवे च। “अन्तर्यद्दमिनो वामृतप्सू” ऋ० १,१८०,२। “ऋतप्सू यज्ञियहविर्भक्षयितारौ सत्यस्वरूपौ वा” भा०।

**ऋतम्** अव्य० ऋत–कमि। सत्यमित्यर्थे। ऋतम्भर।

**ऋतम्भर** पु० ऋतमित्यव्ययं तद्बिभर्त्ति भृ–अच्। १सत्यपालके परमेश्वरे “ततोगतो ब्रह्मगिरोपहूत ऋतम्भरध्याननिवारिताघ” भाग० ६,१२,१२। प्लक्षद्वीपान्तर्गते २नदीभेदे स्त्री। तत्र वर्षाण्यभिधाय “तेषु गिरयोनद्यश्च सप्तैवाभिज्ञाताः” इत्युक्त्वा “अरुणा नृम्णाङ्गिरसी सावित्री सुप्रभाता ऋतम्भरा सत्यम्भरेति महानद्यः” भाग० ५,२०,६। पात० उक्ते ३विपर्य्यासशून्ये समाधिस्थप्रज्ञाभेदे च स्त्री “ऋतम्भरा तत्र प्रज्ञा” सू० “तस्मिन् समाहितचित्तस्य या प्रज्ञा जायते तस्या ऋतम्भरेति संज्ञा भवति अन्वर्था च सा सत्यमेव बिभर्त्ति न तत्र विपर्य्यासज्ञानगन्धोऽप्यस्तीति। तथा चोक्तम् “आगमेनानुमानेन ध्यानाभ्यासरसेन च। त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तममिति” पा०भा०। तस्या शाब्दादिभ्यो विशेषादिकमुक्तं तत्रैव। “श्रुतानुमानप्रज्ञाभ्यामन्यविषयविशेषार्थत्वात्” सू०। “श्रुतमागमविज्ञानं तत् सामान्यविषयं न ह्यागमेन शक्यो विशेषोऽभिधातुं कस्मात्? नहि विशेषेण कृतसङ्केतः शब्द इति। तथानुमानं सामान्यविषयमेव यत्र प्राप्तिस्तत्र गतिः यत्राप्राप्तिस्तत्र न भवति गतिरित्युक्तम् अनुमानेन च सामान्येनोपसंहारः तस्मात् श्रुतानुमानविषयो न विशेषः कश्चिदस्तीति न चास्य सूक्ष्मव्यवहितविप्रकृष्टस्य वस्तुनो लोकप्रत्यक्षेण ग्रहणम्। न चास्य विशेषस्याप्रमाणकस्याभावोऽस्तीति समाधिप्रज्ञानिर्ग्राह्य एव स विशेषो भवति भूतसूक्ष्मगतो वा पुरुषगतो वा तस्मात् श्रुतानुमानप्रज्ञाभ्यामन्यविषया सा प्रज्ञा विशेषार्थत्वादिति। समाधिप्रज्ञाप्रतिलम्भे योगिनः प्रज्ञाकृतः संस्कारो नवो नवोजायते। समाधिप्रज्ञाभव संस्कारोव्युत्थानसंस्काराशयं बाधते व्युत्थानसंस्काराभिभवात् तत्प्रभवाः प्रत्यया न भवन्ति पात० भा०।

“तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी” सू०। “प्रत्ययनिरोधे समाधिरुपतिष्ठते ततः समाधिजा प्रज्ञा ततः प्रज्ञाकृताः संस्कारा इति नवोनवः संस्काराशयो जायते ततः प्रज्ञा ततश्च संस्कारा इति। कथमसौ संस्कारातिशयश्चित्तं साधिकारं न करिष्यतीति? न ते प्रज्ञाकृताः संस्काराः क्लेशक्षयहेतुत्वात् चित्तमधिकारविशिष्टं कुर्व्वन्ति चित्तं हि ते स्वकार्य्यादवसादयन्ति। ख्यातिपर्य्यवसानं हि चित्तचेष्टितमिति” पात०भा०। विवृतञ्चैतत् वाचस्पतिना। “अत्रैव योगिजनप्रसिद्धान्वर्थसंज्ञाकथनेन योगिसंमतिमाह। ऋतम्भरेति आगमेनेति वेदविहितं श्रवणमुक्तम्। अनुमानेनेति मननं, ध्यानं चिन्ता तत्राभ्यासः पौनःपुन्येनानुष्ठानं तस्मिन् रस आदरः तदनेन निदिध्यासनमुक्तम्। स्यादेतत् आगमानुमानगृहीतार्थविषयभावनाप्रकर्षजन्मानिर्विचारा आगमानुमानविषयमेव गोचरयेत् न खल्वन्यविषयानुभवजन्मा संस्कारः शक्तोऽन्यत्र ज्ञानं जनयितुम्, अतिप्रसङ्गात् तस्मान्निर्विचारा चेदृतम्भरा आगमानुमानयोरपि तत्प्रसङ्ग इत्यत आह। श्रुतानुमानेत्यादि। बुद्धिसत्त्वं हि प्रकाशस्वभावं सर्व्वार्थदर्शनसमर्थमपि तमसावृतं यत्रैव रजसोद्घाट्यते तत्रैव गृह्णाति यदा त्वभ्यासवैराग्याभ्यामपास्तरजस्तमोमलमनवद्यवैशारद्यमुद्द्योतते तदास्यातिपतितसमस्तमानमेयसीम्नः प्रकाशसत्त्वे सति किं नाम यन्न गोचर इति भावः। व्याचष्टे श्रुतमागमज्ञानं तत्सामान्यविषयं कस्मात्? नह्यागमेन शक्यो विशेषोऽभिधातुं, कुतः? यस्मादानन्त्याद्व्यभिचाराच्च न विशेषेण कृतसङ्केतः शब्दः यस्मादस्य विशेषेण सह वाच्यवाचकसम्बन्धः प्रतीयेत न च वाक्यार्थोऽपीदृशो विशेष सम्भवति। अनुमानेऽपि लिङ्गलिङ्गिसम्बन्धग्रहणाधीनजन्मनि गतिरेषैवेत्याह तथानुमानमिति। यत्र प्राप्तिरिति यत्रतत्रशब्दयो स्थानपरिवर्त्तनेन व्याप्यव्यापकभावो गमयितव्यः। अतोऽत्रानुमानेन सामान्येनोपसंहारः। उपसंहरति तस्मादिति। अस्तु तर्हि सम्बन्धग्रहानपेक्षं लोकप्रत्यक्षं न तत् सामान्यविषयमित्यत आह। न चास्येत्यादिना भूत् सम्बन्धग्रहाधीनं, लोकप्रत्यक्षमिन्द्रियाधीनत्वात्। नचेन्द्रियाणामस्तिचक्षुर् योग्यतेत्यर्थ ननु च यद्या-

गमानुमानप्रत्यक्षागोचरः विशेषः तर्हि नास्ति प्रमाणविरहादित्यत आह न चेति। न हि प्रमाणं व्यापकं कारणं वा प्रमेयस्य, येन तन्निवृत्तौ निवर्त्तेत। न खलु कलावतश्चन्द्रस्य परभागवर्त्तिरूपविशेषं प्रति सन्दिहते प्रामाणिका इत्यर्थः। तस्मात् समाधिप्रज्ञानिर्ग्राह्य एवेति। अत्र च विशेषाध्यासिताः परमाणव आत्मानश्च प्रातिस्विकविशेषशालिनः द्रव्यत्वे सति परस्परं व्यावर्त्तमानत्वात् ये द्रव्यत्वे सति परस्परं व्यावर्त्तन्ते ते प्रातिस्विकविशेषशालिनः यथा घटकुण्डलादय इत्यनुमानेनागमेन च ऋतम्भरप्रज्ञोपदेशपरेण यद्यपि विशेषो निरूप्यते तदनिरूपणे वचनं स्यात् न्यायसाम्यात् तथाप्यदूरविप्रकर्षेण तत्त्वस्य कथञ्चिद्रूपेऽवरयत श्रुतानुमाने न साक्षात्कारमिव सत्त्वादि पदानि विशेषस्यायोगितया, तस्मात् सिद्धं श्रुतानुमानप्रज्ञाभ्यामन्यविषयेति। स्यादेतत् भवतु परमार्थविषयसम्प्रज्ञातो यथोक्तोपायाभ्यासात् व्यामादिना तु व्युत्थानसंस्कारेण निगूढनिबिडतया प्रतिबन्धनीया समाधिप्रज्ञा वातप्रावर्त्तमध्यवर्त्तिप्रदीपपरमाणुरिवेति शङ्कामपनेतु सूत्रमवतारयति समाधिप्रज्ञेति सूत्रं पठति। तज्ज इति तदिति निर्विचारा समापत्तिं परामृशति अन्येति। व्युत्थानमाह। भूतार्थपक्षपातो हि धियां स्वभावः, तावदेवेयमनवस्थिता भ्राम्यति न यावत् तत्त्वं प्रतिलभते तत्प्रतिलम्भे तत्र स्थितपदा सती संस्कारबुद्धि संस्कारबुद्धिचक्रक्रमेणावर्त्तमाना सती अनादिमप्यतत्त्वसंस्कारबुद्धिक्रमं बाधत एवेति तथा च बाह्या अप्याहुः "निरुपद्रवभूतार्थस्वभावस्य विपर्य्ययैः। न बाधो नादिमत्त्वेऽपि बुद्धेस्तत्पक्षपाततः" इति। स्यादेतत् समाधिप्रज्ञातोऽस्तु व्युत्थानजन्यसंस्कारस्य निरोधः समाधिजस्तु संस्कारातिशयः समाधिप्रज्ञाप्रसवे हेतुरस्त्यऽधिकस्तु इति तदवस्थैव चित्तस्य साधिकारतेति चोदयति कथमसाविति। परिहरति न त इति। चित्तस्य हि कार्य्यद्वयं शब्दाद्युपभोगः विवेकख्यातिश्चेति तत्र क्लेशकर्म्माशयसहितं शब्दाद्युपभोगे वर्त्तते प्रज्ञाप्रभवसंस्कारोन्मूलितनिखिलक्लेशकर्म्माशयस्य तु चेतसोऽपसितप्रायाधिकारभावस्य विवेकख्यातिमात्रमवशिष्यते कार्य्यम्। तस्मात् समाधिसंस्काराश्चित्तस्य न भोगाधिकारहेतवः प्रत्युत तत्परिपन्थिन इति स्वकार्य्याद्भोगलक्षणादवसादयन्ति अवसन्नं कुर्व्वन्ति इत्यर्थः। कस्मात्? विवेकख्यातिपर्य्यवसानं हि चित्तचेष्टितम्। तावद्धि भोगाय चित्तं चेष्टते न यावद्विवेकख्यातिमनुभवति सञ्जातविवेकख्यातेस्तु क्लेशनिवृत्तौ न भोगाधिकार इत्यर्थः। तदत्र भोगाधिकारप्रशान्ति प्रयोजनं प्रज्ञासंस्काराणामित्युक्तम्" "तत्र प्रथितचित्तप्रसादमीश्वरस्तोमैत्र्यादिभावना प्रसादजं ते विशोका ज्योतिष्मती नाम चित्तवृत्तिः, समापयत् परमुस्ल तत्प्रसादजं ऋतम्भराभिधानप्रज्ञा साधनोपाधेय" वी० च०।

**ऋतव्य** त्रि० ऋतुसदभिमानी देवो देवताऽस्य यत्। ऋतुदेवताके इष्टकादौ "ऋतव्ये मधुश्च माधवश्चेति" कात्या० १७, ४,२४। "विश्वज्योतिषं पुरोह्ये पद्यो माधवश्च ऋतव्ये इष्टके अनूकमभित उदञ्चं उपदधाति" वेददी० "अथर्त्तव्ये उपदधाति ऋतव एते यदृतव्ये ऋतूनेवैतदुपदधाति मधुश्च माधवश्च वासन्तिकावृतू इति द्वे इष्टके भवतो द्वौ हि मासावृतु" इति शत०ब्रा० ७,४,२,२९। "अथ ऋतव्ये उपदधाति "इत्यादि प्राग्वत्।" "शुक्रश्च शुचिश्च ग्रैष्मावृतू" इत्युक्ता प्राग्वत् ८,२,१,१६। "नाकसदोऽनूकेषु पूर्व्वमर्जमनव्यवेतायाम्" कात्या० १७ १२,१।

**ऋतव्रत** पु० ऋतमविनश्वरफलकं व्रतं यस्य। शाकद्वीपस्थे भगदुपासकभेदे। शाकद्वीपवर्णने भाग०५,२०,१९।"तेषु पुरुषा ऋतव्रतसत्यव्रतदानव्रतानुव्रतानाम भगवन्तं वायात्मकं प्राणायामविधूतरजस्तमसः परमसमाधिना यजन्ते" ऋतव्रतादयोवर्णस्थानीया इति बोध्यम्। अन्यद्वीपेषु वर्णभेदोक्तेरिह तु तेषामेव तत्स्थानीयत्वौचित्यात् तथ व्याख्यास्याम्।

**ऋतसद्** पु० ऋते यज्ञे सीदति सद—क्विप् ७त०। यज्ञे "अपद्वरसृतसद्वृतेसदग्राः" ऋ० ४,४०,५।"ऋतसदनि" भा०।

**ऋतसदन** न० ऋतस्य यज्ञार्थं सीदत्यस्मिन् सद—आधारे ल्युट् ६त०। यज्ञार्थकुपवेशनस्थाने।' वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद" यजु० ४,३६। स्त्रियां ङीप्।'वरुणस्य ऋतसदन्यसि' तत्रैव।

**ऋतसाप्** त्रि० आप+क्विप् सहापा साप् प्राप्ता ६त०। यज्ञस्य प्रापयितरि' ये चिद्धि पूर्व्व ऋतसाप आसन्" १,१७९,२। "ऋतसाप ऋतस्य यज्ञस्यापयितार" भा०।

**ऋतस्पति** पु० ऋतस्य पतिः ष० वेदे सुट्। यज्ञपतौ "तवायदृतस्पते'। ऋ० ८,२६,२१। "ऋतस्पते। यज्ञानां पते।' भा० लोके तु ऋतपतिरित्येव।

**ऋतावन्** त्रि०ऋतमस्त्यस्य "छन्दसीवनिपौ" पा० वनिप् दीर्घश्च

यज्ञवति । “ऋतावानं महिषं विश्वदर्शतमग्निम्” यजु० १२,१११ । “ऋतावानो जने जने” ऋ० ५,६८,४ । “ऋतावान यज्ञवन्त” भा० । लोके तु मतुप् मस्य व । ऋतवत् इत्येव । “ऐक्याहयस्य ऋतवानिति विप्रलब्धः” भाग० १५,२० । “ऋतवान् सत्यवान्” इति श्रीधरः ।

**ऋतावृध्** त्रि० ऋतं यज्ञं वर्द्धयति वृध-अन्तर्भूतण्यर्थे क्विप् दीर्घः । यज्ञवर्द्धके । “विश्वयन्नामृतावृधोहार” यजु० २८,५ । “सुत सोम ऋतावृध” ७,९ । “देवीरृता ऋतावृध” ४,१२ ।

**ऋताषाह्** त्रि० ऋतं सहते असत्यं न, सह-ण्वि दीर्घे इत० पू० “सहेः पृतनर्त्ताभ्याञ्चेति” पा० षत्वम् । सत्यसहने असत्ये कुपिते “ऋताषाडृतधामाग्नि” यजु० १८,३८ ।

**ऋति** स्त्री ऋ-क्तिन् । १गतौ २स्पर्द्धायाम् ३निन्दायाञ्च । कर्मणि क्तिन् । ४वर्त्मनि ५मङ्गले च । ६पुरुषमेधयज्ञियदेवभेदे । तत्र चतुर्थयूपे बन्धनीयपशुकीर्त्तने । “ऋतये स्तेनहृदयम्” यजु० ३०,१२ । कर्त्तरि क्तिच् । ७गतौ पु० निरु० । “अग्निरक्षामृतीषहम्” ऋ० ६,१४,४ “शरव्यामुखेऽपि नह्यमान ऋतिर्हन्यमाना” अथ० १२,५,२५ ।

**ऋतिङ्कर** त्रि० ऋतिं पीडां करोति कृ-खच् मुम् । पीडा[कारके ।

**ऋतीय** नामधा० ऋतमिच्छति ऋतीयति आर्त्तीयत् । ऋतीयाम् बभूव आस चकार । वेदे तु “न छन्दसि” पा० न ईत्वम् । ऋतयति इत्यत्र “अकृत्सार्वधातुकयो” पा० क्वचिदात्त्व ऋतायति । ऋतायन् । “देवा ऋतायते दमे” ऋ० ४,८,२ । “ऋतायते यज्ञमिच्छते” भा० । “अग्निमृतयन्नवादि” ऋ० ५,४३,७ । “ऋतयन् यज्ञमिच्छन्” भा० । “अर्वतो ऋतायन्” ऋ० ७,८७,१ “ऋतायन् शीघ्रगमनमिच्छन्” भा० । तत उ ण् । ऋतयु यज्ञकामे “त्वं न इन्द्र ऋतयुस्त्वानिदो नि तृम्पसि” ऋ० ८,७०,१० । दीर्घे ऋतायु तत्रार्थे “न वा एतस्य ब्राह्मणा ऋतायव” तै० स० २,२,५,५, भावे अ । ऋतया ऋतायया वा “श्रियं वसने ऋतया सपत्नी” ऋ० २,११,१२ । “ऋतया ऋत कर्मफलं तत्कामनया” भा० । वेदे सुपांसुलुगित्यादिना तृतीयास्थाने आ० ।

**ऋतीया** स्त्री ऋत-ईयङ् भावे अ । जुगुप्सायाम् अमरः ।

**ऋतीषह्** त्रि० ऋतिं पीडां शत्रुं वा सहते क्विप् दीर्घे । “सहेः पृतनर्त्ताभ्याञ्च” पा० षात् ऋतिशब्दादपि षत्वम् । १पीडासहे २शत्रुसहने च “अग्निरक्षामृतीषहम्” ऋ० ६,१४,४ ऋतीषहम् ऋतारोना सोढारम्” भा० ।

**ऋतु** पु० ऋ-तु किच्च । शिशिरः पुष्पसमयो ग्रीष्मो वर्षा शरद्धिमः । माघादिमासयुग्मैस्तु ऋतवः षट् क्रमादिमे इत्युक्ते १कालभेदे । “ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः” इति मनूक्ते स्त्रीणां २शोणितदर्शनयोग्ये गर्भधारणसमर्थे च काले “ऋतौ भार्य्यामुपेयात्” श्रुति “स्वदारनिरतस्त्वृतौ, ऋतुकालाभिगामी स्यात्” मनुः । ऋतुरस्य प्राप्त अण् । आर्त्तव स्त्रीरजसि न० आर्त्तवशब्दे ८०८ पृष्ठे विवृतिः । ३दीप्तौ ४मासे च । मासद्वयात्मक ऋतुश्च सौरश्चान्द्रश्च यथा काल० मा० “ऋतुशब्दश्च गताविह्यस्माद्धातोर्निष्पन्न । इयर्त्ति गच्छति अशोकपुष्पविकासान् साधारणलिङ्गमिति वसन्तादिकालविशेष ऋतुः । स च षड्विध ‘षड्वा ऋतव इति’ श्रुतेः । यत्तु “द्वादश मासाः पञ्चर्त्तवः” इति श्रुतं तत्र हेमन्तशिशिरयोरेकीकरणं विवक्षितं याजमानेषु पञ्चप्रयाजानुमन्त्रणमन्त्रेषु हेमन्तशिशिरयोरेकस्मिन्नेकेनैव पदेनैकीकरणमित्युक्तं तथा हि “वसन्तमृतूनां प्रीणामि ग्रीष्ममृतूनां प्रीणामि वर्षा ऋतूनां प्रीणामि शरदमृतूनां प्रीणामीति” चतुर्णां प्रयाजानां पृथक् पृथगनुमन्त्रणमन्त्रानाम्नाय पञ्चमप्रयाजस्यानुमन्त्रणे मन्त्र एवं श्रूयते ‘हेमन्तशिशिरावृतूनां प्रीणामीति” एतदेवाभिप्रेत्य बह्वृचब्राह्मणे द्वादश मासाः पञ्चर्त्तवो हेमन्तशिशिरयोः समासेनेति” यत्त्वनयोर्मन्त्रब्राह्मणयोर्द्विवचनं तत्स्वरूपद्वैविध्याभिप्रायेण शिशिरस्य पञ्चस्यान्तिमत्वात्तेनानुमन्त्रणीयस्य षष्ठप्रयाजस्याभावाच्च तस्यैव पञ्चमे हेमन्तेऽन्तर्भावोन्याय्य । अतएव प्रयाजब्राह्मणे “वसन्तमेवर्तूनामवरुन्धे” इत्यादिना चतुरः प्रयाजान् प्रशस्य पञ्चमे प्रयाजे केवलेन हेमन्तेन प्रशंसा “स्वाहाकारं यजति हेमन्तमेवावरुन्धे” इति । अस्तु नाम यथा तथा पञ्चसङ्ख्या तथापि स्वरूपेण षोढा भिद्यते द्वादशमासात्मके संवत्सरे एकैकस्य ऋतोर्मासद्वयात्मकत्वे सत्येकादशद्वादशमासयोर्वर्जयितुमशक्यत्वात् षडृतौ पृथगनुष्ठानविधानाच्च तच्चोपरिष्टादुदाहरिष्यामः । मासद्वयात्मकत्वं चाग्निचयने ऋतव्येष्टकोपधानब्राह्मणे श्रूयते । “द्वन्द्वमुपदधाति तस्माद् द्वन्द्वमृतव” इति । एकस्मिन् ऋतौ कयोर्मासयोर्द्वन्द्वं परिगृहीतव्यमिति चेत् वसन्ताद्यृतुक्रमेण चैत्रमासादि द्वन्द्वमिति ब्रूमः । तच्चेष्टकोपधानमन्त्रेषु श्रूयते “मधुश्च माधवश्च वासन्तिकावृतू” “शुक्रश्च शुचिश्च ग्रैष्मावृतू” “नभश्च नभस्यश्च वार्षिकावृतू” इषश्चोर्जश्च “शारदावृतू” “सहश्च सहस्यश्च हैमन्तिकावृतू” “तपश्च तपस्यश्च

रम्येत्यर्थे दिनैस्त्रिभिः" म॰त॰। ५ मासद्वयमात्रे "सख्यं स्याद्व मासि मासि व्यपर्य्याप्तायतं प्रति" स्मृतिः। सुश्रुते ऋतुनिरूपणं तद्गुणचिह्नादि च दर्शितं यथा "अथात ऋतुचर्य्याध्यायं व्याख्यास्यामः कालो हि नाम भगवान् स्वयम्भूरनादिमध्यनिधनोऽत्र रससम्पत्ती जीवितमरणे च मनुष्याणामायत्ते स सूक्ष्मामपि कलां न लीयत इति कालः सङ्कलयति कालयति वा भूतानीति कालः। तस्य संवत्सरात्मनो भगवानादित्यो गतिविशेषेणाक्षिनिमेषकाष्ठाकलामुहूर्त्ताहोरात्रपक्षमासर्त्त्वयनसंवत्सरयुगप्रविभागं करोति। तत्र लघ्वक्षरोच्चारणमात्रोऽक्षिनिमेषः। पञ्चदशाक्षिनिमेषाः काष्ठा। त्रिंशत्काष्ठाः कला। विंशतिकलो मुहूर्त्तः कलादशभागश्च। त्रिंशन्मुहूर्त्तमहोरात्रम्। पञ्चदशाहोरात्राणि पक्षः। स च द्विविधः शुक्लः कृष्णश्च तौ मासः। तत्र माघादयो द्वादश मासा द्विमासिकमृतुं कृत्वा षडृतवो भवन्ति। ते शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः। तेषां तपस्तपस्यौ शिशिरः। मधुमाधवौ वसन्तः। शुचिशुक्रौ ग्रीष्मः। नभोनभस्यौ वर्षाः। इषोर्जौ शरत्। सहःसहस्यौ हेमन्त इति। त एते शीतोष्णवर्षलक्षणाश्चन्द्रादित्ययोः कालविभागकरत्वादयने द्वे भवतो दक्षिणमुत्तरञ्च। तयोर्दक्षिणं वर्षाशरद्धेमन्तास्तेषु भगवानाप्यायते सोमोऽम्ललवणमधुराश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्वप्राणिनां बलमभिवर्द्धते। उत्तरञ्च शिशिरवसन्तग्रीष्मास्तेषु भगवानाप्यायतेऽर्कस्तिक्तकषायकटुकाश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्वप्राणिनां बलमपहीयते। भवति चात्र। शीतांशुः क्लेदयत्युर्व्वीं विवस्वान् शोषयत्यपि। तावुभावपि संश्रित्य वायुः पालयति प्रजाः। अथ खल्वयने द्वे युगपत् वत्सरो भवति। ते तु पञ्च युगमिति संज्ञां लभन्ते। स एष निमेषादिर्युगपर्य्यन्तः कालश्चक्रवत् परिवर्त्तमानः कालचक्रमुच्यत इत्येके। इह तु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृषः षडृतवो भवन्ति दोषोपचयप्रकोपोपशमनिमित्तम्। ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याताः। तद्यथा भाद्रपदाश्वयुजौ वर्षाः। कार्त्तिकमार्गशीर्षौ शरत्। पौषमाघौ हेमन्तः। फाल्गुनचैत्रौ वसन्तः। वैशाखज्यैष्ठौ ग्रीष्मः। आषाढश्रावणौ प्रावृडिति। तत्र वर्षास्वोषधयस्तरुण्योऽल्पवीर्य्या आपश्चाप्रसन्नाः क्षितिमलप्रायास्ता उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातविष्टम्भिताग्नीनां विदह्यन्ते विदाहात् पित्तसञ्चयमापादयन्ति स सञ्चयः शरदि प्रविरलमेघे वियत्युपशुष्यति पङ्केऽर्ककिरणप्रविलायितः पैत्तिकान् व्याधीन् जनयति। ता एवौषधयः कालपरिणामात्परिणतवीर्य्या बलवत्यो हेमन्ते भवन्त्यापश्च प्रसन्नाः स्निग्धा अत्यर्थं गुर्व्यश्च ता उपयुज्यमाना मन्दकिरणत्वाद्भानोः सतुषारपवनोपस्तम्भितदेहानां देहिनामविदग्धाः स्नेहाच्छैत्याद्गौरवादुपलेपाच्च श्लेष्मणः सञ्चयमापादयन्ति स सञ्चयो वसन्तेऽर्करश्मिप्रविलायित ईषत्स्तब्धदेहानां देहिनां श्लैष्मिकान् व्याधीन् जनयति। ता एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्व्यो भवन्त्यापश्च ता उपयुज्यमानाः सूर्य्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वाद्वैशद्याच्च वायोः सञ्चयमापादयन्ति स सञ्चयः प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातप्रेरितो वातिकान् व्याधीन् जनयति। एवमेष दोषाणां सञ्चयप्रकोपहेतुरुक्तः। तत्र वर्षाहेमन्तग्रीष्मेषु सञ्चितानां दोषाणां शरद्वसन्तप्रावृट्सु च प्रकुपितानां निर्हरणं कर्त्तव्यम्। तत्र पैत्तिकानां व्याधीनामुपशमो हेमन्ते, श्लैष्मिकाणां निदाघे वातिकानां घनात्यये, स्वभावत एव, त एते सञ्चयप्रकोपोपशमा व्याख्याताः। तत्र पूर्वाह्णे वसन्तस्य लिङ्गं मध्याह्ने ग्रीष्मस्य, अपराह्णे प्रावृषः, प्रदोषे वार्षिकम् शारदमर्द्धरात्रे प्रत्यूषसि हैमन्तमुपलक्षयेत्। एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षलक्षणं दोषोपचयप्रकोपोपशमैर्जानीयात्। तत्राव्यापन्नेष्वृतुष्वव्यापन्ना ओषधयो भवन्त्यापश्च ता उपयुज्यमानाः प्राणायुर्बलवीर्य्यौजस्कर्य्यो भवन्ति। तेषां व्यापदोऽदृष्टकारिताः। शीतोष्णवातवर्षाणि खलु विपरीतान्योषधीर्व्यापादयन्त्यपश्च, तासामुपयोगाद्विविधरोगप्रादुर्भावो मरको वा भवेदिति। तत्राव्यापन्नानामोषधीनामपाञ्चोपयोगः कदाचिदव्यापन्नेष्वप्यृतुषु कृत्याभिशापरक्षःक्रोधाधर्मैरुपध्वस्यन्ते जनपदाः। विषौषधीपुष्पगन्धेन वा गुणोपनीतेनाक्रम्यते यो देशस्तत्र दोषप्रकृत्यविशेषेण कासश्वासवमथुप्रतिश्यायशिरोरुग्ज्वरैरुपतप्यन्ते ग्रहनक्षत्रचरितैर्वा गृहदारशयनासनयानवाहनमणिरत्नोपकरणगर्हितलक्षणनिमित्तप्रादुर्भावैर्वा। तत्र स्थानपरित्यागशान्तिकर्मप्रायश्चित्तमङ्गलजपहोमोपहारेज्याञ्जलिनमस्कारतपोनियमदयादानदीक्षाभ्युपगमदेवताब्राह्मणगुरुपरैर्भवितव्यमेवं साधु भवति। अत ऊर्द्ध्वमव्यापन्नानां लक्षणान्युपदेक्ष्यामः। वायुर्नात्युष्णशीतो रजोधूमाकुला दिशः। छन्नस्तु

"तस्मिन् युग्मासु संविशेदिति"। "किमयं विधिर्नियमः परिसंख्या वा। "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्या निगद्यते"। उच्यते। न तावद्विधिः, प्राप्तार्थत्वात्। नापि परिसंख्या, दोषत्रयसमासक्तेः। अतो नियमम्प्रपेदिरे न्यायविदः। कः पुनरेषां भेदः। उच्यते। अत्यन्ताप्राप्तप्रापणं विधिः। यथा अग्निहोत्रं जुहुयात् "अष्टकाः कर्त्तव्या" इति। पक्षे प्राप्तस्याप्राप्तपक्षान्तरप्रापणं नियमः। यथा "समे यजेतेति" "दर्शपूर्णमासाभ्यां यजेतेति" यागः कर्त्तव्यतया विहितः स च देशमन्तरेण कर्त्तुमशक्य इत्यर्थात् देशः प्राप्तः। स च समो विषमश्चेति द्विविधः। यदा यजमानः समे यियक्षते तदा "समे यजेतेति" वचनमुदास्ते स्वार्थस्य प्राप्तार्थत्वात्। यदा तु विषमे देशे यियक्षते तदा "समे यजेतेति" स्वार्थं विधत्ते स्वार्थस्य तदानीमप्राप्तत्वात्। विषमदेशनिवृत्तिस्त्वार्थिकी नोदितदेशेनैव यागमिच्छन्ते। अनोदितदेशोपादानेन यथाशास्त्रं यागोऽनुष्ठितः स्यादिति। तथा "प्राङ्मुखोऽन्नानि भुञ्जीतेति"। इदमपि स्मार्त्तमुदाहरणं पूर्वेण व्याख्यातम्। एकस्यानेकत्र प्राप्तस्यान्यतो निवृत्त्यर्थमेकत्र पुनर्वचनं परिसंख्या। तद्यथा। "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्ययं मन्त्रः स्वसामर्थ्यादश्वाभिधान्या गर्दभाभिधान्याश्च रशनाया ग्रहणे विनियुक्तः। पुनरश्वाभिधानीमादत्त इति वचनेनाश्वाभिधान्यां विनियुज्यमानो गर्दभाभिधान्या विनिवर्त्तते। तथा "पञ्च पञ्चनखा भक्ष्या" इत्यत्र यदृच्छया शशादिषु श्वादिषु च भक्षणं प्राप्तम्। पुनः शशादिषु श्रूयमाणं श्वादिभ्यो निवर्त्तत इति। किं पुनरत्र युक्तं परिसंख्येत्याह। तथाहि ऋतुदारसम्पन्नस्य स्वेच्छयैव स्त्रीगमनं प्राप्तमिति न विधेरयं विषयः। नापि नियमस्य, गृह्यस्मृतिविरोधात्। एवं हि स्मरन्ति गृह्यकाराः "द्वादश पञ्चाहमनन्तरं त्रिरात्रं द्वादशरात्रं संवत्सरं वा ब्रह्मचारी स्यादिति"। तत्र द्वादशरात्रात् संवत्सरात् वा पूर्वमेवर्त्तुसम्भवे ऋतौ गच्छेदेवेति नियमात् ब्रह्मचर्य्यचरणं बाध्येत। अपि च प्राप्ते भावार्थे वचनं विशेषणपरं युक्तम्। प्राप्तञ्चर्त्तौ भार्य्यागमनमिच्छयैवातो यदि गच्छेत्तदावेवेति वचनव्यक्तिर्युक्ता। किञ्च नैमित्तिकात् पुत्रोत्पत्तिविधेरेवर्त्तौ नित्यं गमनं प्राप्तमेवेति ऋतौ गच्छेदेवेति नियमोऽनर्थकः स्यात्। नियमे चादृष्टं कल्पनीयम्। किञ्च ऋतौ गच्छेदेवेति नियमेऽसन्निहितस्य व्याध्यादिनाऽसमर्थस्यानिच्छोर्बाधकोऽर्थ उपदिष्टः स्यात्। विध्यनुवादविरोधश्च नियमे। तथा हि एकः शब्दः सकृदुच्चरितस्तमेवार्थं पक्षेऽनुवदति पक्षे विधत्ते चेति। तस्मादृतावेव गच्छेन्नान्यत्र इति परिसंख्यैव युक्ता। तदिदम्भारुचिविश्वरूपादयो नानुमन्यन्ते। यतो नियम एव युक्तः पक्षे स्वार्थविधिसम्भवात्। अगमने दोषश्रवणाच्च यथाह पराशरः "ऋतुस्नातान्तु यो भार्यां सन्निधौ नोपगच्छति। घोरायां भ्रूणहत्यायां युज्यते नात्र संशय इति" न च विध्यनुवादविरोधोऽनुवादाभावात् विध्यर्थत्वाद्वचनस्य। तत्र हि विध्यनुवादविरोधो यत्र विधेयावधितया तद्देशानुवदितव्यमप्राप्ततयान्योद्देशेन विधातव्यञ्चेति। यथा वाजपेयाधिकरणे पूर्वपक्षे "वाजपेयेन स्वाराज्यकामो यजेतेति" वाजपेयलक्षणगुणविधानावधित्वेन यागोऽनुवदितव्यः स एव स्वाराज्यलक्षणफलोद्देशेन विधातव्यश्चेति। न चानुवादेनेह कृत्यमस्ति। यत्तु नियमेऽदृष्टं कल्पनीयमित्युक्तं तत्परिसंख्यायामपि समानम्। अनृतौ गच्छतो दोषकल्पनात्। यत्तु नैमित्तिकपुत्रोत्पादनविध्याक्षेपेणैव ऋतौ नित्यगमनप्राप्तेर्न नियम इति। तदसत् स एव तु नैमित्तिकः पुत्रोत्पादनविधिः। स्यान्मतम् "एवं गच्छन् स्त्रियं क्षामां लक्षण्यं पुत्रं जनयेदिति" स्त्र्यभिगमनातिरिक्तः पुत्रोत्पादनविधिरिति। तन्न गमनकरणिकाया भावनाया एव पुत्रोत्पत्तिकर्मता प्रतीयते। "एवं गच्छन् लक्षण्यं पुत्रं जनयेदित्यनेन" यथाग्निहोत्रं जुह्वत् स्वर्गं भावयेदिति। न चासन्निहितादेरशक्यार्थे विधिप्रसङ्गः सन्निहितशक्तयोरेवोपदेशात् "ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छतीति" "यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छतीति" विशेषोपादानात्। अनिच्छानिवृत्तिस्तु नियमविधानादेव। न च विशेषणपरता पक्षे भावार्थविधिसम्भवात्। नापि गृह्यस्मृतिविरोधः संवत्सरात् पूर्वमेवर्त्तुदर्शने सविषयतो न ब्रह्मचर्यस्खलनदोषः। यथा श्राद्धादिषु, तस्मात् स्वार्थहानिपरार्थकल्पनप्राप्तबाधलक्षणदोषत्रयवती परिसंख्या न युक्ता। "पञ्च पञ्चनखा भक्ष्या" इत्यत्र यद्यपि शशादिषु भक्षणस्य पक्षे प्राप्ते नियमः, शशादिषु श्वादिषु च प्राप्ते परिसंख्येति उभयसम्भवस्तथापि नियमपक्षे शशाद्यभक्षणे दोषप्रसङ्गः। श्वादिभक्षणे चादोषप्रसङ्गेन प्रायश्चित्तस्मृतिविरोध इति परिसंख्यैवाश्रिता। एतेन 'चाय

श्मान· प्रेषितो होतरेतद्यजेति ब्रूयात्" १६सू० । "द्वादशे ऋतुग्रहे गृहपते । यजेत्येव प्रशास्त्रा प्रेषितो यजमान होतरेतद्यजेति एवं ब्रूयात् ततस्ता यजमानयाज्या होता ब्रूयात्" कर्कः । "अध्वर्यू च" १७सू० "एकादशे ऋतुग्रहे प्रशास्त्रा अध्वर्यू यजतमित्येवं प्रेषितावध्वर्यू होतरेतद्यजेति एव ब्रूयाताम् ततश्च तद्याज्यामपि होतैव ब्रूयात् । शाखान्तरे तु विकल्पेन होतुं प्रेषणं अथ वा याज्यापठनमित्येवमुक्तमस्ति । मानवे "एकादशे प्रैषेऽध्वर्यू यजतमित्युक्ते तयोरन्यतरो मध्यमस्य परिधेः पश्चादुपविश्य ये यजामहेऽश्विनावध्वर्यू आध्वर्यवादृतुना सोम पिबता वौषडिति प्रैषेण यजेदयथेच्छया । ये यजामहेऽश्विना पिबतं मधु दीद्यग्नी शुचि व्रत ऋतुना यज्ञवाहसा वौषडित्यनयास यजेति होतरेतद्यजेति वा न प्रेष्यत्युत्तमे प्रैषे यजमानस्य याज्यामि प्रैषो वेति" काठके विशेषः "द्वारे हविर्धानस्योपविश्याध्वर्यू यजतमित्युक्तेऽश्विनावध्वर्यू यजतस्' आध्वर्यवादृतुना सोम पिबतमिति होतारं वा प्रेष्येद्धोतरेतद्यजेति यदाध्वर्युर्यजेतोद्गाता यद्वेण चरेदिति" कर्कः । "त्रयोदशं गृह्णीयादिश्च ऋतुपयामगृहीतोऽस्यंहस्पतये त्वेति" १८सू० । शत० ब्रा० ४,३,१,२, द्वादशादिपक्षपक्षे हेतुर्दर्शितो यथा "चत्वोऽच्छावाके । ऋतुपद्धैर्चरति तद्यत् चत्वोऽच्छावाक ऋतुपद्धैर्चरति मिथुनं वा अच्छावाक ऐन्द्राग्नो ह्यच्छावाको द्वौ हीन्द्राग्नी द्वन्द्व हि मिथुनं प्रजननं स एतस्मान्मिथुनात् प्रजननादृतूनं संवत्सरं प्रजनयति यद्वेव चत्वोऽच्छावाके ऋतुपद्धैश्चरति सर्वं वा अत्तव संवत्सरं सर्वमेवैतत् प्रजनयति तस्मात् चत्वोऽच्छावाक ऋतुपद्धैश्चरति नान्वै द्वादश गृह्णीयात् । द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश मासा इति द्वादश त्वेव गृह्णीयादेवैव सम्पत् । त्रयोदशं गृह्णीयात् प्रजापतिस्त्रयोदशः स एतस्मात् प्रजापतेर्ऋतून् संवत्सरं प्रजनयति उभयतोमुखाभ्यां पात्राभ्यां गृह्णाति । कुतस्तयोरन्तौ उभयतोमुखे तस्मादयमजस्रं संवत्सरं परिप्लवते न गृहीत्वा न सादयति तस्मादयमसन्न संवत्सरं नानुवाक्यमन्वाह । ब्रुवति वा ऋतवस्तयया यतो ह्येवायमृतुर्यदि दिवा यदि नक्तं नानुवषट्करोति नेदृतूनप्रयच्छानीति सहैव प्रथमौ ग्रहौ गृह्णीतः सहोत्तमाविदमेवत्सर्वं संवत्सरेण परिगृहीतमिदं सर्वं संवत्सरेण परिगृहीतम् । विशेवान्यतरः क्रामति प्रान्यतरः पद्यते तस्माद्विमेऽन्यस्योमासा यन्त्यथ यदुभौ वा सह निष्क्रामेतामुभौ वा सह प्रपद्येयाताम् प्रपद्ये ह्येवैमुमासा ईयुस्तस्मादिरेऽन्यतरः क्रामति प्रान्यतरः पद्यते । तौ वा ऋतुनेति षट् प्रचरतः । तद्वेवाऽहरस्य स्तुर्मिरिति षड्वृतवस्तान्नामस्रृजन्त स यदेतावदेवाभविष्यद्रात्रिर्न्वेशाभविष्यन्न व्ययत् ऋतुस्तौ वा ऋतुनेत्युपरिष्टाद्द्विश्चरतः । तद्वा पर स्तादहरहरुत्तमादिदमत्राहरथ श्वोऽहर्भविता । ऋतुनेति यं देवा मनुष्यानसृजन्तऽर्तुभिरिति पशूनृता यत् तन्मध्ये येन पशूनसृजन्त तस्मादिमे पशव उभयतः परिगृहीतावशमुपेता मनुष्याणाम् । तौ वा ऋतुनेति षट् प्रचर्य इतरथा पात्रे विपर्यस्येते ऋतुभिरिति चतुश्चरित्वेतरथा पात्रे विपर्यस्येते अन्यतरत एव तद्वा अहरसृजन्तान्यतरतो रात्रिमन्यतरतश्च तद्वा मनुष्यानसृजन्तान्यतरत पशून् । अथातो गृह्णात्येव उपयामगृहीतोऽसि मधवे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि माधवाय त्वेति प्रतिप्रस्थातैतावेव वासन्तिकौ स यद्वसन्त ओषधयो जायन्ते वनस्पतयः पच्यन्ते तेनो हैतौ मधुश्च माधवश्च । उपयामगृहीतोऽसि शुक्राय त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि शुचये त्वेति प्रतिप्रस्थातैतावेव ग्रैष्मौ स यदेतयोर्बलिष्ठं तपति तेन हैतौ शुक्रश्च शुचिश्च । उपयामगृहीतोऽसि नभसे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि नभस्याय त्वेति प्रतिप्रस्थातैतावेव वार्षिकावमुतो वै दिवो वर्षति तेनो हैतौ नभश्च नभस्यश्च । उपयामगृहीतोऽसि इषे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽस्यूर्जे त्वेति प्रतिप्रस्थातैतावेव शारदौ स यच्छरद्यूर्ग्रस ओषधयः पच्यन्ते तेनो हैताविषश्चोर्जश्च । उपयामगृहीतोऽसि सहसे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि सहस्याय त्वेति प्रतिप्रस्थातैतावेव हैमन्तिकौ स यद्धेमन्त इमाः प्रजा सहसेव स्वं वशमुपनयते तेनो हैतौ सहश्च सहस्यश्च । उपयामगृहीतोऽसि तपसे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि तपस्याय त्वेति प्रतिप्रस्थातैतावेव शैशिरौ स यदेतयोर्बलिष्ठं श्यायति तेनो हैतौ तपश्च तपस्यश्च । उपयामगृहीतोऽस्यंहस्पतये त्वेति त्रयोदशमध्व गृह्णाति यदि त्रयोदश गृह्णीयादथ प्रतिप्रस्थाताध्वर्यो पात्रे संस्रवमवनयत्यध्वर्युर्वा प्रतिप्रस्थातुः पात्रे संस्रवमवनयत्याहरति भक्षम् । अथ प्रतिप्रस्थाता भक्षितेन पात्रेण ऐन्द्राग्नं ग्रहं गृह्णाति तद्यदभक्षितेन पात्रे-

सद्यस्कालवाक्यैः सन्धिदिन उत्कृष्यते । नन्वीदृशे विषये सन्धिदिनात् परदिने याग उत्कृष्यतां तथा सत्यपराह्णादिसन्धित्विन्वाधानयागयोर्दिनभेदो भविष्यति । अस्ति च दृष्टान्तः वाजसनेयिनामीदृशे विषये, अन्वाधानोत्कर्षे सति यागस्याप्युत्कृष्टत्वात् मैवम् अन्वयव्यतिरेकरूपाभ्यां विधिनिषेधाभ्यामन्वाधानस्य यद्वायानिर्धारितत्वात् तत्र सद्यस्कालविधयोऽन्वयरूपाः, प्रतिपच्चतुर्थांशे प्रतिषेधाश्च व्यतिरेकरूपाः एवं च सति प्रतिषेधवाक्यं सावकाशं भवति । अमावास्याया विशेषमाह वृद्धशातातपः "द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्णिकी । अन्वाधानं चतुर्दश्यां परतः सोमदर्शनादिति" सोऽयं विशेषो नाश्वलायनापस्तम्बविषयः किन्तु बौधायनमतानुयायिविषयः अतएव बौधायनः "द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्णिकी । अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् । चतुर्दशी चतुर्यामा अमावास्या न दृश्यते । क्षीभूते प्रतिपच्चेत् स्यात् पूर्वां तत्रैव कारयेत् । चतुर्दशी च सम्पूर्णा द्वितीया क्षयगामिनी । प्रातरिष्टिरमायास्त्वाद्भूते कव्यादिका क्रियेति" एतेषां वचनानामयमर्थः क्वचिच्चतुर्दशी सम्पूर्णा अस्तमयादर्वागमावास्या स्वल्पा तत एवापराह्णव्याप्त्यभावाच्छ्राद्धायान्वाधानाय वा पूर्वोक्तरीत्या यद्यपि निमित्तभावं न भजते तथापि प्रतिपदि द्वितीयायाः सत्त्वात् चन्द्रस्य दृश्यमानत्वात्तद्दर्शने चेष्टेर्निषिद्धत्वात् प्रतिपद्युतायाममावास्यायामिष्टिः स्वल्पामावास्योपेतायां चतुर्दश्यां श्राद्धान्वाधानादिकं कर्त्तव्यमिति । एतदेवाभिप्रेत्य स्मृत्यन्तरे "आदितेऽस्तमिते चन्द्रः प्रतीच्यामुदियात् यदा । प्रतिपद्यतिपत्तिः स्यात् पञ्चदश्यां यजेत्तदेति" छन्दोगपरिशिष्टेऽपि "ऐन्द्रं निरूप्य पर्यायं पुरस्तादुदिते विधौ । यद्वैगुण्यं कृतं तस्मिन् पश्चादपि हि तद्भवेदिति" अस्यायमर्थः यदा सम्पूर्णचतुर्दश्यामविचारेणामावास्याबुद्धिं कृत्वा अन्वाधानादिकं कृत्वा हविर्निर्वापे कृते तस्मिन् उषःकाले पूर्वस्यां दिशि चन्द्रमा उदेति । तदा न दर्शकर्म भवितुमर्हति दर्शकालस्याप्राप्तत्वात् किन्तु कालापराधनिमित्तोक्तदर्शदेवता अपनीय दात्रादिगुणविशिष्टाग्न्यादिदेवतान्तराण्युद्दिश्य हविःप्रक्षेपो विहितः तदेतत् तैत्तिरीयब्राह्मणे श्रूयते "यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम् ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमिति सोऽयं दृष्टान्तोऽप-

विधि निरुप्ते सति तदूर्द्ध्वं पूर्व्वस्यां दिशीन्दावुदिते सति दर्शकर्मविधेर्यद्वैगुण्यमुक्तरीत्याऽवस्थितं तदेव वैगुण्यं होमदिने पश्चिमदिशि चन्द्रोदये भवतीति । एतदेव बौधायनमतमुपोद्बलयति श्रुतिः "यस्मिन्नहनि पुरस्तात्पश्चात् सोमो न दृश्यते तदहर्यजेतेति" अयमर्थः सिनीवाल्यां पुरस्ताच्चन्द्रदर्शनं भवति द्वितीयायुक्तायां प्रतिपदि पश्चाच्चन्द्रो दृश्यते तयोरुभयोर्मध्यवर्त्तिन्यां कुह्वां द्विविधमपि चन्द्रदर्शनं नास्ति अतस्तस्मिन् दिने यष्टव्यमिति चन्द्रदर्शनोपेतायां शुक्लप्रतिपदि यागानुष्ठाने प्रायश्चित्तमाह कात्यायनः "यज्ञमोयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते । तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये" इति चन्द्रदर्शनराहित्यमेवाभिप्रेत्य बौधायनकारिकासु पठ्यते "दृष्टे स्त्व प्रातिपदादिनाड्यः षष्ठाष्ट वा यत्र भवन्ति तत् स्यात् । क्षीणासु नाडीषु दिनस्य पूर्वं कल्पोऽयमुक्तो न भवेद्द्वितीयः" इति अयमर्थः अमावास्यातिथेः सम्बन्धिनीषु नाडीषु क्षीणासु सतीषु तस्मिन् दिने अस्तमयात् पूर्वं प्रतिपत्सम्बन्धिन्यो नाड्यः षष्ठाष्ट वा यदि भवन्ति तदा तद्दिनमिष्टेरुक्तं योग्यं सोऽयमेकः पक्षः । अमावास्याप्रतिपदौ यदा वर्द्धेते तदा द्वितीयः कल्पो भवेत् । अमायामग्निमाधाय सोमदर्शनवर्जिते प्रतिपद्दिने यागः कर्त्तव्य इति । स्मृत्यन्तरेऽपि "अर्वागस्तमयात् यत्र द्वितीया तु न दृश्यते । तत्र यागं न कुर्वीत स्युर्देवास्तु पराङ्मुखाः" इति बौधायनमतानुसारिणामन्वाधानवद्दर्शश्राद्धमपि स्वल्पामावास्योपेतायां चतुर्दश्यां कर्त्तव्यं तथा च बौधायनेनोक्तम् "यदा चतुर्दशी यामं तुरीयमनुपूरयेत् । अमावास्या क्षीयमाणा तदैव श्राद्धमाचरेत् । चतुर्दश्यां चतुर्यामे अमा यत्र न दृश्यते । क्षीभूते प्रतिपच्चात्र भूते कव्यादिका क्रियेति" चतुर्थे यामे अमावास्या सम्पूर्णा न दृश्यते किन्त्ववसाने स्वल्पा सा चेत् परदिने क्षीयते तदानीं चतुर्दश्यां श्राद्धमाचरेत् । ननु चन्द्रदर्शनोपेतायां प्रतिपदीष्टिः समाम्नाता तथा च शतपथब्राह्मणम् "यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजमानाः कामभ्युदेतीति" । तैत्तिरीयब्राह्मणमपि "एषा वै सुमना नामेष्टिर्यमद्येजान पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन्नेवास्मै लोके ऋध्नुक भवतीति" अयमर्थः येयमिष्टिश्चन्द्रदर्शनोपेते दिने क्रियते सेयमिष्टिः सुमनःनाम्ना ताहगीमिष्टिं कृतवन्तं यजमानमभिलक्ष्य तस्मिन् दिने पश्चाच्चन्द्रमा उदेति तस्मै यजमानायास्मिन् लोके समृद्धिर्भवतीति बाढं तदेतच्छ्रुतिद्वयं बौधायनमतानुसारिव्याख-

शयने वापि हते गर्भगृहोदरे । स्त्रीं स्निग्धागुरुधूपाढ्यां पीनोरुजघनस्तनीः । प्रकामञ्च निषेवेत मैथुनं तर्पितो नृप । मधुरं तिक्तकटुकमम्लं लवणमेव च । अन्नपानं तिलान् माषान् शाकानि च दधीनि च । तथेक्षुविकृतीः शालीन् सुगन्धांश्च नवानपि । प्रसहानूपमांसानि क्रव्यादबिलशायिनाम् । औदकानां प्लवानाञ्च पाटिनाञ्चोपलायते । मद्यानि च प्रसन्नानि यच्च किञ्चिद्बलप्रदम् । कामतस्तन्निषेवेत पुष्टिमिच्छन् हिमागमे" हेमन्तसेव्यादि

"एष एव विधिः कार्य्यः शिशिरे समुदाहृतः" ।

"हेमन्ते निचितः श्लेष्मा शैत्यात् क्लिन्नशरीरिणाम् । औष्ण्याद्वसन्ते कुपितः कुरुते च गदान् बहून् । ततोऽम्लमधुरस्निग्धलवणानि गुरूणि च । वर्जयेद्वमनादीनि कर्म्माण्यपि च कारयेत् । षष्टिकांश्च यवान् शीतान् मुद्गान् नीवारकोद्रवान् । लावादिविष्किरैर्सैर्द्ध्याद्यूषैश्च भुञ्जीत । पटोलनिम्बवार्त्ताकुतिक्तकैश्च हिमात्यये । सेवेत माधवेऽरिष्टान् सीधु माध्वीकमासवान् । व्यायामञ्जनं धूमं तीक्ष्णञ्च कवलग्रहम् । सुखाम्बुना च सर्व्वार्थान् सेवेत कुसुमागमे । तीक्ष्णरूक्षकटुक्षारकषायं कोष्णमद्रवम् । स सूक्ष्ममधुप्रायं वसन्ते भोजनं हितम् । व्यायामोऽत्र नियुद्धाध्वशिलानिर्घातजो हितः । उत्सादनं तथा स्नानं वनिता काननानि च । सेवेत निर्हरेच्चापि हेमन्तोपचितं कफम् । शिरोविरेकवमननिरूहकवलादिभिः । वर्ज्जयेन्मधुरस्निग्धदिवास्वप्नगुरुद्रवान्" वसन्तसे०

"व्यायाममुष्णमायासं मैथुनञ्चातिशोषि च । रसांश्चाग्निगुणोद्रिक्तान् निदाघे परिवर्जयेत् । सरांसि सरितोऽपि वनानि रुचिराणि च । चन्दनानि परार्ध्यानि स्रजः सकमलोत्पलाः । तालवृन्तानिलाहारास्तथा शीतगृहाणि च । धर्म्मकाले निषेवेत वासांसि सुलघूनि च । शर्कराखण्डदिग्धानि सुगन्धीनि हिमानि च । पानकानि च सेवेत मन्थांश्चापि सशर्करान् । भोजनं च हितं शीतं सघृतं मधुरद्रवम् । शृतेन पयसा रात्रौ शर्करामधुरेण च । प्रत्यक्कुसुमाकीर्णशयने हर्म्म्यसंस्थिते । शयीत चन्दनार्द्राङ्गः स्पृश्यमानोऽनिलैः सुखैः" ग्रीष्मसेव्यादि ।

"तापात्यये हिता नित्यं रसा ये गुरवस्तथा । पयोमांसरसाः कोष्णास्तैलानि च घृतानि च । द्रवणञ्चापि यत्किञ्चिदभिष्यन्दि तथैव च । निदाघोपचितश्चैव प्रकुप्यन्तं समीरणम् । निहन्यादविरुद्धेन विधिना विधिकोविदः । नदीजलं रूक्षमुष्णमुदमन्थं तथाऽऽतपम् । व्यायामञ्च दिवास्वप्नं व्यवायञ्चात्र वर्ज्जयेत् । यवपिष्टकगोधूमान् शालींश्चाप्यनवांस्तथा । हर्म्यमध्ये निवाते च भजेच्छय्यां मृदूत्तराम् । सविषप्राणिविण्मूत्रलालामिश्रोष्मादिभिः । समाप्लुतं तदा तोयमान्तरीक्षं विषोपमम् । वायुना विषदुष्टेन ग्राह्यं न च दूषितम् । तद्धि सर्वोपयोगेषु तस्मिन् काले विवर्जयेत् । निरूहैर्बस्तिभिश्चान्यैस्तथान्यैर्मारुतापहैः । कुपितं शमयेद्वायुं वार्षिकं वा चरेद्विधिम् । ऋतावृतौ य एतेन विधिना वर्त्तते नरः । घोरानृतुकृतान् रोगान् नाप्नोति स कदाचन" प्रावृट्से०

**ऋतुस्तोम** पु० एकाहसाध्ये यागभेदे "नाकसद् ऋतुस्तोमादिस्तोमायाभिप्लवाहानि" आश्व० श्रौ० ६,८,२६ । "ऋतुस्तोमनामानश्च षडेकाहाः" नारा० ।

**ऋतुस्थला** स्त्री अप्सरोभेदे "ऋतुस्थला घृताची च विश्वाची पूर्व्वचित्त्यपि" भा० आ० १२३ अ० अप्सरोभेदकथने ।

**ऋतुस्नाता** स्त्री ऋतौ ऋतुकाले विहितदिने (चतुर्थदिवसे) स्नाता । ऋतुकाले चतुर्थदिवसे शुद्ध्यर्थं कृतस्नानायां स्त्रियाम् । "ऋतुस्नातां तु यो भार्य्यां सन्निधौ नोपगच्छति" मिता० स्मृति "धर्म्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन्" रघु । "पूर्व्वं पश्येदृतुस्नाता यादृशं नरमङ्गना । तादृशं जनयेत् पुत्रं भर्त्तारं दर्शयेदतः" सुश्रुत । अधिकमृतुकालशब्दे ऋतुमतीशब्दे च । दारविशेषणत्वे पुंस्त्वम् "यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छति" मिता० स्मृति ।

**ऋतुस्नान** न० ऋतौ शुद्ध्यर्थं स्नानम् । रजस्वलायाश्चतुर्थदिनकर्त्तव्ये स्नाने तस्या आर्त्तायाः स्नानप्रकारश्चार्त्तवशब्दे ८०८पृ० उक्तः ।

**ऋतुहरितकी** स्त्री ऋतुभेदे द्रव्यभेदेन सेव्या हरितकी । वर्षादिषु ऋतुषु क्रमेण सैन्धवशर्कराशुण्ठीजीरकमधुगुडैर्मिश्रणेन सेव्यायां हरीतक्याम् । "सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात् । वर्षादिष्वभया प्राश्या रसायनगुणैषिणा" भावप्र० ।

**ऋते** अव्य० ऋत (सौत्र) क्त । वर्ज्जने विनार्थे च । "अवेहि मां प्रीतमृते तुरङ्गमात्" रघु "अंशादृते निषिक्तस्य नीललोहितरेतसः" कुमा० । "शक्तोऽन्य सन्ति वरमृते देव पिनाकिनम्" भा० व० ३९ अ० । "नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते" मनु "अस्मात् को हरेत्सर्व्वं दुहितृणा सुतादृते" या० । एतच्छब्दस्य विनार्थत्वात्

तद्योगे पञ्चमी द्वितीया तृतीया च भवति तत्रोदाहरणेषु पञ्चमी द्वितीयाद्रष्टव्या। तृतीयाया उदाहरणं मृग्यम्।

ऋतेकर्म्म अव्य० वेदे मा०वर्ज्जने अव्ययी० अपसमा०। कर्म विनेत्यर्थे। "ये कर्म्म च क्रियमाणश्च मन्त्र ऋतेकर्म्ममुपायन्त देवाः" ऋ० १०,५५ दे०।

ऋतेजा त्रि० ऋते यज्ञनिमित्तं जायते जन–विट् अलुक् स०। यज्ञनिमित्तजाते। "अग्ने स शेवृधतमा ऋतेजाः" ऋ० ६, २१। "ऋतेजा यज्ञनिमित्तं जात" भा०।

ऋतेयु पु० वरुणस्य ऋत्विजि ऋषिभेदे। "इदेयुश्च ऋतेयुश्च परिव्याधश्च कीर्त्तिमान्। एकतश्च द्वितश्चैव त्रितश्चादित्यसन्निभाः। अत्रेः पुत्रश्च धर्म्मात्मा ऋषिः सारस्वतस्तथा। वरुणस्यर्त्विजः सप्त पश्चिमां दिशमाश्रिताः" भा० आनु० १५० अ०। २पौरवे नृपभेदे। "पूरोर्वंशं प्रवक्ष्यामि" इत्युपक्रम्य। "संयातिस्तस्याहंयातीरौद्राश्वस्तत्सुतः स्मृतः। ऋतेयुस्तस्य कक्षेयुस्थण्डिलेयुकृतेयवः। जलेयुः सन्नतेयुश्च धर्म्मसत्यव्रतेयवः। दशैतेऽप्सरसः पुत्रा वनेयुश्चावमः स्मृतः। घृताच्यामिन्द्रियाणीव मुख्यस्य जगदात्मनः। ऋतेयोरन्तिनावोऽभूत्" भाग० ९।२०, २।

ऋतेरक्षस् पु० ऋते उद्देश्यतया यज्ञितं रक्षोयतः। यज्ञे "ऋतेरक्षा वै यज्ञः" ऐत०ब्रा०। यज्ञस्य रक्षोभ्यो रक्षणीयत्वात् तथात्वम्।

ऋतोद्य न० ऋत+वद–भावे क्यप्। सत्यकथने "ऋतं वदन्ना ऋतोद्येषु" अथ० १४,१,३१।

ऋत्विज् पु० ऋतु+यज–क्विन् उ०प०। १याजके "अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान्। यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते" इति मनूक्ते २स्वानुष्ठेयवैदिककर्मकरे। ऋत्विजश्च षोडश तत्र मुख्याश्चत्वारः तेषां प्रत्येकं सहकारित्रयं इति षोडश। विवृतिरस्या वाचस्पत्ये ८५१ पृ० दृश्या। "ऋत्विजो यां चाशिषमाशासते सा यजमानस्यैवेति श्रुतेः" "ऋत्विग्यजमानयुक्तौ च समौ संपरिकीर्त्तितौ। यज्ञे स्वाम्यानुयात् पुण्यं हानिर्वाऽऽदेऽथवा जयम्" इति ब्रह्मवचनेन ऋत्विक्कृतयज्ञफलमेतमदक्षिणादिना वर्द्धयितुरेव। "श्रौतस्मार्त्तक्रियाहेतोर्वृणुयादृत्विजः स्वयम्" या०। "तस्य सांख्यपुरुषेण तुल्यतां बिभ्रतः स्वयमकुर्वतः क्रियाः। कर्तृता तदुपलम्भतोऽभवद् वृत्तिभाजि करणे यथर्त्विजि" मा०। ऋत्विज कर्म ष्यञ्। आर्त्विज्यं ऋत्विक्कर्मणि आर्त्विज्यशब्दे उदा० ऋत्विक्कर्मार्हे इति खञ्। आर्त्विजीन ऋत्विक्कर्मार्हे "दाक्षिण्यदिष्टं ऋतमार्त्विजीनं" भट्टिः।

ऋत्विय त्रि० ऋतुरस्य प्राप्तः तत्र भवः तत्रानुष्ठेयं वा वेदे घस् नियमात् भत्वाभावेन न गुणः। १प्राप्तकाले २कालभवे ३प्राप्तकालानुष्ठेये च "अयं यो गर्भमृत्वियं प्रजा अर्धम्याधत्त" यजु० ११,४८। "दधे ह गर्भमृत्वियं यतो जातः प्रजापतिः" ३२६२। ऋत्वियावान् लोके तु यत्। ऋतव्य इत्येव तेष्वर्थेषु त्रि०।

ऋत्वियावत् त्रि० ऋत्वियमृतुकालभवं प्रजोत्पादनकर्म्म तत्रानुष्ठेयकर्म वाऽस्त्यस्य मतुप् मस्य वः दीर्घः। १प्रजोत्पादनकर्मयुक्ते २तत्रानुष्ठेयकर्मयुक्ते च। "तत न ऋत्वियावत" ऋ० ८,८,१०। स्त्रियां ङीप्। "इय न ऋत्वियावती धीतिरेति नवीयसी" ऋ० ८,१२,१०। "ऋतौ वसन्तादिकालेऽनुष्ठेयं यत्कर्म ऋत्वियं तद्वती" भा०।

ऋत्व्य त्रि० ऋतुरस्य प्राप्तः तत्र भवः तत्रानुष्ठेयं वा कर्म यत् संज्ञापूर्वकविधेरनित्यत्वात् न गुणः अजुत्वम्। ऋत्वियशब्दार्थे "अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानाम्" ऋ० १०,१८३,१।

ऋदूदर त्रि० ऋदु उदरं यस्य वेदे पृ० मलोपः। मृदूदरे निरु०। "ऋदूदरः सुहवो मा नो अस्यै" ऋ० २,३३,५, "ऋदूदरेण सख्या सचेय" ऋ० ८,४८,१०।

ऋदूपा त्रि० इपो०। १अर्द्दनपातिनि २गमनपातिनि ३दूरपातिनि निरु०। "उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिदृदूवृधा" ऋ० ८,७७,११। इमामेवर्चमधिकृत्य यास्केन तथार्थतया निर्वचनं कृतम्।

ऋदूवृध पु० इपो०। १मर्मण्यर्द्दनवेधिनि २गमनवेधिनि ३शब्दवेधिनि ४दूरवेधिनि च निरु०। ऋदूपाशब्दे उदा०। तामेवर्चमधिकृत्य यास्केन तथार्थतया निरुक्तम्।

ऋद्ध न० ऋध–क्त। १पक्वमर्दितधान्ये २सिद्धान्ते ३वृद्धौ च। ४समृद्धे ५सम्पन्ने त्रि० "इयमृद्धधनौ ह्यसमौ" नैष०। "अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम्" गीता "धनधान्यैरपत्यादिभिः सम्पन्ने प्रवृद्धरूपेण वर्त्तमाने च" ६विष्णौ पु०। "ऋद्धः स्फीताकारो मन्त्रः" विष्णुस० धर्मादिभिरुपेतत्वात् ऋद्धः" भा०। "ऋद्धः स्फीतो महात्मा" विष्णुस०। "प्रपञ्चरूपेण वर्द्धमानत्वात् ऋद्धः" भा०।

ऋद्धि स्त्री ऋध–भावे क्तिन्। १वृद्धौ २सम्पत्तौ ३सिद्धौ च। "परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना" कुमा०। "ऋद्ध्या भयान् ज्योतिरिव प्रकाशते" भा० व० ।।। । कर्त्तरि क्तिच्। ४पार्वत्यां शब्दरत्ना०। ५लक्ष्म्यां

६देवभेदे । करणे क्तिच् । ७ओषधिभेदे स्त्री राजनि० । तल्लक्षणं यथा । "ऋद्धिर्वृद्धिश्च कन्दौ द्वौ भवतः कोशयामले । श्वेतलोमान्वितः कन्दो लताजातः सरन्ध्रकः । स एव ऋद्धिर्वृद्धिश्च भेदमप्येतयोर्ब्रुवे । तूलग्रन्थिसमा ऋद्धिर्वामावर्त्तफला च सा । वृद्धिस्तु दक्षिणावर्त्तफला प्रोक्ता महर्षिभिः ।" "ऋद्धिर्बल्या त्रिदोषघ्नी शुक्रला मधुरा गुरुः । प्राणैश्वर्यकरी मूर्च्छा रक्तपित्तविनाशिनी" भावप्र० । "काकोली क्षीरकाकोली जीवकर्षभकावुभौ । तथा मेदा महामेदा ऋद्धिर्वृद्धिर्मधूलिका । निरूहेषु यथालाभमेव वर्गो विधीयते" सुश्रु० । तयोरलाभे वर्गमध्ये वाराही देया ऋषभशब्दे प्रमाणम् ।८कुबेरपत्न्याञ्च । "तरौ तत्र निबध्याथ कश्यपं प्रददौ शुभा । अदितिर्मम पुत्रार्थं सौभाग्यार्थं तथैव च । निष्क्रयेण मया दत्तः कश्यपस्तु तपोधन । इन्द्रोदत्तस्तथेन्द्राण्या सौभाग्यार्थं ततो मम । सोमश्चाप्यथ रोहिण्या चण्डया च धनदस्तथा । एवं सौभाग्यदोऽहञ्च पारिजातो न संशयः" हरिव० १२६ । "ऋद्धिः कुबेरकान्ता च जलेश महिषी तथा" हरिव० १२६अ० । "सावित्री ब्रह्मणः साध्वी कौशिकस्य शची सती । मार्कण्डेयस्य धूमोर्णा ऋद्धिर्वैश्रवणस्य च" भा० अनु० १४६ अ० । "शक्रः शचीपतिर्देवो यमो धूमोर्णया सह । वरुणः सह गौर्य्या च सहर्द्ध्या च धनेश्वरः" हरि० १५अ० । साऽस्यास्ति मतुप् । ऋद्धिमत् वृद्धियुक्ते त्रि० स्त्रियां ङीप् । "तमृद्धिमद्बन्धुजनाधिरूढैः" कुमा० । "धाराग्रहेष्वात्तमृद्धिमन्त" रघु० तन्त्रोक्ते ठवर्णे । "अथाभिधास्ये त्वरिता त्वरितं फलदायिनीम् । "तारो रमा वर्म्मयोजन्मविरोधस्वरान्विता" ऋद्धिः ठकारः" तन्त्रसार ।

ऋध वृद्धौ दिवा० स्वा० च पर० अक० सेट् उदित् इरित्त्व । दि० ऋध्यति ऋध्यात् ऋध्यतु आर्ध्यत् स्वा० ऋध्नोति ऋध्नुवन्ति ऋध्नुयात् ऋध्नोतु ऋध्नुहि आर्ध्नोत् । उभयत । आर्धत्—आर्धीत् । आनर्ध आनर्धतुः । अर्द्धिता ऋध्यात् अर्द्धिष्यति आर्द्धिष्यत् । अर्द्धितव्य, अर्द्धनीय । ऋध्य । ऋद्ध ऋद्धिः । ऋध्यन् ऋध्नुवन् अर्धः । उदित्त्वात् वेट् अर्द्धित्वा ऋद्ध्वा । समृध्य । "नामनध्य भवत्यृध्नोति नाधनं ब्रह्म वर्द्धते मनु" । "प्रयत्नामध्यतो द्रष्टा हीनमात्मानमेव च । सोऽहं न स्त्री नचाप्यस्त्री न पुमान् नापुमानपि" भा०व०१६अ० । "पृथिव्यामग्नये समनमन्त्स आर्ध्नोत्" अथ० ४,३९,१ । वे अध्यन्तो न वहून्यास्मै:" २,२५,८ । आत्मनेपदित्वमपि "ते च लोमश । लोकेऽस्मिन् ऋध्यन्ते केन हेतुना" भा०व० ६४ । वेदे गणव्यत्यासात् श्नम् । "य एषां भृत्यामृणधत् स जीवात्" ऋ०१,८४,१६ । मन्नामि भीतिरुत यज्ञमृध्नुन्" १०,११०, २ । अन्तर्भूतण्यर्थत्वात् सक० । णिचि अर्द्धयति ये "त्वा वर्धयन्त्यृद्धये अर्दयन्ति" ऋ०७,८१,४ । सनि वेट् अर्दिधिषति ईर्त्सति । वेदे गणव्यत्यासात् श तेन । "इन्द्रामास्त्वा शतं हिमा ऋधेम" अथ०१९,५५,४ । ऋधक्छब्दे उदा० । "ऋधद्यस्ते धिया मर्त्तः शशमते" ऋ० ६,२,४ । स्वा०तर्पणे वर्द्धने च सक० । "आऋध्नोति हविष्कृतिम्" ऋ० १,१८,८ । "अन्तत एव तद्देवानृध्नुवन्ति" ऐ०ब्रा० । "सोऽहं प्रागभवतैव नूतनमृध्नोमि" भवभूति ।

अधि+अधिकवृद्धौ । "यदस्मिविदं सर्वमध्यार्ध्नोत्तेनाध्यर्द्धः" इति शत०ब्रा०१४,६,१० ।

आ+समृद्धौ । "अथाद्योमनर्धमेत् समानो यमस्य लोकेऽधिरज्जुरायत्" अथ० ६, ११८,२ । ताच्छील्ये चानश् ।

उप+उपगमे । "तस्मादेतत् क्षत्रिय एव नक्षत्रमुपेत्संक्रांतीव" शत०ब्रा०२,१,२,१७ । "उपेत्सेत् लोकुर्यात्" भा० । "एतेषामेव संवत्सरमुपेत्सेत्" २,१,२,१४ ।

वि+ऋद्धिविगमे विगतायां वृद्धौ "अथ यस्मान्न कृत्तिकास्वादधीत । एता वा अपत्न्य आसु सप्तर्षीन् ह स्म वै पुरर्क्ष इत्याचक्षते ता मिथुनेन व्यार्द्धन्तामी ह्युत्तराहि सप्तर्षय उद्यन्ति पुर एता व्यर्द्धनिव वै तद्योमिथुनेन व्यृद्धः स नेन्मिथुनेन व्यृद्धा" इति शत०ब्रा० २,१,२,४ । "व्यार्द्धन्त विगतर्द्धिका अभवन्" भा० । गणव्य०साधु । "यदा पशुके यत्तस्के जुहुयात् पशुभिर्व्यृध्येत पापीयान्तस्यात्" १२,१,२,८ । "अव्ययं विभक्तीत्यादि" पा० सूत्रे विगता ऋद्धिः व्यृद्धि " सि०कौ० ।

सम्+समृद्ध्याधिक्ये अतिशयितवृद्धौ । "अव्ययं विभक्तीत्यादि" पा० "ऋद्धेराधिक्य समृद्धि "सि०कौ० । "ब्र' स्विद्धा तान् समृध्नुयात्" मनु । "यत्नुपक्षं समृध्यन्तं यो मोहात् समुपेक्षते" भा० व० ५४ अ० "अयं कामः समृध्यताम्" यजु० २६,२ । पदव्यत्यास' ।

ऋधक्(क्) अव्य० ऋध—बा० कनि(कि)क् स्वरा० । १सत्ये, २वियोगे, ३पृथक्, ४सामीप्ये, ५स्वास्थ्ये, च मेदिनि० । वियोग पृथक्करणम् । "ऋधगद्वेषः कृणुत" ऋ०८ १, ८,११ । "ऋधक् पृथक् कृणुत कुरुत" भा० । "ऋदि-

न्द्रो दिवि पर्य्यो यदृधक्" ऋ० ६,४०,५ । "ऋधक् सा वो मरुत" ७,६७,४ । "ऋधगुद्देवा इह यजा चिकित्व" २,२६,१ । "ऋधगित्था स मर्त्त्यः" ऋ० ८,१०१,१ । "ऋधक् सत्यम्" भा० । "ऋधगयतो अनिमिषं रक्षमाणा" ६,१,२ । "ऋधगयत सत्येन गच्छत" भा० । कर्त्तरि यजिक् । ६समृद्धे, ७वृद्धौ च त्रि० । "ऋधगया ऋधगुताशमिष्ठा" यजु०८,२० । "ऋधक् समृद्धमयाः" "ऋधक् यज्ञं समर्द्धयन्" वेददी० । "ऋधक् सोम स्वस्तये" ऋ०६,६४,३० । "ऋधक् ऋध्नुवन् तथा च" यास्कः "ऋधगिति पृथग्भावस्यानुप्रवचनम् भवति अथाप्यृध्नोत्यर्थे दृश्यते" भा० । "ऋधगुद्वेम कविनेषिताम" ऋ० ६,५६,१० । "ऋधक् समृद्ध यथा तथा स्तुयेम" भा० ।

ऋधत् त्रि० ऋध० गत वेदे शब्बन्धात् । वर्द्धमाने । "इष्ट या ना ऋधद्योनीतवाराम आगत" ऋ०८ ४६,२२ । "ऋधद्योनीर्देवा" भा० । रयगर्त्ते वेगवाची अत्र स्थाने ततमा । "गमाभिक्षं धद्वारायाग्नये ददाश" ६,३,२ । "ऋधद्वाराय ऋधत् समृद्ध वार वरणीयं धन यस्य" भा० ।

ऋन्फ(म्फ) हिंसायां तुदा० सुधा० सक० पर० सेट् । ऋम्फति आर्म्फीत्—आर्फीत् ऋम्फाम् बभूव आस चकार आनर्फ

ऋफ दाने हिंसायां निन्दायां युद्धे च सक० आयासाम् अक० तुदा० पर० सेट् । ऋफति आर्फीत् । कविकल्पद्रुमे ऋफधातुस्तन्त्रे पा० मते रिफधातुक्त पूर्वोक्त ऋफधातुस्तु हिंसायामिति भेद । आनर्फ आनृफतु ।

ऋबीस न० ऋ+वज मे भाव-बच प्० । पृथिव्यां निरु० तमस्ये २अग्नौ च । "हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्ज्जमस्मा अधत्तम् । "ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथु सर्वगणं स्वस्ति" ऋ० १,११६,८ । इमामृचमविहता यास्केन ऋबीसमपगतभासमन्तर्हितभास गतभासम् वा इति निरुक्तम् "योऽत्र ऋबीसे पृथिव्यामग्निरन्तःरोमधिरमस्पर्गिमम् तमुन्निन्यतु" "युवमृबीसमुत तप्तमत्रये" ऋ०१०,३९,९ । "तप्तमग्निसन्तप्तम्" भा० । "वत्रिर्यद्वामवरोहन्नृबीसम्" ऋ० ५,७८,४ । "ऋबीस तवाग्निम्" भा० । "अनन्तानित्यपभोदपतितार्थाधान बीसपदकनाद्युक्तानि वर्ज्जयेत्" कात्या० ४,१०१,५ । "अत्र मयाप्ते पृथिवीवाची "योऽयमृबीसे पृथिव्यामिति" यास्कोक्ते ऋबीसे यत् प्रक्त तिल्वकादि" कर्क ।

ऋभु पु० ऋरि स्वर्गे अदितौ वा भवति ऋ++भू—ड । १देवे । तेन ऋभवः स्वर्गवासिनः इत्यर्थ इति प्रमादात् पूर्वमनुक्रमितिः तस्य च स्वर्गे पुस्तम् बोध्यम् । "ऋभोर्नास ऋभव समस्वरन्" ऋ०८,३,७ । "तं नेमिमृभवो यथा" ऋ०७५,५ । २मेधाविनि निरु० । "अग्नये ब्रह्म ऋभवस्ततक्षु" ऋ० १०,८०,७ । "ऋभुविर्विप्र, पुर एता जनानामृभुर्धीर उशना काव्येन" ऋ०९,८७,३ । ३देवानामपि यष्टव्ये देवे । "ऋभवोनाम तत्रान्ये देवानामपि देवता । तेषां लोका परतरे यान् यजन्तीह देवता" भा० व० १५१५९। चाक्षुषमन्वन्तरीये ४देवगणभेदे च । "चाक्षुषस्यान्तरे तात मनोर्देवानिमान् श्रणु । आप्या प्रभूता ऋभव पृथुकाश्च दिवौकस । लेखानाम महाराज। पञ्च देवगणा स्मृता" हरिवं०७ । ५शिल्पिकडीने ५जातिभेदे "ऋभूणां त्वे ति रथकार" कात्या० ४,९,५, "ऋभु सौधन्वन सतरथकारपर्यायसौधन्वन्निकेभ्यो हीनो नियत कश्चिज्जाति विशेष इति पाचवारिणिमिश्रा" कर्क । तृतीयसवनीये सुधन्वन पुत्ररूपे ६देवभेदे च । "इहोपयात शवसो नपात सौधन्वना ऋभवो माम भूत" ऋ० ४,३५,१, एतत्सूक्ते च तत्कर्म्मस्यैव गुणादिवर्णनम् । ऋ+भा—डु । ७उरुभासमाने त्रि० "ऋभुमृभुक्षणो रयिम्" । ऋ०४, ३७,५, "ऋभुमुरुभासमानम्" भा० ऋभुरस्त्यस्य उ द्वे स्ततया मतुप् । ऋभुमत् ऋभुदेवताके त्रि० । "ऋभुमन्तं वाजवन्तं त्वा कवे" ऋ०२,५२,६ । ऋभुवा इह वाम अत्र । आर्भव तद्देवे साममेदे आर्भवपवस्ते उदा० । क्विप् । ऋभूरपि देवे पु० ।

ऋभुक्ष पु० ऋभवो देवा क्षियन्ति वसन्त्यत्र क्षि+आधारे बा० ड । १स्वर्गे २वज्रे ३इन्द्रे च रायमुकुट । ऋभुनाम्नाक्षीयते गम्यते कर्म्मणि बा० ड । ऋभुनामके देवे "उप नोयाता अध्वरमृभुक्षा" ऋ०४ ३०,१, "ऋभुक्षा ऋभव" भा०

ऋभुक्षन् पु० ऋभुनाम्ना क्षायते क्षै—क्षये धातूनामनेकार्थत्वात् ख्यातौ कर्म्मणि कनिन् । ऋभुनामख्याते देवभेदे "स्तोमोयाता ऋभुक्षणो इन्द्रे च । "ऋभुमृभुक्षणो रयिम्" ऋ० ४,३७,२५ ।

ऋभुक्षिन् पु० ऋभुक्ष वज्र स्वर्गोवाऽस्यास्ति इनि । इन्द्रे स्वादौ ऋभुक्षा ऋभुक्षाणौ पथ्यादेशादौ टिलोप ऋभुक्ष इत्यादि "इन्द्रो विश्वा ऋभुक्षा वाजो अर्य्य" ऋ०७,४८,२, "ऋभुक्षेवाचरति ऋभुक्षिन्+आचारे क्विप् अनुनासिकदीर्घ ऋभुक्षीयति । तत क्विप् ऋभुक्षीन् तद्दाचारान्विते त्रि० ।

**ऋभ्व** त्रि० उरुभूतः पृषो०। महति उरुभूते निरु०। "स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम्" ऋ० १०,१२०,६, अस्या ऋचः यास्केन "स्तोतव्यं बहुरूपमुरुभूतमीश्वरतममाप्तव्यमाप्तव्यानामिति" क्रमेण पदानि निरुक्तानि। ऋभुः उरुभूत इवाचरति ऋभु+आचारे क्विप् ततो भा० अत्। ऋभ्वत् उरुभूते महति। "पुरुहूतोय पुरुगूर्त ऋभ्वा एकं पुरुप्रशस्त" ऋ० ६,३४,२, "ऋभ्वा महान्" भा० अत्वन्तत्वाभावान्त्यलोप। कनिन्। ऋभ्वन् तदर्थे "जुषद्ध्वा मनुषस्योर्ध्वस्तायभ्वा यत्ते" ऋ० १०,२०,५ भा० असच्। ऋभ्वस अतिमहति। "सत्यमस्वमृभ्वसम्" ऋ० ५,५२,८, "ऋभ्वसम् अतिमहद्भमिति" भा० "इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमृष्टम्" ऋ० ८,७०,२,

**ऋश** हिंसायां गतौ च सौ०पर०सक०सेट्। ऋशति आर्शीत् आनर्श आनृशतुः ऋशं। ऋश्य।

**ऋश्य** त्रि० ऋश-कर्मणि क्यप्। १हिंस्ये २मृगे पुंस्त्री शब्दर०। स्त्रियां जातित्वेऽपि योपधत्वात् टाप्। "ऋश्यो न तृष्यन्नवपानमा गहि" ऋ० ८,४,१०, "ऋश्यः ऋश्याख्यो मृग इव तृष्यन्" भा० "वसुभ्य ऋश्यानालभते" यजु० २४,२७, "ऋश्यो मयूरः सुपर्णस्ते गन्धर्वाणाम्" यजु० २४,३७, तत्र चतुरर्थ्याम् ऋश्या० क। ऋश्यक तत्सन्निकृष्टदेशादौ। भावे क्यप्। ३हिंसायां न०। ऋश्यं हिंसां पतनेन ददाति दा—क। ऋश्यद कूपे पु० "युवं वन्दनमृश्यदादुदूपथुः" ऋ० १०,३९,८। "ऋश्यदात् कूपात्" भा०।

**ऋश्यपाद्** त्रि० ऋश्यस्येव पादावस्य अन्त्यलोप समा०। मृगसदृशपादयुक्ते स्त्रियां ङीप् पद्भावश्च। "ऋश्यपदी वृषदती गोषेधा विधमामुत" अथ० १,१८,४।

**ऋश्यादि** पु० पाणिन्युक्ते चतुरर्थ्यां कप्रत्ययनिमित्ते शब्दगणे स च गणः। "ऋश्य, न्यग्रोध शर, निलीन, निवास, निवात, निधान, निबन्ध, विबद्ध, परिगूढ, उपगूढ, अश्मनि सित, मत वेश्मन्, उत्तराश्मन्, अश्मन्, स्थूल, बाहु, खदिर, शर्करा, अनडुह् अरडु, परिवंश, वेणु, वीरण, खण्ड, दण्ड, परिवृत्त, कर्दम, अंशु"।

**ऋष** गतौ वधे च तुदा०पर०सक०सेट्। ऋषति आर्षीत्। आनर्ष आनृषतुः अर्षिता ऋष्यात् अर्षिष्यति आर्षिष्यत्। अर्षितव्यं अर्षणीयं ऋष्य। अर्षिता ईदित् ऋष्ट ऋष्टवान् ऋष्टि। "इन्द्राभ्यां रक्ष ऋषत्सर्वतिम्" अथ० ६,४,७। "अथ दक्षिणाद्युग्यस्यार्षति" शत० ब्रा० ५,४,३,८। "ह्रदं न हि त्वा न्यृषन्त्यूर्मय" ऋ० १,५२,७। "यदुदर्थस्य मेदस्य परिशिष्यते तद्गुदे न्यृषेत्" शत० ब्रा० ३,८,४,५। "अथ पशुमृषति" इत्युपक्रम्य "सम भूमिं पर्यर्षणं करोति" ३,६,१,१८। अस्य वेदे भ्वादित्वमपि दृश्यते। गणव्यत्यासात् साधु। "अर्षन्त्वापस्त्वयेह प्रसूता" ऋ० २,३०९। "ऋषो गतौ व्यत्ययेन शप्" भा० "तस्मा आपो घृतमर्षन्ति सिन्धवः" १,१२५,५। "मही न धारात्यन्धो अर्षति" ९,८६,४४। "एता अर्षन्त्यललाभवन्तीः" ४,१८,६। "एता अर्षन्ति हृद्यात् समुद्रात्" ४,५८,५। "यथमास्कन्दमर्षति" यजु० २३,५५।

अभि+आभिमुख्येन गतौ "अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु" ऋ० ४,५८,१०। "हरयन्ति वारिषो गवे अभ्यर्षन्ति सुष्टुतिम्" ९,६१,२।

नि+परि+सम्+इत्यादौ गत्यर्थधातोरिवार्थं। "गुहाकरिन्द्र याता वीर्येण न्यृष्टम्" ऋ० ४,१८,७। "न्यृष्टं नितरां प्राप्तम्" भा०। "अयं निधिः सरमे अद्रिबुध्नो गोभिरश्वेभिर्वसुभिर्न्यृष्टः" १०,१०८,७।

**ऋषद्गु** पु० यदुवंश्ये राजभेदे। "यदुस्तस्मान्महासत्त्व क्रोष्टा तस्माद्भविष्यति" इत्युपक्रम्य "वृजिनीवतस्तु भविता ऋषद्गुरपराजितः। ऋषद्गोर्भविता पुत्रस्ततश्चित्ररथस्तथा" भा० अनु० १४७ अ।

**ऋषभ** पु० ऋष—अभक्। १ओषधिभेदे ओषधिभेदश्च द्रव्यगणान्तर्गत। स च सुश्रु० दर्शित यथा "अथातो द्रव्यसङ्ग्रहणीयमध्यायं व्याख्यास्यामः। समासेन सप्तत्रिंशद्द्रव्यगणा भवन्ति। तद्यथा विदारीगन्धा विदारी सहदेवा विश्वदेवाश्वदंष्ट्रा मत्यकपर्णी शतावरी सारिवा कृष्णसारिवा जीवकर्षभकौ महासहा क्षुद्रसहा बृहत्यौ पुनर्नवैरण्डो हंसपादी वृश्चिकाल्यृषभी चेति"। तल्लक्षणाद्युक्तं भावप्र० "ऋषभातिविषा कृष्णा काकनासा च चामरै। जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ। रसोनकन्दवत्कन्दौ निःसारौ सूक्ष्मपत्रकौ। जीवकः कूर्चकाकार ऋषभो वृषशृङ्गवत्। जीवको मधुरः शृङ्गी ह्रस्वः कूर्चशीर्षकः। ऋषभो वृषभो धीरो विषाणी वाक्ष इत्यपि। जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ। मधुरौ पित्तदाहघ्नौ कासवातक्षयापहौ"। अयञ्चाष्टवर्गान्तर्गत। "जीवकर्षभकौ मेदे काकोल्यौ ऋद्धिवृद्धिके। अष्टवर्गोऽष्टभिर्द्रव्यैः कथितश्चरकादिभिः" भावप्र०। "राजाश्याष्टवर्गस्तु यतोऽयमतिदुर्लभः। तस्य द्रव्य प्रतिनिधिं गृह्णीयात्तद्गुण

न्यत्र” श्रीधरः । “वकराक्षसनिधनप्रहृष्टैकचक्राम्” काद० । बकस्य तत्पुरीयकृष्णभीमकर्त्तृकवधकथा च भा०आ० १५७ अध्यायादौ । “एकचक्रां गतास्ते तु कुन्तीपुत्रा महाबलाः” इत्यादिना “भज्यमानस्य भीमेन तस्य घोरस्य रक्षसः” इत्यन्तेन १६२अ० वर्णिता ।

**एकचत्वारिंशत्** स्त्री एकाधिका चत्वारिंशत् शा०त० । (एकचल्लिश) १एकाधिकचत्वारिंशत्संख्यायां २तत्संख्यान्विते च बहुत्वबोधकत्वेऽपि सर्वदा एकवचनम् । एवमेकविंशति एकत्रिंशत् एकपञ्चाशत् एकषष्टि एकसप्तति एकाशीति एकनवति इत्येते शब्दाः क्रमेण एकविंशत्यादिसंख्यायां तदन्विते च स्त्री एकाधिकादश इत्यत्र तु एकादश इति भेदः सर्वेभ्य पूरणे डट् । एकचत्वारिंशादिस्तत्तत्संख्यापूरणे त्रि० स्त्रियां ङीप् ।

**एकचर** त्रि० एकः सन् चरति चर–पचा० अच् सुप्सुपेति स० । एककीभूत्वा चारिणि सहायचारिणि । “मुनिरेकचरः श्रीमान्” धर्म्मो विग्रहवानिव भा०व०७८अ० । “अनोकशायी लघुरल्पचारश्चरन् देशानेकचरः स भिक्षुः” भा०आ० ८१अ० । “न भक्षयेदेकचरान् अज्ञातांश्च मृगद्विजान्” मनुः । “ये एकाकिनः प्रायेण चरन्ति सर्पादयस्तानेकचरान्” कुल्लू० “अयमेकचरोऽभिवर्त्तते माम्” किरा० । “पृथिव्यामेकचरः परिबभ्राम भा०५,५,२० ।

**एकचरण** पु० एकश्चरणो यस्य । एकपादयुक्ते १मनुष्यभेदे २तद्युक्तजनपदभेदे च स च देशः वृहत्सं० कूर्म्मविभागे ऐशान्यामुक्तः । “ऐशान्यामेकलब्यराज्यपशुपालकीरकाश्मीराः” इत्युपक्रम्य “एकचरणानुविम्बाः सुवर्णभूर्वसुवनदिविष्ठाश्च” [यशमने

**एकचर्य्या** स्त्री एकस्य चर्य्या चर–भावे क्यप् ६त० । असहाय…

**एकचारिन्** त्रि०एकः सन् चरति चर-णिनि “सुप्सुपेति”स० । असहायचरे १एकचरे त्रि० । २बुद्धसहचरभेदे पु० त्रिका० ।

**एकच्छाया** स्त्री एकस्य ऋणशोधनेऽन्यासहायस्याधमर्णस्य छाया सादृश्यम् । अधमर्णसादृश्ये । “बहवः स्युर्यदि स्वांशान् दद्युः प्रतिभुवो धनम् । एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि” या० । “एकच्छायाश्रितेषु प्रतिभूषु एकस्याधमर्णस्य छाया सादृश्यं तामाश्रिता एकच्छायाश्रिता अधमर्णो यथा ऋणदानाय स्थितस्तथा दानप्रतिभुवोऽपि प्रत्येकं कृत्स्नदानाय स्थिताः” मिता० । “एकच्छायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते । प्रोषिते तत्सुतो दाप्यः पितृद्रव्यं मृते सति” कात्या०स्मृ० । एकैव छाया आच्छादनरूपा यत्र । तुल्यच्छादने त्रि० “एकच्छायं चक्रतुस्ताः शाकार्यं शरवृष्टिभिः” भा० वि० १८७ ।

**एकज** त्रि० एकस्मात् जायते जन–ड ५त० । १एकस्माज्जाते “शाकस्थानां सप्तथमाष्टरेकजम्” ऋ० १, १६४,१५ । शाकजानामेकस्मादादित्यात् सहोत्पन्नानाम् ऋतूनां मध्ये सप्तथं सप्तममृतुम् एकजमेकेनोत्पन्नमाहुः कालतत्त्वविदः, चैत्रादीनां द्वादशानां मासानां द्वयमेकेन वसन्ताद्याः षड्तवो भवन्ति अधिमासेनैक उत्पद्यते सप्तमर्त्तुः” भा० । एकेन जातमित्युक्तिश्चिन्त्या कर्त्तृकरणयोरेव तृतीयासमासो न हेतुतृतीययेति नियमात् । २सोदरासोदरभ्रातरि तयोरेकशरीरोत्पन्नत्वात् एकजत्वम् ३भगिन्यां स्त्री जन–ड । ५त० । एकजातादयोऽप्यत्र “सर्वेषामेकजातानामेकश्चेत् पुत्रवान् भवेत् । सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत्” स्मृतिः “बह्वीषु चैकजातानां नानास्त्रीषु निबोधत” मनुः । एकः असहाय एव जायते जन–ड सुप्सुपेति स० । ४असहायतया जाते “एकजम्” कात्या० ६, १,१ । “एकः असहाय एव भूमेर्जातः तमेकं यूपं वृश्चति” कर्कः । “उप ते पाजो न त्वा वृश्चो वयो वयं नयस एकज त्वम्” ऋ० १०,८४,२ ।

**एकजटा** स्त्री एका जटा यस्याः । सर्व्वतारिणीगणप्रकृतिरूपे देवीभेदे तदाविर्भावः कालिका०६१अ० वर्णितो यथा “सर्वे सुरगणाः सेन्द्राः सम्भूय गत्वा हिमाचलम् । गङ्गावतारनिकटे महामायां प्रतुष्टुवुः । अनेकधा स्तुता देवी तदा सर्वामरैर्वरैः । मातङ्गवनितामूर्त्तिर्भूत्वा देवानपृच्छत । युष्माभिरमरैरत्र स्तूयते का च भाविनी । किमर्थमागता यूयं मातङ्गस्याश्रमं प्रति । एवं ब्रुवन्त्या मातङ्ग्यास्तस्यास्तु कायकोषतः । समुद्भूताब्रवीद्देवी मां स्तुवन्ति सुरा इति । शुम्भो निशुम्भोऽसुरौ च भेते सकलान् सुरान् । तस्मात् तयोर्वधायाह स्तूयेऽद्य सकलैः सुरैः । विनिःसृतायां देव्यान्तु मातङ्ग्याः कायसम्पदाः । भिन्नाञ्जननिभा कृष्णा साभूत् गौरी क्षणादपि । कालिकाख्याऽभवत् सापि हिमाचलकृताश्रया । तामुग्रतारामृषयो वदन्तीह मनीषिणः । उग्रादपि भयात् त्राति यस्माद्भक्तान् सदाम्बिका । एतस्याः प्रथमं बीजं कथितं तन्त्रमेव च । एषैवैकजटा ख्याता यस्मात्तस्या जटैकिका । शृणुत चिन्तनं चास्याः सम्यक् वेतालभैरवौ । यथा ध्यात्वा महादेवीं भक्तः प्राप्नोत्यभीप्सितम् । चतुर्भुजां कृष्णवर्णां मुण्डमालाविभूषिताम् । खड्गं दक्षिणपाणिभ्यां बिभ्रतीन्दीवरं त्वधः । कर्त्रीं च

ह्रश" इत्यत्र (छा॰१प्र,१०सू॰ १,२,३ क) तृतीयस्मिन् उष्णिक्छन्दस्के । एतदेवाभिप्रेत्य सूत्रम्, त्रिच्छन्दाश्यावापो माध्यन्दिनः इति । एवं सति एकत्रिकस्य माध्यन्दिनपवमाने तिसृष्विति यदुक्तं तत्र किं त्रयाणां तृचानामाद्यास्तिस्र ऋचो ग्राह्याः? किं वा प्रथमतृचस्थाः क्रमपठितास्तिस्रः? इति संशयः । तत्र त्रिच्छन्दस्त्वश्रुत्या प्रबलतया दुर्बलं पाठक्रमं बाधित्वा प्रथमपक्षो ग्राह्य इति प्राप्ते, अभिधीयते यदेतत् त्रिच्छन्दस्त्वं तदेतत् प्राकृतम्, तत्र छन्दस्त्रयोपेतस्य तृचत्रयस्योपदिष्टत्वात् विकृतावपि तद्धर्मातिदिष्टमिति चेत् बाढम् । अत एव पाठक्रमोऽप्यतिदिष्टः, तथा सति प्रक्रान्तगायत्रीच्छन्दस्कस्य तृचस्य समाप्तौ सत्यां पश्चाद् उष्णिक्छन्दस्के तृचे प्रथमाया ऋचः प्रारम्भावसरः स प्रारम्भस्तिसृषु इति विशेषविधानेन बाध्यते, तस्मादाद्यतृचो मिलितो ग्राह्यः"

एकत्वादिविवक्षान्याय पु॰ जैमिनीयोक्ते एकत्वादिसंख्याविवक्षावधारणार्थे न्याये स च न्यायः ४अ॰ १पादे ११सूत्रभाष्यादौ दर्शितो यथा "तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात्" ११सू॰ अस्ति ज्योतिष्टोमे पशुः अग्नीषोमीयो, यो दीक्षितो "यदग्नीषोमीयं पशुमालभते" इति, तथा, "अनड्वाहौ युनक्ति" इति, तथा, अश्वमेधे, "वसन्ताय कपिञ्जलानालभते" इति । तत्र सन्देहः, किं विवक्षितम्, एकत्वं द्वित्वं बहुत्वं च, उत अविवक्षितम्? इति । तत्र एकत्वमयज्ञाङ्गभूतं न विवक्षितम्, इत्यर्थः, अर्थस्य गुणभूतत्वात् न आलम्भस्य गुणभूता संख्या नियोजनस्य वा । कस्य तर्हि? पशोरनडुहोः कपिञ्जलानां च, विभक्तिर्हि श्रुत्या प्रातिपदिकार्थगतं संख्यार्थं ब्रूते, वाक्येन वा यज्ञाङ्गं ब्रूयात्, वाक्याच्च श्रुतिर्बलीयसी । तस्मात् न यज्ञाङ्गं विवक्षितम् इति" "अस्तु मा भूत् यज्ञाङ्गम्, पश्वादीनामङ्गम्, विवक्षितं तथापीति" उच्यते, न, पश्वादीनामङ्गेन एतेन अनुक्रमेण वा किञ्चित् प्रयोजनमस्ति, यज्ञाङ्गेन हि अविपन्नेन प्रयोजनम्, विपन्नेऽपि हि पश्वाद्यङ्गेऽविगुण एव क्रतुर्भवति, यज्ञाङ्गफलं न पश्वादेः । तस्मात् पश्वादेर्गुणेन अज्ञातेन ज्ञातेन वा न किञ्चित् प्रयोजनमस्ति इति न तत् विवक्षितम्, यद्धि प्रयोजनवत् तत् विवक्षितम् इत्युच्यते" भा॰ । "अश्रुतित्वाच्च" १२सू॰ "भवति च किञ्चित् वचनं येन विज्ञायते, न तत् विवक्षितम् इति, "यदि सोममपहरेयुरेकां गां दक्षिणां दद्यात्" इति, यदि हि विवक्षितं भवेत्, नैकामिति ब्रूयात्, गामित्येकत्वमस्य विवक्षितत्वात्, तथा, "अश्वौ द्वे धेनू द्वे" इत्यत्रापि द्वे इति वचनं ज्ञापकम्, अविवक्षितम् अश्वौ इति द्वित्वम् इति "त्रीन् ललामान्" इत्यत्रापि त्रीनिति वचनं लिङ्गम् । ललामानिति बहुवचनम् अविवक्षितम् इति" भा॰। "प्रतीयते इति चेत्" १३सू॰ "एवं चेत् पश्यसि, अविवक्षिता संख्या इति, तत् न, प्रतीयते हि संख्या आख्यातवचनस्य अङ्गभूता, यथा "पशुमानय" इत्युक्ते एक एवानीयते, पशू इति, द्वौ, पशून् इति बहव आनीयन्ते, यच्च प्रतीयते स शब्दार्थः, तस्मात् यज्ञस्याङ्गभूता संख्या इति शब्दात् गम्यते, न च शब्दात् गम्यमानम् ऋते कारणात्, अविवक्षितं भवति" भा॰ "नाशब्दं तत्प्रमाणत्वात् पूर्ववत्" १४सू॰ "नैतदेवं, सत्यं प्रतीयते, न तु अयं शब्दार्थः व्यामोहादेषा प्रतीतिः । कुतः एतत्? वाक्यार्थो यज्ञाङ्गम् इत्यवगम्यते, वाक्यं च श्रुत्या बाध्यते । तस्मात् अशब्दार्थोऽयं यज्ञे एकत्वादीति अशब्दार्थोऽपि हि प्रतीयते, यथा पूर्वो धावति इति, स पूर्व इत्युच्यते, यस्य अपरोऽस्ति, तेन पूर्व इत्युक्ते, अपरो गम्यते, न तु, अपरो, धावति इति अयमर्थात् प्रतीयते, एवम् इहापि पशुम् इत्येकत्वं गम्यते, न तु यज्ञे यथैव हि पूर्व इत्युक्तेऽपरो गम्यते एव केवलं, न तु स विधीयते कस्मिंश्चिदर्थे, एवम् इहापि संख्या प्रतीयते एव केवला, न तु कर्त्तव्यतया यज्ञे विधीयते न पशौ । कथं न पशौ विधीयते? इति चेत् विधायकस्याभावात् । आख्यातशब्दो विधायको भविष्यति इत्येतदपि नोपपद्यते, द्रव्यदेवतासम्बन्धस्य स विधायकः सन् आलभते इति न स संख्यासंख्येयसम्बन्धं विधातुमर्हति इति, भिद्येत हि तथा वाक्यम् । तस्मात् अविवक्षिता संख्या इति" भा॰ । "शब्दवत्तूपलभ्यते तदागमे हि तत् दृश्यते तस्य ज्ञानं यथान्येषाम्" १५सू॰ "तुशब्दः पक्षं व्यावर्त्तयति, न तत् अस्ति, न यज्ञे संख्या शब्देन श्रूयते इति, आख्यातवाच्ये हि अर्थे उपलभ्यते, लोके पशुमानय इत्येकवचने सति एकत्वपशुविशिष्टो गम्यते, तत्र हि एकत्वमपैति, द्वित्वमुपजायते । यस्य चागमे यत् उपजायते, स तस्य अर्थः इति गम्यते तस्य ज्ञानं यथान्येषां शब्दानाम्, अश्वमानयेति उक्ते अश्वानयनं प्रतीयते, न गामानय इति ज्ञायते, अश्वशब्दस्य अर्थोऽसौ न गोशब्दस्य गौः इति । यदुक्तं, श्रुत्या

वाक्यार्थौ बाध्येते, इति, उच्यते न श्रुतिर्ब्रूते, वाक्यार्थो नास्ति इति, केवलं तु प्रातिपदिकार्थगतां संख्यामाह। तादृशी च संख्या वाक्येन यागे विधीयते, प्रातिपदिकार्थो हि आख्यातशब्देन सम्बध्यते, विभक्त्यर्थोऽपि, तथा हि तद्विशेषणविशिष्ट आलम्भो गम्यते, तत्र एकार्थत्वात् एकं वाक्यम् अवकल्पते। यदि हि संख्याया विधीयमानायामेव आख्यातशब्दो न शक्नुयात्, आख्यातार्थं विधातुम्, एकस्य संख्येयसम्बन्धं च। तस्मात् यागे विवक्षिता संख्या इति" भा० "तद्वच्च लिङ्गदर्शनम्" ॥ ३६ ॥ सू०। किम्? इति। "कर्णायास्त्या, अवलिप्ता रौद्रा नभोरूपा पार्जन्या, तेषाम् ऐन्द्राग्नो दशमः" इति, यदि त्रित्वं विवक्षितं तदा ऐन्द्राग्नो दशमो भवति। तथा "कृष्णा भौमाः, धूम्रा आन्तरिक्षाः, बृहन्तो दिव्याः, शबला वैद्युताः, सिध्मास्तारकाः" इति बहुत्वम् आह। "अर्धमासानां वा एतत् रूपं यत् पञ्चदशिन" इति तस्मात् अपि पश्यामि, विवक्षिता संख्या इति। यत्तु उक्तम्, "एका माम्" इत्यविवक्षां दर्शयति इति। अत्र उच्यते नैव स्वामिसम्बन्धविधायकम्, एतत् उच्यते, इतरथा हि, गोदक्षिणासम्बन्धो विहितो गम्यते। तस्मात् विवक्षितेऽपि वाच्यमेतत्। अपो द्वे धेनू द्वे गोनृमकामान् इति च अनुवादः" भा० "तथा च लिङ्गम्" ॥ ३७ ॥ सू० "एवं च सति समानश्रुतिकं लिङ्गमपि विवक्षितं भविष्यति, तत्र इदं दर्शनम् उपपद्यते, "वसन्ते प्रातराग्नेयीं कृष्णग्रीवीमालभते, ग्रीष्मे माध्यन्दिने संहितामैन्द्रीं शरदि अपराह्णे श्वेतां बार्हस्पत्याम्" इति। तत्र श्रूयते, "गर्भिण्यो भवन्ति" इति, गर्भः स्त्रीणां गुणः, तेन स्त्रीत्वं दर्शयति इति भविष्यति। तथा "अश्व ऋषभो वृष्णिर्बस्तः पुरुषः इति ते प्राजापत्या" इति। तत्र श्रूयते "मुष्करा भवन्ति सेन्द्रियत्वाय" इति, मुष्करत्वं पुंसां गुणः, तेन पुंस्त्वं दर्शयति इति। अधिकरणान्तरं वा, तथा च लिङ्गम् इति, संख्याधिकरणं लिङ्गाधिकरणेऽतिदिश्यते। लिङ्गम् अविवक्षितम्, श्रुत्या वाक्यस्य बाधितत्वात्, न च, विवक्षितमिव श्रूयते इति, भवति लिङ्गं "स्त्री गौः सोमक्रयणी" इति, स्त्रीवचनात् सोमक्रयणी इत्यविवक्षितमेव लिङ्गं प्रतीयते। 'ननु कथं अगोमानय इति न स्त्रग आनीयते?" नैवम्, तद्, अमद्वन्तं पूर्वो धावति इति यथा। लिङ्गं विवक्षितं वाक्यार्थस्य श्रुत्याऽनभिहितत्वात्, तथा च लिङ्गम् "गर्भिण्यो भवन्ति" इति, तथा "मुष्करा भवन्ति" इति। यदुक्तं, "स्त्री गौः सोमक्रयणी" इति, तत्र स्त्रीत्वं विवक्षितं, तथा "प्रजापतये पुरुषान् हस्तिन आलभते" इति, पुरुषग्रहणम् अविवक्षितं, विस्पष्टो हि न्याय उक्तो लिङ्गविवक्षायाम्। तस्मात् विवक्षितं लिङ्गम् इति" भा०।

तत्त्वबोधिन्यां तूक्तं यथा "अग्नीषोमीयं पशुमालभेत" "पशुना रुद्रं यजेत" इत्यादौ पशोरेकत्वं विवक्षितं न वेति संशयः। तत्र पशुमित्यत्र द्वितीयान्तादिवृत्त्या पशुतदेकत्वयोरुपस्थितयोः परस्परान्वये परस्पराकाङ्क्षाभावात् तथैवापेक्षये पश्वेकत्वयोः परस्परमन्वयः पशुना आलभेतेत्यादि पदान्तराकाङ्क्षया वाक्यादेकत्वान्वयपशोर्यागादावन्वय इति वाक्यात् श्रुतेर्बलीयस्त्वेन पशुविशेषणत्वेनोपस्थितस्यैकत्वस्य न यागादावन्वयः निराकाङ्क्षत्वात् तथा च सूत्रम् "एकत्वमवचनाङ्गमर्थस्य गुणभूतत्वात्"। अर्थस्य पशोर्गुणभूतत्वात् विशेषणत्वेन यागमन्वयात् तथा-द्वेकत्वमविवक्षितं द्वाभ्यां बहुभिरपि यागसिद्धिरिति प्राप्ते उच्यते। पशुमित्यादौ प्रकृत्या पशुरुपस्थापितः प्रत्ययेन चैकत्वं कारकत्वञ्च ततश्चैकपदोपात्तत्वप्रत्यासत्त्या एकत्वस्य पश्वादौ कारकेऽन्वयः कारकत्वञ्च क्रियानिमित्तत्वमिति क्रिया चोपस्थितयागादिरिति पशोः प्रथमं कारकद्वारा क्रियायामन्वयः। पश्चान्मूर्त्तस्यैकत्वस्य क्रियासाधनतान्यथानुपपत्त्या द्रव्यद्वारा तदन्वयार्थं पशुविशेषणत्वेनान्वयः अरुणान्यायादिति विवक्षितमेकत्वमतो द्वाभ्यां बहुभिर्वा न यागसिद्धिः तदुक्तं "समानप्रत्ययत्वेन कारकेणात्मलाभात्तता। क्रियायै नीयते संख्या न परस्य पदान्वयेदिति"। एवमश्वादौ सुनक्ति कपिञ्जलानालभेतेत्यादौ द्वित्वबहुत्वयोर्विवक्षितत्वम्। एवं पुंस्त्वमपि विवक्षितं प्रत्ययार्थत्वेन कारकान्वयित्वात्। अथ कथं लिङ्गं विवक्षितं शब्दार्थस्य तदनुष्ठानस्य विचारे तदुपयोगादर्शनात् अप्सु अपि प्रत्येकवत्, मक्षिकादौ नास्ति स्त्रियामपि मक्षिकादिशब्दः प्रयुज्यते इति लिङ्गं न शब्दार्थः अपितु प्रयोगसाधुतामात्रार्थं तत्प्रयोगोऽनुष्ठाने एकत्वविशिष्टपशुत्वस्याविशेषात् स्त्रियामपि अनुष्ठानसाम्यात् जातिवत्यादिवत् लिङ्गस्य अन्वयव्यतिरेकाभ्यां शब्दार्थावगमात् तस्य च तत्तत्पदसमभिव्याहारेण तत्तत्पदवाच्यत्वाभ्युपगमात् इत्यादिषु न चाक्रम पुंस्त्वं किन्तु अभियुक्तोक्तिबलेन तथा तु वि साधुतेति। न चानुष्ठानास्य पुंपशोर्विशेषणत्वपरिग्रहात् "आपूर्व आमेवाम्" इत्यादि-

शाना तथात्वम् । "उदाहृतः सर्वथा ते गुणानां सर्वैकदेश प्रसभीक्ष्य मुद्रा" भा० अनु० २६ अ० । अत्रापि तथा । "तान्येकदेशान्निभृतं पयोधेः" माघ "यामिन्यैकदेशमाश्रयनीये भास्वति" काव्या० २, ६, १४ । एकदेशशब्दस्य पूर्वापरमध्योत्तरादिशब्दः तेन सर्वैकदेशिना षष्ठीसमासापवादक, एकदेशिसमास । "पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे" पा० "सर्वोऽप्येकदेशः कालेन सह समस्यते" सि० कौ० । "उपारता पश्चिमरात्रगोचरात्" किरा० । एवं मध्यरात्र इत्यादि । एकाधिकरणे इत्युक्ते पूर्वं छात्राणामित्यादौ न । तत्राद्यशब्दस्यैकदेशवाचकत्वेऽपि समासवाचिन एव एकदेशिसमा० अर्द्धं पिप्पल्या इति वाक्ये अर्द्धपिप्पलीत्यादि । असमांशवाचित्वे तु षष्ठीसमासः "क्रोशार्द्धं स्तिमितजवेन गत्वा" रघु । द्रव्यैक्य एव तेन पिप्पलीनामर्द्धमित्यादौ न किन्तु ६ त० । एकदेशोऽस्त्यस्य इनि । एकदेशिन् उक्तार्थयुक्ते त्रि० स्त्रियां ङीप् । "अस्मिन्नेव शब्दमाश्रित्य प्रवृत्तसमासस्य एकदेशिसमासत्वा तत्र प्रमाणम् । "पूर्वापरेत्यादि" पा० सू० ।

**एकदेशविभावितन्याय** पु० एकदेशोविभावित प्रमाणादिना सभाध्याङ्गीकारितो येन तमधिकृत्य न्यायोन्यायसाध्यस्तर्कविशेष । ऋणादानादिव्यवहारे सुवर्णादिबहुद्रव्याभियोगे प्रतिवादिनाऽपह्नवे वादिनैकदेशमात्रस्य प्रमाणे साधने एकदेशे तयो सत्यमिथ्यात्वावधारणमूलके सर्वधनदापनात्मके तर्कभेदे तत्र एकदेशसाधने क्वचित् पूर्व्वं निवेदितसर्वधनदापनं क्वचिन्नेति विषयविशेषव्यवस्थापनम् मिता० यथा । "निह्नुते लिखितन्नैकमेकदेशविभावित । दाप्य सर्वं नृपेणार्थं, न ग्राह्यस्त्वनिवेदित" या० नैकमनेकं सुवर्णरजतवस्त्रादि लिखितमभियुक्तमर्थिना प्रत्यर्थी यदि सर्व्वमेव निह्नुते अपजानीते तदार्थिनैकदेशे हिरण्ये साक्ष्यादिभि प्रत्यर्थी भावितोऽङ्गीकारित सर्वं रजताद्यर्थं पूर्व्वलिखित दाप्योऽर्थिने नृपेण न ग्राह्यस्त्वनिवेदित पूर्व्वं भाषाकाले अनिवेदित पश्चादर्थिना पूर्व्वं मया विस्मृतम् इति निवेद्यमानो न ग्राह्योभावतव्योऽनृपेण । एतच्च न केवल वादिनकमेकदेशे प्रत्यर्थिनोमिथ्यावादित्वसम्भवात् । अर्थिनश्चैकदेशे सत्यवादित्वनिश्चयादेकदेशान्तरेऽपि सत्यवादित्वसम्भवात् । एव तर्कापरनामसम्भावनाप्रत्ययानुगृहीतादृष्टादेव योगीश्वरवचनतः सर्व्वं दापनीयम् नृपेण इति निर्णय । एवञ्च तर्कवाक्यानुसरणेन निर्णये क्रियमाणे वस्तुनोऽन्यथात्वेऽपि व्यवहार दर्शिनाञ्च दोषः तथा च गौतमः "न्यायाधिगमे तर्कोऽभ्युदेयस्तेनाभ्युह्य यथास्थानङ्गमयेत्" इत्युक्त्वा "तस्माद्राजाचार्य्यावनिन्द्यौ" इत्युपसंहरति । नचैकदेशविभावितोऽनुपादेयवचनः प्रत्यर्थीत्येतावदिह गम्यते एकदेशविभावितो नृपेण सर्वन्दाप्य इति वचनात् । यत्तु कात्यायनेनोक्तम् । "अनेकार्थाभियोगेऽपि यावत् संसाधयेद्धनी । साक्षिभिस्तावदेवासौ लभते साधितन्धनमिति" तत् पुत्रादिदेयपित्राद्यृणविषयम् । तत्र हि बहूनर्थानभियुक्त पुत्रादिर्न जानामीति प्रतिवदन् निह्नववादी न भवतीत्येकदेशविभावितोऽपि न क्वचिदसत्यवादीति "निह्नुते लिखितन्नैकमिति शास्त्रन्तत्र न प्रवर्त्तते । निह्नवाभावादपेक्षिततर्काभावाच्च" "अनेकार्थाभियोगेऽपीति" कात्यायनवचनं सामान्यविषयं विशेषशास्त्रस्य विषयं निह्नवोत्तरं परिहृत्याज्ञानोत्तरे प्रवर्त्तते । ननु "ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् । ऊने वाप्यधिके चार्थे प्रोक्ते साध्यन्न सिध्यतीति" वदता कात्यायनेन अनेकार्थाभियोगे साक्षिभिरेकदेशे विभाविते अधिके वा भाविते साध्यं सर्वमेव न सिध्यतीत्युक्तम् । तथा सत्येकदेशे भाविते अभावितैकदेशसिद्धि कुतस्त्यात् ? उच्यते लिखितसर्वार्थसाधनतयोपन्यस्तैः साक्षिभिरेकदेशाभिधानेऽधिकाभिधाने च तत्तत्रैव साध्यं न सिध्यतीति तस्यार्थस्तत्रापि निश्चितन्न सिध्यतीति वचनात् पूर्व्ववत् संशय एवेति प्रमाणान्तरस्यावसरोऽस्त्येव "ऊन निरस्येति" नियमात् । वाग्वादौ तु सकलसाध्यसाधनतयोपदिष्टैः साक्षिभिरेकदेशेऽपि साधिते तत्तत्साध्यसिद्धिर्भवत्येव तावतैव वाग्वादे सिद्धत्वात्कात्यायनवचनाच्च । "साध्यार्थांशेऽपि गदिते साक्षिभि सकलम्भवेत् । स्त्रीसङ्गे साहसे चौर्य्ये यत्साध्यं परिकीर्त्तितम्" ।

अनयैवार्थमवलम्ब्य एकदेशविभावितन्याय प्रवर्त्तते इत्येकदेशविभावितन्यायस्य तात्पर्यार्थत्वम् इति बोध्यम् ।

**एकदेह** पु० एक श्रेष्ठोदेहोऽस्य । १बुधग्रहे त्रिका० तस्य ग्रहेषु अतिसुन्दरत्वात् तथात्वम् । एकस्तुल्योदेहो यत्र एकस्मात् देहोयत्र वा । २वंशरूपे गोत्रे तत्र सर्वेषां तुल्यदेहत्वादेकस्माद्उत्पन्नदेहत्वाच्च तथात्वम् । "बहूनि विम ! गोत्राणि समीमाभाषितात्मनाम् । एकदेहानि तिष्ठन्ति विभक्तानि विना प्रजा" हरिव० ४६ । ३समानदेशारब्धे सर्वाङ्गे च एकमेकता गत देहमस्य । ४दम्पत्यो तयोर्विवाहेन एकदेहतोत्पादनात्तथात्वम् "अस्थिभिर-

ण्योनि मांसैर्मांसानि त्वचा त्वचमिति" श्रुतेः। "आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः। शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा। यस्य नोपरता भार्य्या देहार्द्धं तस्य जीवति। जीवत्यर्द्धशरीरे तु कथमन्योधनं हरेत्" इत्यादिस्मृतेश्च तयोरेकदेहत्वम्। तत्र पुंसि पुं०, स्त्रियां स्त्रीति भेदः एकाक्षादयोऽप्यत्र। स्त्रियां ङीप् इति भेदः। कर्म्म०। ५एकस्मिन् देहे न०।

**एकद्यू** पु० एकेन परात्मना दीव्यति दिव–क्विप् ऊठ् ३त०। आत्मारामे ऋषौ सहि आत्मनैव रमत इति प्रसिद्धम्। "अमन्दीदेकद्युर्देवावत याच देवी" ऋ०८,८०,१०, "एकद्यू ऋषि" भा०।

**एकधन** न० एकमेव धनम्। १एकमात्रधने "एतानां धावतामेकधनमुपाहितम्" शत०ब्रा०११,४,१,१, "एकमेकनममयुग्मं धनं धीयमानमुदकं यत्र। २अयुग्मसंख्याके उदकाधारे कलसे "अयुजा अयुजा एकधना भवन्ति "त्रयो वा पञ्च वा, पञ्च वा सप्त वा, सप्त वा नव वा, नव वैकादश वा एकादश वा त्रयोदश वा, त्रयोदश वा पञ्चदश वा द्वन्द्वमर्ह्मिथुनं प्रजननम्। अथ य एष एकोऽतिरिच्यते स यजमानस्य श्रियमभ्यतिरिच्यते स वा एषा सधनं यो यजमानस्य श्रियमभ्यतिरिच्यते तद्देवा सधनं तस्मादेकधना नाम" शत०ब्रा०३,९,२,४, "प्रत्यगेकधनानयुग्मानुदहरणांस्त्रिप्रभृत्यापञ्चदशभ्यः" कात्या० ६,३,२२, "उत्तरस्यैवानसोऽधात् प्रत्यक् अधोभूमौ एकधनानयुग्मसंख्यान्निदधाति एकधनशब्दार्थं स्वयमेव व्याचष्टे उदहरणानिति उदकं ह्रियते एभिरित्युदहरणा' कलशास्तान् त्र्यादिपञ्चदशपर्यन्तायुग्मसंख्यान् विषमसंख्यान्। तत्राग्निष्टोमे त्रयः पञ्च वा, अत्यग्निष्टोमेऽपि तावन्त एव, उक्थ्ये पञ्च वा सप्त वा, षोडशिनि सप्त नव वा, वाजपेये नवैकादश वा, अतिरात्रे एकादश त्रयोदश वा आप्तोर्यामे त्रयोदश पञ्चदश वेति" कर्क "अत्र कलसपरत्वात् पुंस्त्वम् अथवा विशेषणत्वे स्त्रीत्वम् "आवर्त्ततीरधनुह्यिधारा इत्याद्युक्तास्वेकधनासु" आश्व० श्रौ० ५,१,६। "द्विविधा आपः वसतीवर्य्य एकधनाश्च तत्र पूर्व्वेद्युरेव वसतीवर्य्यो गृहीता एकधना इदानीं गृह्यन्ते। ता गृहीता यदृणदेशादेव यजनदेशं प्रति यथा वर्त्तन्ते तद्देयम्कगनुक्रम्या" भारा० इ०। अपाङ्काधारं विना देशान्तरगमनासम्भवात् प्रागुक्तवाक्याच्च पुनरयुग्मकलसैराहरणं कर्त्तव्यमिति बोध्यम्। वस्तुत एकधनशब्देन अयुग्मसंख्याककलशा एवोच्यन्ते। स आधारत्वेनास्त्यस्य अच्। ३तत्स्थे जलादौ लिङ्गवशेन न्यायम् "तावश्चैकधनानाम्" कात्या०९,३,२२,सू० "एकधनानामेकधनस्थानामपामिति" कर्क्केण तथा व्याख्यानात् "एकधनांस्त्रीनुन्नयन्ति" कात्या० ९,१०, "एकधनान् उन्नयन्ति उदकेन पूरयित्वा उत्क्षिपन्ति जलमध्यादूर्द्धं निनयन्ति निष्कासयन्ति" कर्कः एकं मुख्यं धनम् कर्म०। ४मुख्ये धने न० "सोमभाग्यायतामिन्द्रायैकधनविदे" यजु०५,७, "एकं धनं मुख्यं धन सोमरूपं विन्दते लभते स एकधनवित्। यद्वा सोमकण्डनाय यैर्जलमानीयते ते कुम्भा एकधना एकं धन सोमरूपं यत्रेति वेत्ति जानातीति" वेददी० "एकधनस्याहं कलस अस्त्यस्य इनि। एकधनिन् तादृशैकधनयुक्ते त्रि०" प्रत्ने रुद्रानयैकधनिन" शत०ब्रा०१,९,२,१७, "एकं समानं साधारणं धनं यस्य। ५अविभक्ते ६स्थितिनि च त्रि०। अविभक्तधनानां असृष्टधनानाञ्च साधारणधनस्यात् तथात्वम्। ७एकमात्रधनयुक्ते त्रि०।

**एकधर्म्मिन्** त्रि० एकस्तुल्योधर्म्मो यस्य अनिच् स०। तुल्यधर्म्मयुक्ते स्त्रियां वा डाप्। एकोधर्मोऽस्त्यस्य इनिरप्यत्र साधु। "सर्व्वेषामेकधर्म्मिणाम्" स्मृतिः। अत्र स्त्रियां ङीप्।

**एकधुरा** स्त्री एका धूः कर्म्म०अ समा०। १एकभारे। तद्वहतीत्यर्थेऽण् तस्य लुक्। एकधुर–एकभारवाहके २गवादौ त्रि०। अस्त्यर्थे अच्। ३एकधुरायुक्ते त्रि०। एकधुरं वहति ख। एकधुरीण एकधुरवाहके त्रि०।

**एकधुरावह** त्रि० एकधुरां वहतीति वह–अच् ६त०। एकभारवाहके गवादौ।

**एकनक्षत्र** न० एकं नक्षत्रं यत्र। एकतारात्मके नक्षत्रभेदे आर्द्रा चित्रा स्वाति एकतारात्मकं नक्षत्रं तच्च अस्मञ्चापके ४९७४पृ० दर्शितम्। शत०ब्रा०भाष्ये तु पुष्यस्यैकतारात्मकत्वमुक्तं तदनुसारेण सरलायामप्यभिसायोक्तिः किन्तु तन्मूलं ज्योतिषवचनं मृग्यम्। वस्तुतोऽत्र एकशब्दस्यायुग्मपरत्वं पुष्यस्य च त्रितारात्मकत्वेन तथात्वाभिप्रायेण पुष्यस्येयुक्तिः "अयुग्म हि पितॄणामेकनक्षत्रे एकनक्षत्रं हि पितॄणाममावास्यायाम् अमावास्यां वा एकनक्षत्रमेको हि यद्देतो रात्रिं सर्व्वाणि भूतानि सन्वसन्ति तेमो तं काममाप्नोति या सर्व्वेषु नक्षत्रेषु" शत० ब्रा० १०,१२,८१,२। "एकनक्षत्रे" कात्या० २१,३,१। एकं नक्षत्रं हि पितॄणामिति" एकनक्षत्रं च यस्यैका तारा चित्रा स्वाति रेवत्यादि यथा"

वस्था: । हिमवतोमेनायांसूपस्तदुहितृत्रयमध्ये दुहितृभेदे एकपर्णाशब्दे मूलं दृश्यं तत्रैव तस्याः एकाश्रि-येया । “पाटलापुष्पमेकञ्च आदधावेकपाटला” ।

**एकपातिन्** त्रि० एक सन् पतति पत–णिनि “सहसुपेति” स० । एकाकितया १पतनशीले अतिरात्रयागस्ये २अहर्विशेषे न० “एकपातीनि त्वहान्यतिरात्रा०” आश्व०श्रौ० १२,६,२२ । “चतुर्विंशाभिजिद्विषुवन्महाव्रतादीनि एकपातीन्यहानि तानि अतिरात्रसंस्थानि भवन्ति” नारा० । ३ऋग्भेदे स्त्री ङीप् । “धाय्याश्चैकपातिनी” आश्व०श्रौ० ५,१९,११ । “अग्निर्होता गृहपति स राजेति प्रतिपदेकपातिनी पङ्क्ति” ६,५,६ ।

**एकपाद्** त्रि० एक पादोऽस्य अन्त्यलोप समा० । १विष्णौ “चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात्” विष्णुसं० । “एकः पादोऽस्येत्येकपात् पादोऽस्य विश्वाभूतानीति” श्रुतेः “विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्” गीतोक्तेश्च” भा० । परमेश्वराभिन्नत्वेन एकपादयुक्तत्वेन वा २शिवे च । स च रुद्रभेदः । “अजैकपादहिर्बुध्नो विरूपाक्षश्च रैवत । हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वर । रुद्रा एकादश प्रोक्ता जयन्तश्चापराजित” विष्णुध० अन्यनामानोऽपि रुद्राः सन्ति तेऽत्र दानादौ तत एव पूज्याः । अजेतिनामान्तरं तेन एकादशत्वस्यापूर्त्तिः अतएव विष्णुध० “अजनामा महारुद्र” इत्यादिना तद्ध्यानमुक्तम् “एकपादभिधो विप्र । रुद्रः स्याद्दहन् परम् । चक्रं डमरुकं शूलं सुहर तदधोऽपरम् । अर्द्धं चन्द्रं मेखलावान् खट्वाङ्गमपि मस्तके । धनुर्घण्टां कपालञ्च कौमुदीं तर्ज्जनीघटम् । परशुं चक्रमाधत्ते क्रमाद्दामाष्टके करे । अनेकभोगसम्पत्तिं कुरुते यजन: सदा” इति तत्रैव एकपदोध्यानान्तरमुक्तम् । २एकपादयुक्ते त्रि० स्त्रियां ङीपि पद्भाव एकपदीति भेदः एकपदीशब्दे उदा० ।

**एकपाद** पु० कर्म० । एकमात्रचरणे “व्युत्तिष्ठदेकपादेन परम योगमास्थितः” भा०अनु० ८२अ० । “उत्तिष्ठदेकपादेन दृश्यते विबुधर्षभाम्” भाग० ३,१,१९ “एकःपादोऽस्य समासान्तविधेरनित्यत्वात् नान्त्यलोप. । एकपादयुक्ते २परमेश्वरे । “पादोऽस्य विश्वाभूतानीत्युक्ते तस्य सर्वभूतरूपैकपादत्वात् तथात्वम् “तत्र शिश्रियेऽज एकपाद” अथ० १३,१,६,२, एकचरणयुक्तमात्रे त्रि० स्त्रियां स्वाङ्गत्वात् ङीष् टाप् वा । “दर्वीं लवीं विमाशाख्यौं दीर्घजिह्वामजिह्विकाम् । त्रिस्तनीमेकपादाञ्च त्रिजटामेकलोचनाम्” भा०व० ..६अ० “एकपादांश्च पुरुषान् कौरवान् वनवासिन” भा० स० २०अ० सहदेवदक्षिणदिग्विजये” “एकपादांश्च तत्राहमपश्यं द्वारि वारितान्” ५०अ० । ४असुरभेदे “एकपादमहोदरो” भा०आ० असुरगणनायाम् । एकपादोऽवलम्बनत्वेनास्त्यस्य अच् । ५एकपादमात्रालम्बके । “पर्व्वतारोहणं कृत्वा एकपादो विभावसुम् । निरीक्षेत निराहार ऊर्द्ध्वबाहुः कृताञ्जलि” भा०आ०१२५अ०

**एकपादिका** स्त्री एकः पादोऽवलम्बनत्वेनास्त्यस्याः ठन् । एकपादावलम्बनेन खगानां स्थितिभेदे ‘अथावलम्ब्य क्षणमेकपादिकाम् तदा निदद्रावुपपल्वलं खग’ नैष० ।

**एकपिङ्ग** पु० एकं पिङ्गं नेत्रमस्य । कुबेरे । तस्य क्रूरदृष्ट्या पार्व्वतीदर्शने वामनेत्रस्य स्फुटने शिववाक्येन प्रसन्नायास्तस्या वरेण पिङ्गलं वामनेत्रं जातमिति तस्य तथात्वम् तत्कथा काशी० यथा

“प्रसार्य नयने पूर्व्वसुमामेव व्यलोकयत् । शम्भोः समीपे कां योषिदेषा सर्वाङ्गसुन्दरी । अनया किं तपस्तप्तं ममापि तपसोऽधिकम् । अहो रूपमहो प्रेम सौभाग्यञ्चोरहो भृशम् । क्रूरदृग्वीक्षते यावत् पुनः पुनरिदं वदन् । तावत् प्रस्फोटितं नेत्रं वामं वामविलोकनात् । अथ देव्यब्रवीद्देवं किमसौ दुष्टतापसः । असकृद्वीक्ष्य मां वक्ति त्वत्कुर्व्वन्तपःप्रभाम् । असकृद्दक्षिणेनाक्ष्णा पुनर्मामेष पश्यति । असूयमानो मे रूपप्रेमसौभाग्यसम्पद । इति देवीगिरं श्रुत्वा प्रहस्य प्राह तां प्रभुः । उमे ! त्वदीयपुत्रोऽयं न च क्रूरेण चक्षुषा । संपश्यते तपोलक्ष्मीं तव किन्त्वभिवर्णयन् । इति देवीं समाभाष्य तमीश पुनरब्रवीत् । वरं ददामि ते वत्स । तपसाऽनेन तोषितः । निधीनामधिनाथस्त्वं गुह्यकानां भवेश्वर । यक्षाणां किन्नराणाञ्च राजा राज्ञाञ्च सुव्रत ! । पतिः-पुण्यजनानाञ्च सर्वेषां धनदो भव । मया सख्यञ्च ते नित्यं वत्स्यामि च तवान्तिके । अलकां निकषा मित्र । तव प्रीतिविवर्द्धयन् । आगच्छ पादयोरस्याः पतते जननी स्त्वियम् । इति दत्त्वा वरान् देवः पुनराह शिवः शिवाम् । प्रसाद कुरु देवेशि । तपस्विन्यङ्गजे तव । देव्युवाच । वत्स ! ते निर्म्मला भक्तिर्भवे भवतु सर्व्वदा । भवैकपिङ्गोनेत्रेण वामेन स्फुटितेन च । देवदत्तास्तु ये तुभ्यं वरास्सन्तु तथैव ते । कुबेरो भव नाम्ना त्वं मम रूपेर्ष्यया सुत । ”एकपि-

त्वमतोऽप्यत्र । एकपिण्डत्वस्य नैकयुक्तत्वात्तस्य तथात्वम् ।

**एकपिण्ड** त्रि०एक,समान पिण्ड "प्र आद्धेयपिण्डो वा यस्य । १सपिण्डे तस्य एकत्रैकाद्धदेयकत्वात् दातृत्व-भोक्तृत्वान्यतरसम्बन्धेनैकपिण्डवत्त्वाद्वा तथात्वम् । "त्र-याणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते । चतुर्थः सम्प्र दातैषां पञ्चमोनोपपद्यते "इति मनूक्तेः । लेपभाजश्चतुर्था-द्याः पित्राद्याः पिण्डभागिनः" इत्युक्तेः 'जीवति यत्-पिण्डदाता स स्वतः सन् तत्पिण्डभोक्तोऽत्युक्तेश्च सप्ता-नामेव सपिण्डत्वमिति दायभागानुसारिणः' ।

**एकपुरुष** पु० एकः श्रेष्ठः पुरुषः । १पुरुषोत्तमे परमेश्वरे तस्य श्रेष्ठत्वमुक्तं गीतायाम् "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्त-मः" तस्य च पुरुषत्वमन्तर्यामितया सर्व्वदेहे पुरि वा-सात् । "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्न-न्नन्यो अभिचाकशीति" श्रुतौ वृक्षरूपदेहे वासोक्तेश्च पुरु-षत्वम् । २प्रधानपुरुषे च । एकः पुरुषो यस्मिन् । ३एकपुरुषान्विते त्रि०। "तदैकपुरुषं राष्ट्रं निःसम्बाध-निर्गमम्"भाग०६,५,७, "एकः पुरुषोभोक्ता यत्र । ४ए-कपुरुषभोक्तृके भोगभेदे तत्राय भेदः प्रपितामहादीनां त्रयाणां जीवित्वे एकपुरुष एव भोगः यथाह दा०त० व्यासः "पिता पितामहो यस्य जीवेच्च प्रपितामहः । त्रयाणां जीवतां भोगो विज्ञेयो ह्येकपुरुषः" । "युगपद्भोगे यद्यप्यैश्वर्य्येऽपि न त्रैपुरुषिकं प्रपितामहस्य तत्र स्वातन्त्र्यात् तस्यैव भोगस्तेन तत्रैकपुरुषो भोगः" दाय०त० रघु०

**एकपुष्कल(र)** पु०एकं पुष्करं मुखं यस्य रस्य वा लः । काहले वाद्यभेदे । "अथ प्रयाते दाशार्हे प्रावाद्यन्नैकपुष्क(रा)-लाः "भा०उ०८३अ०एकपुष्कराः काहलाः" नीलकण्ठः

**एकपुष्पा** स्त्री एकं पुष्पं यस्याः । वृक्षभेदे यस्यैकमात्रं पुष्पं जायते तस्मिन् जातित्वेऽपि अजा० टाप् ।

**एकप्रस्थ** पु०कर्म०। १एकस्मिन् प्रस्थे धान्यमानभेदे मात्रादि-शब्दोदाहृतोऽयम् । एकः प्रस्थोऽस्य । २एकप्रस्थयुक्ते पर्व्वते पु०

**एकफला(ली)** स्त्री एकं फलमस्याः सुगन्धोषमते टाप् । पा०मते ङीप् ।एकमात्रफलके ओषधिभेदे

**एकभक्त** न० एकं भक्तं भोजनं यत्र । व्रतभेदे तत्स्व रूपकालादिनिरूपणं कालमाधवीये यथा

"अथैकभक्तनिर्णयः । ब्रह्मपुराणे वैशम्पायनमते पठ्यते "प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः" इति । तत्रादा-वेकभक्तव्रतं त्रिविधम् स्वतन्त्रमन्याङ्गमुपवासप्रतिनिधि-रूपं चेति । तेष्विदानीं मुख्यत्वात् स्वतन्त्रम् । तत्रेदं चिन्त्यते । किमुपवासवत् तिथिरस्मिन् ग्रहीतव्या ? उत प्रकारान्तरेणेति ? । उपवासवदिति तावत् प्राप्तम् "दैवं पित्र्यं तथा कार्य्यम्" इति वचनेन उपवासैकभक्तादिव्रत-सन्देहस्य विवक्षितत्वात् । न च कर्मकालव्याप्त्या तन्निर्ण-य इति शङ्कनीयम् । तत्कालस्य व्याप्त्यनिर्णीतत्वात् । किञ्च तन्निर्णये कर्मकालव्याप्तिवचनस्य पित्र्यविषय-त्वेनोपपत्ते । तस्मादुपवासवत्तन्निर्णय इति प्राप्ते ब्रू-मः । कर्मकालव्याप्तिरेवात्र निर्णयहेतुः । कर्मकालस्तु कर्मस्वरूपं चोभयं स्कन्दपुराणे दर्शितम् । 'दिनार्द्ध-समयेऽतीते भुज्यते नियमेन यत् । एकभक्तमिति प्रोक्तं मतस्तत् स्याद्दिवैव हीति" । देवलोऽपि "दिनार्द्धसमये-ऽतीते भुज्यते नियमेन यत् । एकभक्तं तु तत् प्रोक्तं न्यूनं ग्रासत्रयेण त्विति" । अत्र च दिनार्द्धस्योपरि सार्द्धमुहूर्त्त-परिमितोऽसम्प्तः काल पञ्चधा विभागे मध्याह्नस्यापरभाग एकभक्तस्य काल दिनार्द्धेऽतीते सति समनन्तरत्वात् । अतश्चयात् प्राचीनोऽवशिष्टोगौण काल दिनेऽस्य तु प्राप्तात् एवं स्थिते सति मुख्यकालव्यापिनी तिथि-र्ग्रहीतव्या अतएव पद्मपुराणम् । "मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथि"रिति" । बौधायनोऽपि "उदये तूपवासस्य नक्तस्यास्तमये तिथिः । मध्याह्नव्यापिनी ग्राह्या एकभक्तव्रते तिथि"रिति" तदातोपवासन्यायो युक्तः तत्र पूर्वविद्धायामेव विशेषशास्त्रपर्य्यवसानात् । द्विविधं हि विशेषशास्त्रं तिथिप्रयुक्तमेकं कर्मप्रयुक्तमपरम् । तत्र "पौर्व्वाह्णिकास्तु तिथयो दैवे" इत्यनेन कर्मविषयेण सा-मान्यशास्त्रेणोत्तरविद्धायां प्राप्तायाम् "उभोभ्यां: परसंयुक्ताः परा पूर्व्वेण संयुता" इत्यनेन कर्मविषयेण विशेषशास्त्रेण पूर्वविहिततिथिविषये अपि सामान्यविशेषशास्त्रे उदासेते "पूर्वाह्णिकास्तु तिथय"इति तिथिमात्रमुपजीव्य प्रवृत्तत्वात् सामान्यशास्त्रम् "प्रतिपत् सम्मुखी कार्य्येति" तिथिविशेषमुप-जीव्य प्रवृत्तत्वाद्विशेषशास्त्रम् । तथा सति द्विविधेनापि विशेषशास्त्रेण पूर्वविद्धायामेवोपवासः सुस्थितः । अत्र तु मध्याह्नव्यापिनीत्येतत्कर्मविषयं विशेषशास्त्रम् । अत-स्तदनुसारेण निर्णयो युज्यते । ननु प्रतिपत्सम्मुखी का-र्य्येत्यनेन तिथिविषयेण विशेषशास्त्रेण कुतो न निर्णय इति चेत् उपवासविषयत्वेनापि तस्योपपत्तेरिति ब्रूमः । ननु मध्याह्नव्याप्तिवचनमपि तिथ्यन्तरैकभक्तविषयत्वेनोप-

एकमेकत्वं लाति ला क । एकत्वाश्रये "तस्मिन् वाव किल स एकलः पुलहाश्रमोपवने" भाग०५,७।१२ ।

**एकलव्य** पु० निषादराजस्य हिरण्यधनुषः पुत्रे तत्कथा भारते आ० १३४ अ० ।

"ततो निषादराजस्य हिरण्यधनुषः सुतः । एकलव्यो महाराज! द्रोणमभ्याजगाम ह । न स तं प्रतिजग्राह नैषादिरिति चिन्तयन् । शिष्यं धनुषि धर्मज्ञस्तेषामेवान्ववेक्षया । स तु द्रोणस्य शिरसा पादौ गृह्य परन्तप! । अरण्यमनुसम्प्राप्य कृत्वा द्रोणं महीमयम् । तस्मिन्नाचार्य्यवृत्तिञ्च परमामास्थितस्तदा । इष्वस्त्रे योगमातस्थे परं नियममास्थितः । परया श्रद्धयोपेतो योगेन परमेण च । विमोक्षादानसन्धाने लघुत्वं परमाप सः । अथ द्रोणाभ्यनुज्ञाताः कदाचित् कुरुपाण्डवाः । रथैर्विनिर्ययुः सर्व्वे मृगयामरिमर्द्दन! । तत्रोपकरणं गृह्य नरः कश्चिद्यदृच्छया । राजन्ननुजगामैकः श्वानमादाय पाण्डवान् । तेषां विचरतां तत्र तत्तत् कर्म्मचिकीर्षया । श्वा चरन् स वने मूढो नैषादिं प्रतिजग्मिवान् । स कृष्णमलदिग्धाङ्गं कृष्णाजिनजटाधरम् । नैषादिं श्वा समालक्ष्य भषंस्तस्थौ तदन्तिके । तदा तस्याथ भषतः शुनः सप्त शरान् मुखे । लाघवं दर्शयन्नस्त्रे मुमोच युगपद्यथा । स तु श्वा शरपूर्णास्यः पाण्डवानाजगाम ह । तं दृष्ट्वा पाण्डवा वीराः परं विस्मयमागताः । लाघवं शब्दवेधित्वं दृष्ट्वा तत् परमं तदा । प्रेक्ष्य तं व्रीडिताश्चासन् प्रशशंसुश्च सर्व्वशः । तं ततोऽन्वेषमाणास्ते वने वननिवासिनम् । ददृशुः पाण्डवा राजन्नस्यन्तमनिशं शरान् । न चैनमभ्यजानंस्ते तदा विकृतदर्शनम् । अथैनं परिपप्रच्छुः को भवान् कस्य वेत्युत । एकलव्य उवाच । निषादाधिपतेर्व्वीरा! हिरण्यधनुषः सुतम् । द्रोणशिष्यञ्च मां वित्त धनुर्व्वेदकृतश्रमम् । वैशम्पायन उवाच । ते तमाज्ञाय तत्त्वेन पुनरागम्य पाण्डवाः । यथावृत्तं वने सर्व्वं द्रोणायाचख्युरद्भुतम् । कौन्तेयस्त्वर्ज्जुनो राजन्नेकलव्यमनुस्मरन् । रहो द्रोणं समासाद्य प्रणयादिदमब्रवीत् । अर्ज्जुन उवाच । तदाहं परिरभ्यैकः प्रीतिपूर्व्वमिदं वचः । भवतोक्तो न मे शिष्यस्त्वद्विशिष्टो भविष्यति । अथ कस्मान्मद्विशिष्टो लोकादपि च वीर्य्यवान् । अन्योऽस्ति भवतः शिष्यो निषादाधिपतेः सुतः । वैशम्पायन उवाच । मुहूर्त्तमिव तं द्रोणश्चिन्तयित्वा विनिश्चयम् । सव्यसाचिनमादाय नैषादिं प्रति जग्मिवान् । ददर्श मलदिग्धाङ्गं जटिलं चीरवाससम् । एकलव्यं धनुष्पाणिमस्यन्तमनिशं शरान् । एकलव्यस्तु तं दृष्ट्वा द्रोणमायान्तमन्तिकात् । अभिगम्योपसंगृह्य जगाम शिरसा महीम् । पूजयित्वा ततो द्रोणं विधिवत् स निषादजः । निवेद्य शिष्यमात्मानं तस्थौ प्राञ्जलिरग्रतः । ततो द्रोणोऽब्रवीद्राजन्नेकलव्यमिदं वचः । यदि शिष्योऽसि मे वीर! वेतनं दीयतां मम । एकलव्यस्तु तत् श्रुत्वा प्रीयमाणोऽब्रवीदिदम् । एकलव्य उवाच । किं प्रयच्छामि भगवन्नाज्ञापयतु मां गुरुः । न हि किञ्चिददेयं मे गुरवे ब्रह्मवित्तम! । द्रोण उवाच । यद्यवश्यं त्वया देयमेकलव्य! प्रयच्छ मे । एकाङ्गुष्ठं दक्षिणस्य हस्तस्येति मतं मम' । एकलव्यस्तु तच्छ्रुत्वा वचो द्रोणस्य दारुणम् । प्रतिज्ञामात्मनो रक्षन् सत्ये च नियतः सदा । तथैव हृष्टवदनस्तथैवादीनमानसः । छित्त्वाऽविचार्य्य तं प्रादात् द्रोणायाङ्गुष्ठमात्मनः । ततः शरन्तु नैषादिरङ्गुलीभिर्व्यकर्षत । न तथा च स शीघ्रोऽभूद्यथा पूर्व्वं नराधिप! ।" अयञ्च निषादराजस्य पालितपुत्रः श्रुतदेवपुत्रः यथोक्तं हरिवं० ३५अ० । "श्रुतदेवात् प्रजातस्तु नैषादिर्यः प्रतिश्रुतः । एकलव्यो महाराज! निषादैः परिवर्द्धितः" अतएवांशावतारे "रुक्मी च नृपशार्दूल! राजा च जनमेजयः" इत्युपक्रम्य एकलव्यप्रभृतीन् कतिचिन्नृपानुक्त्वा 'गणात् क्रोधवशादेव राजपूगोऽभवत् क्षितौ' आ०६७अध्याये तस्य राजवशत्वेन राजपूगान्तर्गततोक्तिः । "एकलव्यमिव जन्मान्तरगतम्" काद० ।

**एकलिङ्ग** न० एकं पञ्चक्रोशमध्ये लिङ्गं यत्र । १सिद्धिसाधने क्षेत्रभेदे "पञ्चक्रोशान्तरे यत्र न लिङ्गान्तरमीक्ष्यते । तदेकलिङ्गमाख्यातं तत्र सिद्धिरनुत्तमा" आगमः । एकं लिङ्गं पुंस्त्वादि यस्य । २नियतैकलिङ्गे शब्दे पु० । एकं लिङ्गमिन्द्रियं चक्षुर्यस्य । ३कुबेरे शब्दरत्ना० ।

**एकलू** पु० एकं लुनाति लू०क्विप् ६त० । ऋषिभेदे तस्य गोत्रे गर्गा० यञ् । ऐकलव्य तद्गोत्रापत्ये पुंस्त्री बहुत्वे यञो लुक् । एकलव इत्येव स्त्रियां न लुक् ऐकलव्य्यः स्त्रियः

**एकवक्त्र** पु० । १असुरभेदे "एकवक्त्रो महावक्त्रो द्विवक्त्रः कालसन्निभः" हरिव २६१अ० । २एकमुखे रुद्राक्षफले न० ।

**एकवचन** न० एकमेकत्वमुच्यतेऽनेन वच—करणे ल्युट् ६त० । व्याकरणोक्ते एकत्वसङ्ख्यावाचके 'द्व्येकयोर्द्विवचनैकवचने" पा०उक्ते स्वादौ तिङादौ च । "एकत्वबोधकाश्च

स्रुतोक्ते १रोगभेदे स च कण्ठगतो मुखरोगभेदः। "मुख-रोगाः पञ्चषष्टिः" इत्युपक्रम्य तेषां मध्ये सप्तदश कण्ठमुखे इत्युक्त्वा "अथ कण्ठगतास्तु रोहिण्यः पञ्च कण्ठशालूकमधिजिह्वो वलयोबलास एकवृन्दोवृन्दः शतघ्नीगिलायुर्गलविद्रधिर्गलौघ स्वरघ्नो मांसतानोविदारी चेति" इति कण्ठगतान् विभज्य तेषां लक्षणाभिधाने एतल्लक्षणमुक्तं तस्य मुखरोगत्वम्। "एकवृन्दं तु विस्राव्य विधिं शोधनमाचरेत्" सुश्रु०। कर्म्म०। एकस्मिन् वृन्दे २एकराशौ न।

**एकवृष** पु० कर्म्म०। १एकस्मिन् वृषे तस्य स्वामिनोऽभिप्रेतदायकत्वम् यथा "एकोवृषस्त्वयोगावः सप्तास्या नवदन्तिन। सिंहप्रसूतिका गावः कथिताः स्वामिघातकाः" पुरा० चक्र०। २एकवृषयुक्ते त्रि० "एकवृष इन्द्रसखा जिगीवान्" अथ०४,२२,६ "इमं विशामेकवृषं कृणु त्वम्" अथ० ४,२२,१।

**एकवेणि(णी)** स्त्री एकीभूता संस्काराभावेन जटावत् संहतिं प्राप्ता वेणी। प्रोषितभर्त्तृकायाः स्त्रियः केशसंस्काररहित्येन एकीभूततां प्राप्तायां जटाकारायां वेण्याम्। "गण्डाभोगात् पतनविषमामेकवेणीं करेण" मेघ०। "एकवेणीम् एकीभूतां वेणीम्" मल्लि०। वेणीनां संस्काराभावेन एकीभूतत्वेन गुम्फितत्वम् "प्रोषितेषु पतिषु द्युयोषिताम् गुम्फिताः शिरसि वेणयोऽभवन्" इति माघे वर्णितम्। "ततः प्रविशत्येकवेणीधरा शकुन्तला" शकु०।

**एकशत** न० एकाधिकं शतम् शा०त०। १एकाधिकशते एकमितं शतम्। २एकमिते शते ३तत्संख्यान्विते च। तत्र संख्येये "विश्वामित्रस्य चैवासन् पुत्रा एकशतं नृप।" भाग० ९,१६,१७। संख्यायाम् "प्रसाध्य चैवं प्रत्यस्य दद्यादेकशतं गवाम्" मनुः ततः पूरणे डट् तमट् च। एकशततम तत्पूरणे त्रि०स्त्रियां ङीप्। एकशतं परिमाणमेषाम् कन्। एकशतक तत्परिमाणे त्रि०। अवयवे कन्। एकशतक तत्संख्यायां न०। प्रकारे धाच्। एकशतधा एकशतप्रकारे अव्य० वीप्सार्थे कारकार्थके शस्। एकशतश् एकशतमेकशतमित्याद्यर्थे अव्य०।

**एकशफ** पु० एकः शफः खुरो यस्य। एकखुरयुक्ते खरादौ ते च "खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा। एते चैकशफाः क्षत्तः शृणु पञ्चनखान् पशून्" भा०३,१०,२२ उक्ताः। "अजाविकं चैकशफं न जातु विषमं भजेत्" मनु अविकेषमध्ये "सद्यः मौलीञ्च सावाम्च सर्वाञ्चैकशफास्तथा" मनु अभक्ष्यमध्ये 'अनिर्दिष्टांश्चैकशफान् टिट्टिभञ्च विवर्जयेत्" मनु "कार्पासकीटजोर्णानां द्विशफैकशफस्य च" "एकशफो वा एष पशुर्यदश्वः" शत०ब्रा०७,५,२,२३। "इमं मा हिंसीरेकशफं पशुं कनिक्रदं वाजिनं वाजिनेषु" यजु०१३,४८ "एकविंशत्यास्तुवतैकशफाः पशवोऽसृज्यन्त वरुणोऽधिपतिरासीत्" यजु० १४,३०। "एकविंशत्यास्तुवतेभिः। दशहस्त्या अङ्गुल्यः दश पाद्या आत्मैकविंशस्तेनैतदस्तुवतैकशफाः पशवोऽसृजन्तैकशफाः पशवोऽत्रासृज्यन्त वरुणोऽधिपतिरासीत्" शत०ब्रा० ८,४,१३। एकशफमांसगुणा "ह कृष्णं मांसं सौरभं पित्तश्लेष्मावहं गुरु। मेदः पुच्छोद्भवं हृद्यमौरभ्रसदृशं गुणैः। औरभ्रवत् लवणं मांसमेकशफोद्भवम्" सुश्रुते उक्ताः।

**एकशाख** त्रि० एका तुल्या शाखा वेदशाखा यस्य। तुल्यशाखे "एकशाखोद्भवोदत्तो गृह्णीतश्चोपनायितः" स्मृति। एका शाखा यस्य। एकशाखके २ वृक्षे च। ततः गहादि० भवार्थे छ। एकशाखीय तद्भवादौ त्रि०।

**एकशाला** स्त्री कर्म०। एकस्यां शालायाम्। तेन ठञ्। एकशालिक भावे ठक् ऐकशालिक तत्सदृशे त्रि०।

**एकशितिपाद्** पु० एकः शितिः कृष्णः पादोऽस्य। अश्वभेदे। स च अश्वमेधे वरुणदैवत्यः पशुः। "वारुण्यः कृष्णः एकशितिपात्पेत्वः" यजु० २९,५८। अस्य युक्तारोह्यादि० आद्युदात्तता। तद्गणे कुम्भपदीपाठात् नि० अन्तलोपः।

**एकशृङ्ग** त्रि० एकं शृङ्गं मुख्यमेव यस्य। (एकशृङ्गो) ओषधिभेदे "प्रसृपतोस्तन्विमोरेकशृङ्गाः प्रतन्वतीरोषधीरावदामि" अथ० ८,७,४।

**एकशृङ्ग** पु० एकमेकत्वं शृङ्गं प्राधान्यमत्र। एकत्वस्वभावे १विष्णौ त्रिका०। २पितृगणभेदे। "पितॄणाञ्च गणान् विद्धि सप्त वै पुरुषर्षभ!। मूर्त्तिमन्तो वै चत्वारस्त्रयश्चाप्यशरीरिणः। वैराजाश्च महाभागा अग्निष्वात्ताश्च भारत। गार्हपत्या नाकचराः पितरोलोकविश्रुताः। सोमपा एकशृङ्गाश्च चतुर्वेदकलास्तथा। एते चतुर्षु वर्णेषु पूज्यन्ते पितरो नृप। एतैराप्यायितं पूर्व्वं सोमश्चाप्यायते पुनः" भा०स० ११अ०। ३शुक्रदेवमहिष्याम् स्त्री। शृङ्गशब्दस्य प्राधान्यवाचकतया अस्वाङ्गवाचित्वात् न ङीष्। "तथैव वंशे या दत्ता शुकस्य महिषी प्रिया। एकशृङ्गेति विख्याता साध्वीनां कीर्त्तिवर्द्धिनी" हरिवं० १८अ०। एकं शृङ्गं शिखरमस्य। ४एकशिखरे पर्वते पु०। एकं शृङ्गमस्य। ५एकशृङ्गयुक्ते पशौ पु स्त्री० स्त्रियां ङीष्।

शत०ब्रा०१४।६,२,६ । "याज्ञवल्क्यैका सभा जगदात्मिका सा त्वदात्मिकैवेति त्वमेकसभमसीति" भा० ।

**एकसर्ग** पु० एक एकविषयः सर्गः चित्तवृत्तिः यत्र । १एकाग्रे एकताने एकमात्रासक्तचित्ते अमरः । कर्म०।२एकसृष्टौ पु०

**एकसूत्र** पु० एकं सूत्रं वादनसाधनं यत्र । डमरुरूपे वाद्ये मल्लरत्ना० । तस्य एकसूत्रवेष्टनेन वादनात् तथात्वम् ।

**एकस्थ** त्रि० एकस्मिन् तिष्ठति स्था–क ७त० । एकत्रस्थिते "एकस्थसौन्दर्य्यदिदृक्षयेव" कुमा० । "तान्येकस्थानि स र्वाणि तत्त्वं प्रतिपत्स्यसे" भा०व० २७ अ० । "कृत्स्नै-कस्थं क्वचिदपि न ते चण्डि । सादृश्यमस्ति" मेघ०। स्था–क्त ७त०। एकस्थितादयोऽप्यत्र त्रि० ।

**एकहंस** न० एक श्रेष्ठो हंसोऽत्र । सरोभेदरूपे तीर्थभेदे "एकहंसे नरः स्नात्वा गोसहस्रफलं लभेत् । कृतशौचं समासाद्य तीर्थसेवी नराधिप । । पुण्डरीकमवाप्नोति कृत शौचो भवेच्च सः" भा० व० ८३ अ०। "हन्ति गच्छति जाग्रदाद्यवस्था इहलोकपरलोकौ वा हंसः कर्म०।२जीवे । "शुक्रमादाय पुनरैति स्थानं हिरण्मय पौरुष एकहंसः" "स ईयते अमृतो यत्र कामं हिरण्मयः पौरुष एक हंसः" शत० ब्रा० १४,७,१, १२,१२ । "शुक्रं शुद्ध-ज्योतिष्मदिन्द्रियादिमात्रारूपं गृहीत्वा पुनः स्वप्ने-तुकर्मोपरमानन्तरं जाग्रद्भोगहेतुकर्मणा जागरित स्था-नमागच्छति हिरण्मयश्चैतन्यज्योतिःस्वभावः पौरुषः पुरुषएव स्वार्थे अण् एकहंस एकएवासौ हन्तीत्येकहंस एक एव जाग्रत्स्वप्नादिइहलोकपरलोकौ च हन्ति गच्छति हिनस्तीति वा एकहंसः" भा० जीवस्योपाधिकृतजाग्र-दाद्यवस्थाभिर्न किञ्चिद्विकृतत्वमिति द्योतनार्थमेकत्व-विशेषणम् ।

**एकहायनी** स्त्री एकोहायनो वयोमानं यस्याः ङीप् । एक-वर्षवयस्कायां स्त्रीगव्यादौ । एकहायन एकवर्षवयस्के पशुमात्रे त्रि० । "अजमेषावनड्वाहं खरं स्वैकहाय-नम्" मनुः । २एकवर्षोत्पन्ने धान्यादौ त्रि०तत्र वयो वाचित्वाभावेन स्त्रियां न ङीबिति भेदः एकहायना इत्येव

**एका** स्त्री सर्वत्र अभिन्नत्वेन स्थितायां १दुर्गायाम् "एका सा तु पृथक्त्वेन विना सर्वत्र विश्रुता । यथा तु व्यज्यते व-र्णैर्विविधैः स्फटिकोमणिः । तथा गुणवशाद्देवी नानाभावेषु वर्ण्यते" देवीपु०४५अ०। २द्वितीयरहितस्त्रियाम् । "एकै-वाहं जगत्यत्र का द्वितीया ममापरा" देवीमा०। ३प्र-कृत्यान्वितस्त्रियाम् "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः" इति श्रुतिः "एका प्रमिता सह लक्ष्मणेनेति" भट्टि । पुत्रयोरेकत्वोत्पत्तिकथनार्थमे-केति विशेषणम् । अन्ये तु ए विष्णौ कायति अभिरमते कै–क अलुक् स०। विष्णुरतेत्यर्थमाहुस्तेन ४तदर्थे त्रि० ।

**एकाकिन्** त्रि० एक+असहाये पक्षे आकिनि । सजातीय-सहचररहिते "एकाकी हयमारुह्य जगाम गहनं वनम्" देवीमा० । अत्र हयस्य विजातीयत्वात् तत्सहायत्वे-ऽपि न क्षतिः । असहायत्वञ्च एकजातीयक्रियाकरणे अन्यसहायरहितत्वम् तेन हयस्य स्वगतिक्रियां प्रति सह-चरत्वाभावात् नानुपपत्तिः । तत्रान्यत्वं प्रकृत्यर्थसंख्या-न्वितपदार्थभिन्नत्वम् तेन "एकाकिनोऽपि परितः पौरु-षेयवृता इव" माघे प्रत्येकमेकत्वसंख्यान्वितानां राम-कृष्णोद्धवानामन्यासहायकत्वात् एकाकिन इति प्रयोगः । "एकाकी चिन्तयेन्नित्यं विविक्ते हितमात्मनः । एकाकी चिन्तयानोहि परं श्रेयोऽधिगच्छति" मनुः । "एका-किना चात्ययिके" मनुः । स्त्रियां ङीप् । "एकाकिन्यपि यामि सत्वरमतः स्रोतस्तमालाकुलम्" सा० द० ।

**एकाक्ष** पु०एकमक्षि यस्य षच् समा० । १काके । २काणे त्रि० । स्त्रियां ङीप् । काकस्य यथा तथात्वं तथोक्तं रामा०अ० का० १०५ अ० यथा

"स तत्क्षिप्तं तु रामेण समधावत् स वायसः । अभ्यगच्छद्-द्वयोरक्ष्णोस्त्यागमेकस्य पण्डित । सोऽब्रवीद्राघवं काको नेत्रमेकं त्यजाम्यहम् । एकनेत्रोऽपि जीवेयं त्वत्प्रसा-दान्नराधिप । रामानुज्ञातमेकं तत् (इषीकास्त्रम्) काक-नेत्रमपातयत्" । तज्जातीयत्वादन्येषामपि तथात्वम् । एकनेत्रादयोऽप्युभयत्र । स्त्रियामुभयार्थे टाप् ।

**एकाक्षर** न० एकमद्वितीयमक्षरम् । १एकमात्रवर्णे "एकाक्ष-रद्व्यक्षराण्येव प्रथमं वदन् कुमारो वदति" शत०ब्रा० ११,११६ ४ ।२एकस्वरवर्णे ""एकाक्षरात् कृतोजाते सम-व्याप्त न तौ स्मृतौ" व्या०का० ओमित्येकाक्षरच्छन्दोपमपा-सीत" छा०उ० । "एकाक्षरं परं ब्रह्म इति" मनुः । "एकाक्षरम् ओङ्कार" कुल्लू० । ओङ्कारस्य द्विवर्णत्वेऽपि एकस्वरवर्णवत्त्वात् एकाक्षरत्वम् । अष्टाक्षराऽनुष्टुबादौ स्वरवर्णैरेवाक्षरत्वव्यवहारात् स्वरवर्णमनुच्चार्य्य केवल-व्यञ्जनवर्णस्य प्राक् अनुच्चार्य्यत्वात् तस्य सर्वत्र उच्चारणे करणाभावात् अक्षरत्वम् । एकमक्षरं यत्र । ३एकाक्षर-युक्ते त्रि० स्त्रियां गौरा० ङीष् । "शिरो मे कालिका पातु क्रीङ्कारैकाक्षरी परा" श्यामाकवचम् ।

**एकागार** न० एकमसहायमगारम्। द्वितीयजनानधिष्ठिते गृहे तत्प्रयोजनमस्य ठञ् ऐकागारिक चौरे त्रि० स्त्रियां ङीप् "क्षेमवित्तु स्तनतैवागारिकेण" दशकुमा०। चौरादन्यत्र तद्वयात् छ। एकागारीय सुप्यादौ त्रि०।

**एकाग्र** त्रि० एकमग्रं विषयप्रवणता यस्य। १विषयान्तरव्यासक्तैकमात्रविषयकचित्तवृत्तिके २विक्षेपरहितज्ञाने च। "मनुमेकाग्रमासीनमभिगम्य महर्षयः" मनु। स्वार्थे ष्यञ्। ऐकाग्र्य अत्रार्थे त्रि०। तस्य भावः ष्यञ् ऐकाग्र्य तद्भावे न० "मनसश्चेन्द्रियाणाञ्चाप्यैकाग्र्यं निश्चितं तपः" भा० शा० २५ अ०। "तद्गीतिश्रवणैकाग्र्या संसदश्रुमुखी बभौ" रघु०। तत्र एकाग्रता स्त्री, त्व एकाग्रत्व न० तत्रार्थे।

एकाग्रता च चित्तस्य धर्मविशेषः विषयान्तरावलम्बनरूपसञ्चारशून्यः। एकविषयकधारावाहिकवृत्तिरूपः स च त्रिगुणात्मकस्य चित्तस्य सत्त्वगुणोद्रेके रजोगुणकृतविक्षेपाभावात् तमोगुणकृततन्द्राद्यभावाच्च उदेति। तत्र बाह्याभ्यन्तरकारणान्युक्तानि" पात० सू० भाष्यविवरणेषु यथा "यस्य चित्तस्यावस्थितस्येदं शास्त्रेण परिकर्म निर्दिश्यते, तत्कथम्? भा०।

"मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्" सू०।

"तत्र सर्वप्राणिषु सुखसम्भोगापन्नेषु मैत्रीं भावयेत् दुःखितेषु करुणाम्, पुण्यात्मकेषु मुदिताम्, अपुण्यशीलेषूपेक्षाम्। एवमस्य भावयतः शुक्लो धर्म उपजायते ततश्च चित्तं प्रसीदति प्रसन्नमेकाग्रं स्थितिपदं लभते" भा०।

"अपरिकर्मितमनसोऽसूयादिमतः समाधितदुपायसम्पत्त्यनुत्पादात् चित्तप्रसादनोपायानसूयादिविरोधिनः प्रतिपादयितुमुपक्रमते—यस्य,—चित्तस्यावस्थितस्येदमिति। मैत्रीकरुणेत्यादि प्रसादनान्तम्। सुखितेषु मैत्रीं सौहार्दं भावयत ईर्ष्याकालुष्यं निवर्त्तते चित्तस्य। दुःखितेषु च करुणामात्मनीव परस्मिन् दुःखप्रहाणेच्छां भावयतः परापकारचिकीर्षाकालुष्यं चेतसो निवर्त्तते। पुण्यशीलेषु प्राणिषु मुदितां हर्षं भावयतोऽसूयाकालुष्यं चेतसो निवर्त्तते। अपुण्यशीलेषु चोपेक्षां माध्यस्थ्यं भावयतोऽमर्षकालुष्यं चेतसो निवर्त्तते। ततश्चास्य राजसतामसधर्मनिवृत्तौ सात्त्विकः शुक्लो धर्म उपजायते। सत्त्वोत्कर्षसम्पन्नः सम्भवति। वृत्तिनिरोधपरो तस्य प्रसादलाभाच्चित्तं प्रसीदति प्रसन्नञ्च वक्ष्यमाणेभ्य उपायेभ्य एकाग्रं स्थितिपदं लभते। असत्यां पुनर्मैत्र्यादिभावनायां न ते उपायाः स्थित्यै कल्पन्ते—तानिदानीं स्थित्युपायानाह" वाचस्पतिविवरणम्।

"प्रच्छर्द्दनविधारणाभ्यां वा प्राणस्य" सू०।

"कौष्ठ्यस्य वायोर्नासिकापुटाभ्यां प्रयत्नविशेषात् वमनं प्रच्छर्द्दनं, विधारणं प्राणायामः ताभ्यां वा मनसः स्थितिं सम्पादयेत्" भा०।

"वाशब्दो वक्ष्यमाणोपायान्तरापेक्षो विकल्पार्थो न, मैत्र्यादिभावनापेक्षया तया सह समुच्चयात्। प्रच्छर्द्दनं विवृणोति—कौष्ठ्यस्येति। प्रयत्नविशेषात् योगशास्त्रविहितात् येन कौष्ठ्यो वायुर्नासिकापुटाभ्यां बहिरेच्यते। विधारणं विवृणोति विधारणं प्राणायाम इति रेचितस्य कौष्ठ्यस्य वायोर्यदायामो बहिरेव स्थापनं न तु सहसा प्रवेशनं तदेताभ्यां प्रच्छर्द्दनविधारणाभ्यां वायोर्लघूकृतशरीरस्य मनः स्थितिपदं लभते। अत्र चोत्तरसूत्रगतात् स्थितिनिबन्धनीतिपदात् स्थितिपदमाकृष्य सम्पादयेदित्यर्थमात्रेण सम्बन्धनीयं विव०। "स्थित्युपायान्तरमाह" भा० "विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी" सू०। "नासिकाग्रे धारयतोऽस्य या दिव्यगन्धसंवित्सा गन्धप्रवृत्तिः। जिह्वाग्रे रससंवित्, तालुनि रूपसंवित्, जिह्वामध्ये स्पर्शसंवित्, जिह्वामूले शब्दसंवित्, इत्येताः प्रवृत्तय उत्पन्नाश्चित्तं स्थितौ निबध्नन्ति संशयं विधमन्ति समाधिप्रज्ञायाञ्च द्वारीभवन्तीति" भा०।

"व्याचष्टे—नासिकाग्रे धारयत इति। धारणाध्यानसमाधीन् कुर्वतस्तज्जयात् या दिव्यगन्धसंवित् साक्षात्कारः एवमन्यास्वपि प्रवृत्तिषु योज्यम्। एतच्चागमात् प्रत्येतव्यं सोपपत्तिकं" विवरणम्।

तत्र सामान्यकारणञ्च शौचमेव तत्रोक्तम् "शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः" सू० "सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च" सू०। "शुचेः सत्त्वशुद्धिस्ततः सौमनस्यं तत ऐकाग्र्यं तत इन्द्रियजयस्ततश्चात्मदर्शनयोग्यत्वं बुद्धिसत्त्वस्य भवतीति एतत् शौचस्थैर्यादधिगम्यते" भा०। तत्राद्यं सूत्रं बाह्यशौचसूचकं द्वितीयन्तु आन्तरशौचसूचकम् "चित्तमलानां क्षालने चित्तमलं भवति सत्त्वं ततः सौमनस्यं स्वच्छता स्वच्छत्वादैकाग्र्यं ततो मनोवशत्वादिन्द्रियाणां जयस्तज्जयाच्चात्मदर्शनयोग्यं भवतीति क्रमेण आन्तरशौचस्य फलमुक्तम्। एतच्च विवरणे स्थितम् एकाग्रताया आविर्भावे यथा समाधिलाभस्तथा तत्रैवोक्तम् "सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः"

सू० "सर्व्वार्थता चित्तधर्म्मः एकाग्रता च चित्तधर्म्मः सर्व्वार्थतायाः क्षयस्तिरोभाव इत्यर्थः एकाग्रताया उदय आविर्भाव इत्यर्थः तयोर्धर्म्मित्वेनानुगतं चित्तं, तदिदं चित्तमपायोपजनयोः स्वात्मभूतयोर्धर्म्मयोरनुगतं समाधीयते स चित्तस्य समाधिपरिणामः" भा० ।

"संप्रज्ञातसमाधिपरिणामावस्थां चित्तस्य दर्शयति । सर्व्वार्थेत्यादि । विक्षिप्तता सर्व्वार्थता । सा विनश्यतीति क्षयस्तिरोभावः, नासदुत्पद्यत इति उदय आविर्भावः । आत्मभूतयोः सर्व्वार्थतैकाग्रतयोर्धर्म्मयोः यौ अपायोपजनौ सर्व्वार्थताया अपायः एकाग्रताया उपजनस्तयोरनुगतं चित्तं समाधीयते पूर्व्वापरीभूतसाध्यमानसमाधिविशेषण भवतीति" वा० विवरणम् ।

"ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रता परिणामः" सू० ।

"समाहितचित्तस्य पूर्व्वप्रत्ययः शान्त उत्तरस्तत्सदृश उदितः समाधिचित्तमुभयोरनुगतं पुनस्तथैव आ समाधिभ्रेषादिति । स खल्वयं धर्म्मिणश्चित्तस्यैकाग्रता परिणामः" भा० ।

"पुनः समाधेः पूर्व्वापरीभूताया अवस्थायाः निष्पत्तौ सत्यां शान्तोदितावतीतवर्त्तमानौ तुल्यौ च तौ प्रत्ययौ चेति तुल्यप्रत्ययौ एकाग्रतायान्तु द्वयोः सादृश्यं समाहितचित्तस्येति समाधिनिष्पत्तिः दर्शिता । तथैवैकाग्रतावधिमाह आसमाधिभ्रेषात् । असमाधिभ्रेषादिति" । वा० विवरणम् ।

**एकाग्र** त्रि० एकमग्रं यस्य । एकताने एकावलम्बने ।

**एकाङ्ग** पु० एकं प्रधानम् सुन्दरत्वेनाङ्गमस्य । ग्रहमध्येऽतिसुन्दराङ्गे १बुधग्रहे त्रिका० । एकं सुन्दरमङ्गं यस्मात् । २चन्दने न० हारा० । कर्म्मधा० । ३एकस्मिन्नङ्गे न० । "अप्येकाङ्गेऽप्यधीवस्तुमिच्छामि च सुकृत्स्विते" भा० अनु० ८२ अ० ४श्रेष्ठाङ्गे मस्तके च । एकमङ्गमस्य । एकदेहतामाप्तयोः ४दम्पत्योः क्रमेण पु स्त्री० स्त्रियां ङीप् ।

**एकाण्ड** पु० एकमण्डं रूपणमस्य । अश्वभेदे अश्वशब्दे विवृतिः ।

**एकात्मन्** पु० कर्म्म० । १एकस्मिन्नात्मनि । एक आत्मा स्वरूपम् स्वभावो वा यस्य । २एकस्वरूपे ३एकस्वभावे त्रि० स्त्रियां वा डाप् । एकोऽसहाय आत्मा यस्य । ४असहायात्मनि त्रि० । "नार्यन्नूनमीवगणैरेकात्मभिरसाधनैः" भा० व० ८२ अ० । तस्य भावः ष्यञ् । ऐकात्म्य तद्भावे न० । "अवबोधरसैकात्म्यमानन्दमनुसन्ततम्" भाग० ४,१२,८ ।

"वर्गस्वर्गापवर्गाणां प्रायेणैकात्म्यहेतुना" भाग० ४,२१,२९

**एकादशन्** त्रि० एकाधिका दश नि० आत् । (एगार) १संख्यान्विते २तत्संख्यायाञ्च ततः पूरणे डट् । एकादश तत्पूरणे यत्संख्यया एकादशसंख्या पूर्य्यते तादृशसंख्यान्विते त्रि० स्त्रियां ङीप् । एकादशी सा च चन्द्रस्य सूर्य्यमण्डलप्रवेशनिर्गमक्रियायुक्तैकादशचन्द्रमण्डलकलाक्रियारूपे तत्क्रियोपलक्षिते वा तिथिभेदे स्त्री । डटि संख्या पूर्व्वकादपि क्वचित् डट् । एकादशम तदर्थे त्रि० । "मनुर्वै धर्मसावर्णिरेकादशम आत्मवान्" भाग० ८,१३,१२ । स्त्रियां ङीप् । एकादश परिमाणमस्य सङ्घस्य कन् । एकादशक तत्संख्यामिते गणे । "एकादशकश्च गणस्तन्मात्रकपञ्चकश्चैव" "सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्" सां० का० स च गणस्तत्रैव दर्शितः "बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि । वाक्पाणिपादपायूपस्थानि कर्म्मेन्द्रियाण्याहुः । उभयात्मकमत्र मनः" सां० का० । एव रुद्रगणः । एकादशानामवयवः कन् । एकादशक तत्संख्यायाम् न० "रुद्रैकादशकेऽधिकम्" सुश्रु० ।

**एकादशद्वार** न० एकादश द्वाराणि छिद्राण्यस्य । शरीरे तत्र नवद्वारत्वप्रसिद्धावपि क्वचिदेकादशद्वारत्वं स्मर्य्यते । सप्तशीर्षण्यानि नाभिसहितान्यधःस्थाने त्रीणि शिरस्येकं ब्रह्मरन्ध्रमित्येकादशच्छिद्रवत्त्वात्तस्य तथात्वम् । नवद्वारव्यवहारस्तु नाभिशिरसोश्छिद्रस्य सूक्ष्मत्वात् "प्रधानेन व्यपदेशा भवन्तीति" न्यायात् । प्रधाननवच्छिद्रावलम्बनेन ।

**एकादशाह** पु० एकादशानामह्नां समाहारः टच् समाहारे नाह्नादेशः अहान्तत्वात् पुंस्त्वम् । एकादशानामह्नां समाहारे । ङौ तु एकादशाह्ने एकादशाह्नि एकादशाहनि रूपाणि । स साधनतयाऽस्त्यस्य अच् । एकादशाहसाध्ये यागभेदे "एकादशाहैरयजन् सदक्षिणैर्द्वादशाहैरश्वमेधैश्च देवैः" भा० अनु० १०२ अ० । ब्राह्मणजातीनामेकादशाहकर्त्तव्ये २श्राद्धे च । तमधीष्टे भृतोभूतो भावी वेत्यर्थे ख । एकादशाहीन उक्तार्थे त्रि० ।

**एकादशिन्** त्रि० एकादश संख्या परिमाणमस्य डिनि । एकादशसंख्यामितस्तोमादौ स्त्रियां ङीप् । "एकामेकादशिनीमपश्यत्" "स एकादशिन्यैवाप्रजापतिः पुनरात्मानम्" "तस्मै पश्वेकादशिन्या यजेत" शत० ब्रा० ३,९,१,४,५ । "यूपैकादशिनी स्यात्" ३,७,१,२२ । यद्यु पश्वेकादशिनी स्यात् ३,९,१,२१ ।

**एकादशी** स्त्री० एकादशानां पूरणी । उभयपक्षीयप्रतिपदादित

मोदादीन् गणाधिपान् । कौमारमूर्त्तीन् रसान् शक्तीर्डाकिन्याद्याः षडध्वनः । यन्त्रं षड्गुणितं शक्ते षडाधारानजीजनत् । षड्विधं यज्जगत्यखिलं सर्वन्तु परमेश्वरीदं । सप्तधा गुणिता नित्या चक्रराजं शरीरिणी । सप्तार्णं त्रिपुरामन्त्रं सप्तवर्णं विनायकम् । सप्तकं व्याहृतीनां च सप्तवर्णं सुदर्शनम् । लोकानद्रीन् स्वरान् धातून् मुनीन् द्वीपान् ग्रहानपि । समिधः सप्त सङ्ख्याताः सप्तजिह्वा हविर्भुजः । अन्यत् सप्तविधं यद्यत्तदस्याः समजायत ७ । अष्टधा गुणिता शक्तिः शैवमष्टाक्षरद्वयम् । गन्धाष्टकं शुभं देवीदेवानां हृदयङ्गमम् । ब्राह्म्याद्या भैरवान् सर्वान् मूर्त्तीरीशोश्वरमपि । अष्टपीठं महादेव्या अष्टाष्टकसमन्वितम् । अष्टौ सा प्रकृतीर्विप्रान् वक्रतुण्डादिकान् क्रमात् । अणिमादिगुणानागान् वक्रे मूर्त्तीर्यशादिकान् । अष्टात्मकं जगत्यन्यत् सर्वं वितनुते तदा ८ । गुणिता नवधा नित्या सूते मन्त्रं नवात्मकम् । नवकं शक्तितत्त्वानां तत्त्वरूपा महेश्वरी । नवकं पीठशक्तीनां शृङ्गारादीन् रसानपि । माणिक्यादीनि रत्नानि नववर्गयुतानि वा । नवकं प्राणदूतीनां मण्डलं नवकं शुभम् । यद्यन्नवात्मकं लोके सर्वमस्यास्तदस्तु ९ । दशधा गुणिता शम्भोर्भामिनी भवदुःखहा । दशकं शक्तितत्त्वानां तत्त्वरूपा महेश्वरी । नाडीनां दशकं विष्णोरवतारान् दश क्रमात् । दशकं लोकपालानां यद्यन्यत् कृत्स्नयत्यसौ १० । एकादश क्रमात् सा वै गुणिता सा जगन्मयी । रुद्रैकादशनामाद्या शक्ते रेकादशाक्षरम् ११ । चतुर्हिरति सर्वात्मा गुणिता द्वादश क्रमात् । राशीन् मासान् हरेर्मूर्त्तीर्यन्त्रं वा द्वादशात्मकम् । अन्यद्वैतादृशं सर्वं यत् तदस्याव्यजायत” ।

अत्र च यो यः पदार्थः यद्यत्सङ्ख्यान्विततया उत्पन्नः स स स्वगतसङ्ख्यातत्सङ्ख्यासूचकः भवति च निदर्शितपदार्थानां तत्तत्सङ्ख्यायुक्ततया लोकशास्त्रप्रसिद्धिः इत्यतस्तत्तच्छब्दानां तत्तत्सङ्ख्याधारकत्वम् । तथा चैकविधसङ्ख्यागुणितप्रकृतिकार्य्यत्वेन तत्सङ्ख्यासङ्ख्याबोधकत्वम् । अन्येऽपि केचित् सङ्ख्याविशेषसूचका भा० व० १३४ अ० दर्शिता यथा । “वन्द्युवाच । एक एवाग्निर्बहुधा समिध्यते एकः सूर्य्यः सर्व्वमिदं विभाति । एको वीरो देवराजोऽरिहन्ता यमः पितॄणामीश्वरश्चैक एव१ । अष्टावक्र उवाच । द्वाविन्द्राग्नी चरतो वै सखायौ द्वौ देवर्षी नारदपर्वतौ च । द्वावश्विनौ द्वे रथस्यापि चक्रे भार्य्यापती द्वौ विहितौ विधात्रा२ । वन्द्युवाच । त्रिः सूयते कर्म्मणा वै प्रजेयं त्रयीयुक्ता वाजपेयं वहन्ति । अध्वर्य्यवस्त्रिसवनानि तन्वते त्रयो लोकास्त्रीणि ज्योतींषि चाहुः ३ । अष्टावक्र उवाच । चतुष्टयं ब्राह्मणानां निकेत चत्वारो वर्णा यज्ञमिमं वहन्ति । दिशश्चतस्रो वर्णचतुष्टयञ्च चतुष्पदा गौरपि शश्वदुक्ता ४ । वन्द्युवाच । पञ्चाग्नयः पञ्चपदा च पङ्क्तिर्यज्ञाः पञ्चैवाप्यथ पञ्चेन्द्रियाणि । दृष्टा वेदे पञ्चचूडाश्चाप्सराश्च लोके ख्यातं पञ्चनदञ्च पुण्यम्५ । अष्टावक्र उवाच । षडाधाने दक्षिणामाहुरेके षड् वै चेमे ऋतवः कालचक्रम् । षडिन्द्रियाण्युत षट् कृत्तिकाश्च षट् साद्यस्का सर्व्ववेदेषु दृष्टा ६ । वन्द्युवाच सप्त ग्राम्या पशवः सप्त वन्या सप्त च्छन्दांसि क्रतुमेकं वहन्ति । सप्तर्षयः सप्त चाप्यर्हणानि सप्ततन्त्री प्रथिता चैव वीणा७ । अष्टावक्र उवाच । अष्टौ शाणाः शतमानं वहन्ति तथाष्टपादः शरभः सिंहघाती । अष्टौ वसून् शुश्रुम देवतासु यूपश्चाष्टास्रिर्विहितः सर्व्वयज्ञे ८ । वन्द्युवाच । नवैवोक्ताः सामिधेन्यः पितॄणां तथा प्राहुर्नवयोगं विसर्गम् । नवाक्षरा बृहती सम्प्रदिष्टा नवाङ्कयोगो गणनामेति शश्वत्९ । अष्टावक्र उवाच । दिशो दशोक्ताः पुरुषस्य लोके सहस्रमाहुर्दशपूर्णं शतानि । दशैव मासान् बिभ्रति गर्भवत्यो दशैरका दश दाशा दशार्हाः १० । वन्द्युवाच । एकादशैकादशिनः पशूनामेकादशैवात्र भवन्ति यूपाः । एकादश प्राणभृतां विकारा एकादशोक्ता दिवि देवेषु रुद्राः ११ । अष्टावक्र उवाच । संवत्सरं द्वादशमासमाहुर्जगत्याः पादो द्वादशैवाक्षराणि । द्वादशाहः प्राकृतयज्ञ उक्तो द्वादशादित्यान् कथयन्तीह धीराः १२ । वन्द्युवाच । त्रयोदशी तिथिरुक्ता प्रशस्ता त्रयोदशद्वीपवती मही च । लोमश उवाच । एतावदुक्त्वा विरराम वन्दी श्लोकस्यार्द्धं व्याजहाराष्टावक्रः । अष्टावक्र उवाच । त्रयोदशाहानि ससार केशी त्रयोदशादीन्यतिच्छन्दांसि चाहुः” १३ अत्र नीलकण्ठोक्तदिशाव्याख्या यथा एकोऽग्निः सूर्य्यो वा इतराप्रकाश्योऽन्यप्रकाशकश्च । एव देवानामिन्द्रियाणां राजा प्रधानभूतः अरिहन्ता पराभिभूतत्वान्तराभिभावकः । यमः सर्वेन्द्रियाणां नियन्ता पितॄणां विषयोपहारद्वारा पालयितॄणामिन्द्रियाणाम् ईश्वरो भोक्ता कर्त्ता प्रधानभूत एक एव १। सखायौ सत्यजीवौ जीवेश्वरौ वा । २पुण्येन देवस्वावरभूतमरूप, पापेन नारकस्थावरतिर्य्यञ्चो

निरूप जगत्त्रयम् । वाजपेयोपलक्षितं कर्मत्रयम् तच्च वेदभेदात् द्विजभेदाच्च त्रयम् । त्रीण्येव प्रातर्मध्याह्न तृतीयसवनानि । त्रयो लोकाः स्वर्गनरकभूम्येति भोगभूमय । त्रीणि ज्योतींषि ज्ञापदाद्युपस्थात्रयम् । ३ । निकेतमाश्रमम् यत्तमिह सामयग्रं तेन चातुर्वर्ण्यमध्ये शूद्रस्यापि तत्राधिकार । दिश विराट्सूत्रान्तर्यामितुर्य्यसाक्षात्काररूपा चतस्र दिश । चातुर्मयप्रणवस्य वर्णचतुष्टयम् अकारउकारोमकार अर्द्धमात्रा इत्येवं चतुष्टयम् । चतुष्पदा परा पश्यन्ती मध्यमा वैखरीति भेदात् गौर्वाक् चतुष्पदा ४ । पञ्चाग्नय गार्हपत्यदक्षिणाग्न्याहवनीयसभ्यावसथ्याख्या । पञ्चपदाऽक्षरं पादं पङ्क्ति छन्द पञ्चपदा । यज्ञा पञ्च ब्रह्मर्षिपितृभूतयज्ञा पञ्च स्मार्त्ता, अग्निहोत्रं दर्शपौर्णमासौ चातुर्मास्यानि पशु सोम इति श्रौता वा पञ्च । अप्सु गगनाकारपरिणतासु जलप्रधानासु नाडीषु चरति गच्छतीत्यप्सरा चिति पञ्चचूडा तत्तद्विषयाकारतया प्रमाणविपर्य्ययविकल्पनिद्रास्मृतिरूपवृत्तिपञ्चकसाकल्येन विद्यापञ्चकवती पञ्चानां विषयरूपस्त्रोतसां समाहार पञ्चनदम् ५ पट् आधाने गाहति शेष । मनस इन्द्रियत्वमभ्युपेत्य षट्कोपपत्ति साध्यस्का यज्ञविशेषा ६ । 'ग्राम्यारण्या पशवश्चतुर्दश गौरविरजोऽश्वोऽश्वतरो गर्दभो मनुष्यश्चेति सप्त ग्राम्या महिषवानरऋक्षसरीसृपरुरुपृषन्मृगा च्चेति सप्तारण्याः' पैठीनस्युक्ता । सप्त छन्दांसि गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीसमाख्यानि । सप्तर्षय सप्त प्राणा "प्राणा वै ऋषय" इति श्रुते मनोबुद्धिसहिता प्राणादय पञ्च सप्तर्षय । सप्त अर्च्चींषि अर्च्चींष्यानि सुखानि पञ्चभिरिन्द्रियै मनोबुद्धिभ्यां प्राप्यानि सुखानीतिभेदात् सुखानि सप्त । ७ "अष्टौ पक्षा अष्टावतिपक्षा" श्रुते गावा गणमिमिता गौण्य आपवनविशेषा इव इन्द्रियवर्गेण्योग्य अष्टौ ।८। पितृणामिष्टौ "उशन्तस्त्वा निधीमहीति" ऋक त्रिरभ्यस्ता प्रत्येक त्रिरभित्युक्ता नव सामधेन्योऽग्निसमिन्धनार्था ऋच यन्मद्यन्ते । तथा एका प्रकृतिरेव त्रिगुणा एकद्विगुणभावभावविमर्द्दैः प्रत्येक त्रिविधा सर्वैव सम्पद्यते तथा नवैवाद्या क्रमस्थानभेदात् यथेष्टसंख्यावाचिनो भवन्ति९ । दिश उपदेष्टार दाशा तत्त्वक्षेपका । अन्ताःकरणाधिकारिणश्च दश ।१०। इन्द्रियाणि मनसा सह ज्ञानकर्मेन्द्रियाणि तेषां विषया तदुपस्थानविकाराश्च एकादश ११ । प्राकृतयज्ञ द्वादशाहताध्यस्यात् द्वादशाह १२ । त्रयोदशद्वीपवती भूरादिसप्तकेन पातालसप्तकेन युक्ता च मध्यस्था मही त्रयोदशद्वीपवती १३ । एवमेकादिसंख्याया बोधकत्व तत्तत्पदार्थानाम् दर्शितम् । अन्ये च शब्दा शास्त्रान्तरेषु एकादिसंख्याबोधकतया प्रयुज्यन्ते ते च शब्दा पर्य्यायशब्दाश्च यथा तत्तत्संख्याबोधका भवन्ति तथा दर्श्यन्ते तत्र सर्वत्र शब्दतदर्थयोरभेदात स्ववाच्यार्थगतसंख्यातुल्यसंख्याबोधकत्वेन स्ववाच्यार्थगतसंख्यावच्छेदकत्वेन वा तथात्व बोध्यम् । तेषांश्च क्वचित् तत्तत्संख्यापरत्ववाचकतापि "दृग्भाग्नी शशभूताम्निपन्नमुनी श्वस्त्व्येथो' इत्यादौ दृग्भादिभि तत्संख्यावयवद्वितीयादीनां बोधनात् ।

१ तत्रादौ एकत्वबोधका । कवि०क० । ब्रह्मन् "एकमेवाद्वितीय ब्रह्मेति" श्रुतेरेकत्वात्तथात्वम् विराड्वाचिब्रह्मणो अपेक्षया नसर्गे एकत्वात्तथा स्वर्गेन्द्रेति पाठे भूमिचन्द्रयोरेकत्वात्तथा । इन्द्रहस्तिन ऐरावतस्य तदश्वस्योच्चैःश्रवसश्चैकत्वात् तथा । गणेशदन्तस्य शुक्रनेत्रस्य चैकत्वात् तथा एवं काकनेत्रस्यापि । भा०य०उक्ता । स्वप्रकाशस्य अन्यप्रकाशकस्य सूर्य्यस्याग्नेश्च यमस्य सर्वनियन्तुरीश्वरस्य, इन्द्रपदाभिधेयस्य तथा "इन्द्रो मायाभि पुरुरूप ईयते इति" श्रुतेरीश्वरस्येन्द्रपदवाच्यत्वात् ।

रूपम् वैशेषिकमतसिद्धचतुर्विंशतिगुणेषु आद्यत्वात् तथा । "भवेच्छिद्रोऽयं तैर्विभिन्नैरूप भवेत् स्यात् परिपूर्णिकाश्च" सं.सा० । अश्विनी तस्या तारास्वाद्यत्वात् अभेदात्तद्वाचकाश्विशब्दोऽपि । तस्य स्वपरत्वे द्वित्वबोधकतेति भेद । उक्था तस्या एकचम्पादकत्वात् प्रधानभावो प्रकृतिशब्दस्तथा "अजामेकां लोहितशुक्लकृष्णाम्" इत्यादिश्रुतेस्तदर्थस्यैकत्वात् ।

२ द्वित्वबोधका । कवि०क० उक्ता । चान्द्रमासघटकयो पक्षिच्छदरूपयोर्वा पक्षयो, भद्रकूलयो, अक्षिभारयो, कुशलरूपयोर्दोषरथिपुत्रयोश्च तथा । शा० ति० उक्ता । हंस इति वर्णौ जीवपरमरूपौ परात्मानौ शब्दार्थौ दिनरात्री स्त्रीपुरुषौ, परस्परविरोधि गुणरूपा शीतोष्णसुखदुःखादयश्च तथा । भा०म० उक्ता । इन्द्राग्नी सत्यजीवौ नारदपर्वतौ अश्विनौ रथचक्रे च तथा । एवम् भरणी तारासु तस्या द्वितीयत्वात् तदभेदात् तद्वाचकयमोऽपि । यमशब्दस्य यमयितीश्वरपरत्वे एकत्वस्य, यमजपरत्वे द्वित्वस्य योगाच्च

आरम्भयत्नप्राप्त्याशानियताप्तिफलागमात्मिका पञ्चत्वात्तथा । नाटकस्य सन्धि मुखप्रतिमुखगर्भविमर्शोपसंहृतिरूप पञ्चत्वात्तथा । प्रस्तावना उद्घात्यककथोद्घातप्रयोगातिशयप्रवर्त्तकावलगितात्मिका पञ्चत्वात् तथा । प्रयोजनमभिहितेषु बीजबिन्दुपताकाप्रकरीकार्य्यात्मा तथा । विपर्य्ययः अविद्याऽस्मितारागद्वेषाभिनिवेशात्मक तथा । अश्वगति "आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम्" इत्युक्तास्कन्दितादिलक्षणा तथा । गर्भस्थानुगामिधर्म "आयुः कर्म च वित्तं च विद्या निधनमेव च । पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः" इत्युक्तायुरादिलक्षणस्तथा । योगाङ्गासनं "पद्मासनं स्वस्तिकाख्यं वज्रं भद्रासने तथा । वीरासनमिति प्रोक्तं क्रमादासनपञ्चकम्" शा॰ति॰ उक्तस्वस्तिकादीनां पञ्चत्वात्तथा । पूजाङ्गासनं तु आसनशब्दे उक्तसंख्याबोधकमिति भेदः । हेत्वाभास अनैकान्तविरुद्धासिद्धसत्प्रतिपक्षबाधात्मक तथा । न्यायावयव प्रतिज्ञाहेतूदाहरणोपनयनिगमनात्मकः तथा । वेदान्तिमते तु त्रित्वस्येति भेदः । कालगुण दिग्गुण मूर्त्तामूर्त्तसाधारणगुणश्च संयोगविभागपरत्वापरत्वपृथक्त्वात्मक तथा । बाह्यैकेन्द्रियग्राह्यगुणः शब्दस्पर्शरूपरसगन्धात्मकस्तथा "दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्त्तिताः । विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च" इत्युक्त विज्ञानादिलक्षण स्कन्धस्तथा । प्रातिपदिकार्थ विशेष्यविशेषणस्याकारकलिङ्गात्मकस्तथा । अधिकरणावयव "विषयो विषयश्चैव पूर्वपक्षस्तथोत्तरम् । निर्णयश्चेति सिद्धान्तः शास्त्रेऽधिकरणं स्मृतम्" इत्युक्तविषयादिरूपस्तथा वर्णविभाजकोपाधि "वर्णान् नमयते तेषां विभागः पञ्चधा मतः । स्वरतः कालतः स्थानात् प्रयत्नानुप्रदानतः" शिक्षोक्तेः उदात्तादिस्वरोच्चारणकालस्थानाभ्यन्तरबाह्यप्रयत्नानां पञ्चत्वात् तथा ।

६ षट्संख्याबोधका कवि॰ ल॰ उक्ता । शब्दास्त्रकोणानां, त्रिमूर्द्धासुरनेत्राणां, तर्काणां मानसाधनप्रमाणानां प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धिरूपाणाम्, विनियोगसाधनरूपाणां श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यात्मकानां वा षट्कत्वात्तथात्वम् । आपादकप्रमाधीनापाद्यापादनरूपपरत्वे आत्माश्रयादिपञ्चविधप्रसङ्गरूपत्वात् पञ्चत्वस्य इति भेदः । अङ्गानां मस्तकबाहुद्वयपदद्वयमध्यरूपाणाम् प्रधानाङ्गानां, शिक्षाकल्पव्याकरणनिरुक्तज्योतिश्छन्दोरूपाणां वेदाङ्गानां वा, न्यायवैशेषिकसांख्यपातञ्जलमीमांसावेदान्तात्मकानां तत्त्वज्ञानसाधनानां, दर्शनानाम् चक्रवर्त्तिनां चक्रावयवरूपाणाम् अराणां, कलौ शकप्रवर्त्तकानाम् "युधिष्ठिरो विक्रमशालिवाहनौ धराधिनाथो विजयाभिनन्दनः । इमे तु नागार्जुनमेदिनीविभुर्बलिः क्रमात् षट् शककारकाः कलौ" ज्योतिर्वि॰ उक्तानां युधिष्ठिरादीनां सार्वभौमानां वा, षडाननकार्त्तिकेयमुखानां सन्धिविग्रहयानासनद्वैधाश्रयरूपाणां नृपगुणानाञ्च षट्त्वात्तथात्वम् । गुणशब्दस्य सत्त्वादिपरत्वे त्रित्वस्य, द्रव्यधर्मभेदपरत्वे चतुर्विंशतित्वस्येति भेदः । मधुरकटुकषायाम्लतिक्तलवणानां रसानां षट्कत्वात्तथा । शृङ्गारादिरसपरत्वे नवत्वस्य बोधकतेति भेदः । शा॰ति॰ उक्ता । आमोदप्रमोदसुमुखदुर्मुखविघ्नविघ्नकर्त्तृरूपाणां गणेशानां, क्रमेणोक्तामोदादिशक्तीनां सिद्धिसमृद्धिकान्तिमदनावतीमदद्रवाद्राविणीरूपाणाम्, "स्नायुरस्थिमज्जशुक्राणि त्वङ्मांसरुधिराणि च । षाट्कौशिकमिदं प्रोक्तं सर्वदेहेषु देहिनाम् इति" तन्त्रोक्तानां स्नाय्वादीनां कोषाणाम्, बुभुक्षापिपासाशोकमोहजरामृत्युरूपाणामूर्मीणाम्, डाकिनीराकिणीलाकिनीकाकिनीशाकिनीहाकिनीरूपाणाम् षट्चक्राधिष्ठितानां शक्तीनाम्, "कलाध्वा वै तत्त्वाध्वा भुवनाध्वेति च त्रयम् । वर्णाध्वा च पदाध्वा च मन्त्राध्वेत्यपरं त्रयम्" इत्युक्तानां कलाध्वादीनामध्वनाम्, मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञारूपाणां देहस्थचक्रभेदरूपाणां डाकिन्यादिषट्शक्त्याधाराणां च षट्कत्वात्तथा । ऋतूनां वसन्तग्रीष्मवर्षाशरद्धेमन्तशिशिरात्मकानां षट्त्वात्तथा भा॰व॰उक्ता । आधाने दक्षिणात्वेन विहितगवानां षट्त्वात्तथात्वम् । कृत्तिका तासां षट्तारात्मकत्वात् तथा नक्षत्रचक्रस्य तृतीयत्वपरत्वे त्रित्वस्येति भेदः । एकाहसाध्यानामेकाहकर्त्तव्यदीक्षोपसदुत्याङ्कानां सद्यस्क्रियावतां "षट् साद्यस्क्राः" कात्या॰ १२,२,८, सू॰ उपक्रम्य १२,१२,२५, सूत्रान्तेषु दर्शितानां साद्यस्कदीर्घव्याधिप्रथमादिकामकर्त्तव्यानुक्रीविश्वजिच्छिल्पश्येनैकत्रिकरूपाणाम् षट्त्वात् तथात्वम् । आर्द्रा राशिचक्रे तस्याः षष्ठत्वात् तथा तद्भेदास् मदाधिपाधिपकालादिशब्दोऽपि तथा । गायत्री तस्याः षडक्षरपादत्वात् । भावविकाराश्च जन्मसत्त्ववृद्धिविपरिणामापक्षयनाशरूपाणां यास्कोक्तानां षट्त्वात्तथा । भावपदार्थानां वैशेषिकसूत्रोक्तानां द्रव्यगुणकर्मसामान्यविशेषसमवायात्मकानां षट्कत्वात्तथा । "ऐश-

र्य्यस्य समस्तस्य वीर्य्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीर्य्यते" इत्युक्तभगस्य षट्संख्यायोगात्तथा । कारकाणामपादानसम्प्रदानकरणाधारकर्म्मकर्त्तृरूपाणां षट्कत्वात्तथा "सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा । सुबन्तेनेति च ज्ञेयः समासः षड्विधो बुधैः" इत्युक्तानां, द्वन्द्वकर्मधारयद्विगुतत्पुरुषबहुव्रीह्यव्ययीभावात्मकानां वा समासानां षट्त्वात्तथा । सङ्गतिः प्रसङ्गोपोद्घातहेतुतावसरनिर्वाहकैककार्य्यत्वरूपा षट्कत्वस्य, शास्त्राध्यायपादसङ्गतिरूपा तु त्रित्वस्य, अधिकरणसङ्गतिरूपायान्तरसङ्गतिस्तु आक्षेपदृष्टान्तप्रत्युदाहरणादिरूपा बहुत्वस्येति भेदः। अङ्गन्यासः शीर्षशिखाकवचहृदयनेत्रकरतलतत्पृष्ठन्यासरूपतया षट्त्वस्य, अभिज्ञा दिव्यचक्षुःश्रोत्रपरचित्तज्ञानपूर्वनिवासानुस्मृतिज्ञानतत्त्वज्ञानर्द्धिप्रकृतिकायव्यूहादिविज्ञरूपबौद्धधर्मभेदरूपा षट्त्वस्य, नृपसैन्यं मौलभृत्यसुहृच्छ्रेणीपराजितसानुसैन्याटविकात्मकम् षट्त्वात् तथा। सुरापानसमम् "ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः । गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षट्" इत्युक्तम् षट्त्वात् तथा । नारीदूषणानि "पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् । स्वप्नोऽन्यगेहवासश्च नारीणां दूषणानि षट्" काशी॰ उक्तानि षट्त्वात्तथा । शास्त्रतात्पर्य्यनिर्णायकः "उपक्रमोपसंहारावभ्यासोऽपूर्व्वता फलम् । अर्थवादोपपत्ती च हेतुस्तात्पर्य्यनिर्णये" इत्युक्ते षट्त्वात् तथा । प्रीतिलक्षणम् "ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति । भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम्" इत्युक्तदानाद्यात्मकम् षट्कत्वात् तथा । गीताङ्गवसन्तादिरागः षट्त्वात् तथा । पताकास्थानाङ्कफलम् "दृष्टार्थरचनाश्चर्य्यलाभोत्कृष्टान्तविस्तर । राजप्राप्तिः प्रयोगस्य गोप्यानां गोपनं तथा । प्रकाशनं प्रकाश्यानामङ्कानां षड्विधम् फलम्" इत्युक्तेष्टार्थरचनादिरूपं षट्त्वात्तथा । रिपुः कामक्रोधलोभमोहमदमात्सर्य्यात्मकः षट्त्वात्तथा जन्मलग्नादधिकषष्ठस्थाने चिन्तनीयत्वाच्च तथा । विप्रकर्म यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहात्मकं षट्त्वात् तथा । अभिचारः मारणोच्चाटनविद्वेषणस्तम्भनमोहनवशीकरणात्मकं षट्त्वात् तथा । शमादि शमदमोपरतितितिक्षाश्रद्धासमाधिरूपं तथा । प्रत्यक्षम् चाक्षुषत्वाचश्रावणरासनघ्राणमानसात्मकं षट्त्वबोधकम् लौकिकप्रत्यक्षसन्निकर्षः इन्द्रियार्थसंयोगतत्संयुक्तसमवाय-

तत्संयुक्तसमवेतसमवायसमवायसमवेतसमवायसंयुक्तविशेषणतात्मकं षट्कत्वात्तथा । आकाशगुणः संख्यापरिमाणपृथक्त्वसंयोगविभागशब्दात्मकः षट्त्वात्तथा । निमित्तासमवायिकारणतापन्नगुणः उष्णस्पर्शद्रवगुरुत्ववेगसंयोगविभागात्मकः षट्त्वात्तथा । राजमन्त्रोपायः सामदानभेदनीत्युपेक्षारसान्तरात्मकः षट्कत्वात्तथा ।

७ सप्तसंख्याबोधका । कवि॰ल॰ उक्ता । लोकः भूर्भुवः स्वर्महर्जनतपःसत्यात्मक ऊर्द्ध्वस्थः, अतलवितलसुतलतलातलमहातलरसातलपातालात्मक अधःस्थो वा, द्वीपः जम्बुशाकशाल्मलिकुशक्रौञ्चगोमेदपुष्करात्मकः, मुनिः वैवस्वतमन्वन्तरे वसिष्ठकश्यपात्रिविश्वामित्रजमदग्निगौतमभारद्वाजात्मकः स्वायम्भुवान्तरे मरीच्यत्रिपुलस्त्यपुलहक्रतुप्रचेतोवसिष्ठात्मको वा सप्तत्वात् तथा । सूर्य्यहयः तदश्वानां सप्तत्वात् तथा । समुद्रः लवणेक्षुसुरासर्पिर्दधिक्षीरस्वादूदकात्मकः, नृपराज्याङ्गम् स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलात्मकम्, धान्यम् यवगोधूमतिलमाषश्यामाककङ्गुसहात्मकं सप्तत्वात् तथा । वह्निजिह्वा कालीकरालीमनोजवासुलोहितासुधूम्रवर्णास्फुलिङ्गिनीविश्वधामात्मिका, कुलाद्रिः महेन्द्रमलयसह्यशुक्तिमदृक्षविन्ध्यपारियात्रकुलपर्वतरूपात्मकः सप्तत्वात् तथा । शा॰ति॰ उक्ता । सुदर्शनम् आचक्रविचक्रसुचक्रधीचक्रसंचक्रज्वालाचक्रसुदर्शनचक्रात्मकम्, स्वरः निषादर्षभगान्धारषड्जमध्यमधैवतपञ्चमात्मकः सप्तत्वात् तथा उदात्तादित्वे त्रित्वस्य, अज्वर्णरूपत्वे षोड़शत्वस्येति भेदः । ग्रहः रविचन्द्रभौमबुधगुरुशुक्रशनिरूपः सप्तत्वात् तथा । राहुकेत्वोर्ग्रहत्वमते तु नवत्वस्य ऋत्विक्पात्रभेदत्वे दशत्वस्य "दश ग्रहान् गृह्णातीति" श्रुतौ दशानामेव सोमग्रहणपात्राणां विधानात् । "अष्टौ ग्रहा अष्टावतिग्रहाः" इति श्रुतेः ज्ञानसाधनात्मत्वे पञ्चज्ञानेन्द्रियमनोबुद्ध्यहङ्कारात्मकाष्टविधार्थग्रहणहेतुत्वात् अष्टत्वबोधक इति भेदः । समिधाम् अर्कपलाशखदिरापामार्गपिप्पलोडुम्बरशमीरूपाणां; गौ॰क॰ उक्तानां प्रास्यपञ्चना गयादीनां, यज्ञपशूनां महिषादीनाञ्च भूरादीनां व्याहृतीनाञ्च सप्तत्वात् तथा । भा॰व॰ उक्ताः मनोबुद्धिसहितज्ञानेन्द्रियपञ्चकात्मप्रमाणरूपा ऋषयः सप्तत्वात् तथा । मनोबुद्ध्यादिप्राप्याणि सुखानि सप्तत्वात् तथा, वीणातन्त्रीतन्त्र्यां लोके सप्तत्वप्रसिद्धेस्तथा । छन्दः गायत्र्यादिजगत्यन्तवैदिकच्छन्दोरूपम् सप्तत्वात्तथा लौकिकच्छन्दःपरत्वे

पक्षि ग्रतित्वस्येति भेदः । सामभक्ति प्रोङ्कारहिङ्कारप्रस्तावोद्गीथप्रतिहारोपद्रवनिधनरूपा सप्तत्वात् तथा । "लोकेषु सप्तविधं सामोपासीतेति" श्रुतौ साम्नः सप्तविधत्वोक्तेस्तथात्वम् । वैशेषिकमते पदार्थ द्रव्यगुणकर्मसामान्यविशेषसमवायाभावात्मक सप्तत्वात् तथा । प्रकृतिविकृति महदहङ्कारपञ्चस्पर्शरूपरसगन्धतन्मात्रात्मिका सप्तत्वात् तथा । पुनर्वसुस्वस्थाराशिषक्रे सप्तमत्वात् तथा । अभेदात्तदधिपतिरदितिरपि । उष्णिक् तस्याः सप्ताक्षरपादत्वात् तथा । अश्वजन्मस्थानम् "अमृतादु याम्यतोऽश्चैवै देभ्योऽग्नेश्च गर्भतः । अश्वानोच्चानामुत्पत्तिः सप्तधा परिकीर्त्तिता" इत्युक्तानां सप्तत्वात्तथा । तादृशोत्पत्तिस्थानकत्वेन अश्वपशुरोऽपि तथा । मदस्रुतिश्च "करात् कटाभ्यां मेढ्राच्च नेत्राभ्यां मदस्रुतिः" इत्युक्तानां सप्तत्वात् तथा । वरगुण "कुलञ्च शीलञ्च सनाथता च विद्या च वित्तं च वपुर्वयश्च । एतान् गुणान् सप्त विचिन्त्य देया कन्या बुधैः शेषमचिन्तनीयम्" इत्युक्तकुलादीनां सप्तत्वात् तथा । पौनर्भवा "सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः । वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला । उदकस्पर्शिता या च या च पाणिगृहीतिका । अग्निं परिगता या च पुनर्भूप्रभवा च या" इत्युक्तानां सप्तत्वात् तथा । धर्म्यवित्तागमः "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः । प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव च" इत्युक्तदायादीनां सप्तत्वात् तथा । मरुत्, आवहप्रवहोद्वहसंवहविवहपरावहपरीवहात्मक सप्तत्वात्तथा । मतान्तरभेदपरत्वे ऊनपञ्चाशत्त्वस्येति भेदः । मोक्षदपुरी "अयोध्या मथुरा माया काशी काञ्चिरवन्तिका । पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः" इत्युक्तपुरीणां सप्तत्वात्तथा ।

अष्टबोधकः कवि०क० उक्तः । योगाङ्ग यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधिरूपं, शिवमूर्त्ति क्षित्यादिपञ्चभूतचन्द्रसूर्ययजमानरूपा, ऐरावतपुण्डरीकवामनकुमुदाञ्जनपुष्पदन्तसार्वभौमसुप्रतीकरूपो दन्ती च अष्टत्वात्तथा एकगणात् करिणीयन्त्रोऽपि तथा करिणयश्च अभ्रमुकपिलापिङ्गलानुपमाताम्रकर्णीशुभ्रदन्त्यङ्गनाञ्जनावतीरूपा । सिद्धि अणिमलघिमप्राप्तिप्राकाम्यमहिमेशितावशिताव्याप्तिकामावसायितात्मिका अष्टत्वात् तथा । चतुःषष्टनवसुकर्म तथा । व्याकरणम् इन्द्रचन्द्रकाशकृत्स्नापिशलिशाकटायनपाणिन्यमरजैनेन्द्रात्मकाष्टकर्त्तृकृतम् अष्टत्वात् तथा । दिक्पाल इन्द्रवह्नियमनिर्ऋतिवरुणवायुकुवेरेशानात्मकः प्राच्यादीनामष्टानां दिशामीश्वराणामेषामष्टत्वात् तथा । ऊर्द्धाधोदिक्सहितदिक्पालपरत्वे दशत्वस्येति भेदः । अहि शेषवासुकिपद्ममहापद्मतक्षककुलीरकर्कटशङ्खात्मकः अष्टत्वात्तथा । कुलाचल मतान्तरे हिमाचलसहित पूर्व्वोक्तमहेन्द्रादिरूपः अष्टत्वात्तथा । कुलाचलानां सप्तत्वप्रसिद्धावपि क्वचिदष्टत्वव्यवहारः । "अष्टकुलाचलसप्तसमुद्रा" मोहमुद्गरः । या०ति०उक्ता । भैरव असिताङ्गरुरुचण्डोन्मत्तकपालिभीषणक्रोधनसंहारात्मकः । प्रकृति प्रधानमहदहङ्कारपञ्चतन्मात्रात्मिका अष्टत्वात्तथा । प्रकृतिशब्दे प्रधानपरत्वे एकत्वस्य तन्मात्रोपादानत्वपरत्वे अष्टत्वस्येति भेदः । गणेश वक्रतुण्डैकदंष्ट्रमहोदरगजाननलम्बोदरविकटविघ्नराजधूम्रवर्णात्मकः अष्टत्वात्तथा । अग्निमूर्त्ति "जातवेदाः सप्तजिह्वो हव्यवाहनस्तथा । अश्वोदरजसंज्ञः स्यात् पुनर्वैश्वानराह्वयः । कौमारतेजाः स्याद्विश्वमुखो देवमुखस्तथा" या०ति०उक्तानां जातवेदआदीनामष्टत्वात्तथा भा०व० उक्तः । याम आवपनतुल्यपूरणीय महदहङ्कारचित्तसहितज्ञानेन्द्रियरूप अष्टत्वात्तथा । शरभपादश्च लोके ऽष्टत्वप्रसिद्धेस्तथा । यूपकोणश्च वेदे अष्टत्वप्रसिद्धेस्तथा । द्विजगुणा "दया सर्व्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति" गौतमोक्तानामष्टत्वात्तथा । वैशेषिकोक्त ईश्वरगुण संयोगविभागपृथक्त्वसंख्यापरिमाणबुद्धीच्छाकृतिरूप अष्टत्वात्तथा । राज्याङ्गम् पौरसैन्यसहित स्वाम्यमात्यादिसप्तकम् अष्टत्वात्तथा । नृपगति "आदाने च विसर्गे च तथा प्रैषनिषेधयोः । पञ्चमे चार्थवचने व्यवहारस्य चेक्षणे । दण्डशुद्ध्योः सदा युक्तः तेनाष्टगतिको नृपः" उशनसोक्तगतिरूपा अष्टत्वात्तथा । तारिणी "तारा चोग्रा महोग्रा च वज्रा काली सरस्वती । कामेश्वरी च चामुण्डा इत्यष्टौ तारिण्यो मताः" इत्युक्ताना तारामूर्त्तिभेदानामष्टत्वात्तथा । होमद्रव्यम् "अश्वत्थोडुम्बरप्लक्षन्यग्रोधसमिधस्तिला । सिद्धार्थपायसाज्यानि द्रव्याण्यष्टौ विदुर्बुधाः" इत्युक्तानामष्टत्वात्तथा । धातु "स्वर्णं रौप्यञ्च ताम्रञ्च रङ्गं यशदमेव च । सीसं लौहं रसश्चेति धातवोऽष्टौ प्रकीर्त्तिताः" इत्युक्तानामष्टत्वात् तथा देहस्थधातुपरत्वे सप्तत्वस्येति भेदः । महासरस्वती भुजसंख्या अष्टभुजत्वात्तथा । सात्त्विकभाव "स्तम्भ स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यम्

त्वात्तथा। ते च यथा "मरुत्त, १ सुहोत्र २ पौरवोऽङ्ग ३ शैबोशीनरः शिबि ४ दाशरथिराम ५ भगीरथ ६ ऐलविल-दिलीप ७, यौवनाश्वो मान्धाता ८, नाहुषययाति ९ नाभागोऽम्बरीष १० शशबिन्दु ११, गय १२ साङ्कृतिः रन्तिदेव १३, दौष्मन्तिर्भरत १४, वैन्य १५, जामदग्न्यो-राम १६ इत्येते भा०द्रो० ५५, ७० अ० दर्शिताः। तत्त्वान्तरानुपादानलक्षणः सांख्योक्तः विकार एकादशे-न्द्रियपञ्चमहाभूतात्मकत्वेन षोडशत्वात्तथा। "षोडशकस्तु विकारः" सां०का०।

१७ सप्तदशसंख्याबोधकः। अनुराधा राशिचक्रे तस्याः सप्तदश-त्वात् तथा तद्भेदात्तदधिपमित्रोऽपि तथा। अत्यष्टिः सप्त-दशाक्षरपादत्वात् तथा। लिङ्गदेहावयवः "पञ्चप्राणमनोबुद्धि-दशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोग-साधनम्" इत्युक्तानां सप्तदशत्वात् तथेति वेदान्तिनः। सांख्यमते तु पञ्चप्राणस्थाने पञ्चतन्मात्राणीति भेदः "स सप्तदशकेनापि युज्यते नात्र संशयः"। "सप्तदशैकं लिङ्गम्" सा०सू०।

१८ अष्टादशसंख्याबोधकः कवि० क० सप्त द्वीपाः महाद्वीपाः जम्बुप्रभृतयः एकादश उपद्वीपा इत्यष्टादशत्वात् तथा। "अष्टादशद्वीपनिखातयूपः" रघु "नवद्वयद्वीपपृथग्-जयश्रियामिति" नैष०। विद्या धनुर्वेदायुर्वेदगान्धर्वार्थ-शास्त्रसहितचतुर्दशविद्यारूपा अष्टादशत्वात् तथा। महापुराणम् उपपुराणशब्दे दर्शितब्राह्मादिरूपम् अष्टादशत्वात् तथा। स्मृतिः अष्टादशस्मृतिकारिशब्दे दर्शितविष्णुप्रभृतिप्रणीता अष्टादशत्वात् तथा। धान्यम् अष्टादशधान्यशब्दे दर्शितयवादिरूपम् तथा। महा-लक्ष्मीभुजा तस्या अष्टादशभुजत्वात्तथा। ज्येष्ठा राशि-चक्रे तस्या अष्टादशत्वात्तथा तद्भेदात् तदधिप इन्द्रोऽपि तथा। धृतिः तस्या अष्टादशाक्षरपादत्वात्तथा। विवाद अष्टादशविवादपदशब्दे दर्शितर्णादानादीनामष्टादश-त्वात्तथा। कुशण्डिसंस्काराः "अष्टादश स्युः संस्काराः कुशण्डीनां तन्त्रमोदिताः। बीजेन मूलमन्त्रेण अस्त्रेण प्रोक्षणं मतम्। तेनैव ताडनं दर्भैर्वर्मणाभ्युक्षणं स्मृतम्। अस्त्रेण खननोद्धारौ तन्मन्त्रेण प्रपूरणम्। समीकरणं मन्त्रेण सेचनं वर्म्मणा मतम्। कुट्टनं हेतिमन्त्रेण वर्म-मन्त्रेण मार्जनम्। विलेपनं कलारूपं कल्पनं तदनन्त-रम्। त्रिसूत्रीकरणं पश्चाद्धृदयेनार्च्चनं मतम्। अस्त्रेण वज्रीकरणं हुंमन्त्रेण कुशैः शुभे। चतुष्पथं तनुत्रेण तनुत्राणेनाक्षपाटनम्" शा० ति०। उक्तानामष्टादशत्वात्तथा। भाषा संस्कृता शौरसेनी महाराष्ट्री मागधी अर्द्धमागधी आवन्तिका दाक्षिणात्या शाकरी बाह्लिकी द्राविडी आभीरी चाण्डाली शाबरी पैशाची प्राकृता चेति सा०द०। उक्तानां षोडशानां राक्षसीभाषात्त्याः सहितानामष्टादश-त्वात् तथा "अष्टादशभाषावारविलासिनी" सा०द०। व्यसनम् "दश कामसमुत्थानि तथाष्टौ क्रोधजानि च। व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत्। मृगयाऽक्षो दिवास्वप्नः परिवादः स्त्रियो मदः। तौर्य्यत्रिकं वृथा-ट्या च कामजो दशको गणः। पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयार्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः" मनूक्तमृगयादीनामष्टादशत्वात्तथा। भारत-पर्व्व तेषामष्टादशत्वात्तथा।

१९ ऊनविंशतिबोधकः। धर्मशास्त्रकारकः "मन्वत्रिविष्णुहा-रीतयाज्ञवल्क्योशनोऽङ्गिराः। यमापस्तम्बसंवर्त्ताः का-त्यायनबृहस्पती। पराशरव्यासशङ्खलिखिता दक्षगौत-मौ। शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः" इत्युक्त-मन्वादीनामूनविंशतित्वात्तथा। मूलनक्षत्रम् तस्य राशिचक्रे ऊनविंशतितमत्वात्तथा। तद्भेदात् तदधिप-निर्ऋतिरपि तथा। अतिधृतिस्तस्या ऊनविंशत्यक्षरपादत्वा-त्तथा। अभिजिन्नाम तस्या उत्तराषाढापञ्चदशदण्ड-श्रवणचतुर्दण्डरूपतयोनविंशतिदण्डात्मकत्वात्तथा।

२० विंशतिबोधकः रावणभुजानाम्, नखानाम्, अङ्गुलीनां च हस्तपादयोस्तावन्मितत्वात् तथा। पूर्वाषाढा राशिचक्रे तस्या विंशत्वात्तथा। तद्भेदात् तदधिपजलमपि तथा। छन्दोरूपा कृतिस्तस्या विंशत्यक्षरपादत्वात्। शनेस्तुला-वाङ्गांशे सेवे नीचांश तथा। तत्र तस्य विंशांशे एव परमोच्चांशत्वो ज्यो० उक्तत्वात्। ताजकोक्तपञ्चोच्चबलम् "त्रिंशत्स्वभे विंशतिरत्रभे स्वे" नी० क० उक्ते-स्तस्य विंशतितमत्वात्तथा।

२१ एकविंशतिसंख्याबोधकः। परशुरामक्षितिजयस्तस्य एकवि-शतिमितत्वात् तथा। उत्तराषाढा तस्या ऋक्षचक्रे एक-विंशत्वात्तथा। तद्भेदात् तदधिपविश्वोऽपि तथा। छन्दोरूपा प्रकृतिस्तस्या एकविंशत्यक्षरपादत्वात्तथा। मूर्च्छना "मूर्च्छनास्त्वेकविंशतिः" भरतोक्ते सप्तस्वराणाम् आरोहावरोहक्रमरूपैस्तत्त्वात् एकविंशतिरूपतया तथा। स्वरवर्णे "स्वरा विंशतिरेकश्चेति" शिक्षोक्तेस्तन्मते स्वराणा तदुसंख्यत्वात्तथा।

२२ द्वाविंशतिसंख्याबोधका। श्रवणा तस्या नक्षत्रचक्रे द्वाविंशत्वात्तथा। तदभेदात् तदधिपहरेरपि तथा। धृतिस्तस्याद्वाविंशत्यक्षरपादत्वात्तथा। निग्रहस्थानम् "प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्य्यनुयोज्योपेक्षणम् निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च" गौ० सू० उक्तानां प्रतिज्ञाहान्यादीनां द्वाविंशतित्वात् तथा।

२३ त्रयोविंशतिसंख्याबोधका। धनिष्ठा तस्या नक्षत्रचक्रे त्रयोविंशत्वात्तथा। तदभेदात् तदधिपवसुरपि तथा। विकृतिस्तस्या त्रयोविंशत्यक्षरपादत्वात् तथा।

२४ चतुर्विंशतिसंख्याबोधका। तत्त्वम् प्रधानमहदहङ्कारशब्दस्पर्शरूपरसगन्धतन्मात्रैकादशेन्द्रियपञ्चस्थूलभूतरूपं चतुर्विंशतित्वात् तथा। पुरुषसहितप्रधानादिपरत्वे पञ्चविंशतित्वस्य पुरुषेश्वरयुततत्परत्वे षड्विंशतित्वस्य बोधकमिति भेदः। गायत्र्यक्षरम् तस्याः षडक्षरपादत्वाच्चतुष्पादत्वात्तथासंख्यायोगात् तथात्वम्। जिनः ऋषभाजितसम्भवाभिनन्दनसुमतिपद्मप्रभसुपार्श्वचन्द्रप्रभसुविधिशीतलश्रेयांसवासुपूज्यविमलानन्ततीर्थकृद्धर्मशान्तिकुन्थ्वरमल्लिमुनिसुव्रतनमिनेमिपार्श्ववीराख्यचतुर्विंशतित्वात् तथा। व्याक्रान्तिश्च सि० शि० चतुर्विंशतिमितत्वोक्तेस्तथा। शतभिषा तस्याराशिचक्रे चतुर्विंशत्वात्तथा तदभेदात् तदधिपवरुणोऽपि। समततारासमुदायपरत्वे शततमस्येति भेदः। संकृतिस्तस्याश्चतुर्विंशत्यक्षरपादत्वात्तथात्वम्। जातिः न्यायोक्तदोषभेदरूपा प्रतिषेधहेतुः चतुर्विंशतित्वात् तथा। सा च गौ० सू० दर्शिता यथा "साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्य्यसमाः" इति। वैशेषिकोक्ताः द्रव्याश्रिताः गुणाः रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषयत्नगुरुत्वद्रवत्वस्नेहसंस्कारपुण्यापुण्यशब्दात्मकत्वात् चतुर्विंशतित्वस्य बोधकाः। अन्यार्थपरत्वे त्रिंशादीनां बोधक इत्युक्तं प्राक्। विष्णुमूर्त्तिः शङ्खचक्रगदापद्मानां दक्षवामकरेषु विन्यासविशेषेण जातचतुर्विंशतिभेदा तथा। तच्च मूर्त्तिभेदो ध्यानशब्दे वक्ष्यते।

२५ पञ्चविंशतिसंख्याबोधका "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" सा० का० उक्तपुरुषसहितप्रधानादिपञ्चविंशतितत्त्वानामङ्गीकारात् तथा। "पञ्च पञ्चजना" इति श्रुतिरेव तत्र मानतया तैरङ्गीकृता। शा० भा० तु तस्याः श्रुतेः देवपितृगन्धर्व्वासुररक्षआदीनां पञ्चप्राणादीनां पञ्चविंशतित्वपरतेत्युक्तम्। पूर्व्वभाद्रपदा तस्याराशिचक्रे पञ्चविंशत्वात्तथा। तदभेदात् तदधिपः अजैकपादपि तथा। उत्कृतिः तस्याः पञ्चविंशत्यक्षरपादत्वात्तथा। स्पर्शः कादिमावसानवर्णानां पञ्चविंशतित्वात् तथा। "स्पर्शानां पञ्चविंशतिः" शिक्षा।

२६ षड्विंशतिसंख्याबोधका तत्त्वम् जीवेश्वरसहितप्रकृत्यादिरूपं तस्य षड्विंशत्वात्तथा। उत्तरभाद्रपदा तस्याराशिचक्रे षड्विंशत्वात् तथा तदभेदात् तदधिपाहिर्बुध्नोऽपि तथा। संकृतिस्तस्याः षड्विंशत्यक्षरपादात्तथा।

२७ सप्तविंशतिः। नक्षत्रम् उडुचक्रशब्दे दर्शितराशिचक्रस्याश्विन्यादिसप्तविंशतिरूपत्वात् तथा। रेवती तस्या राशिचक्रे सप्तविंशत्वात्तथा। शुक्रस्य मीने तुङ्गं कन्यायां नीचं च तथा।

२८ अष्टाविंशतिसंख्याबोधका साभिजिन्नक्षत्रम् तस्याष्टाविंशत्वात्तथा। सात्त्विकभावालङ्कारः "यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः। अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः। शोभा कान्तिश्च दीप्तिश्च माधुर्य्यञ्च प्रगल्भता। औदार्य्यं धैर्य्यमित्येते सप्तैव स्युरयत्नजाः। लीला विलासो विच्छित्तिर्विब्बोकः किलकिञ्चितम्। मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः। विहृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम्। हसितं चकितं केलिरित्यष्टाविंशतिसंख्यकाः" सा० द० उक्तदशस्वभावजभावसहितशोभादीनामष्टानामष्टाविंशतित्वात्तथा।

३२ द्वात्रिंशत्संख्याबोधकाः दन्ताः तस्य नरमुखे द्वात्रिंशत्संख्यकत्वात्तथा। भगवदपराधः अपराधशब्दे २११पृ० दर्शितानां यानगमनादीनां चलितपिष्टान्नभोजनादीनां द्वात्रिंशत्त्वात्तथा।

३३ त्रयस्त्रिंशत्संख्याबोधकः। नाट्यालङ्कारः "आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रयाः। उत्प्रासनस्पृहाक्षोभपश्चात्तापोपपत्तयः। आशंसाध्यवसायौ च विसर्पोल्लेखसंज्ञितौ। उत्तेजनं परीवादो नीतिरर्थविशेषणम्। प्रोत्साहनञ्च साहाय्यमभिमानोऽनुवर्त्तनम्। उत्कीर्त्तनं तथा याच्ञा परीहारो निवेदनम्। प्रवर्त्तनाख्यान

युक्तिग्रहणपर्यायोपपदेशनम्" सा० द० उक्तानां वीरादीनां तत्संख्यकत्वात्तथा । व्यभिचारिभावः "निर्वेदावेगदैन्यश्रममदजडता औग्र्यमोहौ विबोधः स्वप्नापस्मारगर्वामरणमलसताऽमर्षनिद्रावहित्था । औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधिसंत्रासलज्जा हर्षासूयाविषादाः सधृतिचपलताग्लानिचिन्तावितर्काः" सा० द० उक्तानां तत्संख्यत्वात्तथा ।

३६ षट्त्रिंशत्संख्याबोधका । रागिणी "रागाः षट्त्रिंशच्च भार्य्या इति भरतोक्तेः वसन्तादिरागभार्य्याणां तत्संख्यकत्वात् तत्संख्याबोधकता । रागिणीशब्दे तासां वक्ष्यन्ते । नाटकलक्षणम् सा०द० "षट्त्रिंशल्लक्षणान्यत्र" इत्युपक्रम्य "भूषणाक्षरसंघातौ शोभोदाहरणं तथा । हेतुसंशयदृष्टान्तास्तुल्यतर्कः पदोच्चयः । निदर्शनाभिप्रायौ च प्राप्तिर्विचार एव च । दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा । विशेषणनिरुक्ती च सिद्धिभ्रंशविपर्य्ययौ । दाक्षिण्यानुनयौ मालार्थापत्तिर्गर्हणा तथा । पृच्छा प्रसिद्धिः सारूप्यम् संक्षेपो गुणकीर्त्तनम् । लेशो मनोरथोऽनुक्तसिद्धिः प्रियवचस्तथा" इत्युक्तभूषणादीनां षट्त्रिंशत्त्वात्तथा ।

३८ अष्टत्रिंशत्संख्याबोधका सोमसूर्य्याग्निकला "सोमसूर्य्याग्निभेदेन मातृकावर्णसम्भवाः अष्टत्रिंशत्कलास्तत्तन्मण्डलेषु व्यवस्थिताः" शा० ति० उक्तानां सोमषोडशकलासूर्य्यद्वादशकलावह्निदशकलारूपाणामष्टत्रिंशत्त्वात्तथा ।

४० चत्वारिंशत्संख्याबोधक । तान "चत्वारिंशत्ततानता" इति भरतोक्तेः ततशब्दवाच्यतानानां तत्संख्यत्वात्तथा ।

४९ ऊनपञ्चाशत्संख्याबोधक । अनिल अनिलशब्दे दर्शितोनपञ्चाशद्भेदत्वात्तथा ।

५० पञ्चाशत्संख्याबोधकः । मातृकालिपि तस्या तन्त्रमते पञ्चाशद्वर्णात्मकत्वात्तथा । "पञ्चाशल्लिपिभिर्विभक्तेत्यादि" शा० ति० ।

५१ एकपञ्चाशत्संख्याबोधक महापीठ महापीठशब्दे वक्ष्यमाणभेदानां महापीठविशेषाणां तत्संख्यकत्वात्तथा ।

६४ संख्याबोधका । वर्ण शिक्षामते "त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः सम्भवतो मताः । स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः । यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः । अनुस्वारो विसर्गश्च+कूपौ चापि पराश्रितौ । दुःस्पृष्टश्चेति विज्ञेयो लृकारः प्लुत एव च" इति शिक्षोक्तेस्तथा । कला कलाशब्दे वक्ष्यमाणभेदानां तासां चतुःषष्टित्वात्तथा ।

महादेवीपीठम् "मायामरुस्थलमागधानगमहालक्ष्मीचरित्रा भृगुच्छायाच्छत्रहिरण्यहाटासिनमहेन्द्रोड्डीशचन्द्रपुरम् । पद्मा क्षीरकमङ्कनेश्वरपट्टेश्चन्द्रपूः श्रीगिरिः कोल्लापुरक पूर्णं पर्व्वतकुरुक्षेत्रं कलिङ्गमुद्राः । काश्मीरैकाम्रकाञ्चीमलयगिरिश्वरैकारकनुभूतदेवीकोट्टाम्रातकजालन्धरसुरभिसणीयाद्रिकायाप्रयागाः । त्रिस्रोतः काककोट्योज्जयिनिमधुरा कोशलाकान्यकुब्जौ ह्यर्बुदाराट्टहासो विरजहृष्ट तत क्षुरिकाम राजगेहम् । नैपालं पुण्ड्रवर्द्धनं मालवपारसीकामरूपकेदाराः । विन्ध्यमहामठगोस्तिकस्तिहाम्नीपीठमरुदेशाः" पदार्थादर्शोक्तानां तत्संख्यकत्वात्तथा ।

१०० शतसंख्याबोधका पुरुषायुषम् "शतायुर्वै पुरुषः" इति श्रुतेस्तथा । रावणहस्ताङ्गुलि तस्य विंशतिबाहुत्वेन प्रत्येकबाहौ पञ्चाङ्गुलियोगात् शतत्वेन तथात्वम् । इन्द्रयज्ञः तस्य शतयज्ञत्वेन तद्यज्ञानां शतत्वात् तथा ।

१००० सहस्रबोधका । इन्द्रनेत्रं तस्य सहस्रनेत्रतया तन्नेत्राणां सहस्रत्वेन तथा । विराट्पुरुषचक्षुः तत्पादतद्बाहुतन्मूर्द्धा च तथा । "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" श्रुतिः । कार्त्तवीर्य्यार्जुनबाहु बाणासुरबाहुश्च तयोः सहस्रबाहुत्वात् तथा । अनन्तशीर्षम् तस्य सहस्रशीर्षतया तथा । गङ्गास्रोतोमुखम् सगरवंशसमीपस्थाने सहस्रमुखतया तस्याः प्रवहणात्तथात्वम् । सामवेदशाखा तद्वेदस्य सहस्रशाखत्वात् तथा ।

१०००० अयुतसंख्याबोधक रामराज्यकाल "दश वर्षसहस्राणि रामो राज्यमकारयत्" रामा० उक्तेस्तथा ।

अत्रेदं बोध्यम् । शास्त्रकारैः ये ये पदार्था यद्यत्संख्यकतया उक्तास्तत्तच्छब्दास्तत्तत्संख्याबोधकाः । तेषु दिङ्मात्रमत्र दर्शितम् अनयैव रीत्यान्येषामपि उक्तताद्युक्तभेदयुक्ततत्तत्पदार्थपराणां शब्दानां तत्तत्संख्यार्थकत्वं कल्पनीयम् । शब्दार्थयोरभेदाच्च कचिच्छब्दस्य तदर्थकता उक्ता कचिच्चार्थस्यैव तत्तत्संख्यायोगउक्तः तेनैव तत्तदर्थकशब्दस्य तत्तत्संख्याबोधकता उन्नेया । इयांस्तु विशेषः समुदायवर्त्तिपदार्थस्यैकदेशवृत्तित्वाभिप्रायेण बहुसंख्यान्वितपदार्थबोधकानामपि एकवचनादिप्रयोगोऽपि । यथा "रामोऽग्निर्वेदैर्नवधिस्तु मैत्रैरित्यादौ" रामशब्दस्य त्रित्वबोधकत्वेऽपि एकवचनान्तता अग्निवेदैरित्यादौ बहुत्वबोधकयोः बहुवचनान्तता । एवमन्यत्रापि । उक्तशब्दानां कचित्संख्यापरत्वम् कचित्संख्येयपरत्वम्

क्वचिच्च पूरणार्थेऽपि यथा "दिग्भिर्गुणैरष्टयमैर्यथैकं यशोभिरंशै नेखसम्मितैश्च" मी०क०दिगादिशब्दानां दशमा-र्थत्वेऽपि तत्सङ्ख्यापूरणे प्रयोगः। एवं "युष्माकन्तो क्रतभूतानि वयम् भी चतु-र्व्यपरत्वम्। एवं "युष्माकन्तो क्रतभूतानि वयम्भी चतु-न्नयो" इत्यादौ युष्मास्मिप्रकृतीनां तत्तत्सङ्ख्यापूरणे द्वितीयादिपरत्वम्। अत्र च ये शब्दा एकार्थकपर्याय शब्दा अपि तत्तत्सङ्ख्याबोधकाः इति।

**एकादेश** पु० कर्म०। पाणिन्युक्ते उभयस्थानिकभवे एकस्मिन्नादेशे। एकादेशश्च यथा सुरारिरित्यत्र सु-रशब्दस्य अन्त्याकारस्य अरिशब्दादिभूताकारस्य चेत्युभयोः स्थाने दीर्घभूत एक आकारः एवमन्यत्रापि। "एका-देश उदात्तेनोदात्तः" पा०।

**एकादून(न्न)विंशति** स्त्री एकेन न विंशतिः। एक+न+आदुक् दस्य वा न। १एकोनविंशतिसङ्ख्यायां, २तद्युक्ते च एवमेका(दून)त्रिंशत् यदादयः।

**एकानंशा** स्त्री एको न अंशोऽस्याः अमरस्य भ०। यशो-दायां दुर्गायां सा च यशोदागर्भसम्भूता प्रजा-पतेरगजाता। तयोक्तं हरिव०१८०अ०यथा "नन्दगोपस्य भार्य्यैका वसुदेवस्य चापरा। तुल्यकालं हि गर्भिण्यौ यशोदा देवकी तथा। देवक्यजनयद्विष्णुं यशोदा तान्तु कन्यकाम्" इत्युपक्रम्य "वसुदेवस्तु सङ्गृह्य दारकं क्षिप्रमेव च। यशोदायागृहं रात्रौ विवेश सुत-वत्सलः। यशोदायास्त्वविज्ञातस्तत्र निक्षिप्य दारकम्। प्रगृह्य दारिकां तान्तु देवकीशयने न्यसत्। परिवर्त्ते कृते ताभ्यां गर्भाभ्यां भयविक्लवः। वसुदेव कृता-र्थो वै निर्जगाम निवेशनात्। उग्रसेनसुतायाथ कंसाया-नकदुन्दुभिः। निवेदयामास तदा कन्यां तां वरवर्णिनीम्। तच्छ्रुत्वा त्वरितः कंसोरक्षिभिः सह वेगितः। आजगाम त्वरद्द्वारं वसुदेवस्य वीर्य्यवान्। स तत्र त्वरितं द्वारि किं जातमिति चाब्रवीत्। दीयतां शीघ्रमित्येवं वाग्भिः समभितर्ज्जयन्। ततो हाहाकृता सर्व्वा देवकीभवने स्त्रि-यः। उवाच देवकी दीना बाष्पविक्लवया गिरा। दारिका जातेति कंसं समभियाचती। श्रीमन्तो मे हता सप्त पुत्रा भ्रातः त्वया विभो। दारिकेयं हतैवैषा पश्यस्व यदि मन्यसे। दृष्ट्वा कंसस्तु तां कन्यामकृष्यत मुदा युतः। हतैवैषा यदा कन्या जातेत्युक्त्वा व्यपासृतः। सा गर्भशयन-क्लिष्टाङ्गी गर्भाम्बुक्लिन्नमूर्द्धजा। कंसस्य पुरतोन्यस्ता पृथिव्यां पृथिवीसमा। पादे तां गृह्य सुतरां समाविध्यावधूय च। उद्यम्य सा तेन वेगेन शिलायां समपोथयत्। सा अभूता शिला-

पृष्ठे निष्पिष्टा दिव्यरूपता। हित्वा गर्भतनुं सा तु स-हसा मुक्तमूर्द्धजा। जगामाकाशमाविश्य दिव्यस्रगनुलेप-ना। कन्यैव चाभवत् सा तु दिव्या देवैरभिष्टुता। नील-पीताम्बरधरा गजकुम्भोपमस्तनी। रथविस्तीर्णजघना च-न्द्रवक्त्रा चतुर्भुजा। विद्युद्विस्पष्टवर्णाभा बालार्कसदृशेक्षणा। पयोधरस्तनवती सन्ध्येव सपयोधरा। सा वै निशितमोघने सर्व्वभूतगणाकुले। नृत्यन्ती हसती चैव विपरीतेन भस्मसति। विहायसि गता रौद्री पपौ पानमनुत्तमम्। जहास च म-हाहासं कंसञ्च रुषिताऽब्रवीत्। कंस कंसात्मनाशाय यदहं घातिता त्वया। सहसा च समुत्क्षिप्य शिलायामभिपो-थिता। तस्मात्तवान्तकालेऽहं कृष्यमाणस्य शत्रुणा। पाट-यित्वा करैर्देहमुष्णं पास्यामि शोणितम्। एवमुक्त्वा वचो घो-रं सा यथेष्टेन वर्त्मना। खं सा देवालयं देवी सगणा वि-चचार ह। सा कन्या ववृधे तत्र वृष्णिसङ्घनि पूजिता। पुत्रवत् पाल्यमाना सा देवदेवाज्ञया तदा। विद्धि चैनाम-थोत्पन्नामंशाद्देवीं प्रजापतेः। एकानंशां योगकन्यां र-क्षार्थं केशवस्य च। तां वै सर्व्वे सुमनसः पूजयन्ति स्म यादवाः। देववद्दिव्यवपुषा कृष्णः संरक्षितो यया। तस्यां गतायां कंसस्तु तां मेने मृत्युमात्मनः"। "सा कन्या ववृधे तत्र वृष्णिसङ्घनि पूजिता। पुत्रवत् पाल्यमाना वै वसुदेवाज्ञया तदा। एकानंशा तु यामाहुरुत्पन्नां मानवा भुवि। योगकन्या दुराधर्षाम्" इति च। जटाधृत० मूर्त्तिभङ्गे "एकानंशा कार्य्या देवी बलदेवकृष्णयोर्मध्ये"।

**एकानुदिष्ट** त्रि० एकमनु दिष्टम् "सुप्सुपा" पा०। एकोद्दिष्टे इत्यन्ये। "यावदेकानुदिष्टस्य गन्धोलेपश्च तिष्ठति। विप्रस्य विदुषो देहे तावद्ब्रह्म न कीर्त्तयेत्" मनु।

**एकान्त** त्रि०एकः अन्तः निश्चयः शोभा वा। १अत्यन्ते अ-तिशये "तेजःपथा वा नैकान्तं कालज्ञस्य महीपतेः" माघ। "भक्तुम्भेनैकान्तमनोविनोदिनम्" नै०। क्रियाविशेषणत्वे नात्र न०। "एकान्तविध्वंसिषु मद्विधानाम्" रघु०। "नात्यश्नतस्तु योगोऽस्ति नचैकान्तमनश्नतः" गीता। तद्वति २इष्ये त्रि०। "एकान्तपादपमनक्षतिहारम्" रघु। "एका-न्तमितस्य कदलीविशेषाः" कुमा०। एक एवान्तो यत्र। निर्जने ३रहसि। "तस्माद्ध्यान्ते कृष्णध्यानः" "वासे मधूनां कलहे-यमेकान्ते कर्त्तव्या" ज्यो०त०। "वासे मधूनां कलहे-भवेद्विवार्त्ता द्वयोरपि। तस्मादेकान्तवासाय चिन्त-येत् निलयं तु, पुरा०। ततः तसिल्। एकान्ततस् एका

न्ते च्याद्यर्थे। "दृष्टे साऽपार्था चेन्नैकान्ततोऽत्यन्ततोऽभावात्" सां॰का॰। तत्र भवः ठञ्। ऐकान्तिक एकान्तभवे त्रि॰ स्त्रियां ङीप्। "ऐकान्तिकी हरेर्भक्तिरनुपातायैव कल्पते" पुरा॰। एक एवान्तः स्वभावो यस्य। एकरूपताप्राप्ते त्रि॰। "विश्वोक्यैकान्तभूतानि भूतान्यादौ प्रजापतिः। स्त्रियं चक्रे स्वदेहार्द्धं यया पुंसा प्रतिष्ठिता" भाग॰ ६,१८,२२।

एकान्तत्यागवाद पु॰ वस्तुनः एकान्ततां एकस्वरूपता अस्तीत्यादिसम्बन्धरूपता तस्य त्यागप्रतिपादको वादः। अर्हद्विशेषोक्तवादभेदे। स च वादः अर्हच्छब्दे स्याद्वाद प्रकरणे ३८६ पृ॰ दर्शितः।

एकान्तदुःषमा स्त्री दुष्टा समा वर्षो दुःषमा सुषमा॰ षत्वम् एकान्त दुःषमा २त॰। बौद्धकल्पिते कालभेदे हेमच॰। यथा "कालो द्विविधोऽवसर्पिण्युत्सर्पिणीषु भेदतः। सागरकोटिकोटीनां विंशत्या स समाप्यते। अवसर्पिण्यां षडरा उत्सर्पिण्यां त एव विपरीताः। एवं द्वादशभिररैर्विवर्त्तते कालचक्रमिदम्। तत्रैकान्तसुषमारश्चतस्रः कोटिकोटयः। सागराणां सुषमा तु तिस्रस्तत्कोटिकोटयः। सुषमदुःषमा ते द्वे दुःषमसुषमा पुनः। सैका सहस्रैर्वर्षाणां द्विचत्वारिंशतोनिता। अथ दुःषमैकविंशतिरब्दसहस्राणि तावती तु स्यात्। एकान्तदुःषमापि ह्येतत्संख्याः परेऽपि विपरीताः। प्रथमारत्रये मर्त्यास्त्रिद्व्येकपल्यजीविताः। त्रिद्व्येकगव्यूत्युच्छ्राया स्त्रिद्व्येकदिनभोजनाः। कल्पद्रुफलसन्तुष्टाश्चतुर्थे त्वरके नराः। पूर्वकोट्यायुषः पञ्चधनुःशतसमुच्छ्रयाः। पञ्चमे तु वर्षशतायुषः सप्तकरोच्छ्रयाः। षष्ठे पुनः षोडशाब्दायुषो हस्तसमुच्छ्रयाः एकान्तदुःखप्रचिता उत्सर्पिण्यामपीदृशाः। पश्चानुपूर्व्या विज्ञेया अरेषु किल षट्स्वपि"।

एकान्तर त्रि॰ एकमन्तरं व्यवधानम्। १एकव्यवधाने "एकान्तरे त्वानुलोम्यादम्बष्ठोग्रौ तथा स्मृतौ" मनुः। यत्र॰। २एकान्तरवर्त्तिनि त्रि॰। "एकान्तरासु जातानां धर्म्यं विद्यादिमं विधिम्" मनुः। एकदिनव्यवधानेन भोजनरूपे ३व्रतभेदे न॰ एकदिनव्यवधानेन जायमाने ४ज्वरभेदे पु॰।

एकान्तसुषमा स्त्री॰ सुषमा वर्षं सुषमा सुषमादि॰ षत्वम् २त॰। बौद्धमतसिद्धे कालभेदे एकान्तदुःषमाशब्दे विवृतिः।

एकान्तिन् त्रि॰ एकान्तमस्त्यस्य इनि स्त्रियां ङीप्। १अतिशययुक्ते एकान्तः एकस्वरूप उपास्यत्वेनास्त्यस्य इनि। स्त्रियां ङीप्। २भगवद्भक्तविशेषे त्रि॰। "एकान्तेनासतो विष्णुर्यस्मादेवं परायणः। तस्मादेकान्तिनः प्रोक्तास्तद्भागवतचेतसः" गरुडपु॰ १३१।

एकान्न त्रि॰ एककालमेवान्नं भक्ष्यं यत्र। १एककालिकभक्ष्ये एकभक्तरूपे व्रते कर्म्म॰। २एकमात्रभक्ष्ये अन्ने न॰। "अश्नन् यत्राश्नमश्नीयादेकान्नमथ वा पुनः। टङ्काक्षं पूरणञ्चैव पूकपिण्डीश्च वर्जयेत्" काशी॰। "भैक्ष्येण वर्त्तयेन्नित्यं नैकान्नादी भवेद् व्रती" मनुः। "क्रोशा सम्या प्राप्य स्वगृहमेकान्नमशनमेकरात्रं त्रिरात्रं वा भोक्तव्यमिति" शु॰त॰ स्मृतिः। एकस्मिन् स्थाने पचनीयमन्नं यस्य। अविभक्ते भ्रात्रादौ "एकान्नवर्त्तिनाञ्चैव एकोद्दिष्टं न पार्वणम्। एकपाकेन वसतां पितृदेवद्विजार्च्चनम्। एकं भवेद्विभक्तानां तदेव स्याद् गृहे गृहे" बृह॰

एकायन त्रि॰ एकमयनं विषयोऽवलम्बनं वा यस्य। १विषयान्तरव्यावृत्तचित्ते एकाग्रमनस्के २एकावलम्बने च। "तानि वा एतानि सङ्कल्पैकायनानि सङ्कल्पप्रतिष्ठितानि" छा॰उ॰। एकमयनमवलम्बनीयं यस्य। ३एकावलम्बनीये त्रि॰। "एवमेकायनं धर्म्ममाहुर्वेदविदो जनाः" भा॰शा॰ ७८७२ श्लो॰। एकस्यायनं गतिर्यत्र। ४एकमात्रगमनयोग्ये त्रि॰ "भ्रातरं भीमसेनन्तु विज्ञाय हनुमान् कपिः। दिव्यरूपं करोधाय मार्गं भीमस्य वारणात्। अनेन हि पथा मा वै गच्छेदिति विचार्य्य सः। आस्त एकायने मार्गे कदलीषण्डमण्डिते। भ्रातुर्भीमस्य रक्षार्थम्" भा॰व॰ १४६अ॰। कर्म्म॰। ५एकस्थाने न॰। "यः स्यादेकायने लीनस्तूष्णीं किञ्चिदचिन्तयन्" भा॰ अनु॰ ५२२श्लो॰।

एकार्थ पु॰ एकः अर्थः प्रयोजनमभिधेयम् पदार्थो वा। एकस्मिन् १प्रयोजने २अभिधेये ३पदार्थे च। "वर्णाः पद प्रयोगार्हानन्वितैकार्थबोधकाः" सा॰द॰। बहु॰। ४एकाभिधेये शब्दभेदे एकार्थक एकशब्दोपस्थापितार्थकः। ५एकप्रयोजनयुक्ते त्रि॰। अभूततद्भावे च्वि+भू–घञ्। एकार्थीभाव अनेकार्थानामेकार्थताप्राप्तौ पु॰ "समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्। बहूनां वृत्तिधर्माणां वचनैरेव साधने। स्यान्महत् गौरवं तस्मादेकार्थीभाव आश्रितः" इति भर्त्तृहरिः। कर्त्तरि क्त। एकार्थीभूत परस्परमन्विते एकस्मिन् विशिष्टार्थे च "एकार्थमनेकशब्दं वाक्यम्" निरु॰। वै॰मते वाक्येऽपि शक्तिः अखण्डवाक्यस्फोटस्यैव वाचकत्वात् "पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च। वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन।

ब्राह्मणपर्यायता नास्ति क्वचित् ब्राह्मणकम्बले। देवदत्तादयो वाक्ये तथैव स्युर्निरर्थकाः" इति "वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिरिति च" हरिः।

**एकावली** स्त्री एका अद्वितीया आवली माला मणिश्रेणी। (एकनर) हारभेदे, सा०द० उक्तेऽर्थालङ्कारभेदे अलङ्कारशब्दे ३८८ पृ० विवृतिः।

**एकाब्दा** स्त्री एकः अब्दो वयोमानं यस्याः। १एकहायन्यां स्त्रीगव्याम्। "एकाब्दा त्वेकहायनी" अमरः। २एकवर्षयुक्ते त्रि०। एकवर्षादयोऽप्यत्र। "एकवर्षे गवि हते कृच्छ्रपादो विधीयते" स्मृतिः। एकहायनोऽप्यत्र हायनस्य वयोवाचित्वे तु सङ्ख्यापूर्वकत्वात् स्त्रियां ङीप् इति भेदः। "अरुणया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणाति" श्रुतिः।

**एकाशीतिपद** न० एकाशीतिः पदान्यत्र। गृहारम्भप्रवेशादौ वास्तुपूजार्थं कर्त्तव्ये तादृक्कोष्ठके वास्तुमण्डलभेदे। तत्र मण्डले तिर्य्यगूर्द्ध्वाभिर्दशभीरेखाभिः एकाशीतिकोष्ठात्मकं गृहारम्भाद्यर्थे वास्तुयागे लेख्यम् यथाह देवीपु०। "प्रासादे च चतुःषष्टिरेकाशीतिपदं गृहे" तल्लेखनप्रकारादि वास्तुमण्डलशब्दे वक्ष्यते।

**एकाश्रय** त्रि० एक आश्रय आधारोऽवलम्बनं वा यस्य। १अनन्यगतिके। २एकाधारवृत्तौ ३वैशेषिकोक्तगुणभेदे च ते च गुणाः अनेकाश्रितगुणभिन्नाः। "संयोगश्च विभागश्च संख्याद्वित्वादिकास्तथा। द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः। अतः शेषगुणाः सर्वे मता एकैकवृत्तयः" भाषा० दर्शिता। एवं च रूपरसगन्धस्पर्शशब्दाः एकत्वमेकपृथक्त्वं परिमाणपरत्वापरत्वानि बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वस्नेहसंस्कारादृष्टानि च तादृशाः, तेषां प्रत्येकस्य एकैकवृत्तित्वात् संयोगादीनान्तु एकैकस्यैव द्विवृत्तित्वमिति न तथात्वम्। एकाधिकरणादयोऽप्यत्र। कर्म०। ४एकस्मिन् आधारे पु० "हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता" भाषा०।

**एकाष्टका** स्त्री एका अष्टका। १माघकृष्णाष्टम्याम् २तत्कर्त्तव्ये श्राद्धे च। अष्टकानां तासु कर्त्तव्यश्राद्धानां च त्रित्वेऽपि आ०श्रौ०सू० "हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका एकस्यां वेति" एकस्या अपि कर्त्तव्यतया विधानात्तथा। सा च मध्यत्वेन माघकृष्णाष्टमी ग्राह्या। अत एव "गवामयनायैकाष्टकायां दीक्षा" कात्या०१२,1,2, सू० व्या० "एकाष्टका नाम माघस्य कृष्णाष्टमी प्रसिद्धा" कर्कोक्तम्। ३तदभिमानिदेव्यां शच्याम् "एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम्। तेन देवा असहन्त शत्रून् हन्तासुराणामभवच्छचीभिः" सा०ब्रा०२प्र०५ख०। शचीभिरित्यत्र शचीपतिरिति" अथ०३,१०,१२,पाठः। "एकाष्टके! सुप्रजसः सुवीरा वयं स्याम पतयो रयीणाम्" अथ०३,१०,५

**एकाष्ठील** पु० एकमस्थीव काण्डं तद्वत्कठिनत्वात् लाति ला क पृषो० अस्य ष्ठो दीर्घश्च। वकवृक्षे अमरः पाठायां स्त्री। (आकनादी) राजनि०।

**एकाह** पु० एकमहः टच्समा० एकपदोत्तरत्वात् नाह्नादेशः। "अह्राह्ना पुंसि" पा० पुंस्त्वम्। १एकस्मिन् दिवसे "एकाहेनैव निर्वपेत्" अष्ट०स्मृतिः "सन्ध्यचारिण्येकाह" मनुः। "अश्वस्यैकाहगमः" पा०। उपचारात्। २एकाहसाध्ये अग्निष्टोमादौ यागभेदे च। "उक्तप्रकृतयोऽहीनैकाहाः" आश्व० ९,१,१। "उक्तो ज्योतिष्टोम एकाहाहीनसत्राणां प्रकृतिभूतः उक्तानि पञ्चविंशतिरहानि सात्विकानि एतेभ्य एव सात्विकेभ्योऽहोभ्योऽहीनैकाहा व्याख्यायन्त इत्युक्तम् इदानीं तानेकाहाहीनान् वक्तुकामेनाचार्य्येण 'उक्तप्रकृतयोऽहीनैकाहा' इत्युक्तम्। तस्यायमर्थः उक्ता प्रकृतिर्येषां ते इमे उक्तप्रकृतयोऽहीनैकाहाः। प्रकृतिः प्रकारो न रूपान्तरमित्यनर्थान्तरं ज्योतिष्टोमोहि सर्वेषामेकाहाहीनसत्राणां प्रकृतिरिति सिद्धम्" नारा०। "अनतिदेशे त्वेकाहो ज्योतिष्टोमो द्वादशशतदक्षिणत्वेन सर्वेषामेकाहानाम्" ९,1,२।

**एकाहगम** पु० एकाहेन गम्यते गम–कर्म्मणि घञ्। एकाहगम्ये देशे "अश्वस्यैकाहगमः" पा०।

**एकाहार** पु० एकस्मिन् दिने एक आहारः। एकस्मिन् दिने सकृद्भोजने "एकाहारस्तथा (विधवया) कार्यो न द्वितीयः कथञ्चन" शु०त०पुरा०। "मुनिभिर्द्विरशनं प्रोक्तम्" इत्यादिना द्विर्भोजनस्य विधानेऽपि एककालमात्रभोजनं तया विहितम्। एकाहारे च परिदृष्टस्यैव आहारस्य रागप्राप्ते न द्वितीय इत्यनेन तथैव प्रतिपादनात्। एक आहारो यस्य। एकस्मिन्नह्नि सकृद्भोजिनि त्रि० "प्रोष्ठपदं तु यो मासमेकाहारो भवेन्नरः" भा० अनु०१०६अ०।

**एकीकरण** न० एक+अभूततद्भावे च्वि कृ–भावे ल्युट्। अनेकधान्यादेः राशीकरणेन एकतापादने। कर्म्मणि क्त।

विष्णुनापि तथा व्याख्याने सम्बुद्ध्यन्ततामतीते । एवं "विष्णोर्मनसा पूते स्थ "इत्यत्रापि पूतमसीति।"अत्र पितरो मादयध्वं यथाभागमाऽऽवृषायध्वम"इति मन्त्रे अत्र प्रेत ! मादयस्व यथाभागमाऽऽवृषायस्वेत्यूह्यम् । प्रार्थनार्थक-तृतीयलकारीयमध्यमपुरुषबहुवचनस्थाने तदेकवचनस्यैव उह्यत्वात् न तु भूतार्थकचतुर्थलकारीयमाऽऽवृषायथा इत्य-निरुद्धभट्टोक्तो युक्त अतएव श्रीदत्तादिभिरपि "मादय-स्वेत्युक्तम् "अमीमदन्त पितर " इत्यत्र अमीमदत्प्रेतेति इषायिषतेत्यत्र इषायिष्टेति । एत पितर इत्यादिपि-ण्डाह्वानाऽऽवाहनमन्त्रे एहि प्रेतेति, सौम्यास इत्यत्र सौम्येति दत्ताभ्यमित्यत्र देह्यभ्यमिति, नियच्छतेत्यत्र निय च्छेति, नमोवइत्यादिमन्त्रेषु पितर इति स्थानचतुष्टये प्रेतेत्यूह्यम् । एव वइत्यत्र ते इति । आयो प्रार्थने च येभ्य इत्यत्र यस्मै इति तेषामित्यत्र तस्येत्यूह्यम् । एतद्व पितरइत्यत्र तु प्रेता इति विकृतावूहो न तु ब हुवचनस्य "एतद्व पितरो वास इति जल्पन् पृथक् पृ-थक्" इति ब्रह्मपुराणेन प्रकृतावेव पार्व्वणे पित्रादिषु प्रत्येकमेतद्वः पितर इति बहुवचनान्तमन्त्रप्रयोगात् अ-त्रानर्थक्येन तद्विकृतावेकोद्दिष्टेऽप्यसमवेतार्थ बहुवचनस्यैव युक्तत्वात् । ततश्च प्रकृतौ समवेतार्थस्यैव विकृतावूह । सावत्सरिके त्रिकवचनान्ततयैवोहो न तु पितृपदस्य तत्र प्राप्तपितृलोकत्वेन तथैव युक्तत्वात्" श्रा०त०रघुनन्दन ।

एकोद्दिष्टञ्च "द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा"इत्युक्त पञ्चदशश्राद्धात्मकम् । अत्र द्वादशपद त्रयोदशा-नामप्युपलक्षणम् "सवत्सरे विरुद्धेऽपि प्रतिमासञ्च मासिक मिति' का०मा० कौथुमिना वत्सरघटकप्रतिमासे तस्य विधानात् अत एव "द्वादश मासा सवत्सर क्वचित् त्रयोदश मासा संवत्सर " इति श्रुतौ वत्सरस्य त्रयोदश-मासात्मकत्वमुक्तम् ।

अथैकोद्दिष्टनिमित्तकालोनिरूप्यते स च श्रा० त० रघुनन्दनेन दर्शितो यथा

याज्ञवल्क्य । "मृताहनि तु कर्त्तव्य प्रतिमासन्तु वत्सरम् । प्रतिसवत्सरञ्चैवमाद्यमेकादशेऽहनि" । एका-दशेऽहनीति स्वस्वाशौचान्तद्वितीयदिनोपलक्षणम् । "श्राद्धादि सूतकान्ते तु भोजयेदयुजो द्विजान्" इति मत्स्यपुराणैकवाक्यत्वात् । आद्य षोडशश्राद्धानामादि-भूतम् । तथा च छन्दोगपरिशिष्टम् । "श्राद्धमग्निमत कुर्य्यात् दाहादेकादशेऽहनि । ध्रुवाणि तु प्रकुर्वीत प्रमिताहनि सर्वदा । द्वादश प्रतिमास्यानि आद्य षा-ण्मासिके तथा । सपिण्डीकरणञ्चैव इत्येव श्राद्धषोड-शम् । एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभि । न्यूना संवत्सरश्चैव स्याता षाण्मासिके तदा" । अग्नि-मत श्रौताग्निमतो दाहादेकादशेऽहनि श्राद्ध कर्त्तव्य तस्य दाहावधिदशाहाशौचित्वात् । अन्येषान्तु मर-णावधि तथा च शङ्ख "मरणादेव कर्त्तव्यम् सं-योगो यस्य नाग्निना । दाहादूर्द्ध्वमशौच स्याद्यस्य वैतानिको विधि " । वैतानिक श्रौतो होम तस्मादग्नि-मद श्रौताग्निपरम् । ततश्च केवलस्मार्त्ताग्निमतो निर-ग्नेश्च मरणादेवाशौचम् । ध्रुवाणि एतानि षोडश श्रा-द्धानि नित्यानि सर्वदा मृतधनालाभेऽपि । प्रमिताहनि मृततिथौ आद्यश्राद्धषाण्मासिकश्राद्धद्वयेतरश्राद्धानि कार्य्याणि आद्यश्राद्धस्यैकादशाहे विधानात् षाण्मा-सिकयोस्तु कालान्तरविधानात् । अत्राशौचान्तद्वितीयदिव-सीयाद्यश्राद्धस्यादिभवत्वसमाख्यानुरोधेन तदुत्तरकर्त्तव्यमा सिकतिथेर्मृततिथित्वानुपपत्त्या तत्सजातीयत्वमेव प्रती-यते । तेन प्रथममृततिथि विहायान्यमृततिथिमादाय मासिकादिसिद्धिरिति । एवञ्च एकाहेन तु षण्मासा-न्यूना इत्यनेन मृततिथिपूर्व्वतिथि प्रतीयते । एवं त्रिभिरित्यत्रापि तथा संवत्सरस्यापि द्वाहादिन्यूने । अत्र संवत्सरकर्त्तव्यस्यापि षाण्मासिकत्वं द्वितीयषण्मासभव-त्वाचानुपपन्नम् । संवत्सराभिधानन्त्वादिमध्याधिमासयुक्त-प्रथमाब्दस्य "द्वादश मासा संवत्सर क्वचित्त्रयोदश मा-सा संवत्सर "इति श्रुत्यनुसारेण त्रयोदशमासघटितत्वात् त्रयोदशमासएव द्वितीयषाण्मासिककरणाय कार्य सप्तम-मासकर्त्तव्यस्य षाण्मासिकत्व 'षष्ठ्या तु दिवसैर्मास क-थितो बादरायणै' इत्यनेनाविरुद्धम् । ननु षोडशश्राद्ध-गणने द्वादशमासिकत्वस्य कथमलमासयुतावदे त्रयोदश-मासिकत्वमिति चेत् "संवत्सरस्य मध्ये तु यदि स्यादधि मासक । तदा त्रयोदशश्राद्ध कार्य्य तदधिक भवेत्" इतिसत्यव्रतवचनेन द्वादशमासिकादधिक त्रयोदशमासिक श्राद्धमित्युक्तं । एतद्वचन न्यायमूलकम् । "एव मृताहनि प्रतिमास श्राद्ध कुर्य्यादग्निमत ""मृताहनि तु कर्त्तव्य प्रति-मासन्तु वत्सरम्" इति वचनद्वयेन पूर्व्वोक्तश्रुतिप्राप्तत्रयोदश-मासात्मक सवत्सर व्याप्य मृततिथेर्मृततिथि य.श्व(?) इत्युक्ततापतिमासकर्त्तव्यमासिकानुरोधेन तत्पश्चीयत त्ततिथिषु श्राद्धमिति बोधयता न्यर्थापत्त्या वैशाखादि

भूतस्यान्यमासिकं तन्मासीयतत्पक्षीयतत्तत्तिथिषु कर्त्तव्यमिति बोधनात् मध्येऽधिमासपाते द्वादशे मासि मृतमासीयतिथ्यप्राप्त्या वर्षान्तविहितस्य मासिकस्य सपिण्डनस्य चाप्राप्ते । एतस्मादेवाधिमासेऽपि अत एवाब्दादेऽधिमासपातेऽपि लघुहारीतेन द्वादशमासे यद्द्वादशमासिकाभिधानमुक्तं तदन्याधिमासविषयम् तत्र द्वादशमासे मृतमासीयतत्तत्तिथिप्राप्ते । यथा लघुहारीतः 'प्रत्यब्दं द्वादशे मासि कार्य्या पिण्डक्रिया द्विजैः । क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम् । यावत् न विवर्त्तेत सूर्य्यं कालं वयादृयत । अत सांवत्सरं श्राद्धं कर्त्तव्यं मासचिह्नितम् । मासचिह्नन्तु कर्त्तव्यं पौषमासाद्यमेव हि । यतस्तत्र विधानेन मासः स परिकीर्त्तितः । असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः । तथैव मासिकं पूर्व्वं सपिण्डीकरणन्तथा । गर्भे वार्द्धुषिकत्वे च मृतानां पिण्डकर्मसु । सपिण्डीकरणे चैव नाधिमासं विदुर्बुधाः" । सपिण्डीकरणादूर्द्ध्वं यत् किञ्चित् श्राद्धिकं भवेत् । हट वाथवा पूर्व्वं तत्र कुर्य्यान्मलिम्लुचे" श्रा० त० रघुनन्दनः ।

एकोद्दिष्टन्तु मध्याह्नकालव्यापितिथौ कर्त्तव्यं यथाह "आमश्राद्धन्तु पूर्व्वाह्णे एकोद्दिष्टन्तु मध्यतः । पार्व्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम्" हारी० । "पूर्व्वाह्णे दैविकं श्राद्धमपराह्णे तु पार्व्वणम् । एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्" मनुः । "यो यस्य विहितः कालस्तत्कालव्यापिनी तिथिः । तया कर्म्माणि कुर्व्वीत ह्रासवृद्धी न कारणम्" व्यास० । मध्याह्नकालश्च त्रिधा विभक्तदिनतृतीयभागरूप एव । तत्रापि कुतपप्रथमभागस्यैव तदारम्भकालः "कुतपे प्रथमे भागे एकोद्दिष्टमुपक्रमेत् । आवर्त्तनसमीपे वा तत्रैव नियतात्मवान्" काल० व्यासोक्तेः — आवर्त्तनेन पश्चिमदिगवस्थितच्छायाया पूर्व्वदिग्गमनारम्भकाल तत्समीपे कुतपेऽष्टमखण्डे । गौतमोऽपि "आरभ्य कुतपे श्राद्धं कुर्य्याद्रौहिणं बुधः । विधिज्ञो विधिमास्थाय रौहिणन्तु न लङ्घयेत्" अत्र कुतपस्यारम्भकालतयोक्तेः पूर्व्वेद्युः रौहिणमात्रलाभे परदिने कुतपमात्रलाभेऽपि परेद्युरेव श्राद्धं "योयस्य विहितः कालः कर्म्मणस्तदुपक्रमे । तिथिर्याभिमता सा तु याह्या नोपक्रमोज्झिता" बौधायनेनोपक्रमयोग्यतिथेरेव ग्राह्यतोक्तेः । उभयदिने कुतपालाभे रौहिणमात्रलाभे तु तत्रैव श्राद्धम् 'रौहिणन्तु न लङ्घयेदित्युक्तेः' । उभयदिने तयोरलाभे सप्तममुहूर्त्ते कार्य्यं तत्रालाभे तयोर्लाभे वा पक्षभेदेन व्यवस्था "शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः । तया कर्म्माणि कुर्व्वीत ह्रासवृद्धी न कारणम् । कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः । तया कर्म्माणीत्यादि स्कन्दपु० उक्तेः । "द्वितीयादिकयुग्मानां पूज्यता नियमादिषु । एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिदेशना" व्यासोक्तेश्च । तत्र स्कान्दवाक्ये ह्रासवृद्धिपदं तिथिविषयं व्यासवाक्ये चन्द्रह्रासवृद्धिपरत्वेन कृष्णशुक्लपक्षभेदेन व्यवस्थेति स्थितम् । तदेतत् कालमा० निरस्तम् यथा । "अत्र क्षयवृद्ध्युपजीवनेन निर्णयः क्रियते । सचानुपपन्नः । व्यासवाक्ये ह्रासवृद्धिनोदनाया पितृविषयत्वाभिधानात् । "एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिनोदनेति" हि पूर्व्वमुदाहृतम् । "दानव्रते चैतदेवेति" च अतः कथमनयोर्द्विवाक्या निर्णयः । किञ्चोदाहृतयाप्यस्य स्कन्दपुराणगाथ्यैव वचनेषु "ह्रासवृद्धी न कारणमित्युक्त तत्कथमत्र ह्रासवृद्ध्योर्निर्णयकारणत्वम् । अत्रोच्यते । सन्ति ह्यन्यानि ह्रासवृद्धिवाक्यानि । तत्रोशना, "खर्व्वो दर्पस्तथा हिंस्रस्त्रिविधं तिथिलक्षणम् । खर्व्वदर्पौ परौ कार्य्यौ हिंसा स्यात् पूर्व्वकालिकी" । पितामहोऽपि "खर्व्वो दर्पस्तथा हिंस्रस्त्रिविधं तिथिलक्षणम् । खर्व्वदर्पौ परौ पूज्यौ हिंसं पूर्व्वत्र पूजयेदिति" भविष्योत्तरे "खर्व्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् । खर्व्वदर्पौ परौ कार्य्यौ हिंसा स्यात् पूर्व्वकालिकीति" । खर्व्वः साम्यमल्पक्षयो वा । दर्पो वृद्धिः । हिंसाधिकक्षयः । एतैः खर्व्वादिवाक्यैः सह यस्मिन्विषये युग्मादिवाक्यस्य विरोधः प्राप्नोति तत्र दैवपित्र्यभेदेन व्यवस्थापकं व्यासवाक्यम् न तु प्रकृतयोः क्षयवृद्ध्योः पितृविषयत्वप्रतिपादकतया । स्कन्दवाक्यादिवचनेष्वपि कर्म्मकालव्याप्तिशास्त्रस्य खर्व्वदर्पादिशास्त्रस्य च विरोधे प्राप्ते सति कर्म्मकालव्याप्तिशास्त्रस्य प्राबल्यमुच्यते न तु प्रकृतयोः क्षयवृद्ध्योः निर्णयहेतुत्वं प्रतिषिध्यते । न तु व्यासः खर्व्वादिवाक्यानि पितृविषयत्वेन संकोचयामास, आपस्तम्बादयस्तु पित्र्येऽपि कर्म्मकालव्याप्त्या खर्व्वादिवाक्यान्यबाधन्त, इत्यत्रैव निर्विषयत्वमेषां प्रसज्येतेति चेत् नैव यदा पूर्व्वोत्तरदिनयोः पितृविषयकर्म्मकालव्याप्तिः समाना यदा वा दिनद्वयेऽपि कर्म्मकालव्याप्त्यभावः तत्रोभयत्र खर्व्वादिवाक्यैर्निर्णेतुमशक्यत्वात्" । तत्रैवास्य विषयलाभ इति भावः ।

"एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नः प्रजायते । मासेऽन्यस्मिन् तिथौ तस्मिन् तदा दद्यात् विचक्षणः"

देवश्च"। एकोद्दिष्टविधिविकृतत्वात् सांवत्सरिकश्राद्धमपि एकोद्दिष्टशब्देन शास्त्रे व्यवह्रियते। "एकोद्दिष्टं सुता दश" "एकोद्दिष्टं न पार्वणम्" इति च स्मृत्योः सांवत्सरिकेऽपि तथा प्रयोगात्।

एकोद्दिष्टाधिकारिणस्तु निर्ण०सि०दर्शिता यथा "चन्द्रिकायां सुमन्तुः "मातुः पितुः प्रकुर्वीत संस्थितस्यौरसः सुतः। पैतृमेधिकसंस्कारं मन्त्रपूर्वकमादृतः"। तत्रैव हेमाद्रौ शङ्खः "पितुः पुत्रेण कर्त्तव्या पिण्डदानोदकक्रिया। पुत्राभावे तु पत्नी स्यात्तदभावे तु सोदरः। अत्र पुत्रपदं यद्यपि क्षेत्रजादिद्वादशविधपुत्रपरम्। ते च द्वादशपुत्रा याज्ञवल्क्येनोक्ता "औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः। क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा। गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः। कानीनः कन्यकाजातो मातामहसुतः स्मृतः। अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः। दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्। क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयंकृतः। दत्तात्मा तु स्वयंदत्तो गर्भे विन्नः सहोढजः। उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत् सुतः। पिण्डदोऽंशहरश्चैषां पूर्वाभावे परः परः"। इति तथापि "दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः" इति हेमाद्रावादित्यपुराणे कलावितरेषां पुत्रत्वनिषेधादौरसदत्तपरमेव। यद्यपि "पिण्डदोऽंशहरश्चैषां पूर्वाभावे परः परः" इति याज्ञवल्क्योक्तेरौरसाभावे दत्तकप्राप्तिस्तथाप्यौरसाभावे पौत्रः प्रपौत्रस्तदभावे दत्तकादय इति ज्ञेयम्। "पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते" इति "अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपमिति" जीमूतवाहनधृतहारीतवसिष्ठवचनाभ्यामुक्तेः "लोकानन्त्यं दिवःप्राप्तिः पुत्रपौत्रप्रपौत्रकैरिति" याज्ञवल्क्योक्तेश्च। "पुत्रः पौत्रश्च तत्पुत्रः पुत्रिकापुत्र एव च। पत्नी भ्राता च तज्जश्च पिता माता स्नुषा तथा। भगिनी भागिनेयश्च सपिण्डः सोदकस्तथा। असन्निधाने पूर्वेषामुत्तरे पिण्डदाः स्मृताः" इति स्मृतिसंग्रहे प्रपौत्रानन्तरं पुत्रिकापुत्रोक्तेस्तत्समत्वाच्च दत्तकस्य। यद्यपि बृहस्पतिना "पौत्रश्च पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ। रिक्थे च पिण्डदाने च समौ तौ परिकीर्त्तिताविति" पौत्रसाम्यमुक्तम्। याज्ञवल्क्येन च "औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः" इत्यौरससाम्यमुक्तम् तथापि लोके राजसमो मन्त्रीत्यादौ किञ्चिन्न्यूने समशब्दप्रयोगाद्गौणसख्ययोः साम्यायोगाच्च स्तुत्यर्थमेतत् न तु समविकल्प इति भ्रमितव्यम्। "पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः। सपिण्डसन्ततिर्वापि क्रियार्हा नृप! जायते। एषामभावे सर्वेषां समानोदकसन्ततिः। मातृपक्षसपिण्डेन सम्बद्धो यो जलेन वा। कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्य्या क्रिया नृप!। तत्सङ्घातान्तर्गतैर्वापि तद्रिक्थात्कारयेन्नृप" इति विष्णुपुराणाच्च प्रपौत्रानन्तरं दत्तकादय इति पृथ्वीचन्द्रमदनरत्नकालादर्शादयः। मदनपारिजातेऽप्येवम्। वोपदेवरुद्रधरादयस्तु "पुत्रेषु विद्यमानेषु नान्यो वै कारयेत्स्वधाम्" इति सुमन्तूक्तेः "पितामहः पितुः पश्चात्पञ्चत्वं यदि गच्छति। पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोडशम्। नैतत्पौत्रेण कर्त्तव्यं पुत्रवांश्चेत्पितामहः" इति छन्दोगपरिशिष्टे च पुत्रशब्दस्य द्वादशविधसुतपरत्वात् पूर्वाभावे परः पर इत्यस्य सामान्यपरत्वाच्च दत्तकाद्यभावे पौत्रादीनामधिकार इत्याहुः। अतएव निषेधादुपनीतपौत्रसत्त्वेऽप्यनुपनीतपुत्रस्यैवाधिकारः। औरसस्याप्यनुपनीतोऽपि कुर्य्यादित्याह पृथ्वीच० सुमन्तुः। "श्राद्धं कुर्य्यादवश्यं तु प्रमीतपितृकोद्विजः। व्रतस्थो वाऽव्रतस्थो वा एक एव भवेद्यदि" शङ्खमतं। "कुर्य्यादनुपनीतोऽपि श्राद्धमेको हि यः सुतः। पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य सः" मनुः "नह्यस्मिन् युज्यते कर्म किञ्चिदामौञ्जिबन्धनात्"। सुमन्तुरपि "नाभिव्याहारयेद्ब्रह्म यावन्मौञ्जी निबध्यते। मन्त्राननुपनीतोऽपि पठेदेवैक औरसः"। ब्रह्म वेदम्। मन्त्रपाठस्त्रिवर्षकृतचूडस्यैव। "अनुपेतोऽपि कुर्वीत मन्त्रवत्पैतृमेधिकम्। यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिवत्सरः" इति सुमन्तूक्तेः। यत्तु व्याघ्रः "कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च। स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेदिति" यच्च स्मृतिसंग्रहे "कृतचूडोऽनुपेतश्च पित्रोः श्राद्धं समाचरेत्। उदाहरेत्स्वधाकारं न तु वेदाक्षराण्यसाविति"। तत्प्रथमवर्षचूडाविषयमिति माधवमदनरत्नपृथ्वीचन्द्राः। त्रिवर्षोर्द्ध्वं मन्त्रवत्त्वस्य विकल्प इति चन्द्रिका वोपदेवश्च। मदनरत्ने स्कान्दे। "यज्ञेषु मन्त्रवत्कर्म पत्नी कुर्य्याद्यथा नृप। तथौर्द्ध्वदैहिकं कर्म कुर्य्यात् सा धर्मसङ्गिना"। अयन्तो तु कात्यायनः। "असंस्कृतेन पत्न्या च ह्यग्निदानं समन्त्रकम्। कर्त्तव्यमितरत्सर्वं कारयेदन्यमेव हि"। पुत्रश्च न जन्मतोऽधिकारी किन्तु वर्षोत्तरमिति कालादर्शे "चौलादाद्याब्द-

कारश्चैकं न कुर्य्यात् पैतृमेधिकम्" इत्युक्तेः। मदनरत्ने सुमन्तुरपि "पुत्रश्चोत्पत्तिमात्रेण सन्तुर्य्याद्दणमोचनात्। पितरं नाविद्कांश्चौलात्पितृमेधेन कर्म्मणा"। एतच्चौरसस्यैव दत्तकादीनान्तूपनीतानामेवाधिकार इति कालादर्शः। पृथ्वीच० स्कान्दे "पित्रोरनुपनीतोऽपि विदध्यादौरसः सुतः। चौर्द्ध्वदेहिकमन्ये तु संस्कृताः श्राद्धकारिणः" इति। अन्यत्रापि दर्शश्राद्धाद्यनुपनीतस्याधिकारोऽस्माभिः पूर्व्वमुक्तः। पुत्त्राभावे दत्तकादयो द्वादश पुत्राः। तदभावे भर्त्तुः पत्नी तस्याश्च "अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता। पत्न्येव दद्यात् तत्पिण्डं कृत्स्नमंशं लभेत चेति" वृद्धमनूक्तेः। "भार्य्या पिण्डं पतिर्दद्याद्भर्त्तुर्भार्य्या तथैव च। श्वश्र्वादेश्च स्नुषा चैव तदभावे सपिण्डकाः" इति। पुत्राभावे तु पत्नी स्यात्तत्पत्न्यभावे सहोदरः" इति च हेमाद्रौ यमोक्तेः। देवयाज्ञिकस्तु "कानीनगूढसहजपुनर्भूतनयाश्च ये। पत्न्यभावेऽपि कुर्य्युस्ते अनपत्या मृता हि ते" इति स्मृतिसंग्रहात् पत्न्यभावे कानीनादय इत्याह। पत्युरपि सपत्नीपुत्रे सति नाधिकारः। "पितृपत्न्यः सर्व्वा मातरः" इति सुमन्तूक्तेः। "विदध्यादौरसः पुत्रो जनन्या औद्‌र्ध्वदेहिकम्। तदभावे सपत्नीजः क्षेत्रजाद्यास्तथा सुताः। तेषामभावे त्वपतिस्तदभावे सपिण्डकाः" इति मदनरत्ने कात्यायनोक्तेः। "बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः। एका चेत् पुत्त्रिणी तासां सर्व्वासां पिण्डदस्तु सः" इति बृहस्पतिवचनाच्च। अपरार्कोऽप्येवम्। तेन यच्छ्राद्धविवेके उक्तम् "सत्यपि सपत्नीपुत्रे पत्युरेवाधिकार इति तन्निरस्तम्। यच्च तत्रैव कात्यायनः "न भार्य्यायाः पतिर्दद्यादपुत्राया अपि क्वचित्"। यच्च विष्णुपु० "कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्य्या क्रिया नृपेति"। यच्च मार्क० पु० "सर्व्वाभावे स्त्रियः कुर्य्युः स्वभर्तॄणाममन्त्रकमिति"। तदासुरादिविवाहोढाविषयम् "धर्म्मविवाहैरूढा या सा पत्नी परिकीर्त्तिता। क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते। न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुरिति" माधवीये शातातपोक्तेः। यत्तु, स्मृतिरत्नाकरस्मृतवचनाच्च "अपुत्रस्य च या पुत्री सैव पिण्डप्रदा भवेत्। तस्य पिण्डान् दद्यादेकं वा एकाहेनैव निर्व्विपेत्," इति जाबालोक्ते "भर्त्तुर्धनहरा पत्नी तां विना दुहिता स्मृता। अङ्गादङ्गात् सम्भवति पुत्त्रवद्दुहिता नृणामिति" बृहस्पतिना दुहितुर्धनहारित्वोक्तेः पुत्राभावे कन्या तदभावे पत्नीत्याहुः। तन्न पूर्व्वविरोधात् "मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वय" इति दुहितुर्मातृधनहारित्वेन पुत्रस्य तत्राप्यनधिकारापत्तेश्चोपेक्ष्यम्। वचनं भ्रातृपुत्राद्यभावविषयम्। पत्न्यभावे अविभक्तस्य सोदरः पूर्व्वोक्तयमवचनात्। विभक्तस्य तु दुहिता धनहारित्वात् पूर्व्वोक्तजाबालवचनाच्च। तत्राप्यूढानूढासमवायेऽनूढैव "दुहिता पुत्रवत् कुर्य्यान्मातापित्रोस्तु संस्कृता। अशौचमुदकं पिण्डमेकोद्दिष्टं सदा तयोरिति" भरद्वाजोक्तेः। तदभावे दौहित्रः धनहारित्वात्। "मातापित्रोरुपाध्यायाचार्य्ययोरौर्द्ध्वदेहिकम्। कुर्व्वन्मातामहस्यापि व्रती न भ्रश्यते व्रतादिति" चन्द्रिकायां वृद्धमनूक्तेः "यथा व्रतस्थोऽपि सुत पितुः कुर्य्यात्क्रियां नृप॥ उदकाद्या महाबाहो। दौहित्रो दुहिताऽर्हतीति" अपरार्के भविष्योक्तेश्च। एतद्धनहारिण आवश्यकं नान्यस्येत्याह तत्रैव स्कान्दे "श्राद्धं मातामहानां तु अवश्यं धनहारिणा। दौहित्रेणार्थनिष्कृत्यै कर्त्तव्यं पूर्व्वसुसरमिति"। तेन दौहित्रोऽत्र पुत्रीकृत इति देवयाज्ञिकोक्तिः परास्ता। अत्र पत्नीदौहित्रसमवाये अंशहरत्वात्पत्न्येव कुर्य्यात्। दौहित्रभ्रातृपुत्रसत्त्वे विभक्तस्य दौहित्रः। अविभागे भ्रातृपुत्रः। भ्रातृतत्पुत्रसत्त्वे कनिष्ठोऽपि भ्रातैव। ज्येष्ठश्चेत्तत्पुत्रः कुर्य्यादिति दाक्षिणात्यमतम्। हारलतादौ तु "भ्रातुर्भ्राता स्वयं कुर्य्यात् तद्भार्य्या चेन्न विद्यते। तस्य भ्रातृसुतः कुर्य्याद्यस्य नास्ति सहोदरः" इति शाङ्खोक्तेः "पत्नी कुर्य्यात् सुताभावे पत्न्यभावे सहोदरः" इति कौर्म्माच्च। ज्येष्ठभ्रातैव कुर्य्याच्च तत्पुत्रः। यत्तु "मातुलस्य तथाग्रज" इति, तत्कनिष्ठभ्रातृसत्त्वविषयम्। यच्च मनुः "सर्व्वेषामेकजातानामेकश्चेत्पुत्रवान् भवेत्। सर्व्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत्" इति तत् सोदराभावविषयमित्युक्तम्। एतेन पुत्रत्वातिदेशोऽयम्, अतस्तस्मिन् सत्येतादयः सुताः प्रतिनिधयो न कार्य्याः। स एव पिण्डदोऽपहरश्च" इत्यपास्तमिति वाचस्पतिमतटीकाकारस्य रत्नाकरादयः परास्ताः। मदनरत्ने स्मृतिसंग्रहे "पुत्रः कुर्य्यात् पितुः श्राद्धं पत्नी च तदसन्निधौ। धनहार्य्यपि दौहित्रस्ततो भ्राता च तत्सुतः। भ्रातुः सहोदरो भ्राता कुर्य्याद्दाहादि तत्सुतः। ततस्तु सोदरभ्राता तद-

भावे च तत्सुतः” इति । भ्रातृपुत्राभावे क्रमेण पितृ-
मातृस्नुषास्वसृतत्पुत्रादयः धनहारित्वात् । “भगिनी-
तत्सुतयोर्विशेषमाह मदनरत्ने कात्यायनः “अनुजो
ह्यग्रजो वापि भ्रातुः कुर्वीत सत्क्रियाम् । ततस्तत्सोद-
रस्तद्वत्क्रमेण तर्पयेत्तयोः” अपरार्के कार्ष्णाजिनिः ।
“पुत्रः शिष्योऽपि वा पत्नी पिता भ्राता स्नुषा गुरुः ।
स्त्रीहारो धनहारी यः कुर्य्यात्पिण्डोदकक्रियाम्” । मार्क-
ण्डेयपुराणे “पुत्रो भ्राता च तत्पुत्रः पत्नी माता तथा
पिता । वित्ताभावे तु शिष्यश्च कुर्वीरन्नौर्द्ध्वदैहिकम्” ।
तेन स्त्रीहारो एतद्भिन्न इति कालादर्शः । अत्र पाठक्रमो
न विवक्षितः पूर्व्ववाक्येषु अथ तत्र मन्त्रादिभिः श्रौत
क्रमोक्तेः “अथ जिह्वाया अथ वक्षसः” इति वत् । पृ-
थ्वीचन्द्रोदये वृद्धमनुः । “स्नुषास्वस्रीयतत्पुत्रज्ञाति स-
म्बन्धिबान्धवाः । पुत्राभावे तु कुर्वीरन् सपिण्डान्तं यथा
विधि” । मार्कण्डेयपुराणे “पुत्राद्युच्छिन्नबन्धोश्च
सख्यापि श्वशुरस्य च । जामाता स्नेहवत् कुर्य्यादखिलं
पैतृमेधिकम्” । चन्द्रिकायां वृद्धशातातपः “मातुलो-
भागिनेयस्य स्वस्रीयो मातुलस्य च । श्वशुरस्य गुरोश्चैव
सख्युर्मातामहस्य च । एतेषाञ्चैव भार्य्याणां स्वसुर्मातुः
पितुस्तथा । श्राद्धमेषां तु कर्त्तव्यमिति वेदविदो-
विदुः” । शुद्धिविवेके ब्राह्मे “दत्तानां वाग्दत्तानां कन्यानां
कुरुते पिता । चतुर्थेऽहनि तास्तेषां कुर्वीरन् सुसमाहि-
ताः” । दत्ता वाग्दत्ता । “मातामहानां दौहित्राः कु-
र्व्वन्त्यहनि चापरे । तेऽपि तेषां प्रकुर्व्वन्ति द्वितीयेऽहनि
सर्व्वदा । जामातृश्वशुरावन्योन्यस्यापि च संयताः ।
मित्राणां तदपत्यानां श्रोत्रियाणां गुरोस्तथा । भागिनेय-
सुतानां च सर्व्वेषान्त्वपरेऽहनि । राज्ञोऽसति सपिण्डे तु
निरपत्ये पुरोहितः । मन्त्री वा तदशौचान्ते पुरा चौर्ला-
करोति सः” । अत्र द्वितीयाहादौ श्राद्धविधानमस्पृश-
स्नयनपरम् । कालादर्शे “दाहादि मन्त्रवत्पित्रोर्निदध्या-
दौरसः सुतः । तदभावे तु पौत्रश्च प्रपौत्रः पुत्रिका-
सुतः । दौहित्रो धनहारो च भ्राता तत्पुत्र एव च ।
पिता माता स्नुषा चैव स्वसा तत्पुत्र एव च । सपिण्ड-
श्चोदकोमातुः सपिण्डश्च सहोदकः । स्त्री च शिष्यस्त्वि-
गाचार्य्यौ जामाता च सखाऽपि च । उच्छिन्नबन्धोरि-
क्थेन कारयेदवनीपतिः” । गौतमः “पुत्राभावे सपि-
ण्डाः, शिष्याश्च दद्युस्तदभावे ऋत्विगाचार्य्यौ” । यत्तु चन्द्रि-
कायां वृद्धशातातपः “प्रीत्या श्राद्धं नकर्त्तव्यं सर्व्वेषां व-
र्णिलिङ्गिनामिति” तत्सवर्णविषयम् । “ब्राह्मणस्त्वन्यवर्णा-
नां न कुर्य्यात्कर्म्म किञ्चन । कामाल्लोभाद्भयान्मोहात्
कृत्वा तज्जातितां व्रजेत्” इति ब्राह्मोक्तेः । “न ब्राह्म-
णेन कर्त्तव्यं शूद्रस्याप्यौर्ध्वदैहिकम् । शूद्रेण वा
ब्राह्मणस्य विना पारशवात् क्वचित्” इति पारस्करो-
क्तेश्च । पारशवः ऊढशूद्रापुत्रः । अत्रेदन्तत्त्वं सर्व्व-
पुत्रादेः पूर्व्वस्याभावे पत्न्यादेरधिकार उक्तः । तत्रा-
भावोऽसन्निधिः नाशश्चोच्यते । अतएव पूर्व्वत्र “क्रम-
विधाने पूर्व्वेषाम्” इत्युक्तम् । तत्रासन्निधौ पत्न्यादेः स-
र्व्वत्राधिकारे प्राप्ते “सोमिताश्विने पुत्रः कालादति-
चिरादपि । एकादशाद्याः क्रमशोज्येष्ठस्य विधिवत्क्रिया”
“ज्येष्ठेनैव च यत्कृतम्” इत्याद्यैर्देशान्तरेऽपवादात्पुत्रनाश
एव पत्न्यादेः सपिण्डनाद्यधिकारः । असन्निधौ तु पूर्व्व-
मेव नौर्द्ध्वम् । अतोऽनधिकारिणा भ्रात्रादिना कृतमप्यकृत-
मेवेति पुनरावर्त्तनीयम् । मासिकापकर्षोऽप्यावर्त्तनीयः
एकादशाहमासिकानि नावर्त्त्यन्ते “तज्ज्यायसापि कर्त्त-
व्यं सपिण्डीकरणं पुनरिति” वदावृत्तिविधानाभावा-
दिति केचित् । तन्न अस्य निर्मूलत्वात् । अतस्तदपि
कनिष्ठकृतमावर्त्त्यते वह्निश्रौतपिण्डपितृयज्ञार्थं तु कृतं
नावर्त्त्यते । “मासपिण्डेऽग्निमान् पुत्रः पितृयज्ञं समा-
चरेत् । न पार्व्वणं नाभ्युदयिकं कुर्व्वन्न लभते फल-
मिति” इत्युत्तरनिषेधमात्रादिति “भ्राता वा भ्रातृपुत्रो वा”
इत्यादिहारीतादिवचोभ्यः कनिष्ठादेरप्यधिकारात् तथा
चात्र ज्येष्ठकर्त्तृकत्वबाधः । सपिण्डने तु बहु वक्तव्यं तन्नि-
र्णये वक्ष्यामः । अधिकारिविशेषेण क्रियाव्यवस्थोक्ता विष्णु-
पुराणे (पूर्व्वादिक्रियाः शुद्धितत्त्वे दर्शयिष्यमाणाः) ।
“प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु । क्रियन्ते याः
क्रियाः पुत्रैः प्रोच्यन्ते तान्धयोत्तराः । पितृमातृस-
पिण्डैश्च समानसलिलैस्तथा । तत्सङ्घान्तर्गतैश्चैव राज्ञा
वा धनहारिणा । पूर्व्वा मध्याश्च कर्त्तव्या पुत्रा-
द्यैरेवचोत्तरा । दौहित्रैर्वा नरश्रेष्ठ ! कार्य्यास्तत्त-
नयैस्तथा । मृताहनि तु कर्त्तव्याः स्त्रीणामप्युत्तरा
क्रिया” । दौहित्रतत्पुत्रयोर्धनहारिणोरिदम् । एव-
मन्यस्य धनहर्त्तुः । “योऽर्थहरः स पिण्डदायी स्यात्”
यमोक्तेः । “प्रेतस्य प्रेतकार्य्याणि अकृत्वा धनहारकः ।
वर्णानां यद्वधे प्रोक्तं तद्व्रतं प्रयतश्चरेदिति “पृथ्वीचन्द्रोदये-
व्याघ्रपादोक्तेः । मदनरत्ने स्कान्देऽपि “मलमेतन्म-
नुष्याणां द्रविणं यत्प्रकीर्त्तित”मित्युक्त्वा “अपिभित्तस्य

निर्दिष्टा निष्कृतिः पावनी परा । आदेहपतनात्तस्य कुर्य्यात्पिण्डोदकक्रियाम्” इत्युक्तम् । क्रियानिबन्धे कात्यायनः “न च माता न च पिता कुर्य्यात् पुत्रस्य पैतृकम् । नाग्रजश्च तथा भ्राता भ्रातृणां तु कनीयसाम्”। पृथ्वीचन्द्रोदये बौधायनः। “पिता श्राद्धं न कर्त्तव्यं पुत्राणां तु कथञ्चन । भ्राता चैव न कर्त्तव्यं भ्रातॄणाञ्च कनीयसाम् । यदि स्नेहेन कुर्वीत सपिण्डीकरणं विना । गयायां तु विशेषेण ज्यायानपि समाचरेत्”। अन्याभावे पित्रादिरपि कुर्य्यात् ।“उच्छिन्नबान्धवे प्रेते पिता भ्राताथ वाग्रजः । जननी वापि स कुर्य्यान्नष्टदेशोऽन्यथा भवेदिति” स्मृत्युक्ते । ब्रह्मचारिणां तु शुद्धिविवेके ब्राह्मे “असमाप्तव्रतस्यापि कर्त्तव्यं ब्रह्मचारिणः । श्राद्धं तु मातापितृभिर्न तु तेषां करोति सः”। श्राद्धं मासिकाब्दिकादि सर्वं कार्य्यमित्यर्थः । नत्विति निषेधोऽन्यपरः । यत्तु छन्दोगपरिशिष्टे “न त्यजेत् सूतके कर्म्म ब्रह्मचारी स्वयं क्वचित् । न दीक्षणात् परं यज्ञे न कृच्छ्रादितपश्चरन् । पितर्य्यपि मृते नैषां दोषो भवति कर्हिचित् । आशौचं कर्म्मणां न स्यात् नित्यं वा ब्रह्मचारिणाम्” । यच्च याज्ञवल्क्यः “न ब्रह्मचारिणः कुर्य्युरुदकं पतितास्तथेति”। तदप्यन्यपरं । अन्याभावे तु ब्रह्मचारिणापि कार्य्यम् पूर्व्वोक्तब्राह्मवचनात् । “आचार्य्यं पित्रुपाध्यायान् निर्हृत्यापि व्रती व्रती । स तदन्नञ्च नाश्नीयान्न च तैः सह संवसेदिति” तेनैवोक्ते । “ब्रह्मचारिणः शवकर्म्मणा व्रतान्निवृत्तिरन्यत्र मातापित्रोरिति” वशिष्ठोक्तेः । बालानां श्राद्धमेकाहमशौचम् । प्रागुपनयनात्तु पञ्चवर्षोत्तरं सपिण्डीकरणवर्ज्जं षोडशश्राद्धादि सर्व्वं कार्य्यमित्युक्तं देवजानीये “असंस्कृतानां भूमौ पिण्डं दद्यात् संस्कृतानां कुशेष्विति” प्रचेतोवचनात् । एतच्चाग्रे वक्ष्यामः । अविभक्तानां विशेषमाह पृथ्वीचन्द्रोदये मरीचिः । “बहवः स्युर्यदा पुत्राः पितुरेकत्रवासिनः । सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत् कृतम् । द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्” । ज्येष्ठस्य कर्त्तृत्वेऽपि सर्वे फलभागिन इत्यर्थः । तेन ये ब्रह्मचर्य्यपराधवर्ज्जनादयः कथिताः संस्कारास्ते सर्वेषां भवन्तीति सिद्धम् सत्प्रतिनामध्येयम् सम्यक्त्वात् । विभक्तानां विशेषमाहोशनाः । “नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश । एकेनैव तु कार्य्याणि संविभक्तधनेष्वपि” । लघुहारीतः “सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश । पृथङ्नैव सुताः कुर्य्युः पृथग्द्रव्या अपि क्वचित् । ऊर्द्ध्वं सपिण्डीकरणात् सर्वं कुर्य्युः पृथक् पृथक्” । मदनरत्ने “विभक्तास्तु पृथक् कुर्य्युः प्रतिसंवत्सरादिकम् । एकेनैवाविभक्तेषु कृते सर्वैस्तु तत्कृतम्” एतेनाब्दिकादिष्वविभक्तानामनियम इति मदनस्मृत्यपि परास्तं”। अयमधिकारिक्रमो दायिवाक्यप्रबलितः ।

गौड़देशवासिभिस्तु रघुनन्दनमतानुसारिणी व्यवस्था क्रियते सा च व्यवस्था शुद्धितत्त्वे तेन दर्शिता यथा व्यासः “कृतचूड़स्तु कुर्वीत उदकं पिण्डमेव च” । एतच्च पुत्रेतरपरम् “असंस्कृत सुत स्त्रीणां नापरोवेदपारगः” इति दायभागधृतात् । अन्यथा सुतत्वेन विशेषोपादानं व्यर्थं स्यात् । श्राद्धेऽनुपवीतस्य मन्त्रपाठाधिकारमाह मनुः । “नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते । शूद्रेण हि समस्तावद्यावद्वेदे न जायते”। अभिव्याहारयेत् वदेदिति यावत् स्वार्थे णिच् । तत्र प्रथमतो ज्येष्ठपुत्रः यथाह मरीचिः “मृते पितरि पुत्रेण क्रिया कार्य्या विधानतः । बहवः स्युर्यदा पुत्राः पितुरेकत्र वासिनः । सर्वेषान्तु मतं कृत्वा ज्येष्ठेनैव तु यत् कृतम् । द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्”। तदभावे यथाक्रमं कनिष्ठपुत्रपौत्रप्रपौत्राः । तथाच विष्णुपुराणम् ‘पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृसन्ततिः । सपिण्डसन्ततिर्वापि क्रियार्हो नृप ! जायते”। एतच्च षोडशश्राद्धपर्य्यन्तम् तथाच छन्दोगपरिशिष्टम् “पितामहः पितुः पश्चात् पञ्चत्वं यदि गच्छति । पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोडशम् । नैतत् पौत्रेण कर्त्तव्यं पुत्रवांश्चेत् पितामहः” । सपिण्डीकरणपर्य्यन्तमपृथक्कर्त्तव्यमाह लघुहारीतः ‘सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश । पृथङ्नैव सुताः कुर्य्युः पृथग्द्रव्या अपि क्वचित्” । एषामभावे पत्नी तथाच मनुः ‘पितुः पुत्रेण कर्त्तव्या पिण्डदानोदकक्रिया । तदभावे तु पत्नी स्यात्तदभावे सहोदरः । भार्य्यापिण्डं पतिर्दद्यात् भर्त्रे भार्य्या तथैव च’ । इति “अपुत्रधनं पत्न्यभिगामि तदभावे दुहितृगामीत्यादि”विष्ण्वादिवचनेन धनाधिकारस्मृतेः । तदभावे इति प्रपौत्रपर्य्यन्ताभावपरं पार्व्वणपिण्डदातृत्वेन धनाधिकारित्वेन च तेषां समत्वात् । “अपुत्रा स्त्री यथा पुत्रं पुत्रवत्यपि भर्त्तरि । पिण्डं दद्यात् जलञ्चैव अभावात्तु पुत्रिणी” इति निर्मूलं समूलत्वेऽपि नातिदेशान्तरपुत्रसद्भावविषयमिति श्राद्धविवेकप्रभृतयः । पत्न्यभावे कन्या । ‘अपुत्रस्य तु

या पुत्री सैव पिण्डप्रदा भवेत् । तस्य पिण्डान् दशैवैतानेकाहेनैव निर्वपेत्" इति ब्रह्मपुराणवचनात् "गोत्ररिक्थानुगः पिण्डः" इति मनुवचनेन दत्ताद्यपेक्षया तस्याबलवत्वात् । कन्याभावे यथाक्रमं वाग्दत्तादत्तादौहित्राः "दत्तानां चाप्यदत्तानां कन्यानां कुरुते पिता । चतुर्थेऽहनि तास्तेषां कुर्वीरन् सुसमाहिताः" इति ब्रह्मपुराणवचनात् । ननु "दुहिता पुत्रवत् कुर्य्यान्मातापित्रोश्च संस्कृता । अशौचमुदकं पिण्डमेकोद्दिष्टं सदा तयोः" इति मत्स्यवचनात् पुत्रानन्तरमेव दुहित्रधिकारस्तत इति चेन्न पत्न्याः प्रथमं धनाधिकारश्रुतेः यथा याज्ञवल्क्यः । "पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः । एषामभावे पूर्व्वस्य धनभागुत्तरोत्तरः" इति । तथा "मातामहानां दौहित्राः कुर्व्वन्त्यहनि चापरे" । इति ब्रह्मपुराणात् । "पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्म्मतः । तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः" । इति मनुवचनेन 'पौत्रदौहित्रसंयुक्ता ये तथा चिरजीविनः । प्रियङ्कराश्च बालानां ते नराः स्वर्गगामिनः" इति विष्णुधर्म्मोत्तरेण पौत्रतुल्यताभिधानाच्च । तेन यथा पुत्राभावे पौत्रस्तथा दुहित्रभावे दौहित्रः । न च दत्तकन्यादौहित्राभ्यां प्राक् सगोत्रत्वात् सोदराधिकार इति वाच्यम् गोत्रत्वापेक्षया पिण्डदानादेर्धनसाध्यत्वात् ऋक्थग्राहिणोर्दुहितृदौहित्रयोर्बलवत्त्वात् । अत एव दुहितृधनाधिकारे तद्धनेन मृतोपकारकरणं हेतुरित्याहापस्तम्बः । "अन्तेवास्यर्थोस्तदर्थेषु धर्म्मकृत्येषु प्रयोजयेत् दुहिता वेति" तदर्थेषु मासिकादिना तद्भोगार्थं धर्म्मकृत्येष्वदृष्टार्थमिति । "गोत्ररिक्थानुगः पिण्डः" इति मनूक्तेः । "अनंशौ क्लीवपतितौ जात्यन्धबधिरौ तथा । उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः" । इति मनूक्तानां "पितृद्विट्पतितः षण्डो यश्च स्यादौपपातिकः । औरसा अपि नैतेऽंशं लभेरन् क्षेत्रजाः कुतः" इति नारदोक्तानाञ्च भागानधिकारिणां पिण्डदानानधिकारः । जात्यन्धबधिरौ जन्मप्रभृत्यन्धबधिरौ निरिन्द्रियाः पङ्ग्वादयः श्रौतस्मार्त्तकर्म्मानधिकारिणोऽपि अदृष्टान्ते इति रत्नाकरः । तथाच वृद्धशातातपः । "चाण्डालपतितव्यङ्गानुन्मत्तव्यवहारकान् । सूतिकां सूयिकां नारीं रजसा च परिप्लुताम् । श्वकुक्कुटवराहांश्च ग्राम्यान् संस्पृश्य मानवः । सचेलं सशिरः स्नात्वा तदानीमेव शुध्यति" । व्यङ्गं पाण्यादिविकलम् । व्यङ्गोन्मत्तयोः सदाचारहीनत्वात् अस्पृश्यतेति प्रायश्चित्तविवेकः । श्रौतस्मार्त्तक्रियानधिकारित्वं सदाचारहीनत्वञ्च मूत्रपुरीषाद्यशौचापनयनासमर्थत्वेनेति बोध्यम् । सूयिकां प्रसवकारयित्रीम् । पितृद्विट् पोषणौर्द्ध्वदेहिकविद्विष्टः । औपपातिकः उपपातकैः संसृष्टः । उपपातकीति प्रकाशकारपाठेऽपि सएवार्थः । अपपात्रित इति पाठे तु राजवधादिदोषेण बान्धवैर्यस्य घटापवर्ज्जनं कृतमिति कल्पतरुः । अतः याज्ञवल्क्येनोक्तम् "न ब्रह्मचारिणः कुर्य्युरुदकं पतिता न च । पाषण्डमाश्रितास्तेना व्रात्या न विकर्म्मणः । गर्भभर्त्तृद्रुहश्चैव सुरापाश्चैव योषितः" । पाषण्डं त्रयीबाह्यधर्म्मम् । स्तेनाः सततं चौर्य्यरताः । व्रात्या षोडशवर्षपर्य्यन्तमप्राप्तोपनयनाः, विकर्म्मणः शास्त्रेणानुद्धावनतया स्वधर्म्माननुष्ठायिनः व्यङ्गत्वादिना स्वधर्म्मानुष्ठानासमर्थाश्च बोध्या इति "कश्चित् क्षिपति मत्पुत्रो दौहित्रो वा सहोदरः । स्नेहात्तस्यास्थीनि तद्भस्म नीत्वा तोये विनिक्षिपेत्" इत्यादिपुराणे क्रमदर्शनादत्रापि दौहित्राभावे सोदरं पूर्व्वोक्तमत्स्यवचनेऽप्येवं क्रमो बोध्यः । अत्र ज्येष्ठः कनिष्ठाविशेषात् । "नानुजस्य तथाग्रजः" इति छन्दोगपरिशिष्टं कनिष्ठभ्रातृसद्भावविषयं तयोरभावे तथाविधौ वैमात्रेयौ । "भ्रातुर्भ्राता स्वयं चक्रे तद्भार्य्यां चेन्न विद्यते । तस्य भ्रातृसुतश्चक्रे यस्य नास्ति सहोदरः" इति ब्रह्मपुराणाद्वैमात्रेयस्यापि एकजातत्वेन भ्रातृत्वात् । "देशान्तरस्थक्लीवैकवृषणानसहोदरान्" इत्यादिछन्दोगपरिशिष्टेन परिवेदने वैमात्रेयस्य भ्रातृत्वप्रसक्तावसहोदरानित्यनेन प्रतिषेधाच्च । पितृव्यपुत्रादौ भ्रातृपदप्रयोगो गौणः । गुणश्च योनिसम्बन्धापेक्षया समानसंख्यजनकजन्यत्वमिति । धनिपितुरादिपिण्डद्वयदातुः सोदरपुत्रात् धनिपित्रादिपिण्डत्रयदातृत्वाद्वैमात्रेयस्य धनाधिकारित्वेन बलवत्त्वाच्च । ततश्च सहोदरस्येति पूर्व्वार्द्धानुरोधात् वैमात्रेयपरमपि अन्यथा सहोदराभावे वैमात्रेयसत्त्वे वैमात्रेयपुत्राधिकारापत्तेः । तेन वैमात्रेयाभावे सोदरवैमात्रेयभ्रातृक्रमवत् सोदरपुत्रस्तदभावे वैमात्रेयपुत्रः । तन्मातृभोग्यपिण्डदातृतया प्रथमाधिकारित्वेन बलवत्त्वात् तथातिदिष्टपुत्रत्वाच्च । तदभावे पिता । "पुत्रो भ्राता पिता वापि मातुलो गुरुरेव च । एते पिण्डप्रदाः प्रोक्ताः सगोत्राश्चैव बान्धवाः" इति प्रचेतोवचनात् । "न पुत्रस्य पिता दद्यात्" इति छन्दोग-

पारिमिट' भ्रातृपुत्रपर्य्यन्तपक्षाविषयम् । तदभावे माता ।"पुत्रोभ्राता पिता वापि" इत्यत्रापिशब्देन मातु रुपस्थयात् । "पितरौ भ्रातरश्चेत्यादौ धनाधिकारे तथा दर्शनाञ्च । अतएव श्राद्धविवेके पितुरभावे तुल्यन्याय-तया मातापीत्युक्तमिति । तदभावे पुत्रवधू । तथाच शङ्ख "भार्य्यापिण्डं पतिर्दद्यात् भर्त्रे भार्य्या तथैव च । श्वश्र्वादेश्च स्नुषा चैव तदभावे द्विजोत्तम" । अत्रादिपदात् श्वशुरादेरपि परिग्रहः इतरत्र स्नुषात्वाभावात् । द्विजोत्तमइत्यत्र सपिण्डक इति मैथिलानां पाठः । अस्य पदोपात्तसपिण्डविशेषाभावे "अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्" इति धनाधिकारे तथादर्शनादत्रापि सन्निधितारतम्येन माता पुत्रवधू पौत्री पौत्रवधू प्रपौत्री प्रपौत्रवधू पितामह पितामही पितृव्यादय सपिण्डाश्चाधिकारिणः" "पुत्राभावे तु सपिण्डा" इति वक्ष्यमाणवचनात् । मङ्गवचनस्यमैथिलपाठाच्च ।तदभावे समानोदका ।"सपिण्डसन्ततिरिशेषि" इति वक्ष्यमाणात् । सपिण्डसन्तति समानोदकादत्यर्थं । तदभावे सगोत्रा "सगोत्रार्थ मेति" "गोत्रस्यकुर्यातु पिण्ड "इत्युक्तत्वात् "एषामभावे सर्व्वेषां समानोदकसन्ततिरिति" वक्ष्यमाणाच्च । तदभावे मातामह "दातामहानां दौहित्राः कुर्व्वन्त्यहनि चापरे । तेऽपि तेषां प्रकुर्व्वन्ति द्वितीयेऽहनि सर्व्वदा"इति ब्रह्मपुराणात् । तदभावे मातुल तदभावे भागिनेयः "मातुलोभागिनेयस्य स्वस्रीयोमातुलस्य च "इति शातातपीयपाठक्रमात् । तदभावे सन्निधिक्रमेण मातामहसपिण्डा ।तदभावे मातामहसमानोदका ।"सपिण्डसन्ततिर्व्वापि क्रियार्होन्वप । जायते ।एषामभावे सर्व्वेषां समानोदकसन्ततिः । मातृपक्षस्य पिण्डेन सम्बद्धा ये जलेन वा" विष्णुपुराणात् । तदभावे श्वशुर तदभावे जामाता "जामातृश्वशुरावुक्तौ तेऽपि च मयता" इति ब्रह्मपुराणपाठक्रमात् । तदभावे पितामहीभ्राता । "भागिनेयसुतानाञ्च सर्व्वेषान्त्वपरेऽहनि । आद्यं कार्य्यञ्च प्रथमे ज्ञात्वा कृत्वा जलक्रियाम" इति ब्रह्मपुराणात् । अपरेऽहनि इत्यत्राशौचान्तदिनस्येति शेष । तदभावे यथाक्रम शिष्यर्त्विगाचार्य्याः । गौतमेन "पुत्राभावे सपिण्डा मातृसपिण्डा वा शिष्या वा दद्यु तदभावे ऋत्विगाचार्य्यौ" इत्युक्तत्वात् । तदभावे सुहृत्पितृसुहृदौ 'मित्र वा तदपत्यानामिति ब्रह्मपुराणपाठक्रमात् । तदभावे एकग्रामवासी । "अथ तान्तर्गतोऽपि कार्य्या प्रेतस्य मतृक्रिया" इति विष्णुपुराणात् तदभावे तद्धनं ग्टहीत्वा य कश्चित् सवर्णः । "उच्छन्नबन्धुवित्तेन कारयेदवनीपति" इति विष्णुपुराणात् । अर्ध्वदैहिकमधिकृत्य विष्णुपुराणे "ब्राह्मणस्त्र्यवर्णानां न करोति कदाचन । कामात्लोभाद्भयान्मोहात् कृत्वा तज्जातितामियात्" ।

स्त्रियास्तु यथाक्रमं पुत्रपौत्रप्रपौत्रा विष्णुपुराणे "पुत्र पौत्र प्रपौत्रो वा" इत्यविशेषश्रुते । तदभावे कन्या ।"अपुत्रस्य च या पत्नी" इत्यत्रोद्देश्यगतलिङ्गाविवक्षया स्त्री पुं साधारणत्वात् धनाधिकारित्वाच्च । तदभावे वाग्दत्ता "दत्तानामप्यदत्तानाम्" इत्यत्रापि पितृपदस्य मातृपदोपलक्षकत्वात् । तदभावे दत्ता "दुहिता पुत्रवत् कुर्य्यान्मातापित्रोश्च संस्कृता" इति मनुवचनात् । तदभावे दौहित्र मार्कण्डेयपुराणे तथा दर्शनात् । "पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्म्मत । तयोर्हि मातापितरौ सम्भूतौ तस्य देहत " इत्यनेन यथा पुत्राभावे पौत्र तथा दुहित्रभावे दौहित्र इति प्रागेव उक्तत्वात् । "मातुलोभागिनेयस्य स्वस्रीयोमातुलस्य च । श्वशुरस्य गुरोश्चैव सख्यु र्मातामहस्य च । एतेषां चैव भार्य्याभ्य स्वसुर्मातु पितुस्तथा । पिण्डदानन्तु कर्त्तव्यमिति वेदविदां स्थितिः " इति वृद्धशातातपवचनेन मातामहस्य साक्षात् दौहित्रेण पिण्डदानश्रुते धनाधिकारित्वाच्च । दौहित्राभावे सपत्नीपुत्र । तस्य पुत्रत्वस्मरणात् । यथाह मनु । "सर्व्वासामेकपत्नीनामेका चेत् पुत्रिणी भवेत् । सर्व्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनु " । एकपत्नीनामिति एक पतिर्यासामिति अत्र सपत्नीपुत्रस्य पुत्रत्वातिदेशात् तत्सत्वेऽपि स्त्रीणां सपिण्डनं मैथिलैरुक्त तत्र "पुत्रेणैव तु कर्त्तव्य सपिण्डीकरणं स्त्रिया । पुत्राभावे पुत्रसत्वे भ्रातृपुत्रादयोपि ते" इति लघुहारीतवचने एवकारेणातिदिष्टपुत्रनिषेधात् । अतएवोत्तरार्द्धे भ्रातृपुत्रोपादानं सङ्गच्छते । अन्यथा पुत्रः तत्र पुत्रत्वातिदेशात् पुत्रत्वेनैव प्राप्ते भ्रातृपुत्रोपादानं व्यर्थं स्यात् । तथाह मनु । "भ्रातृणामेकजातानामेकश्चेत् पुत्रवान् भवेत् । सर्व्वे ते तेन पुत्रेण पुत्रिणोमनुरब्रवीत्" एकजातानामेकपितामातृजातानां तथाच "बृहस्पतिः । यद्येकजाताबहवोभ्रातर स्यु सहोदरा । एकस्यापि सुते जाते सर्व्वे ते पुत्रिणोमता " । एतन्न्यायमूलं तदिति चेत्र श्रादिपदस्था क्षेपु "भ्राता वा भ्रातृपुत्रो वा सपिण्ड: शिष्यएव वा ।

कुर्य्यात् वर्जयित्वा मृताहनि । अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः । सपिण्डीकरणादूर्द्धं तस्योक्तः पार्व्वणो विधिः" । तत्रं सम्प्रदायाभावात् तत्र कुर्य्यात् तिथ्यो दद्यादित्यर्थः । मृताहपर्य्युदस्ततिथिदेवतमस्य प्रति-प्रसवमाह अमावास्यामिति प्रेतपक्षोऽत्र पितृपक्ष आश्व-युक्कृष्णपक्ष इति यावत् न तु कृष्णपक्षमात्रं कृष्णपक्षस्या-मान्यपरत्वेऽमावास्यापदवैयर्थ्यापत्तेः । पितृपक्षं विशेषयति हेमाद्रिमाधवाचार्य्यधृतं नागरखण्डम् 'नभो वाथ नभ-स्यो वा मलमासो यदा भवेत् । सप्तमः पितृपक्षः स्याद-न्यत्रैव तु पञ्चमः" । अत्र श्रावणभाद्रयोरन्यतरस्य मल-मासत्वे आषाढ़ापेक्षया सप्तमपक्षस्य पितृपक्षत्वम् । अत्र-मृतस्यैव प्रेतपक्षमृतत्वं न तु मलमासभाद्रकृष्णपक्षमृतस्य । ततश्च तत्र मृतस्य वर्षान्तरेऽश्वयुक्कृष्णपक्षेऽपि तच्छ्राद्धकरणे न पार्व्वणं किन्त्वेकोद्दिष्टमिति । अत्र पार्व्वणो विधिः पार्व्वणेतिकर्त्तव्यता नैकोद्दिष्टविधिरिति नव्यवर्द्धमानप्रभृ-तयः । तच्च पूर्व्ववचनोक्तस्य पुरुषाधिकस्य मृताहे पर्य्युदस्तस्य पार्व्वणो विधिरित्यनेन प्रतिप्रसवात् तस्मात् षट्दैवतैकोद्दिष्टं सपुरुषाधिकं वस्तु पाठपौरुषिकं 'कप् समन्वितं' सच्चा त वाद्य च द्वयोर्ग्रहम् । मन्वादिकश्च येषेषु पिण्डा स्युः षड्भिर्निस्थिति "इति छन्दोगपरिशिष्टवचनेन प्रत्याब्दि-कव्यतिरेकेण षट्संख्यानियमात् । एवममावास्यादिमरण-निमित्तेन मातुरपि प्रत्याब्दिकं पार्व्वणविधिनैव "अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये । तेषामपि च देयं स्यादेकोद्दिष्टं न पार्व्वणम्" इति आपस्तम्बवचने अपुत्रा इति विशेषणोपादानात् सपुत्राणां पार्व्वणाभ्यनुज्ञानात् । एतच्च मात्रादित्रितयदैवतं कार्य्यम् । "मातुः पितामही-प्रपितामह्यौ च पूर्व्ववत् ब्राह्मणान् भोजयित्वा" इत्यन्व-ष्टकायां तथ दर्शनात् अमावास्यादिनिमित्तत्वेन पार्व्वण-विधिना छन्दोगैरपि मात्रादित्रिक पार्व्वणश्राद्धं कर्त्तव्यं "न च पिण्डं पृथग्दद्यादन्वष्टकदिन इते" इति छन्दोग-परिशिष्टवचने विशेषतः प्रतिप्रसवात् । एष सपिण्डी-करणेऽपि । एतच्च मृताहपार्व्वणं मातापित्रोरेव । तथाच हेमाद्रिधृत कात्यायनवचनम् । "सपिण्डीकरणा-दूर्द्ध्वं पित्रोरेव हि पार्व्वणम् । पितृव्यभ्रातृमातृणा-मेकोद्दिष्टं सुतैस्तु' । मातृपदं सपत्नीमातृपरम् । सपत्नीमात्रित्यत्र मातृपदस्य राजदन्तादित्वात् पर-निपातः । ततश्च वाक्ये मातृसपत्नीति न प्रयोज्यं किन्तु सपत्नीमातरित्यादिकम् । एवं साग्निकौरसक्षेत्रजाभ्यां

मृताहे पार्व्वणं कर्त्तव्यम् । 'औरसक्षेत्रजौ पुत्रौ विधिना पार्व्वणेन तु । अस्मद्दानमिरे कार्य्य एकोद्दिष्टं सुता दश इति जाबालिवचनस्य "यत्र यत्र प्रदातव्यं सपिण्डीकरणात् परम् । पार्व्वणेन विधानेन देयमग्निमता सदा" इति मत्स्यपुराणवचनस्य चैकवाक्यत्वात् । उशना च "प्रत्य-ब्दं दर्शवच्छ्राद्धं साग्निः कुर्व्वीत वै द्विजः । एकोद्दिष्टं सदा कुर्य्यान्निरग्निः श्राद्धदः सुतः । अत्र प्रागुक्तयुक्त्या प्रेतश्राद्धस्य एकोद्दिष्टत्वाभिधानात् सांवत्सरिकश्राद्धे यदे-कोद्दिष्टपदमुक्तं तत् प्रेतश्राद्धधर्म्मप्राप्त्यर्थम् । ततश्च योग्यत्वादेकार्घादिलाभः न च यथा प्रेतश्राद्धे पितृशब्द-स्थाने प्रेतपदोहः तथात्रापीति वाच्यं सांवत्सरिके प्रेतत्वाभावात्तथाविधानानुपपत्तेः । एवं प्रतिमासानु-मासिकश्राद्धे सम्बन्धवाचकपदं आशीःप्रार्थनं शेषभोजनञ्च कर्त्तव्यम् ।

रजस्वलाया विशेषयति गोतमः 'अपुत्रा तु यदा भार्य्या सम्प्राप्ते भर्त्तुराब्दिके । रजस्वला भवेत् सा तु कुर्य्यात्तत्पञ्चमे दिने । कुर्य्याच्छ्राद्धमिति शेषः । यत्तु श्राद्धचिन्तामणौ "एकोद्दिष्टं तैर्यक्रिकेन सिद्धान्नेन क-र्त्तव्यम् । "एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम् । अभावे पाकपात्राणां तदह्नः समुपोषणम्' इति वृद्धहारी-तवचनात् पाकपात्राभाव पाकसामग्र्यभावोपलक्षणं त-दपि नामश्राद्धं किन्तूपोषणमेव श्राद्धस्थानीयमित्यर्थः । स्वयमित्यभिधानाद्भ्रात्रादिनापि नान्यद्वारा कारयितव्यम् अतएव उपवासेनैव श्राद्धस्थानीयेन तदकरणप्रायश्चित्तं न वा तत्प्रत्यया श्राद्धविघ्नकृतादिवचनादपि नैकादश्या-मनुष्ठानमिति" तन्न पितृसम्प्रेरणात्तत्यैकादश्यां तदनु-ष्ठानस्य युक्तत्वात् । अन्यथा षोड़शश्राद्धाधिकारेण का-विषयात्तस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोड़श पिशाचत्वं ध्रुवं तस्य दत्तैः श्राद्धशतैरपि' इति वचनेन षोड़शश्राद्धाभावे प्रेतत्वपरिहारो न स्यात् । तस्मादुपवा-सेन श्राद्धार्थं किन्तु तदनाचरणप्रायश्चित्तार्थं तथा स्वकालातिक्रमे प्रायश्चित्तं कृत्वा कालान्तरे तत्करणं तथात्रापि तद्दिने उपवासं कृत्वा एकादश्यां श्राद्धं कर्त्तव्यमिति । एकोद्दिष्टं नान्यद्वारा कार्य्यमित्यत्र पि-तृमरणोत्तरत्वेन विशेषणीय "न कदाचित् सगोत्राय श्राद्धं कार्य्यं सगोत्रकैः" इति प्रेतश्राद्धे ब्रह्मपुराणात् । अत्र हि नाभोत्रजस्य साक्षात् कर्त्तृत्वं निषिध्यते सगोत्रायेत्यसम्ब-न्धापत्तेः तस्मात् सगोत्रसपिण्डैरसुतैः सगोत्राय श्राद्धं न

एजं दीप्तौ भ्वादि० पर० अक० सेट् । एजति ऐजीत् । एजाम्-बभूव आस चकार । एजन् । [ धृष्टे" अथ० १२,१,१८ ।

एजथु पु० एज–वा० भावे अथु । कम्पे "मत्तानुवेग एजथुर्वेप-

एजय त्रि० एज–णिच्–खश् । कम्पके जनमेजय अङ्गमेजय अरिमेजय विश्वमेजय ।

एजि त्रि० एज–इन् । वातरोगप्रसे तनोऽपत्ये कुर्वा० ण्य । ऐज्य तदपत्ये पु स्त्री ।

एज्य त्रि० आ+यज–कर्म्मणि क्यप् । सम्यग्यजनीये "आय-जतामेज्या इष इति प्रजाया इषसा एवैतद्यायजूका" शत० ब्रा० १,७,२,१५ ।

एठ बाधने भ्वादि० आत्म० अक० सेट् । एठते ऐठिट एठाम्-बभूव आस चक्रे । एठनम् एठित । बाधमनात्र बाधम्

एड पु स्त्री इल–स्वप्ने अच् डस्य लः । १मेषे "सैडपराडेपूढ धारा मायोद विश्वारिति" कात्या० २५,४,१८ । स्त्रियां जातित्वात् ङीष् २बधिरे त्रि० । एडमूक ।

एडक पु स्त्री० इल–ण्वुल् डस्य लः । १वनच्छागे, २पशु-मात्रे मेषे ३मेषमात्रे च जातित्वात् स्त्रीत्वे अजादि त्वात् टाप् क्षिपकादि० नात इत्त्वम् एडका । एड इव प्रतिकृतौ कन् । मेषसदृशे दक्षिणापथप्रसिद्धे ४पशुभेदे । वर्द्धन्ते पक्षिसंघाश्च तथा पशुगवेडकम्" भा० व० १४२अ० । तस्येदम् अण् । ऐडक तत्सम्बन्धिनि त्रि० स्त्रियां ङीप् । "अनैडकीकूर्चा मज्ञास्य" कात्या० ५,२,७ । एडको नाम दक्षिणापथे मेषाकृति पशु तस्येमा ऐडक्य" कर्क० "तयोर्मेषं मेषा च यद्यनैडकीकूर्चा विन्देत ता प्रविश्य निष्क्रामयेत्" शत० ब्रा० २,५,२,१५, एडकवदाचरति क्यच् एडकीयति उपसर्गस्यावर्णात् परस्य वा पररूपम् उपे(पै)डकीयति

एडगज पु० एडोमेष एव गज इव भक्षकत्वादस्य । (दाद-मर्द्दन) चक्रमर्द्दे इद्रुघ्ने वृक्षे अमर । [ बधिरश्रुति ।

एडमूक त्रि० श्रुतिरहितएडोबधिरस्तथा मूक । वाक्श्रुति-

एडु(डू)क न० ईड (ड)उक उलूका० नि० गुणः । १अ-स्थ्यर्थकाश्स्त्रियुक्ते २अन्तर्न्यस्तकठिनद्रव्ययुक्ते च कुड्यादिभि-त्तिमात्रे च । एडूकचिह्ना पृथिवी न देवगृहभूषिता" भा० व० १० । तस्य पु स्त्रमपि "एडूकान् पूजयिष्यन्ति वर्ज्जयिष्यन्ति देवता" भो० व० १९० अ० । स्वार्थेऽण । ऐडूकमपि वा० अलोक एडोकमपि तत्रार्थे द्विरूपकोष ।

एण पु स्त्री इ–ण तस्य नेत्वम् । कृष्णवर्णे मृगे । स्त्रियाम् ङीप् "वस्य वालमणमृगिविद्धुरेणमावैः" रघु० । "श्रा-मेषस्य मासेन रौरवेण मवैव तु" मनु । तस्य कृष्णत्व मुक्तम् छन्दोग० "अन्तयोमाथर्वोऽस्य एण कृष्णमृग स्मृतः । कस्तूरीमृगः मोक्ता मवर योग उच्यते" । "त स्वैणकृणक कृपया स्रोतसात्तुह्यमानम्" भाग० ५,८,२ "एणकुणक स्तनपायकम्" श्रीधर । एणया क्रीतम् "एणा ढञ् पा० ढञ् । ऐणेय एणीक्रीते त्रि० । एणेन क्रीत-मित्यत्रापि । ऐण तत्क्रीते त्रि० । स्वार्थे कन् । एणक तत्रैव शब्दरत्ना० । [ इत्यम० ।

एणतिलक पु० एणस्तिलकमिव चिह्नं यस्य । मृगाङ्के चन्द्रे

एणभृत् पु० एण बिभर्त्ति भृ–क्विप् ईत० । चन्द्रे तस्य मृगाङ्कत्वात् तथात्वम् ।

एणीपचन न० एणी पच्यते अत्र पच–आधारे ल्युट् "एणी पाकाधारे देशभेदे स्त्रीपगोरमध्यत्वेऽपि तद्देशवासिभि-र्निषेधक्षत्रह्वानतद्वचनात्तथात्वम् । तत्रभव पक्वे छ । एणी-पचनीय तद्देशभवे त्रि० [ एणीपादाकारपादयुक्ते ।

एणीपद त्रि०एण्या पादाविव पादावस्य अच् नि० पद्भाव ।

एत पु० इण–तन् । १कर्बुरवर्णे । २तद्वति त्रि० । तोपध-वर्णवाचित्वात् स्त्रियां ङीप् तस्य नश्च । "त्वेन्या यवस्या" श्रुति "ब्लोबरग्योऽन्यत एन्योमैतर" यजु० २४.८ । वर्णवाचिनि एते परे "वर्णोवर्णेष्वनेते" पा० एतशब्दपर्य्युदासात् तत्पुरुषे पूर्व्वपद न प्रकृत्या । लूर्णैतः शुक्लैत इत्यादौ न प्रकृतिस्वर । आ+इण–कर्त्तरि क्त । ३आगते त्रि० । "कथा मती कुत एतास एतेऽर्च्चन्ति" ऋ०१,६५,१ । "एतास आगता" भा० मह्रो-भिरेता उपयुज्मधे" ऋ०१,६६,५ । "एतानागन्तृन्" भा

एतग्व पु० एतवर्णोऽश्वः पृषो० । चित्तवर्णाश्वे । "एतग्वा चिद्य एतशा युयोजते हरी" ऋ० ८,७०,७ । "एतग्वा एतवर्णाविवाश्वौ" भा० । "पिपत्त्यैतग्वा चिद्य युयुजा युजानः" ऋ० ७,७२ । २अश्वमात्रे निघ० ।

एतद् त्रि० इण–अदि तुक् च । बुद्धिस्थे समीपवर्त्तिनि "इदमस्तु सन्निकृष्टं समीपवर्त्ति चैतदोरूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्" इत्युक्ते समीपवर्त्ति बुद्धिस्थोपलक्षितधर्म्मावच्छिन्ने एतदो वृत्ति । क्रिया विशेषणत्वेऽस्य क्लीवता "न वा उ एतन्म्रियसे" ऋ० १,१६२,२१ । अस्य सर्व्वनामकार्य्यम् । एते एतस्मै एत-स्मात् एतेषाम् एतस्मिन् एतस्याः एतासामित्यादि । "एव वयमभी दारा" कुमा० । "देवा एतस्यामवदन्त पूर्व्वे" ऋ० १०,१०९,४ । एष वै प्रथम कल्प" मनु० । "एतस्मि

महापातकानुपातकोपपातकेषु प्रवर्त्तते । जातिभ्रंश करेषु सङ्करीकरणेषु अपात्रीकरणेषु मलावहेषु प्रकीर्णेषु च” । अनेन नवविधत्वं पापस्योक्तम् । हारीतस्तु पञ्चविधत्वमाह “पञ्चविधमशुद्धं भवति प्रासङ्गिकोपपातक-पातकमहापातकात्यन्तपातकानि” पूर्व्ववचने पूर्व्वं पूर्व्वं गरीय स्यात् लघुतरोत्तरम् । प्रासङ्गिक जाति भ्रंशकरादिपञ्चकम् । पातकपदमनुपातकपर्यायः । ननु नवस्वेव पापेषु पातकशब्दो दृश्यते यथा पैठीनसि “स्त्रीगोहत्यकर्त्त्र्यस्थानियवासी शूद्रसहभोजी कन्या-दूषणगारदाही दवनीपतिः स्तानग्रस्तो चेति पात-कानि” नवविध पापमभिधायाह विष्णुः । “एव पा तकिन पापमनुभूय सुदुःखिता । तिर्य्यग्योनौ प्रप द्यन्ते दुःखानि विविधानि च”। याज्ञवल्क्य “नीचाभि-गमन गर्भपातन भर्त्तृहिंसनम् । विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम्”। पतनीयानि पातकानीत्यर्थे । “त्वयस्पृटोवहुलमिति” करणेऽनीयर् । तथा गौतमः “ब्रह्महासुरापगुरुतल्पगमातृपितृयोनिसम्बन्धागस्तेन ना-स्तिकनिन्दितकर्म्माभ्यासिपतितात्याग्यपतितत्यागिन पति ताश्च पातकसंयोजकाश्च तैश्चाब्दं समाचरन्” । पातक संयोजका सुरापाणादौ ये परान् प्रयोजयति ते । पाठम् । सामान्यपदस्यापि विशेषशक्तिर्भविष्यति स्व-र्गादिपदस्येव, हारीतेन विशेषगणने पाठात् । तथा च्य वन. “अथ पातकोपपातकमहापातकानि व्याख्यास्याम ” इति । तथा च पठन्ति । “महापातकतुल्यानि पापान्यु क्तानि यानि तु । तानि पातकसंज्ञानि तदूनमुपपातक-मिति” । ततो महापातकतुल्यपापविशेषेष्वस्य शक्ति । पतनशब्दार्थमाह गौतम “द्विजातिकर्म्मभ्योहानि पतनम् परत्र चासिद्धिस्तमेके नरकम्” । द्विजातिकर्म्म श्रौतमग्निहोत्रादि स्मार्त्तमष्टकादि प्रायश्चित्तादृक्षपा-दिव्यतिरिक्तम् तेभ्योहानिरनधिकार इति । द्विजाति ग्रहण प्राधान्यार्थम् शूद्रस्यापि वाक्यान्तरेण पाति त्याभिधानात् । इहलोके तावत् पातित्यलक्षणमनिष्ट परलोके चासिद्धि पापकर्म्मऽतिबन्धाद्दुपात्तसुकृतफला-निष्पत्ति नरक वा । सूत्रकारव्याख्यार्थमिदम्” ।

पापलक्षण पापसत्तायां प्रमाणञ्च प्रा॰वि॰दर्शितं यथा “ननु किं पापलक्षणम्”उच्यते“नोदनालक्षणार्थोधर्म्म ।” इत्यस्मिन् सूत्रे वेदैः प्रतिपाद्योऽर्थोधर्म्म इति धर्म्मलक्षण कुर्व्वता सूत्रकारेण जैमिनिना वेदैकप्रतिपाद्योऽनर्थो-ऽधर्म्म इत्यधर्म्मलक्षण सूचितम् । अनर्थश्चानिष्टसाधन तथाचोक्त भाष्यकृता “कोऽर्थोयोऽभ्युदयाय कोऽनर्थोयोऽन-भ्युदयायेति” । ननु पापसत्तायां किं प्रमाण न तावद्वेद तस्य कार्ये कार्यान्विते वा प्रामाण्यात् न च दुरितापूर्व्व कार्य्यं कार्य्यान्वित वा । न च नित्यकर्म्मानाचरणस्य निषिद्धाचरणस्य च वेदोक्तप्रत्यवायसाधनत्वानुपपत्त्या-कल्प्यम् तस्य तथाविधशब्दाभावेन लिङ्गत्वेन चाव गन्तुमशक्यत्वात् उच्यते “यो ब्राह्मणायावगुरेत्त शतेन यातयेदिति” श्रुतौ लिङ्श्रुतेरवगोरणयात-यातनयोः साध्यसाधनभावोऽवगम्यते “फेतष्टेतमतो-सिंहिति” पा॰लिङ् स्मरणादिति यथोक्त षष्ठाधिकरणे, तथाऽत्रापि क्वचित् पञ्चम्या क्वचित् तृतीयया क्वचिद्व विशेषणपदादवगम्यते । यथा याज्ञवल्क्य “विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति”। ननु “शरीरजैः कर्म्मदोषैर्याति स्था-वरतां नर । वाचिकैः पक्षिमृगतां मानसैरन्त्यजाति ताम् । इह दुश्चरितैः केचित् केचित् पूर्व्वकृतैस्तथा । प्राप्नुवन्ति दुरात्मानोनराहूपविपर्य्ययम्” । यथा विष्णु पुराणम् “नरकं कर्म्मणा पापादेवमाप्नुर्महर्षय ” । तथा यम “सुरापो ब्रह्महा गोघ्न सुवर्णस्तेयकृन्नर । पति-तैः संप्रयुक्तश्च तल्पगोगुरुतल्पग । एते पतन्ति सर्व्वेऽपि नरकेष्वनुपूर्व्वश ” । अत्र ते सुरापादय पतन्तीति सुरा पादीनां पतनकर्त्तृत्वावगतेः कर्त्तृत्वञ्च साधनत्वविशेष अत सुरापाणादिविशिष्टस्य पुरुषस्य पतनसम्बन्धे विशे षणस्य सुरापाणादे सति सम्भवे पतनसाधनत्वमवगम्यते “यजमान प्राजापत्यान् पशूनालभेतेति वत् । एवं”नारिष्ट स्तृप्तिमाप्नोति”इत्यादावपि । नरकसाधनत्वस्य कार्य्यान्वया-भावात कथं शब्दादवगतिरिति चेत् श्रूयतां द्विविधं यथा तथा इति ब्रूम यथा शतयातनासाधनात् स्वर्गात्मा’ च म चेतव्यमिति विधि , तथा नरकसाधनात् सुरापाणा देर्निवर्त्तेतेति, नित्येऽपि यस्याकरणे प्रत्यवायस्तस्मिन् कर्म्मणि प्रवर्त्तेतेति विध्यङ्गीकारात । अथवा यद् यस्य धन तत्र भावस्ततपरिहारसाधनमिति लोकादवगतत्वात् अथ न प्र त्यवायपरिहारस्योपस्थितत्वात् तदर्थिनोऽधिकारोनित्य निषेधेष्वपि । ननु “अहरहः सन्ध्यामुपासीत” इत्यादौ जीवनस्य सन्ध्योपासनव्याप्यत्वगमात् जीवनवतोऽधिकार । “न कलञ्जम्भक्षयेत्” इत्यादौ निवृत्तिस्वभावनिरुद्धा प्रवृत्ति रधिकारिविशेषणं तथाचोक्त “नमसा त प्र

हिंसनधात्वर्थतावच्छेदकं फलमव्यवहितमेव मरणम् अव्यवहितफलककव्यापारस्यैव धात्वर्थत्वात् अन्यथा परम्परया विक्लृप्तिफलककाले तदङ्गुलं कुर्वत्यपि पचतीति प्रसङ्गात् अथ खड्गघातानन्तरं यत्र विलम्बेन मरणं व्रणपाकपरम्परया वा, अन्ने विषप्रयोगेण वा तत्र हन्तृत्वं प्रायश्चित्तादि च न स्यादिति चेत् न प्रायश्चित्तस्य तथात्वे हि तत्र हन्तृत्वव्यपदेशो गौण विनिगमनस्तु आवश्यक

वस्तुतस्तु मरणोद्देशेन कृतोऽदृष्टाद्वारकमरणानुकूलो व्यापारः हिंसा श्येनयागादृष्टद्वारामरणसाधनमतो न हिंसा। यद्यदृष्टद्वारा मरणसाधनं हिंसा स्यात्तदा सम्प्रीतैश्चाश्वकुसाऽदृष्टद्वारेण विनाशसाधनत्वात् तत्कर्त्तुः हिंसकत्वापत्ति। अतएव कूपादौ गोमरणेऽपि न गोवधकर्त्तृता तत्कर्त्तुः, गलबन्धनामरणेन भक्तुरातस्य हन्तृत्वं, परिवेषयितुर्वा ब्राह्मणहन्तृत्वम्। व्रणपाकपरम्परया विलम्बेन विषप्रयोगेण च हन्तृत्वं मुख्यमेव। नाप्यनुमित्यादितमरणफलकत्व, गलबन्धनाद्वमरणे सहन्तृत्वापत्ते। अन्योद्देशेन विप्रस्य हनने ब्राह्मणे ब्राह्मणहन्तृत्वं न स्यादिति चेत् न इष्टापत्ते। व्यपदेश प्रयोगो वा लक्षणया समर्थयितुं शक्यते, लक्षणेऽतिप्रसङ्गो वारयितुं न शक्यत इतीदमेव विनिगमनम्। अन्योद्देशेन कृतेऽपि निषिद्धे प्रायश्चित्तार्द्धकथनम्। अपरे तु अनभिसंहितावान्तरव्यापारसहकारीतस्य मरणसाधनं हिंसा, खड्गकारस्यानभिसंहितावान्तरव्यापारद्वारा मरणसाधनत्वं तस्य हि अवान्तरव्यापारोऽनाभिसंहितः। किन्तु धनलाभ इति खड्गकारो न घातकः विषस्यापि मक्षेपणमवान्तरव्यापारो भोजनमेवाभिसंहितम् अनेनेदं भोक्तव्यमिति बल्लाय विषप्रयोगादिति हिंसैव विषप्रयोग इति तत्र गलबन्धनाह्वकारस्त्वाद्दूरस्य भरणं तत्र परिवेषयितुर्घातकत्वापातात् अनेनेदं भोक्तव्यमित्यभिसन्धायैवान्नपरिवेषणात् भोक्तुं हन्तृत्वापत्ते च अनभिसंहितमवान्तरव्यापारसहकारीतस्य मरणानुकूलमत्यासुवाभात्। अत एव अव्यवहितप्राणवियोगफलकोव्यापारो हिंसा व्रणपाकपरम्परयामृते न हन्तृत्वं व्यापारव्यवधायकत्वादिति निरस्तम्"

एनसादेवं दूषितत्वेऽपि यथाऽनर्थहेतुत्वं तथाऽभिप्रायं पस्य दूषितयत्नैर्दृष्टम् अधिक एनसशब्दे वक्ष्यते। एनसाकृतम् वत् । एनस्य पापरचिते त्रि॰"यत्प्रमेनसम्" अथ॰ ८,७,३। एनोऽस्त्यस्य मतुप् मस्य वः। एनस्वत् त्रिषि। एनस्विन् पापयुक्ते त्रि॰ उभयत स्त्रियां ङीप्। "मा त एनस्वन्तो यक्षिन् भुजेम" ऋ॰७,८८,६। एनस्वन्तं चिदेनस सुदानव ८,१८,१२। "एनस्विभिरनिर्णिक्तो नार्थं किञ्चित् समाचरेत्" । "अवद्राह्मणमिन्द्रमित्येतदेनस्वी सप्तक जपेत्" मनुः। "इण आगसोति" उणा॰ अपराध एव साधुत्वम् पापे तु ईश्वराज्ञालङ्घनरूपापराधजन्यत्वेनोपचारात् इति बोध्यम्।

एम त्रि॰ इण-कर्म्मणि म। प्राप्ये। "अयं च न एमः" यजु॰ १८,१५, "एम प्राप्तव्यार्थं" वेददी॰।

एमन् न॰ एत्यनेन मार्गेण इण-करणे मनिन्। गतिमार्गे "कृष्ण त एम रुशत" ऋ॰४,७,९। "कृष्णं त एम रुशदूर्मे १,५८,४। "एमन्यत्वेन गमनमार्गं उच्यते" भा॰ एत्यत्र आधारे मनिन्। २अवस्थितिस्थाने। "पृष्ठे च सद्म्येमन्" यजु॰१२,१०, "एमन् अवस्थाने" वेददी॰। "अपां त्वेमन्त्सादयामि" १३,५३। सप्तम्या लुकि न नलोपः। भावे मनिन्। ३गमने। "दूरे ह्यो ये चितयन्त एमभि" ऋ॰५,५९,२ एमभिर्गमनै" भा॰।

एरका स्त्री इण-बा॰ र तत सञ्ज्ञायां कन्। निर्विषतृणभेदे (गलघाला) "एरका गुन्द्रमूला च शिम्बी गुन्द्रा शरीति च। एरका शिशिरा वृष्या चक्षुष्या वातकोपिनी। मूत्रकृच्छ्राश्मरीदाहपित्तशोणितनाशिनी" भावप्र॰। "ददार करजैर्वीरावेरकां कटकद्मषा" भाग॰ १,२१६, "एरकायां तदा सृष्टिं कोपात्सव्याह केशव"। भा॰मौस॰२अ॰ "एरकारूपिभिर्वज्रैर्निजघ्नुरितरेतरम्" भा॰ आ॰ २अ॰। २कौरव्यवंशजे सर्पभेदे "एरकः कुण्डलोवेणी वेणीस्कन्दः कुमारकः" भा॰आ॰५७अ॰। नागनामकीर्त्तने

एरङ्ग पु॰ आ+ईर-अङ्गच्। मत्स्यभेदे, "एरङ्गोमधुरः स्निग्धो विष्टम्भी शीतलो गुरुः" राजनि॰ तद्गुण।

एरण्ड पु॰ ईरयति वायुम् मत वाडय ईर-अण्डच् नि॰गुणश्च। वृक्षभेदे (एरण्डी)। (भेरण्डा)। "एरण्डयुग्मं मधुरं तृष्णा गुरु विनाशयेत्। शूलशोथकटीवस्तिशिरः पीडोदरज्वरान्। ब्रध्नश्वासकफानाहकासकुष्ठाममारुतानिति" एरण्डयुग्मम् शुक्लरक्तैरण्डौ "एरण्डपत्रं वातघ्नं कफक्रिमिविनाशनम्। मूत्रकृच्छ्रहरञ्चापि पित्तरक्तप्रकोपणम्। वाताग्र्यं पल्लवं गुल्मवस्तिशूलहरं परम्। कफवातक्रिमीन् हन्ति वृद्धिं सप्तविधामपि। एरण्डफलमत्युष्णं गुल्मशूलानिलापहम्। यकृत्प्लीहोदरार्शोघ्नं कटुकं दीपनं मतम्। तद्वन्मज्जा च विड्भेदी वातश्लेष्मोदरापहा। काकोऽस्य मूलं व्याधिस्याद्रपरे जगा"

मेऽस्तु। पश्चैव गच्छ। अत्रानियोगोऽवधारणम्। 'एवे चानियोगे' वार्त्ति०। तत्र क्वेव भोक्ष्यसे" इत्यत्र पररूपैकादेश। एतद्योगे च "न च शाङ्गाहं वयुक्तं"पा० न वसन्तसाद्यादेश। "ब्राह्मणस्यैव कर्मैतदुपदिष्ट मनोषिभि"। "स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वय" मनु। १२एवमित्यर्थे च। "एवा न इन्द्रोतिभि" ऋ० ४,३२,७, एवा एवम् भा०। अत्र वेदे "एवा तु तूर्वे मतनु" इत्यादि वत् दीर्घः। तत्र गन्तरि "एवा न देव्यादितिरनर्वा" तैत्ति० ३,१,१,५, "एवा गमनशीला" भा०। शीघ्रगन्तृत्वात् १३अश्वे पु०। "सूरोनाम एतयाङ्गिरेवे" ऋ०१,१५८,२, "एवैरश्वै" भा०। करणे भावे वा वन्। १४गमनसाधने १५गमने च। "एवेन सद्य पर्येति पार्थिवम्" ऋ० १,१२८,३, "एवेन गमनसाधनेन गमनेन वा" भा०।

एव त्रि०एवमस्त्यस्य अच् अव्य०टिलोप। एवक्रियमाणप्रकारे "सुदानूनेवया मरुत" ५,४१,१६, एवया एव क्रियमाणप्रकारेण" भा० तृतीयस्थाने याच्।

एवथ पु० अव-भावे अथ पृषो० अतः एत्वम्। गमने "न वो रायो नैवथा न मन्दनो"ऋ०८'२४,१५, एवथा यस्य पुराणि संग्रामं प्रति गमनेन। तृतीयास्थाने थाद्।

एवम् अव्य० इण-वा०वम्। "एवमिति प्रकृतपरामर्शप्रकारेवार्थोपदेशनिर्देशनिश्चयाङ्गीकारवार्य्येषु" गणर०। उक्तेषु अर्थेषु। क्रमेण उदा० तत्रैव। १प्रकृतपरामर्शे "एव वादिनि देवर्षौ" कुमा०। २प्रकारे। एवं कुरुते। इवार्थे ३साहश्ये अग्निरेव विप्र। ४उपदेशे एवं पठ। ५निर्देशे एव तावत्। ६निश्चये। एवमेतत् कः सन्देहः। ७अङ्गीकारे एवं कुर्म्म। वार्य्ये दमसङ्कयार्थे "अहार्य्यमेवस्त्रगनाभिपत्तम्"। "यथेतमनेवम्" गा० सू०। ८सम्बन्धे १०परततौ ११प्रत्ने च मेदि०। तत्र एवम् भूत एवकृत इत्यादौ क्रियाविशेषणत्वम् एव विध एवप्रकारइत्यादौ द्रव्यविशेषणत्वमिति भेद "एवविधे नाङ्गचेष्टितेन" रघु। "एवमादीन् विजनीयात् प्रकाशाल्लोककण्टकान्" "अन्येषाञ्चैवमादीनाम् मद्यानां भोदनस्य च" मनु।

एवया त्रि० एव एव पदम वा याति या-क्विप् पृषो०। रक्षके "द्युम्न एवया उ नमथा" ऋ० १,१५६,१, "एवया रक्षणप्रापयिता" भा०

एवयामरुत् पु० एवया रक्षकोमरुद्यस्य। ऋषिभेदे। "मरुत्वते गिरिजा एवयामरुत्"। "एतनामकस्य ऋषेः षष्ठ्यालुक्"भा०।

एवयावन् पु० एवस्य एवंप्रकारस्य यावा या-वनिप्। १रक्षके विष्णौ। "विश्वजन्यामप्रयुतामेवयावो मति दा" ऋ०७,१००,२, "एवयाव: । विष्णो।" भा०। वेदे सम्बुद्धेरुत्वम्। एव गन्तरि त्रि० "तान्नो सखो मरुत एवयाव्नो ऋ० २,३४,११, स्त्रियां ङीप् वनोरच। एवयावरी। "या सुम्नैरेवयावरी" ऋ० ६,४८,१२,

एवार पु०एव एवमृच्छति ऋ-अण्। सोमभेदे। "एवारे वृषभा सुते"ऋ०८,४५,३८,"एवारोनाम कश्चित सोम "भा०

एवावद् पु० एव एवमावदति आ+वद्-अच्। ऋषिभेदे "अहि सत्यस्य मनसस्य चित्तिभिरेवावदस्य यजतस्य सध्रे " अवत्सारस्य स्पृणवाम्" ऋ० ५,४४,१, "सत्यस्य मनसश्चैवावदस्य यजतस्य सध्रेरवत्सारस्य चैषामृषीणाम्" भा०

एष गतौ भ्वा० आत्म० सक० सेट्। एषते ऐषिष्ट एषाम् बभूव आस चक्रे। एषणीय एषितव्य एषित एषिता। एषितुम् एष्ट एषणम् एषा एषमाण।"परार्द्धमित एष स्वर्वाणी गौरपैषत" अथ० ६,६७,३, वेदे गणव्यत्यासात् पर०। उपैषत एतिपरस्मैपदम्"। "स वै वत अष्टमतिलमैपते य कर्मणा पारमपारकर्मणः" भाग० ३,१२,४४, धातूनामनेकार्थ्यात् अवलोकयतीत्यर्थे" "तस्मादिशा मर्द्दैष एति" शत०ब्रा०१२,२,४,२,।

परि+अन्वेषणे पर्य्यैषते पर्य्यैष्ट लोकेऽपि क्वचित् गणव्यत्यास। 'जन्मु सखिसुष कल्पा पर्य्यैपन्तो विभावसुम्" भा०अनु०८५।

एष स्त्री एष-भावे क्विप्। गतौ "तावामेषे रथानां"त्वचोन" ऋ० ५,६६,३, "एषे गन्तुम्"भा०। "राय एषेऽवसे दधीत"५,४१,५,"एषे प्राप्तुम्" भा०। 'तेभ्य एषमेर चकार" शत०ब्रा०२,४,२,४, । इष-क्विप्। इच्छौ। "न चोदोऽस्यणीतमेषे" ऋ० १,१८०,७, एषे सोच्छामिच्छत" भा०।

एषणा पु०एषते गत्स्त्वदयम ल्यु। लौहमयशाणे फलायुध। इष इच्छाया णिच् भावे युच्। एषणा २प्रेरणायां ३पुत्रलोकवित्तकामनायाञ्च स्त्री "न कश्चिदन्य एतार तस्मादस्य षणात्रयात्" वेदा०। "तमात्मान विदित्वा ब्राह्मणा पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्य चरन्ति। या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे

भवत" शत०ब्रा० १४,६,४,१, "पुत्रैषणा पुत्रोत्पत्तिमुद्दिश्य दारसंग्रहेच्छा तथा। वित्तं द्विविधं मानुषं गवादि, दैवं विद्यादि, मानुषकर्मणां साधनस्य गवादेरुपादानरूपा इच्छा वित्तैषणाऽनेन कर्म कृत्वा पितृलोकं जेष्यामीति विद्यासंयुक्तेन वा देवलोकम्। केवलया वा हिरण्यगर्भविद्यया दैवेन वित्तेन देवलोकं जेष्यामीतीच्छा लोकैषणा। एवमेकत्वेऽपि लोकैषणाया साधनमन्तरेणासिद्धेः साध्यसाधनाभेदेन द्वैविध्यमाह उभे हीति" भा०। "अपहृतसकलैषणामलात्मन्यविरतमेधितभावनोपहूत" भाग० ४,२१,१८, एष्यते ज्ञायते मानमनया करणे ल्युट् ङीप् एषणी। ४तुलासाधने (निक्ति) मानयन्त्रभेदे मेदिनि। स्वार्थे कन्। एषणिकाऽप्यत्र। अमर। एषते व्रणमार्गमनया करणे ल्युट् ङीप्। (वेधकार) ५व्रणस्फोटनास्त्रभेदे मेदि०। भावे ल्युट्। सुश्रुतोक्ते ६व्रणविदारणव्यापारभेदे। तत्र हि "यन्त्रकर्माणि तु निर्घातनपूरणेत्याद्युपक्रमे "कूर्चैषणदारणेत्यादि पठित्वा चतुर्विंशतिरित्युक्तम्। तत्र एषणमभ्यन्तरे शस्त्रप्रवेशनेन पूयादेरपसारणम्। तत्साधनशस्त्रमेषणी यथाह सुश्रुत "विंशति शस्त्राणि तद्यथा मण्डलाग्रकरपत्रेत्याद्युपक्रमे "वडिशदन्तशङ्क्वेषण्यो" इत्युक्त्वा "एषण्येषणे आनुलोम्ये च" इति तत्प्रयोजनमुक्तम्। एषणमभ्यन्तरगमनमानुलोम्यं विस्तारणम् तत्रैव एषणीलक्षणं "एषणी गण्डूपदाकारमुखी" उक्तम्।"एष्ये मूत्रवृद्धाभे तु नाडाहुत्यङ्गुरा हिता" सुश्रुत।

एषणीय त्रि० इष-एष-वा कर्मणि अनीयर्। १आयासे "जायापती लौकिकमेषणीयम्" कुमा०। २गम्ये च।

एषा स्त्री एष-अ। इच्छायां जटाधर।

एषावीर पु स्त्री। एषायां यथेष्ट धनादिप्रतिग्रहेच्छायां वीर। यत कुतश्चित् प्रतिग्राहके निन्दितब्राह्मणभेदे। स्त्रियां जातित्वात् ङीष्। "यद्येनमेषावीरा याजयेयुः" शत० ब्रा० ११,२,७,२२, "एषावीरोनाम निन्दितब्राह्मणजातिविशेष तत्सम्बन्धिन ऋत्विज" भा०

एषिन् त्रि० इष-णिनि। इच्छौ अभिलाषुके। "यौवने विषयैषिणाम्" "बभूव युद्धं तुमुलं परस्परजयैषिणोः" रघु। स्त्रियां ङीप्।"तदाश्रिता हि या गेया वृद्धिसत्त्वैषिणी भवेत्" भा०व० ८१ अ०।

एष्टव्य त्रि० इषु वाञ्छायाम् तव्य। वाञ्छनीये। "एष्टव्या बहव पुत्रा यद्येकोऽपि गयां व्रजेत्" गु०त० मत्स्यपु०

"तस्मैव ब्राह्मणेनैष्टव्यम्" शत०ब्रा० १,६ २,१७।

एष्टि स्त्री आ+यज आ+इष वा क्तिन्। १अभियजने २अभिकामनायाञ्च।"पितॄणां यश्च दुवभूथ सुहृदेष्टौ"ऋ०६,२१८,। "एष्टौ आयजनेऽभिकामने वा" भा० करणे क्तिन् ३यागसाधनेषु ऋक्सामेषु। "प्रजापतिर्वै विश्वकर्मा सहीदं सर्वमकरोत् मनोगन्धर्वस्तस्य ऋक्सामान्यप्सरस इति मनोह गन्धर्व ऋक्सामैरप्सरोभिर्मिथुनेन सहोत्क्रामैष्टयोनामेत्यृक्सामानि वा एष्टय ऋक्सामैर्ह्याशासते इति नोऽस्त्विति नोऽस्त्विति" शत०ब्रा० ६,४,१,१२। "प्रजापतिर्विश्वकर्मा मनोगन्धर्वस्तस्य ऋक्सामान्यप्सरस एष्टयोनाम" यजु० १८,४२।

एष्य त्रि०इष-कर्मणि ण्यत्। १वाञ्छनीये भावे ण्यत् सुश्रुतोक्ते "तत्र शस्त्रकर्माष्टविधं तद्यथा छेद्यं भेद्यं लेख्यं वेध्यमेष्यमाहार्यं विस्राव्यं सीव्यमित्युक्तेषु अष्टसु मध्ये २शस्त्रकर्मभेदे न०। "एष्येष्वेवयवाभे" सुश्रु०"व्रणोपहत काये वेणुनलनालीशुष्कालाबुस्खेष्वेषु" इत्युक्तेषु तत्कर्माचरणम्। कर्मणि ण्यत्।४एषणकर्मसाध्ये त्रि०। "एष्या नाड्यः समस्याय मृषा उन्मार्गिण्यश्च ये" सुश्रु० एष गतौ ण्यत्। ५गन्तव्ये त्रि०। "गतैष्यदिवसाद्येन गतिर्निघ्नी खषड्हृता" सौर०ता०। इष गतौ दि० इष इच्छायां भ्वा० इष आभीक्ष्ण्ये क्र्या० एभ्य ण्यत्। एष्य तत्तदर्थकर्मणि प्राप्तु प्रेष्य इत्येव प्रेष्यस्तु ईष गतिहिंसादर्शनेषु इत्यस्य ण्यदन्तस्य रूपम् इति भेदः।

एह त्रि० आ+ईह अच्। १सम्यक् चेष्टायुक्ते। एवा एहाः परिमाते दधन्वान्" ऋग० १२,२,२२। आ ईषदर्थे ईह यत्ने करणे क। २क्रोधे निरु०। क्रुद्धस्य सम्यक्कार्याक्षमत्वात् ईषच्चेष्टावत्त्वेन तथात्वम्। [ ङीन्। एही।

एहित त्रि० आ+ईह-त इन्। सम्यक् चेष्टान्विते स्त्रियां याज्ञ०

एहीड न० एहि ईडे इत्युच्यते यस्मिन् कर्मणि मयूर० नि०। एहि ईडे इत्युच्यते यस्मिन् कर्मणि तादृशे कर्मणि एव एहिकटा एहिवाणिजका एहिद्वितीया एहिस्वागता एहिविघसा इत्यादयोऽपि तत्तत्क्रियायाम् स्त्री एहियवं तु तत्कर्मणि न० इति भेद।

इति वाचस्पत्ये एकारादिशब्दार्थसङ्कलनम्।

# ऐ

ऐकारः स्वरवर्णभेदः एदैतौ कण्ठतालव्यावित्युक्तेः कण्ठतालुस्थानयोरुच्चार्य्यः । स च दीर्घः द्विमात्रत्वात् प्लुतस्तु त्रिमात्र इति भेदः । द्विमात्रस्य उदात्तानुदात्तस्वरितभेदैः प्रत्येकमनुनासिकाननुनासिकभेदाभ्याञ्च षड्विध एव प्लुतस्यापीति द्वादशविधः । तन्त्रे तस्य वाचकशब्दा उक्ता यथा ।"ऐलेज्ज्वा भौतिकः कान्ता वायवी मोहिनी विभुः । दक्षा दामोदरः प्रज्ञो धरो विक्षतमुख्यपि । क्षमात्मको जगद्योनिः परः परनिबोधकृत् । ज्ञानामृता कपर्द्दिश्री· पीठेशोऽग्निः समात्मकः । त्रिपुरा लोहिता राज्ञी वाग्भवो भौतिकासनम् । महेश्वरी द्वादशी च विमलश्च सरस्वती । कामकोटो वामजानुः शुभानुः विजयो जटा" । "ऐकारः कोठराजी च मालिन्युपात्तभैरवी" इति च वर्णाभिधा० । मातृकान्यासेऽधरोष्ठे न्यस्यत्वात् तच्छब्दाभिधेयता । तस्य ध्येयरूपं कामधेनुत० उक्तं यथा "ऐकारं परमं दिव्यं महाकुण्डलिनीं स्वयम् । कोटिचन्द्रप्रतीकाशं पञ्चप्राणमयं सदा । ब्रह्मविष्णुमयं वर्णं तथा रुद्रमयं प्रिये ! । सदाशिवमयं वर्णं बिन्दुत्रयसमन्वितम्" । तपरत्वे कारपरत्वे च तत्स्वरूपपरः ।

ऐ अव्य० आ+इण-विच् । १आह्वाने २स्मरणे ३आमन्त्रणे च ४महेश्वरे पु० तस्य सर्वगत्वात्तथात्वम् ।

ऐक वि० एक+स्वार्थे अण् । एकशब्दार्थे ततोभवाद्यर्थे गहा० छ । ऐकीय एकसम्बन्धिनि तद्भवादौ च त्रि० ।

ऐकध्यम् अव्य० एकधा+धास्थाने ध्यमुञ् । एकधेत्यर्थे "ऐकध्यं च श्रपणम्" कात्या० १४,२,२४ । "एतदैकध्यमुच्यते" सुश्रु० । ततः स्वार्थे ष्यञ् । ऐकध्य तदर्थे न० "ऐकध्येन श्रपणम्" उक्तकात्या० सूत्रभाष्ये कर्क ।

ऐकपत्य न० एकपतेर्भावः कर्म वा ष्यञ् । सार्वभौमत्वे "अप्रतिद्वन्द्वतामैकपत्यञ्च सर्वदेहिनाम्" भाग० ७,३,२४ । एकपतौ भवः पत्युत्तरपदत्वात् ण्य । एकपतिभवे त्रि० ।

ऐकपदिक त्रि० एकस्मिन् पदे स्थाने विभक्त्यन्ते वा भवः ठञ् । १एकस्थानभवे २एकविभक्त्यन्तपदभवे च । एकपदाय प्रभवति ठञ् । "अतोऽप्यैकपदिका भवन्ति यथा व्रततिर्दमूना" इत्यादि निरु० 'एकार्थमनेकशब्दमित्येतदुक्तम् अथ यान्यनेकार्थान्येकपदानि तान्यतोऽनुक्रमिष्यामोऽनवगतसंस्कारांश्च निगमान् तदैकपदिकमित्याचक्षते इति निरु० उक्ते अनेकशब्दे एकार्थपरे समासादिवृत्तिरूपे १वाक्यभेदे च ।

ऐकपद्य न० एकपदस्य एकार्थैकविभक्त्यन्तस्य भावः ष्यञ् । समस्तार्थत्वे अनेकपदानामेकार्थबोधकतासम्पादने समासादिभावे । [भावः ।

ऐकभाव्य न० एको भावो यस्य तस्य भावः ष्यञ् । एकस्व-

ऐकमत्य न० एकं मतं येषां तेषां भावः ष्यञ् । तुल्यसम्मतौ "स्वर्गाभिषक्तस्य तमैकमत्यात्" रघुः । "ऐकमत्यं हि नो राजन् ! सर्वेषामेव लक्षये" भा०व० ७अ० । "ऐकमत्यञ्च सर्वस्य जनस्याथ नृप प्रति" भा०ष० १६८ अ० । "सुहृदश्चैकमत्यात्" भा०उ० २२ अ० । "कैकमत्यं महाधियाम्" नीति० । ऐकमत्यमत्रास्ति अच् । ऐकमत्ययुक्ते त्रि० । "गर्हितान्योन्यमतयो भक्तियो युवते सदा । नचैकमत्यः शेषोऽस्ति मन्त्रः सोऽधम उच्यते" रामा० ।

ऐकराज्य न० एकराजो भावः ष्यञ् । चक्रवर्त्तित्वे "यत्सुपर्णो मैकराज्यमजयो हि मा" आश्व०श्रौ० ५,१९,४ ।

ऐकलव्य पुंस्त्री एकलस्य अपत्यं गर्गा० यञ् । एकलूनामकवैगोत्रापत्ये स्त्रियां ङीप् यलोपः ऐकलवी । ऐकलव्यस्य छात्राः कण्वा० ततोऽण् यलोपः । ऐकलव तच्छात्रेषु स्त्रियां ङीप् ।

ऐकशतिक त्रि० एकशतमस्यास्ति ठञ् । एकशतपरिमितद्रव्यस्वामिनि । एवमैकसहस्रिकादयोऽपि तत्तत्सङ्ख्यद्रव्ययुक्ते त्रि० ।

ऐकश्रुत्य न० एका श्रुतिर्यत्र तस्य भावः ष्यञ् ।"उदात्तानुदात्तस्वरितानां परः सन्निकर्ष ऐकश्रुत्यम्" आश्व०श्रौ० १,२९, उक्तोक्ते स्वरभेदे । एकश्रुतिशब्दे विवृतिः ऐकस्वर्य्यमप्यत्र न० ।

ऐकागारिक त्रि० एकमसहायमगारं प्रयोजनमस्य ठञ् । चौरे स्त्रियां ङीप् । "ऐकागारिकवद्भूमौ दूराज्जग्मुरदर्शनम्" भाव "क्षेमचिदैकागारिकेण कृत्लवता" दशकु० ।

ऐकाग्र त्रि० एकाग्र+स्वार्थेऽण् । एकाग्रचित्ते एकतानचित्ते

ऐकाग्र्य न० एकाग्रस्य भावः । अनन्यासक्तचित्तत्वे एकमात्रालम्बिचित्तत्वे एकाग्रताशब्दे विवृतिरुदाहरणञ्च ।

ऐकात्म्य न० एक आत्मा स्वरूपं यस्य तस्य भावः ष्यञ् । १ऐक्ये २एकस्वरूपत्वे । "तथैकात्म्यानुभावानां विकल्परहितः स्वयम्" भाग० ६,८,३१ । "एतेषां श्रेयआशासे उतैकात्म्यं महात्मनि" ७,१२,१९ । "एकात्म्यगमनात् सद्यः कलुषादिमसच्यते" भा०अनु० २७५ । ३अभेदे च

"ऐकात्म्यं वासुदेवस्य मोक्षधानञ्जनस्य च" भा० आ० १अ० । एकश्चात्मा तस्य भाव । ४आत्मन एकत्वे ऐकात्म्यवाद ऐकात्म्यवादी

**ऐकादशिन** त्रि० एकादशानां सङ्घ इनि एकादशिनी आनि-नीवत् स्त्रीत्व वा साधनतयाऽस्त्यस्य अण् । एकादशिनी-साध्यफले । "द्वे त्वेवैते एकादशिन्यावालभेत य एवैका-दशिनेषु कामस्तस्याप्त्यै" शत० ब्रा० १२,२,२,२ तत्रा-लभ्यद्विविधैकादशपशुभेदा देवतासहिता यजु० २६,५८,५६ उक्ता यथा

"आग्नेय कृष्णग्रीव १ सारस्वती मेषी २बभ्रु सौम्य ३ पौष्ण श्यामः४ शितिपृष्ठो बार्हस्पत्य ५ शिल्पोवैश्वदेव६ ऐन्द्रोऽरुणो७ मारुत कल्माष८ ऐन्द्राग्नः संहितो९ऽधो राम सावित्रो १०वारुण कृष्ण एकशितिपात्११पेत्व "५८ "अश्वमेधे श्रुतिरस्ति द्वे त्वेवैते एकादशिन्यावालभेतेति" तयोरेकादशिन्योः पशवस्तद्देवताश्च कण्डिकाद्वयेनो-च्यन्ते तेनेमानि ब्राह्मणवाक्यानि द्रव्यदेवताप्रति-पादकानि नतु मन्त्राः । कृष्णा ग्रीवा यस्य स कृष्णग्रीव० पशुराग्नेय अग्निदेवत्य १, मेषी सारस्वती सरस्वती-देवताका२ बभ्रु पिङ्गलवर्ण पशु सौम्यः सोमदेवत्य ३ श्याम कृष्णवर्ण पौष्ण पूषदेवत्य:४ शिति श्याम पृष्ठ-मस्य स शितिपृष्ठ बार्हस्पत्यः बृहस्पतिदेवत्य ५ शिल्पो विचित्रवर्णो वैश्वदेव विश्वदेवदेवत्यः६ अरुण रक्त ऐन्द्रः इन्द्रदेवत्य ७ कल्माषः कर्बुरो मारुत' मरुद्देवत्य ८ संहित' दृढाङ्ग ऐन्द्राग्न० इन्द्राग्निदेवत्य ९ अधोरामः अधोदेशे श्वेत सावित्रः सवितृदेवत्यः१० एक शिति श्वेत पादो-यस्य स एकशितिपात् एकपदे श्वेतोऽन्यत्र कृष्ण पेत्वः पतनशीलो वेगवान् पशुः वारुण वरुणदेवत्य ११ । एव मेकादश"वेददी० । "आग्नेयोऽजोऽरुणो रोहिताञ्जिरन-ड्वानधोरामौ सावित्रौ पौष्णौ रजतनाभौ वैश्वदेवौ पिशङ्गौ तूपरौ मारुत कल्माष आग्नेय कृष्णोऽज सारस्वती मेषी वारुण पेत्व "५६ । "द्वितीयैकादशिनीपशुदेवतामाह । रोहितो रक्तोऽञ्जिरञ्जकौ यस्य सोऽनड्वान् वृषभोऽनीक वतेऽग्नये आलभ्यः अनीक मुख सैन्य वा यस्य सोऽनीक वान् तस्मै १अधोरामौ अधोभागे श्वेतौ द्वौ पशू सावित्रौ सवितृदेवतौ२,३ । रजतवर्णा नाभिर्ययोस्तौ रजतनाभौ द्वौ पौष्णौ पूषदेवत्यौ४,५ "पिशङ्गौ पीतौ तूपरौ शृङ्गरहितौ वैश्व देवौ विश्वदेवदेवत्यौ६,७ कल्माष कर्बुरो मारुत ८ कृष्णः छागोऽग्नोमेष, आग्नेय, आग्निदेवता ९ मेषी सारस्वती१०

मेत्व वेगवान् वरुणदेवता ११ एवमेकादश" इति वेददीप०

**ऐकाधिकरण्य** न० एकाधिकरणस्य भाव ष्यञ् । एकाधि करणवृत्तित्वे सामानाधिकरण्ये । "अथवा हेतुमन्नि-ष्ठविरहाप्रतियोगिना । साध्येन हेतोरैकाधिकरण्य व्याप्तिरुच्यते" भाषा० । तुल्यविभक्तिकपदयो स्वोप-स्थाप्यार्थयोरभेदबोधकत्वे च ।

**ऐकान्तिक** त्रि० एकान्तमवश्य भावी ठञ् । १अवश्यभव्ये । "सुखस्यैकान्तिकस्य च" गीता । "ऐकान्तिकमात्यन्तिक-मुभयमाप्नोति कैवल्यम्" सा०का० ऐकान्तिकमवश्यं भावि" कौ० । एकान्त' भूतः स्वसत्तया व्यापी ठञ् । २एकान्तस्य स्वसत्तया व्यापके "तत्त्वमैकान्तिक ब्रूहि" भाग० २,२, स्त्रियां ङीप् । "ऐकान्तिकी हरेर्भक्तिरुत्-पातायैव कल्पते" वरा०पु० ।

**ऐकान्यिक** त्रि० एकमन्यत् विपरीत' कृतमध्ययनेऽस्य । "कर्माध्ययने वृत्तम्" पा० ठक् । यस्याध्ययने प्रवृत्तस्य परीक्षाकाले विपरीतोच्चारणरूप स्खलनमेक जातम् तादृशे कुपाठके छात्रे ।

**ऐकायन** पुं स्त्री एकस्य तन्नाम्नोऽमुनेर्गोत्रापत्यम् नडा० फक् । एकस्यर्षेर्गोत्रापत्ये स्त्रियां टाप् ।

**ऐकार्थ्य** न० एकार्थस्य भावः ष्यञ् । एकयत्ना विशिष्टैका-र्थोपस्थापने एकार्थीभावे । १एकप्रयोजने च । "२प्रम-नन्येनैकार्थ्यं सन्धि" सि०कौ० ।

**ऐकाह्निक** त्रि० एकाहमधीष्टोभृतोभूतोभावी वा ठञ् । १ए-काहसाध्ये यागादौ स्त्रियां ङीप् । ततोऽन्यान्यैका-ह्निकानि" आश्व० श्रौ० ८,१६,१६, "ताभ्यां पूर्व्वे ऐकाह्निके" २,१०,१०, "अन्त्यानामैकाह्निकानामुत्त मान्" २एकाहव्यापके ज्वरादौ "वसुरस्रोत्तरे तीरे द्विपदोनाम वानर । ऐकाह्निकज्वर हन्ति तस्य नामानु-कीर्त्तनात्" । ऐकाह्निकज्वरश्च एकाहान्तरे एकदिनं व्यापकोज्वरः इति वैद्यके प्रसिद्धम् । एकाहभृते ३दासे एकाहमधीष्टे सत्कृत्य व्यापारिते ४अध्यापके स्वसत्तया एकाह व्याप्यव्यापके ५ एकाहभाविनि उत्सवादौ च । एकाहसाध्ययागभेद एकाह तत्र दक्षिणा ठञ् ङीप् । ६एकाहसाध्ययागदक्षिणायां स्त्री ।

**ऐक्य** न० एकस्य भाव ष्यञ् । १एकत्वे २अभिन्नत्वे ३एकार्थी भावे च "ऐक्य सोऽन्यये" मुग्ध० "ऐक्यसंयोगनानात्व समवायविशारद" भा०स०५अ० । ४ऐकमत्ये सौहार्दे च "तेषां द्वयोर्द्वयोरैक्य बिभेदे न कथञ्चन" रघु । एकस्या

ठक् । १इतिहासप्रमाणज्ञे २तद्वेत्तरि ३तदध्येतरि च ।

ऐतिह्य न० इतिह पारम्पर्योपदेशः अनिर्दिष्टप्रवक्तृकोपदेश इति यावत् स्वार्थे ष्यञ् । पारम्पर्योपदेशे । यथात्र वटे यक्षः प्रतिवसतीत्यादि परम्परोपदेशमात्रम् न तु केनाप्येतदुपलब्धम् कथितम् । अष्टप्रमाणवादिनः पौराणिका इदं प्रमाणान्तरमङ्गीचक्रुः तदेतन्मत वा० कौ० निराकृतम् यथा "यच्चानिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमात्रम् इति प्रोचुर्वृद्धा इत्यैतिह्यं यथा इह वटे यक्षः प्रतिवसतीति न तत् प्रमाणम् अनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात् आप्तप्रवक्तृकत्वनिश्चये त्वागम इत्युपपन्नं त्रिविधम् प्रमाणमिति" "श्रुति प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्" ऐतरे० "ऐतिह्यमनुमानञ्च प्रत्यक्षमपि चागमम् । ये हि सम्यक् परीक्षन्ते कुतस्तेषामबुद्धिता" रामा० । [साधौ

ऐदंयुगीन त्रि० इदंयुगे साधु प्रतियुगा० खञ् । इद युग-

ऐनस न० एन एव प्रज्ञा० स्वार्थे अण् । पापे ।

ऐन्दव न० इन्दुर्देवताऽस्य । १मृगशिरोनक्षत्रे २इन्दुदेवताके हविरादौ त्रि० । तस्येदम् अण् । ३चान्द्रे मासि पु० "ऐन्दवस्तिथिभिस्तद्वत् सङ्क्रान्त्या सौर उच्यते" सू० सि० । ४चन्द्रसम्बन्धिनि त्रि० । इन्दुः इन्दुलोकप्राप्तिः प्रयोजनमस्य अण् । ५चान्द्रायणे व्रतभेदे । "सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम्" मनुः । "कर्त्तव्यमैन्दवद्वयम्" इति तद्व्रतस्य यथा चन्द्रलोकप्राप्तिफलकत्वं तथा चान्द्रायणशब्दे वक्ष्यते । ६सोमराजाम् स्त्री ङीप् ।

ऐन्द्र त्रि० इन्द्रो देवताऽस्य अण् । इन्द्रदेवताके १हविरादौ "ऐन्द्रं दधि ऐन्द्रं पयः" श्रुतिः । २ऋग्विशेषे स्त्री । "ऐन्द्रा गार्हपत्यमुपतिष्ठते" श्रुतिः । सा च ऋक् "कदाचन स्तरीरसीत्यादि" । ३तद्देवताके ज्येष्ठानक्षत्रे न० "ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा" मा० त० पुरा० । तस्येदम् अण् । ४इन्द्रसम्बन्धिनि त्रि० "मदं हि राज्यं पदमैन्द्रमाहुः" "ऐन्द्रं पदं भूमिगतोऽपि भुङ्क्ते" रघु । ऐन्द्रं स्थानमुपासीना ब्रह्मभूता हि ते सदा" "ऐन्द्रस्थानमभिप्रेप्सुर्यशश्चाक्षयमव्ययम्" मनुः । ५तच्छक्तिरूपदेवीमूर्त्तिभेदे स्त्री ङीप् । "ऐन्द्रीतमसुरेन्द्रघ्नम्" देवीमा० तन्त्रोक्ते भूतशुद्ध्यङ्गे ६धारणाभेदे "ऐन्द्रा धारणया देह स्थिरीकृत्येति भूतशुद्धौ" रघु० । तत्र भवः अण् । ७अर्जुने ८वालिवानरे च पु० तयोस्तदंशोद्भवत्वात् ।

अपत्ये तु इञ् । ऐन्द्रिरित्येव ९ष्यमाह्र्के म० राजनि० । "ऐन्द्रे शुभे च नक्षत्रे चरेद्यदि बृहस्पतिः । ऐन्द्रः स सम्वत्सरः स स्यात् सर्वभूताधिवहदः" विष्णु ध० उक्ते द्वादशवर्षमध्ये १०सम्वत्सरभेदे पु० । तत्फलञ्च "ऐन्द्रे जातिकुलश्रेणी श्रेष्ठा नृपाः सर्वधर्मज्ञाः । पीड्यन्ते सर्वधान्यानि हित्वा कङ्गुसमोद्भवानि" मत्स्य० त० ।

ऐन्द्रजालिक त्रि० इन्द्रजालेन चरति ठक् । मायाविनि (बाजिकर) जटाधर ।

ऐन्द्रद्युम्न न० इन्द्रद्युम्नमधिकृत्य कृतमाख्यानमण् । इन्द्रद्युम्नन्पाधिकारेण कृते आख्याने "मौहिद्रौणिकमाख्यानमैन्द्रद्युम्नं तथैव च" भा० आ० १प० । इदमाख्यानं मौहिद्रौणिकाख्यानात् परं मुद्रितभारते न दृश्यते कश्चित् पुस्तकान्तरेऽस्ति ।

ऐन्द्रमहिक त्रि० इन्द्रमहः प्रयोजनं कारणं फलं वास्य ठञ् । १ऐन्द्रमहकारणके २तत्फलके च ।

ऐन्द्रवायव त्रि० इन्द्रश्च वायुश्च इन्द्रवायू वायुयन्द्रयुक्तत्वात् देवताद्वन्द्वेऽपि नानङ् तौ देवते अस्य अण् । इन्द्रवायुदेवताके हविरादौ । "ऐन्द्रवायवपात्रं तदस्य द्वितीयम्" शत० ब्रा० ४,१,५,१६ "यदैन्द्रवायवाग्रान् प्रातःसवने" ४,४,१,१७ ।

ऐन्द्रशर्म्मि पु स्त्री इन्द्रशर्म्मणोऽपत्य बाह्वा० इञ्–टिलोपश्च । इन्द्रशर्म्मनामकस्यापत्ये स्त्रियां ङीप् ।

ऐन्द्रहव त्रि० ऐन्द्रहव्यस्य छात्रः कण्वा० अण् यञो लुक् । ऐन्द्रहव्यछात्रे । इन्द्रं हूयन्ते इन्द्रहव्यसाधनं हव्यम् ।

ऐन्द्राग्न त्रि० इन्द्राग्नी देवते अस्य अण् । इन्द्राग्निदेवताके हविरादौ । "एता ऐन्द्राग्ना द्विरूपा अग्नीषोमीया" यजु० २४,८ "ऐन्द्राग्नः शुक्लितोऽधोरामः" २९,५८ । "ऐन्द्राग्नेन विधानेन" भा० अनु० ६० अ० ।

ऐन्द्रापौष्ण त्रि० इन्द्रश्च पूषा च द्वन्द्वे आनङ् इन्द्रापूषणौ देवते अस्य अण् उपधाऽतोलोपः । इन्द्रापूषदेवताके हविरादौ । "ऐन्द्रापौष्णं चरुमिति" शत० ब्रा० ४,२,५,५ । "आग्नापौष्णं ऐन्द्रापौष्ण" कात्या० १५,३,१४ एवम् ऐन्द्रामारुतैन्द्रावार्हस्पत्यादयोऽपि इन्द्रसहित तत्तद्देवताके हविरादौ त्रि० ।

ऐन्द्रायण पु० इन्द्रस्यापत्यम् बा० फक् । इन्द्रापत्ये ततः चतुरर्थ्यां अरीह० वुञ् । ऐन्द्रायणक तेन निर्वृत्तादौ त्रि०

ऐन्द्रि पु० इन्द्रस्यापत्यम् इञ् । १जयन्ते २अर्जुने ३वालिवानरे ४काके च" मेदिनि । तत्र काके । "ऐन्द्रिः किल

मनुष्ये । इलानामन्नानां समूहः अण् । ३अन्नसमूहे न० । इलायाः पृथिव्या इदम् अण् । ४पृथिवीजाते अन्ने च । "ये पथां पथि रक्षस ऐलबृदा आयुर्युधः" यजु० १६, ६०, ऐलमन्नसमूहमन्नं वा बिभ्रति ऐलभृत परोक्षवृत्त्या भतकारयोर्बदकारौ । डलयोरैक्यात् ऐडशब्दोऽप्युक्तार्थेषु

ऐलवालुक एलवालुकमेव स्वार्थे अण् । एलवालुके (वालुका) सुगन्धिद्रव्ये शब्दरत्ना० ।

ऐलविल म० राजभेदे । "भरतस्यापि दौष्मन्तेर्लेभे भूमिशया दशम् । तस्माल्लेभे च धर्म्मज्ञो राजच्चैलविलस्तथा । ततस्त्वैलविलाल्लेभे" भा० शा० १९६ अ० । अलिविद्यावशवर्त्तने । २कुवेरे च । "वरासनगतं तत्र यथैवैलविलं तथा" हरिवं० १७७अ० । ऐडविडशब्दे व्युत्पत्तिः ।

ऐलाक त्रि० ऐलाक्यस्य छात्रः कण्वा० अण् यञोलोपः । ऐलाक्यछात्रे ।

ऐलिक पु० इलिन्या भव ठक् तु वत् । इलिन्यपत्ये दुष्मन्तादिपितामहे तंसौ राजनि "इलिनीनाम तस्यासीत् कन्या वै जनमेजय ।। ब्रह्मवादिन्यधि स्त्री च तंसुस्तामभ्यगच्छत । तंसो सुरोधो राजर्षिर्धर्म्मनेत्रः प्रतापवान् । ब्रह्मवादी पराक्रान्तस्तस्य भार्य्योपदानवी । उपदानवी सुतान् लेभे चतुरस्त्वैलिकात्मजान् । दुष्मन्तमथ सुष्मन्तं प्रवीरमनघं तथा" हरिवं० ३२

ऐलेय पु० इलाया अपत्यम् ढक् । १भौमे मङ्गले इलाया भवः ढक् । २एलवालुके गन्धद्रव्ये न० शिवादौ इलाशब्दस्तु मातृपुत्रोभयपरत्वेन ततोऽप्येवेति भेदः ।

ऐश त्रि० ईशस्येदम् अण् । ईशसम्बन्धिनि "सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम्" रघु "यो लोकवीरसमितौ धनुरैशमुग्रम्" भाग० ८,१०,६ । एवमैशानैश्वरादयोऽप्यत्र स्त्रियां ङीप् । ऐशानी "पूर्वोत्तरयोरन्तरालदिशि "ऐशानीक्रमतो रेखोत्तरागा देवमण्डले । नैर्ऋतीक्रमतोरेखा आगता पितृमण्डले" स्मृतिः । "ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने" ति० त० वर्षकृत्यम् । ईश्वरसम्बन्धिनि त्रि० "पश्य मे योगमैश्वरम्" गीता "ऐश्वरं धनुरभाजि यत्त्वया" रघु० २दुर्गायां स्त्री ।

ऐश्वर्य्य न० ईश्वरस्य भाव ष्यञ् । १प्रभुत्वे "तत्रैव निधायैश्वर्य्यं प्रतिपन्नाव राघव" रघु० । इच्छानभिघातात्मके २ईश्वरधर्म्मे ३अणिमादौ च "ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः" इति पुरा० । ऐश्वर्य्यञ्च द्विविधं नित्यमित्यैश्वरानुध्यानजन्यं योगजं वा तत्र नित्यैश्वर्य्यमीश्वरस्य स्वाभाविकम् "स्वाम्यं यस्य मितं जगत्सु" आत्मत० । योगजञ्च बुद्धेः सात्त्विकगुणभेदः यथोक्तम् "अध्यवसायो बुद्धिर्धर्म्मो ज्ञानं विराग ऐश्वर्य्यम् । सात्त्विकमेतद्रूपम् तामसमस्माद्विपर्य्यस्तम्" सा० का० । व्याख्यातञ्चेदं वाचस्पतिना "ऐश्वर्य्यमपि बुद्धिधर्म्मः यतोऽणिमादिप्रादुर्भावः । तत्राणिमा अणुभावः यतः शिलामपि प्रविशति । लघिमा लघुभावः यतः सूर्य्यमरीचीनालम्ब्य सूर्य्यलोकं याति । महिमा महतोभावः यतोमहान् संभवति । प्राप्तिरङ्गुल्यग्रेण स्पृशति चन्द्रम् । प्राकाम्यमिच्छानभिघातो यतोभूमावुन्मज्जति निमज्जति यथोदके । वशित्वं भूतभौतिकं वशीभवत्यवश्यम् । ईशित्वं भूतभौतिकानां प्रभवस्थितिमीष्टे यच्च कामावसायित्वं सत्यसङ्कल्पता यथास्य सङ्कल्पो भवति भूतेषु तथैव भूतानि भवन्ति । अन्येषां निश्चया निश्चेतव्यमनुविधीयन्ते योगिनस्तु निश्चेतव्याः पदार्था निश्चयमिति चत्वारः सात्त्विका बुद्धिधर्म्माः" ।

पातञ्जलसूत्रभाष्यविवरणेषु कारणफलसहितं तस्य स्वरूपादिकं दर्शितं यथा । "कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम्" ४१ सू० ।
"यत्र कायस्तत्राकाशं तस्यावकाशदानात् कायस्य तेन सम्बन्धप्राप्तिस्तत्र कृतसंयमो जित्वा तत्सम्बन्धं लघुषु तूलादिष्वापरमाणुभ्यः समापत्तिं लब्ध्वा जितसम्बन्धो लघुर्भवति लघुत्वाच्च जले पादाभ्यां विहरति ततस्तूर्णनाभितन्तुमात्रे विहृत्य रश्मिषु विहरति ततो यथेष्टमाकाशगतिरस्य भवतीति" भा० ४१ ।
"कायाकाशसम्बन्धसंयमाद्वा लघुनि वा तूलादौ कृतसंयमात्समापत्तिं चेतसस्तन्मयतां लब्ध्वेति द्विविधं क्रममाह जल इति" वि० ४१ ।
"बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः" सू० "शरीराद्बहिर्मनसोवृत्तिलाभो विदेहा नाम धारणा सा यदि शरीरप्रतिष्ठस्य मनसोबहिर्वृत्तिमात्रेण भवति सा कल्पितेत्युच्यते या तु शरीरनिरपेक्षा बहिर्भूतस्यैव मनसो बहिर्वृत्तिः सा खल्वकल्पिता । तत्र कल्पितया साधयन्त्यकल्पितां महाविदेहामिति यया परशरीराण्याविशन्ति योगिनः ततश्च धारणातः प्रकाशात्मनोबुद्धिसत्त्वस्य यदावरणं क्लेशकर्म्मविपाकत्रयं रजस्तमोमूलं तस्य च क्षयोभवति" भा० ४२ ।
"अपरमपि परशरीरावेशहेतुं संयमं क्लेशकर्म्मविपाकक्षयहेतुं विदेहामाह शरीरादिति । अकल्पिताया

ये त्वाहुः "सामान्यविशेषाश्रयो द्रव्यमिति" तान् प्रत्याह सामान्यविशेषसमुदायोऽत्र दर्शने द्रव्यम् येऽपि तदाश्रयो द्रव्यमास्थिषत तैरपि तत्समुदायोऽनुभूयमानो नापह्नोतव्यः नच तदपह्नवे तदाधारो द्रव्यमिति भवति तस्मात्तदेवास्तु द्रव्यं न तु ताभ्यां, तत्समुदायाच्च तदाधारमपरद्रव्यमुपलभामहे याभ्यो धारासमुदायादिनश्च तदाधारमपरं पृथग्विधं विस्तरं समूहो द्रव्यमित्युक्तम्। तत्र समूहमात्रं द्रव्यमिति भ्रमापनुत्तये समूहविशेषोद्रव्यमिति निर्द्धारयितुं समूहप्रकारानाह। द्विष्ठोहीति यस्मादेवं तस्माच्च समूहमात्रं द्रव्यमित्यर्थः। द्वाभ्यां प्रकाराभ्यां तिष्ठतीति द्विष्ठः। एकं प्रकारमाह। प्रत्यस्तमितेति प्रत्यस्तमितोभेदो येषामवयवानां ते तथोक्ताः प्रत्यस्तमितभेदा अवयवा यस्य स तथोक्तः एतदुक्तं भवति शरीरवृक्षयूथवनशब्देभ्यः समूहः प्रतीयमानोऽप्रतीतावयवभेदस्तदुपादानशब्दाप्रयोगात् समूह एकोऽवगम्यते इतियुतायुतसिद्धावयवत्वेन चेतनाचेतनत्वेनचोदाहरणचतुष्टयम्। युतायुतसिद्धावयवत्वञ्चाग्रे वक्ष्यते। द्वितीयं प्रकारमाह। शब्देनोपात्तभेदावयवानुगतः समूहः उभये देवमनुष्या इति देवमनुष्याः इति हि शब्देनोभयशब्दवाच्यस्य समूहस्य भागौ भिधायुपात्तौ। ननूभयशब्दात्तावदवयवभेदो न प्रतीयते तत्कथमुपात्त भेदावयवानुगत इत्यत आह। ताभ्यां भागाभ्यामेव समूहोऽभिधीयते उभयशब्देन भागद्वयवाचिशब्दसहितेन समूहोवाच्यः वाक्यस्य वाक्यार्थवाचकत्वादिति भावः। पुनर्द्वैविध्यमाह स चेति। भेदेन चाभेदेन च विवक्षितमाह। आम्राणां वनं ब्राह्मणानां समूह इति। भेद एव षष्ठ्युक्ता। यथा गर्गाणां गौरिति। अभेदविवक्षितमाह। आम्रवनम्। आम्राश्च ते वनञ्चेति समूहसमूहिनोरभेदं विवक्षित्वा सामानाधिकरण्यमित्यर्थः। द्विधान्तरमाह। स पुनर्द्विविधः युतसिद्धावयव समूह युतसिद्धाः पृथक्सिद्धाः सान्तराला अवयवा यस्य स तथोक्तः यूथं वनमिति सान्तराला हि तदवयवा वृक्षाश्च गावश्चायुतसिद्धावयवश्च समूहो शरीरं परमाणुरिति निरन्तरा हि तदवयवाः सामान्यविशेषा वा परमाणावेवेति। एतेषु समूहेषु द्रव्यभूतं समूहं निर्धारयति अयुतसिद्धेति तदेवं शास्त्रकृत् स्वयं व्युत्पाद्य प्रकृतमुपसंहरति एतत्स्वरूपमित्युक्तमिति। तृतीयं रूपं विवृणु सूक्ष्मति अथेति। उपसमाह। तन्मात्रमिति। तस्यैकोऽवयवः परिणामभेदः परमाणुसामान्य मूर्त्ति। शब्दादयोविशेषा तदात्मानः अयुतसिद्धा निरन्तरावयवाः सामान्यविशेषात्मभेदेष्वनुगत समुदायः यथा च परमाणुः सूक्ष्मं रूपम् एवं सर्वतन्मात्राणि सूक्ष्म रूपमिति उपसंहरति एतदिति। अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीलागुणाः कार्य्यस्वभावमनुपतितुमनुगन्तुं शीलं येषां ते तथोक्ता अन्वयशब्देनोक्ताः। अथैषां पञ्चम रूपमर्थवत्त्वं विवृणोति भोगेति। मन्येवमपि सन्तु गुणा अर्थवन्तस्तत्कार्य्याणां तु कुतोऽर्थवत्त्वमित्यत आह। गुणा इति। भौतिका गोघटादय। तदेवं संयमविषयमुक्त्वा संयमं तत् फलञ्चाह तेष्विति। भूतप्रकृतयो भूतस्वभावाः" ४२ वि० ॥

"ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्म्मानभिघातश्च" सू० "तत्राऽणिमा भवत्यणुः। लघिमा लघुर्भवति। महिमा महान् भवति। प्राप्तिरङ्गुल्यग्रेणापि स्पृशति चन्द्रमसम्। प्राकाम्यमिच्छानभिघातः भूमावुन्मज्जति मज्जति यथोदके। वशित्वं भूतभौतिकेषु वशीभवत्यवश्यश्चान्येषाम् ईशित्वं तेषां प्रभवाप्ययव्यूहानामीष्टे यत्र कामावसायित्वं सत्यसङ्कल्पता यथासङ्कल्पस्तथा भूतप्रकृतीनामवस्थानम्। न च शक्तोऽपि पदार्थविपर्य्यासं करोति, कस्मात् अन्यस्य यत्र कामावसायिनः पूर्वसिद्धस्य तथा भूतेषु सङ्कल्पादिति। एतान्यष्टावैश्वर्य्याणि। कायसम्पद्वक्ष्यमाणा तद्धर्म्मानभिघातश्च पृथ्वी मूर्त्त्या न निरुणद्धि योगिनः, शरीरादिक्रियां शिलामप्यनुविशतीति, नापः स्निग्धाः क्लेदयन्ति, नाग्निरुष्णो दहति न वायुः प्रणामी वहति अनावरणात्मकेऽप्याकाशे भवत्यावृतकायः सिद्धानामप्यदृश्योभवति" भा०।

"सङ्कल्पानुविधाने भूतानां किं योगिनः सिध्यतीत्यत आह "स्थूलसंयमविजयात्तस्य" सिद्धयो भवन्तीत्याह। तत्राणिमा महानपि भवत्यणुः। लघिमा महानपि लघुर्भूत्वेषीकातूलवदाकाशे विहरति। गरिमाऽल्पोऽपि नागनगगगनपरिमाणो भवति। प्राप्तिः सर्वे भावाः सन्निहिता भवन्ति योगिनस्तद्यथा भूमिष्ठ एवाङ्गुल्यग्रेण स्पृशति चन्द्रमसम्। स्वरूपसंयमविजयात् सिद्धिमाह। प्राकाम्यमिच्छानभिघातो ह्यस्य रूपं भूतस्वरूपं मूर्त्त्यादिभिर्नाभिहन्यते भूमावुन्मज्जति मज्जति च यथोदके। सूक्ष्मविषयसंयमजयात् सिद्धिमाह वशित्वं भूतानि पृथिव्यादीनि भौतिकानि गोघटादीनि तेषु वशी स्वतन्त्रोभवतीत्। तेषां स्ववशं तत्कारणतन्मात्रपृथिव्यादिपरमाणुवशीकारात्तत्कार्य्यं वशीकारेण यानि

९२अ० । अस्य च यथा ययातिर्नाशमहस्तथा कौशी-नरिशब्दे दर्शितः । तत्र भवच्छब्देनैतस्यापि परामर्शात्

**औषध** न० ओषधेरिदम् "ओषधेरजातौ" पा० अण् । ओषधि-जाते १अन्नादौ २रोगनाशके द्रव्यभेदे । स्वार्थेऽण् । ३ओषधौ च । औषधशब्दार्थश्च सुश्रुते दर्शितः "एवमेतत् पुरुषो व्याधिरौषधम् क्रियाकाल इति चतुष्टय व्याख्यातम्" इत्युक्त्वा "औषधग्रहणात् द्रव्यगुणरसवीर्य्यविपाकप्रभावानामादेश" इत्युक्तम् । तेन द्रव्यमात्रसाध्यस्यौषधत्वम् । अतएव तैलघृतजलविभवविशेषाणामप्यौषधत्वम् । "रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् । ततः कर्म्म भिषक् पश्चात् ज्ञानपूर्व्वं समाचरेत्" चक्रद० परिपाटीसङ्का रोगभेदेन औषधविशेषा उक्तास्तत एव तेऽधिगम्या । तदुपयोगिभूम्यादिकं सुश्रुते दर्शितं यथा "अथातो भूमिप्रविभागविज्ञानीयमध्यायं व्याख्यास्यामः श्वभ्रशर्कराश्मविषमवल्मीकश्मशानाघातनदेवतायतनसिकताभिरनुपहतामनूषरामभङ्गुरामदूरोदकां स्निग्धां प्ररोहवतीं मृद्वीं स्थिरां समां कृष्णां गौरीं लोहितां वा भूमिमौषधार्थं परीक्षेत तस्यां जातमपि कृमिविषशस्त्रातपपवनदहनतोयसम्बाधमार्गैरनुपहतमेकरसं पुष्टं पृथ्ववगाढमूलमुदीच्यां चौषधमाददीतेत्यौषधभूमिपरीक्षाविशेषः सामान्य । विशेषतस्तु अश्मवती स्थिरा गुर्व्वी श्यामा कृष्णा वा स्थूलवृक्षशस्यप्राया स्वगुणभूयिष्ठा । स्निग्धा शीतला आसन्नोदका स्निग्धशस्यतृणकोमलवृक्षप्राया शुक्लाऽम्बुगुणभूयिष्ठा । नानावर्णा लघ्वश्मवती प्रविरलाल्पपाण्डुवृक्षप्ररोहाऽग्निगुणभूयिष्ठा । रूक्षा भस्मरासभवर्णा तनुवृक्षकोटराल्परसवृक्षप्रायाऽनिलगुणभूयिष्ठा । मृद्वी समा श्वभ्रवत्यव्यक्तरसजला सर्वतोऽसारवृक्षा महापर्वतवृक्षप्राया श्यामा चाकाशगुणभूयिष्ठा । तत्र केचिदाहुराचार्य्याः । प्रावृड्वर्षाशरद्धेमन्तवसन्तग्रीष्मेषु यथासंख्यं मूलपत्रत्वक्क्षीरसारफलान्याददीतेति तत्तु न सम्यक् कस्मात् सौम्याग्नेयत्वाज्जगतः । सौम्यान्यौषधानि सौम्येषु ऋतुष्वाददीताग्नेयान्याग्नेयेषु एवमव्यापन्नगुणानि भवन्ति । सौम्यान्यौषधानि सौम्येषु ऋतुषु गृहीतानि सोमगुणभूयिष्ठायां भूमौ जातान्यतिमधुरस्निग्धशीतानि जायन्ते । एतेन शेषं व्याख्यातम् । तत्र पृथिव्यम्बुगुणभूयिष्ठायां भूमौ जातानि विरेचनद्रव्याण्याददीताग्न्याकाशमारुतगुणभूयिष्ठायां वमनद्रव्याणि । उभयगुणभूयिष्ठायामुभयतोभागानि । आकाशगुणभूयिष्ठायां संशमनान्येवं बलवत्तराणि भवन्ति । सर्वाण्येव चाभिनवान्यन्यत्र मधुघृतगुडपिप्पलीविडङ्गेभ्य । सर्वाण्येव सक्षीराणि वीर्य्यवन्ति तेषामसम्पत्तावनतिक्रान्तसंवत्सराण्याददीतेति । भवन्ति चात्र । गोपालास्तापसा व्याधा ये चान्ये वनचारिणः । मूलाहाराश्च ये तेभ्यो भेषजव्यक्तिरिष्यते । सर्वावयवसाध्येषु पलाशलवणादिषु । व्यवस्थितो न कालोऽस्ति तत्र सर्वो विधीयते । गन्धवर्णरसोपेता षड्विधा भूमिरिष्यते । तस्माद्भूमिस्वभावेन बीजिनः षड्रसैर्युता । अव्यक्तः किल तोयस्य रसो नित्यं विनिश्चितः । रस एवाव्यक्तो व्यक्तो भूमिरसाद्भवेत् । सर्वलक्षणसम्पन्ना भूमिः साधारणा स्मृता । द्रव्याणि यत्र तत्रैव तद्गुणानि विशेषतः । विगन्धेनापरामृष्टमविपन्नं रसादिभिः । नवं द्रव्यं पुराणं वा ग्राह्यमेव विनिर्दिशेत् । विडङ्गं पिप्पली क्षौद्रं सर्पिर्वाप्यनवं हितम् । शेषमन्यत्त्वभिनवं गृह्णीयाद्दोषवर्जितम् । जङ्गमानां वयःस्थानां रक्तरोमनखादिकम् । क्षीरमूत्रपुरीषाणि जीर्णाहारेषु संहरेत् । प्लुतान्यङ्कवण्डफलकशङ्कुविन्यस्तभेषजम् । प्रशस्तायां दिशि शुचौ भेषजागारमिष्यते" ।

औषधग्रहणे परिभाषादिकमुक्तं भावप्र० यथा "प्रशस्तदेशे सञ्जातं प्रशस्तेऽहनि चोद्धृतम् । अल्पमात्रं बहुगुणं गन्धवर्णरसान्वितम् । दोषघ्नमग्लानिकरमविकारि च विकारि यत् । समीक्ष्य काले दत्तञ्च भेषजं स्याद्गुणावहम् । आग्नेया विन्ध्यशैलाद्या सौम्यो हिमगिरिः स्मृतः । अतस्तदौषधानि स्युरनुरूपाणि हेतुभिः । आग्नेयः अधिकाग्न्यंशः सौम्यः अधिकसोमांशः । औषधस्य एवौषधानि । अत्र स्वार्थे अण् । अनुरूपाणि सदृशानि । अन्येष्वपि प्ररोहन्ति वनेषूपवनेषु च । गृह्णीयात्तानि सुमनाः शुचिः प्रातः सुवासरे । आदित्यसम्मुखो मौनी नमस्कृत्य शिवं हृदि । साधारणधराद्रव्यं गृह्णीयादुत्तराश्रितम् । साधारणधराद्रव्यम् सर्वभूमिभवं द्रव्यम् । उत्तराश्रितं स्थानात् उत्तरदिग्भवम् । वल्मीककुत्सितानूपश्मशानोषरमार्गजाः । जन्तुवह्निहिमव्याप्ता नौषध्यः कार्यसाधिकाः । शरद्यखिलकार्य्यार्थं ग्राह्यं सरसमौषधम् । विरेकवमनार्थन्तु वसन्तान्ते समाहरेत् । वसन्तान्तः वसन्तमध्ये समाहरेत् संगृह्णीयात् । अतिस्थूलजटा याः स्युस्तासां ग्राह्यास्त्वचो भृशम् । गृह्णीयात् सूक्ष्ममूलानि सकलान्यपि बुद्धिमान् । अन्यच्च । महान्ति येषां मूलानि

त्यज्यते। अथ प्रतिनिधिः। चित्रकाभावतो दन्ती क्षारं शिखरिजोऽथवा। अभावे धन्वयासस्य पुत्रेप्रव्या दुरालभा। शिखरी अपामार्गः। तगरस्याप्यभावे तु कुष्ठं दद्याद्विचक्षणः। मूर्वाभावे त्वचो ग्राह्या जिङ्गिन्याः प्रभवा बुधैः। अहिंस्राया अभावे तु मानकन्दः प्रकीर्त्तितः। लक्ष्मणाया अभावे तु नीलकण्ठशिखा मता। नीलकण्ठशिखा मयूरशिखा। वकुलाभावतो देयं कह्लारोत्पलपङ्कजम्। नीलोत्पलस्याभावे तु कुमुदं देयमिष्यते। जातिपुष्पं न यत्रास्ति लवङ्गं तत्र दीयते। अर्कपर्णादिपयसो ह्यभावे रसो मतः। पौष्कराभावतः कुष्ठं तथा लाङ्गल्यभावतः। स्थौणेयकस्याभावे तु भिषग्भिर्दीयतेऽगदः। चविकागजपिप्पल्यौ पिप्पलीमूलवत् स्मृते। अभावे सोमराज्यास्तु प्रपुन्नाटफलं मतम्। यदि न स्याद्दारुनिशा तदा देया निशा बुधैः। सोमराजी शाकुची। प्रपुन्नाटफलं चक्रमर्द्दफलम्। दारुनिशा दारुहरिद्रा निशा हरिद्रा। रसाञ्जनस्याभावे तु सम्यग्दार्वी प्रयुज्यते। सौराष्ट्र्यभावतो देया स्फटिका तद्गुणा नरैः। सौराष्ट्री (सोरटीमाटी) इति लोके। स्फटिका (फटिकारी) इति लोके। तालीशपत्रकाभावे स्वर्णताली प्रशस्यते। भार्ग्यभावे तु तालीशं कण्टकारीजटाऽथवा। रुचकाभावतो दद्याल्लवणं पांशुपूर्वकम्। अभावे मधुयष्ट्यास्तु धातकीं च प्रयोजयेत्। रुचकं (बीहार) इति लोके पांशुलवणं (खारी) अथ वा (रेह) इति लोके। अम्लवेतसकाभावे चुक्रं दातव्यमिष्यते। द्राक्षा यदि न लभ्येत प्रदेयं काश्मरीफलम्। तयोरभावे कुसुमं बन्धूकस्य मतं बुधैः। लवङ्गकुसुमं देयं नखस्याभावतः पुनः। कस्तूर्य्यभावे कक्कोलं क्षेपणीयं विदुर्बुधाः। कक्कोलस्याप्यभावे तु जातीपुष्पं प्रदीयते। सुगन्धिमुस्तकं देयं कर्पूराभावतो बुधैः। कर्पूराभावतो देयं ग्रन्थिपर्णं विशेषतः। कुङ्कुमाभावतो दद्यात् कुसुम्भकुसुमं नवम्। श्रीखण्डचन्दनाभावे कर्पूरं देयमिष्यते। अभावे त्वेतयोर्वैद्यः प्रक्षिपेत् रक्तचन्दनम्। रक्तचन्दनकाभावे नवोशीरं विदुर्बुधाः। मुस्ता त्वतिविषाभावे शिवाभावे शिवा मता। अभावे नागपुष्पस्य पद्मकेशरमिष्यते। मेदाजीवककाकोलीऋद्धिद्वन्द्वेऽपि वा सति। वरी विदारी त्वगन्धा वाराही च क्रमात् स्मृता। वरी शतावरी। वाराह्याश्च तथाभावे चर्म्मकारालुको मतः। वाराहीकन्दसंज्ञस्तु पश्चिमे गृष्टिसंज्ञकः। वाराहीकन्दएवान्यश्चर्म्मकारालुको मतः। अनूपसम्भवे देशे वराह इव लोमवान्। भल्लातकासम्भवे तु रक्तचन्दनमिष्यते। भल्लाताभावतश्चित्रं नलदं चोरभावतः। सुवर्णाभावतः स्वर्णमाक्षिकं प्रक्षिपेद्बुधः। श्वेतन्तु माक्षिकं देयं बुधै रजतवत् प्रभुः। माक्षिकस्याप्यभावे तु प्रदद्यात् स्वर्णगैरिकम्। सुवर्णमयं वा रौप्यं स्रुतं यत्र न लभ्यते। तत्र कान्तेन कर्म्माणि भिषक्कुर्य्याद्विचक्षणः। कान्ताभावे तीक्ष्णलौहं योजयेद्वैद्यसत्तमः। अभावे मौक्तिकस्यापि मुक्ताशुक्तिं प्रयोजयेत्। मधु यत्र न लभ्येत तत्र जीर्णगुडो मतः। मत्स्यण्ड्यभावतो दद्युर्भिषजः सितशर्कराम्। असम्भवे सितायास्तु बुधैः खण्डं प्रयुज्यते। क्षीराभावे रसो मौद्गो मासूरो वा प्रदीयते। अत्र प्रोक्तानि वस्तूनि यानि तेषु च तेषु च। योज्यमेकतराभावे परं वैद्येन जानता। रसवीर्य्यविपाकाद्यैः समं द्रव्यं विचिन्त्य च। युक्त्याद्विविधमन्यच्च द्रव्याणान्तु रसादिवित्। योगे यदप्रधानं स्यात्तस्य प्रतिनिधिर्म्मतः। यत्तु प्रधानं तस्यापि सदृशं नैव त्यज्यते। व्याधेरयुक्तं यत् द्रव्यं गुणोक्तमपि तत् त्यजेत्। अनुक्तमपि युक्तं यत् योजयेत् तद्रसादिवित्। द्रव्यगतपञ्चपदार्थकर्म्माण्याह। द्रव्ये रसो गुणो वीर्य्यं विपाकः शक्तिरेव च। पदार्थाः पञ्च तिष्ठन्ति स्वं स्वं कुर्व्वन्ति कर्म्म च"।

"वीर्य्यवन्त्यौषधिनीव विकारे सान्निपातिके" कुमा०। "द्वेष्योऽपि सम्मतः शिष्टस्तस्यार्त्तस्य यथौषधम्" रघु। "विषस्य विषमौषधम्" उद्भटः "भवौषधात् श्रोत्रमनोऽभिरामात्" भाग० १,१, "औषधं जाह्नवीतोयं वैद्यो नारायणः स्वयम्" पुरा०। संसाररूपदुःखदायकरोगनिवारके ३परमेश्वरे च "औषधं जगतां सेतुः" विष्णु०स०।

औषधि स्त्री अ+ओषधि—प्रा०स०। सस्यगोषधौ। "विरमन्ति न ज्वलितुमौषधयः" किरा० वा ङीप्। औषधी।

औषर न० ऊषरे भव अण्। पांशुलवणे राजनि०।

औषरक न० औषरमिव कन्। (खारी) लवणभेदे राजनि०।

औषस न० उषसि भव सन्धिवेलेत्यादिना योगविभागात् अण्। १उषसि भवे। वस्तुतः भवार्थे "कालाट्ठञ्" पा० उक्ते ठञ् स्यात् तेन उषस इदम् इत्यण् इत्युचितम्। २उषस्सम्बन्धिनि। "अनुदितौषसरागेति "औषसातपभयादपलीनम्" इति च" किरा०। स्त्रियां ङीप्। "या सोम्य पत्न्यौषसी सा" शत० ब्रा० ६,१,२,८, उषस्+ स्वा० यत् स्वार्थे अण्। औषस्य उषोभवे त्रि०।

**औष(स्त)स्त्य** त्रि० उषस्तेरिदम् अण् ष्यञ् वा । उषस्तिपरिज्ञातात्मके छा० उ० ब्राह्मणकाण्डभेदे । तच्च "उषस्तिर्हचाक्रायण" इत्यादि तत्रत्य ब्राह्मणं "औषस्ते(स्त्ये) काण्डेऽविदुषामपि आर्त्विज्यदर्शनात्" छा० उ० भा० ।

**औषसिक** त्रि० उषसा चरति ठक् टिलोपः । १उषसाचारिणि । उषसि भव "कालाट्ठञ्" पा० ठञ् । २उषसिभवे च ।

**औषिक** त्रि० उषा उषसि भव ठञ् । उषाभवे स्त्रियां ङीप् ।

**औष्ट्र** न० उष्ट्रस्येदम् अण् । उष्ट्रदुग्धादौ । "औष्ट्रं दुग्धं लघु स्वादु लवणं दीपनं तथा । क्रमिकुष्ठकफानाहशोथोदरहरं सरम्" भावप्र० । "अनिर्दशायाः गोः क्षीरमौष्ट्रमैकशफं तथेति" मनु उष्ट्रशब्दे विवृतिः ।

**औष्ट्रक** न० उष्ट्राणां समूहः गोत्रोक्षोष्ट्रेत्यादिना वुञ् । उष्ट्रसमूहे । उष्ट्रस्य विकारोऽवयवो वा वुञ् । २उष्ट्रविकारे ३तदवयवे च त्रि० ।

**औष्ट्ररथ** न० उष्ट्ररथस्येदम् "पत्रपूर्वादञ्" पा० रथादित्र-रुक्तौ अञ् । उष्ट्रवाह्यरथसम्बन्धिनि ।

**औष्ट्रायण** पुंस्त्री उष्ट्रस्यापत्यम् ना० फक् । उष्ट्रापत्ये तत चतुरर्थ्याम् अरीहणादि० वुञ् । औष्ट्रायणक तत्सन्निकृष्टदेशादौ त्रि० ।

**औष्ट्रिक** त्रि० उष्ट्रे भव ठक् । उष्ट्रभवे दध्यादौ "विपाके कटु सक्षारं गुरु भेद्यौष्ट्रिकं दधि" सुश्रुत ।

**औष्ठ** त्रि० ओष्ठ ओष्ठाकारोऽस्त्यस्य प्रज्ञा० अण् । ओष्ठाकारकाष्ठावयवयुक्ते आश्विनग्रहपात्रे । "औष्ठमाश्विनम्" कात्या० ९,२,७, "ओष्ठावयवयुक्तमाश्विनग्रहपात्रम्" कर्क "तद्धि देवानामौष्ठमाश्विनपात्रम्" शत० ब्रा० ४,१,५,१९ ।

**औष्ठ्य** त्रि० ओष्ठे भव यत् स्वार्थे अण् । ओष्ठभवे उवर्णपवर्गयो "औष्ठजावुपू" इति शिक्षोक्तेस्तयोस्तथात्वम् ।

**औष्णिज** न० उष्णिज्+प्रज्ञा० स्वार्थेऽण् । उष्णिगर्थे ।

**औष्णिह** त्रि० उष्णिहि भवः उत्सा० अञ् तस्येदमण् वा । १उष्णिक्छन्दोभवे २तत्सम्बन्धिनि च । उष्णिहा स्तुत्यः अण् । ३उष्णिक्छन्दसा स्तुत्ये सवितरि "सवित्र औष्णिहाय" यजु० १९,६ ।

**औष्णीक** त्रि० उष्णीषे शोभते अण् पृषो० । १उष्णीषधारिणि २तद्धारिजनपदविशेषे ३तद्भूपे च "औष्णीकानन्तवासांश्च योधकान् पुरुषादकान्" भा० स० ५० ।

**औष्ण्य** न० उष्णस्य भावः गुणवचनत्वात् ष्यञ् । उष्णस्पर्शे स च "उष्णस्पर्शस्तु तेजस" इत्युक्ते तेजस एव स्वाभाविकधर्मः तत्संयोगादितरेषामौपाधिकः । सुश्रुते तत्कार्य्यपित्तस्य धर्म इत्युक्तं यथा "औष्ण्यतैक्ष्ण्यरौक्ष्यलाघववैशद्यगुणलक्षणं पित्तं तस्य समानयोनिः कटुको रसः सोऽस्यौष्ण्यादौष्ण्यं वर्द्धयति" सुश्रु० ।

**औष्म** न० ऊष्मणोभावः ऊष्मैव वा ष्यञ् । उष्णस्पर्शे । "पूर्वराजवियोगौष्म्यं कृत्स्नस्य जगतो हृतम्" रघु । उष्णस्पर्शो यद्यपि तेजोयोगात् भवति तथापि देहस्य तथा स्पर्श सन्दर्शनात् सूक्ष्मदेहसंयोगादेव तथोक्तं शा० सू० भाष्ययो "अस्यैव चोपपत्तेरेष ऊष्मा" सू० "अस्यैव च सूक्ष्मशरीरस्यैष ऊष्मायमेतस्मिन् जीवच्छरीरे स्पर्शेनोष्णिमानं विजानाति तथाहि मृतावस्थायामवस्थितेऽपि देहे विद्यमानेष्वपि च रूपादिषु देहगुणेषु नोष्मोपलभ्यते जीवदवस्थायामेव तूपलभ्यते इत्यत उपपद्यते प्रसिद्धशरीरव्यतिरिक्तव्यपाश्रय एवैष ऊष्मेति तथा च श्रुति, "उष्ण एव जीविष्यञ्छीतो मरिष्यन्निति" भा० । तदुपाधिकत्वात् जीवस्यापि ऊष्मत्वं व्यपदिश्यते इत्युक्तं भाष्ये ।

इति वाचस्पत्ये औकारादिशब्दार्थसङ्कलनम् ।

इति श्रीतारानाथ तर्कवाचस्पति-भट्टाचार्य्य-विरचिते वाचस्पत्येऽभिधाने
स्वरवर्णादिशब्दार्थसङ्कलनं समाप्तम् ।

ओं तत्सत्